| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| दिविधिनिरूपणम्, ऋतौ स्त्रीगमनविधिः, स्त्रीगमने वर्ज्यानि, विष्णुशयनोत्सवविधानम् .... ... | २९२ |
| पवित्रारोपणम्, पवित्रारोपणस्य फलम्, कार्तिके हरिपूजनविधिनिरूपणम् .... .... .... ... | २९३ |
| नृसिंहपूजनम् ... ... | २९४ |
| नृसिंहपूजने फलाभिधानम्, पौर्णमास्यां वामनार्चनम्, व्यतीपाते हयग्रीवार्चनविधिनिरूपणम् ... ... | २९५ |
| ग्रहणादिषु वराहवपुषो नारायणस्य सपर्याविधानम्, ... ... .... | २९६ |
| कृष्णाष्टम्यादिषु गोपालकृष्णादीनां पूजनाभिधानम् .... .... ... | २९७ |
| श्रीरामपूजाविधिः .... ... | २९८ |
| वैशाख्यां पौर्णमास्यां पुरुषोत्तमपूजनम्, जन्माष्टम्यां कृष्णपूजनम् | २९९ |
| श्रीकृष्णस्य दोलोत्सवविधिः, भाद्रपदद्वादश्यां वामनपूजनम्.... ... | ३०१ |
| नारायणपूजनम्, वेदपारायण ऋक्संख्याभिधानम्, रात्रौ होमविधिनिरूपणम् .... ... ... | ३०२ |
| माधवपूजनविधिः, विष्णुपूजनम् | ३०३ |
| यात्रोत्सवयोः फलनिरूपणम्, संवत्सरादिषु महोत्सवविध्यभिधानम् | ३०४ |
| उत्सवाङ्गयागविधानम् | ३०५ |
| अवभृथविध्यभिधानम्, नित्योत्सवे पूजाहोमादिविधिः .... .... | ३०६ |
| वैष्णवेष्टिविधिकथनम्, पित्रादीनां पञ्चत्वे संस्कारविधिः .... .... | ३०७ |
| पिण्डदानम्, नारायणबलेः कर्तव्यत्वबोधनम् ... .... .... | ३१० |
| उदककुम्भदानादिनिरूपणम्, सात्त्विकादीनां लक्षणाभिधानम्, तामिस्रादिनरकाः .... .... .., | ३११ |
| पञ्च महापातकानि, ब्रह्महत्यासमानि, सुरापानसमानि, सुवर्णस्तेयसंमितानि ... .... .... | ३१२ |
| गुरुतल्पसमानि, अनुपातकानामभिधानम्, उपपातकानि ... .... | ३१३ |
| प्रकीर्णपातकानि, पातकादीनां लक्षणम्, संसर्गिप्रायश्चित्तम्, जातानुतापस्य प्रायश्चित्तेऽधिकारः, ब्रह्महप्रायश्चित्तम् ... ... .... | ३१४ |
| यागस्थक्षत्रियादिवधे प्रायश्चित्तम्, ब्रह्महत्यायाः प्रायश्चित्तान्तरनिरूपणम्, सुरापानादौ प्रायश्चित्तम् ... ... | ३१५ |
| सूतकान्नादिभक्षणे प्रायश्चित्तम्, वृथा मांसाशनादिविषये प्रायश्चित्तम्, विशिष्टशूद्रस्य पतनहेतवः ... | ३१६ |
| सुरापाने द्विजातीनां प्रायश्चित्तम्, कामतः स्वर्णहारिणः प्रायश्चित्तम्, अकामतो भगिन्यादिषु सकृद्गमने प्रायश्चित्तम्, कामतो भगिन्यादिषु गमने प्रायश्चित्तम्.... ... ... | ३१७ |
| स्वदारास्वास्यगमने प्रायश्चित्तम्, पुरुषादिगमने प्रायश्चित्तम्, उदक्यादिगमने प्रायश्चित्तम्, संसर्गिणां प्रायश्चित्तम् ... .... .... | ३१८ |
| स्त्रीणां व्यभिचारे प्रायश्चित्तम्, | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| स्त्रीगमने यत्यादीनां प्रायश्चितम्, प्रायश्चित्ताकरणे फलाभिधानम्, गोघ्नप्रायश्चित्तम्, अग्निदादिस्त्रीवधे दोषाभावकथनम्, आततायिवधेऽदोषः.... | ३१९ |
| ब्रह्महादिविषये प्रायश्चित्तान्तरकथनम्, रजस्वलादिसंसर्गे प्रायश्चित्तम्, उच्छिष्टस्पर्शने प्रायश्चित्तम् ... | ३२० |
| रजस्वलासूतिकयोः पञ्चत्वे स्नापनादिसंस्कारः, चण्डालादिहतानां संस्काराभिधानम्, रजस्वलादिस्पर्शे रजस्वलायाः प्रायश्चित्तम्, चण्डालपतितोदकपाने प्रायश्चित्तम्, चण्डालपतितादीनां गृहेष्वन्नभोजने प्रायश्चित्तम् .... | ३२१ |
| चण्डालवाटिकाया स्वापादौ कृते प्रायश्चित्तम्, शूद्रान्नादिभोजने प्रायश्चित्तम्, अमेध्यशवादिदूषितकूपस्य शुद्ध्यभिधानम्, चण्डालपतितादिदूषितप्रासाददेवहर्म्याणा शुद्धिः ... | ३२२ |
| विष्णोरुत्सवमध्ये विद्युत्स्तनितसंभवादौ शान्तिनिरूपणम्, अवैष्णवस्थापितमधुसूदने वासुदेवेष्टिविधानम्, सेनेशवैनतेयादीना बिम्बस्थापनम् ... | ३२३ |
| अवैष्णवस्य वैष्णवदीक्षाविधिः, अवैष्णवविप्रपूजनादौ प्रायश्चित्तम्, नारायण्यादीष्टिविधिनिरूपणम् .... | ३२४ |
| यज्ञवपुषो वर्णनम्, द्रव्ययज्ञादीनां निरूपणम्, नारायणेष्टिविधानम् .... | ३२५ |
| वासुदेवेष्टिः, वैष्णवेष्टिविधिनिरूपणम्... ... .... .... | ३२८ |
| वैयूहेष्टिविधिकथनम्, केशवादीनां वर्णाभिधानम् .... .... ... | ३२९ |
| केशवादीनामायुधानि, तद्बिम्बादिषु गन्धादिभिः पूजनविधिः ... | ३३० |
| वैभवेष्टेर्विधानम्, आनन्तेष्टिकथनम् .... ... ... .... | ३३१ |
| वैनतेयेष्टिनिरूपणम्, वैष्वक्सेनेष्टिविधिः | ३३२ |
| सौदर्शनेष्टिनिरूपणम्.... .... | ३३३ |
| भागवतेष्ट्यभिधानम्, पाद्मीष्टिः | ३३४ |
| पवित्रेष्टिविधिः, पञ्चरात्रोत्सवविधिः .... ... .... .... | ३३५ |
| क्षीराब्धियजनम् .... .... | ३३६ |
| दोलोत्सवविधिः .... ... | ३३७ |
| विष्णोरुत्सवविधिनिरूपणम् .... | ३३८ |
| उत्सवस्य फलश्रुतिः.... .... | ३३९ |
| विष्णुपूजाविधिः .... ... | ३४० |
| स्त्रीधर्माभिधानम् .... .... | ३४४ |
| माण्डादीनां संशुद्धिः, भावदुष्टादिद्रव्याणा प्रतिपादनम् ... ... | ३४५ |
| कालदुष्टलक्षणम्, संसर्गदुष्टाभिधानम्, जातिदुष्टकथनम्, अभक्ष्यभोक्त्रादीना संसर्गनिषेधः, वैष्णवधर्मनिरूपणम् .... ... .... | ३४६ |
| नवविधेज्याभिधानम्, अर्थपञ्चकनिरूपणम्, विष्णोराराधनम्, वैष्णवलक्षणम्, वैष्णवस्य पातित्यहेतुनिरूपणम् .... .... .... | ३४७ |
| लोकायतिकादीनां लक्षणम्, अवैदिकविधिना विष्णुपूजनाच्छाण्डिल्यस्य शापाभिधानम्, वेदोक्तविधिना | |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| नारायणपूजनाच्छाण्डिल्यस्य तद्धामप्राप्तिनिरूपणम् .... ... ... | ३४८ |
| स्त्रीधर्माभिधानम्, सहगमनस्य फलम्, गर्भिण्याः सहगमने निषेधः, विधवाधर्माः, पत्न्यां मृतायामग्निहोत्रिणः कुशमय्यादिपत्न्यन्तरेणाग्निहोत्रधारणविधानम् .... .... | ३४९ |
| चक्रादिधारणविधिः, पुण्ड्रक्रियाभिधानम्, मन्त्रदीक्षारहितस्य वैष्णवस्य मन्त्रादिविषये सिद्ध्यभावकथनम् | ३५० |
| वैष्णवदीक्षाविधिः .... .... | ३५१ |
| वैष्णवधर्मनिरूपणम् ... ... | ३५२ |
| वैष्णवप्रशंसा... .... .... | ३५३ |
| महापापोपपापाद्यैरन्वितस्य वैष्णवस्य प्रायश्चित्तादिकथनम्, अवैष्णवान्नभोजने निषेधः, वैष्णवब्राह्मणाद्यपूजने नरकपातः, श्राद्धकर्मणि हर्यर्पितान्नदानात्पितॄणां विष्णोः स्थानप्राप्तिः ... .... .... .... | ३५४ |
| अमादिश्राद्धकालाः, एकादश्यां पित्रोः श्राद्धनिषेधः, वैष्णवधर्माभिधानम्, एतच्छास्त्रस्य फलश्रुतिः.... | ३५५ |


इति वृद्धहारीतस्मृतिः ।

## २२ अथ वेदव्यासस्मृतिः ।


| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| धर्माचरणदेशः, ब्राह्मणादिवर्णानां निरूपणम्, अनुलोमविलोमजातीनां कथनम्, गर्भाधानादिसंस्काराणां निरूपणम् .... .... .... | ३५७ |
| पुंसवादिसंस्कारकालाः, ब्रह्मचारिधर्माः .... ... .... .... | ३५८ |
| व्रताचरणान्नैष्ठिकब्रह्मचारिणो ब्रह्मसायुज्यफलम्, समावर्तनम्, विवाहविधिः ... .... .... .... | ३५९ |
| क्षत्रियादिकन्याविवाहे विप्रादीनामधिकारः, गृहस्थधर्मनिरूपणम्, स्त्रीधर्माभिधानम्.... .... ... | ३६० |
| स्त्रीणां नित्यधर्मकथनम्, रजस्वलाधर्मनिरूपणम .... .... ... | ३६१ |
| पतिव्रताधर्मनिरूपणम्, पूर्वाह्णकृत्यम् ... .... .... .... | ३६२ |
| स्नानादिविधिप्रतिपादनम्, तर्पणविधिः .... .... .... .... | ३६३ |
| पाकयज्ञादिविधिनिरूपणम् ... | ३६४ |
| अतिथिपूजनम्, अभोज्यान्नानां निरूपणम्, शूद्रेषु नापितादयो भोज्यान्ना इत्यादिकथनम्, भक्ष्याभक्ष्यप्रकरणम् ... .... ... | ३६५ |
| भोजनविधिः.... .... .... | ३६६ |
| गृहस्थाश्रमप्रशंसा, तीर्थनिरूपणम्, दानधर्मप्रकरणम् ... ... | ३६७ |
| दुर्भिक्षयादिषु दानप्रशंसा, सत्पात्राणां निरूपणम् .... ... .... | ३६८ |

विषयाः — पृष्ठाङ्काः

ब्राह्मणब्रुवादीनां लक्षणम्, ब्राह्मणप्रशंसनम् .... .... .... ३६९

एकपङ्क्त्यां विषमान्नदाने ब्रह्महत्यादोषाभिधानम्, शूद्रान्नभोजने फलनिरूपणम् .... .... .... ३७०

इति वेदव्यासस्मृतिः ।

## २३ अथ शङ्खलिखितस्मृतिः ।

विषयाः — पृष्ठाङ्काः

वैश्वदेवमकृत्वैव भुञ्जानस्य काकयोनिप्राप्तिरिति निरूपणम्, अतिथिपूजनम्, परान्नभोजने निषेधः, राजप्रशंसा, ब्राह्मणप्रशंसनम् .... ३७३

इति शङ्खलिखितस्मृतिः ।

## २४ अथ शङ्खस्मृतिः ।

विषयाः — पृष्ठाङ्काः

ब्राह्मणादीना कर्माणि, पुंसवनादिसंस्काराणामभिधानम्, ब्राह्मणादीनामुपनयनकालाः .... .... ३७४

ब्राह्मणाद्युपनयने मौञ्ज्यादीना निरूपणम्, ब्रह्मचारिधर्माः, वेदाध्ययनविधिः, अनध्यायाः ... .... ३७५

समावर्तनम्, विवाहप्रकरणम्, ब्राह्मादिविवाहाना लक्षणम्, ब्राह्मणादीनामसवर्णकन्यापरिणयेऽधिकारः, शूद्रापरिणये द्विजातीना निषेधः .... ३७६

पञ्च महायज्ञाः, गृहाश्रमिणा प्रशंसा, अतिथिपूजनाद्गृहस्थस्य स्वर्गाभिधानम् .... .... ... ३७७

वानप्रस्थधर्मनिरूपणम्, यतिप्रकरणम्, यतिधर्माः, यतिपात्राणि .... ३७८

यत्याचारकथनम्, प्राणायामलक्षणम्, धारणादीनां लक्षणम्, ध्यानयोगनिरूपणम् .... .... .... .... ३७९

नित्यनैमित्तिकादिस्नानानां लक्षणानि ३८०

क्रियास्नानविधिः .... .... ३८१

आचमनविधिनिरूपणम् .... ३८२

अघमर्षणम् .... ... ... ३८३

गायत्रीजपविधिः, गायत्रीजपस्य फलम्, गायत्रीहोमादभीष्टसिद्धिः, गायत्र्याः प्रशंसा ३८४

तर्पणविधिः .... ... .... ३८५

श्राद्धे ब्राह्मणपरीक्षणम्, वर्ज्यब्राह्मणाः, पङ्क्तिपावनब्राह्मणाना निरूपणम्, श्राद्धे ब्राह्मणसंख्या, श्राद्धे उग्रगन्धादिपुष्पाणां वर्जनम् .... ३८६

श्राद्धे वर्ज्यद्रव्याणामभिधानम्,

| विषयाः | पृष्ठाङ्काः |
|---|---|
| श्राद्धोपादेयानि, श्राद्धदेशाः, म्लेच्छदेशादौ श्राद्धाचरणे निषेधः.... | ३८७ |
| अशौचप्रकरणम् .... ... | ३८८ |
| द्रव्यशुद्धिप्रकरणम्, मृन्मयादिपात्राणां शुद्धिः, मुक्तामणिप्रवालानां शुद्धिनिरूपणम्, यज्ञपात्राणां शुद्धिः, वेश्मादीना शुद्धिः .... ... | ३८९ |
| धान्यादीना शुद्धिनिरूपणम्, निर्यासादीना शुद्धिः, स्वशय्यादीनां शुद्धिनिरूपणम्, गृहस्थादीनां शौचविधिः, महापातकिना संशुद्ध्यर्थं द्वादशाब्दव्रतनिरूपणम् .... .... | ३९० |
| कूटसाक्ष्यादिविषये व्रताभिधानम्, क्षत्त्रियादिवधे व्रतनिरूपणम्, गवाद्यपहारे संवत्सरव्रतविधानम्, लवणाद्यपहारे व्रतनिरूपणम्, पलाण्ड्वादिभक्षणे व्रतनिरूपणम् .... .... | ३९१ |
| विवत्सादीना क्षीरपाने व्रताभिधानम्, शूद्रादीनामन्नभोजने व्रतनिरूपणम् | ३९२ |
| परिवित्त्यादीना संशुद्धये संवत्सरं व्रतम्, काकोच्छिष्टादिभक्षणे व्रताभिधानम् वाग्दुष्टादिभक्षणे व्रतम्, एकपङ्क्त्युपविष्टादिषु विषमादिदाने व्रतनिरूपणम् .... .... | ३९३ |
| अघमर्षणव्रतम्, पराकव्रतम्, वारुणकृच्छ्रविधिः, अतिकृच्छ्र, सांतपनकृच्छ्राद्यभिधानम् .... .... | ३९४ |


इति शङ्खस्मृतिः ।

---

## २५ अथ शातातपस्मृतिः ।

---


| विषयाः | पृष्ठाङ्काः |
|---|---|
| प्रायश्चित्तस्य फलम्, दुष्कर्मजरोगाणा जप्यादिभिः शम इत्यादिकथनम्, महापापात्कुष्ठादिरोगाणामुत्पत्तिरिति निरूपणम्, उपपापाज्जलोदरादिव्याधीनामुत्पत्तिः, पापाद्दण्डापतानकादीना प्रादुर्भाव इत्यादिकथनम् | ३९६ |
| गोदानादिविधिः, वृषभदानम्, गोचर्मदानविधिः. अश्वदानादीना निरूपणम्, प्रायश्चित्तविधिः .... | ३९७ |
| कर्मविपाकः, नरकस्यान्ते ब्रह्महा पाण्डुकुष्ठी भवति तत्पातकशान्तये प्रायश्चित्तम्, गोवधात्कुष्ठरोगस्तत्पातकविशुद्ध्यर्थं प्रायश्चित्तम् .... | ३९८ |
| पितृहत्यया चेतनाहीनस्तच्छान्त्यर्थं प्रायश्चित्तम्, बालहत्यादिदोषाद्वन्ध्यादिदोषास्तदपनोदनाय प्रायश्चित्तम्... | ३९९ |
| रुद्रलक्षणम् महारुद्रातिरुद्रयोर्लक्षणम्, राजहा क्षयरोगी स्यात्तद्दोषापनुत्तये गोभूहिरण्यादिप्रदानम्, शूद्रहन्ता दण्डापतानकयुतो भवति, तत्पापशान्तये प्राजापत्यादिनिरूपणम् ... .... | ४०० |
| उष्ट्रवधाद्विकृतस्वरस्तत्पापविशुद्- | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| ध्यर्थं कर्पूरजफलदानम्, महिष्यादिहननात्कृष्णगुल्मादीनामुपत्तिस्तच्छान्त्यर्थं मह्यादिदाननिरूपणम् .... | ४०१ |
| सुरापानादिपापाना फलम्, तत्पापशान्तये प्राजापत्यात्मकव्रतनिरूपणम्, अभक्ष्यभक्षणस्य फलनिरूपणम्, तत्पापशान्तये भीष्मपञ्चकाभिधानम्, परान्नविघ्नकरणस्य फलं तत्पापशान्तये लक्षहोमविधिः, परवञ्चकस्य फलं तत्पापविशुद्धये प्रायश्चित्ताभिधानम् | ४०२ |
| परोपतापस्य फलं तच्छुद्धयेऽन्नदानादिकथनम्, दावाग्निदायकादीना फलनिरूपणं तत्पापशान्तय उदपानादिनिरूपणम्, कुलघ्नादीनां फलं तत्पापशुद्धये स्वर्णदानादिनिरूपणम् | ४०३ |
| दुग्धहरणाद्बहुमूत्ररोगस्तच्छान्तये दुग्धधेनुदानम्, इक्षुविकाराद्यपहरणादुदरादिरोगोत्पत्तिनिरूपणं तद्दोषशान्तये गुडधेन्वादिदानाभिधानम् .... | ४०४ |
| मातृगमनादिदोषाणां फलाभिधानं तद्दोषशान्तये धनेश्वरादीना मर्चनविधिनिरूपणम् .... ... | ४०५ |
| स्वसुतागमनादिपापाद्रक्तकुष्ठाद्युत्पत्तिस्तच्छान्तये सुरेश्वरार्चनादिनिरूपणम्, विश्वस्तभार्यादिगमनाद्ध्वजचर्माद्युत्पत्तिस्तच्छान्तये प्रायश्चित्तनिरूपणम् ... .... .... .... | ४०६ |
| मातृष्वस्रभिगमनादिपापाद्व्रणाद्युत्पत्तिस्तच्छान्तये सम्यग्दासीप्रदानादिनिरूपणम् .... ... .... | ४०७ |
| दुर्मृत्युकारणाभिधानं तच्छान्तये प्रायश्चित्तनिरूपणम् .... ... | ४०८ |

इति शातातपस्मृतिः ।

## २६ अथ संवर्तस्मृतिः ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| ब्रह्मचारिधर्माः ... .... | ४११ |
| गृहस्थधर्मनिरूपणम्, नानाविधदानानि तद्दानफलनिरूपणं च ... | ४१३ |
| संध्याकाल आहारादीना वर्जनम्, वानप्रस्थधर्माः ... ... .... | ४१६ |
| प्रायश्चित्तविधिः, महापातकप्रायश्चित्तानि .. .... .... .... | ४१७ |
| गोवधप्रायश्चित्तम् ... .... | ४१८ |
| गजादिवधे प्रायश्चित्तम्, चाण्डाल्यादिगमने प्रायश्चित्तम्, .... | ४१९ |
| भिक्षोरपत्यार्थं स्त्रीगमने प्रायश्चित्तम्, महापातक्यादीनामुदकदानादिनिषेधः .... ... .... .... | ४२१ |
| स्त्रीक्षीरादिपाने प्रायश्चित्तम् .... | ४२२ |
| महापातकिनां प्रायश्चित्तान्तरनिरूपणम्, अयाज्ययाजनादौ प्रायश्चित्तम् | ४२३ |

इति संवर्तस्मृतिः ।

## २७ अथ बौधायनस्मृतिः ।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| धर्मलक्षणम्, शिष्टलक्षणम्, पर्षल्लक्षणम् ... ... ... | ४२५ |
| आरट्टकादिनिषिद्धदेशगमने प्रायश्चित्तम्, ब्राह्मणादीनामुपनयनकालः, द्विजातीनां मेखलादिनिरूपणम् .... | ४२६ |
| ब्रह्मचारिधर्माः .... .... | ४२७ |
| स्नातकधर्मनिरूपणम् ... ... | ४२८ |
| कमण्डलुचर्याभिधानम्.... .... | ४२९ |
| शुद्धिप्रकरणम्, अन्तःशुद्धिनिरूपणम्, बाह्यशुद्धिः, ब्राह्मादितीर्थानि, आचमनविधिः ... ... | ४३० |
| द्रव्यशुद्धिप्रकरणम्, उच्छिष्टतैजसादिद्रव्याणा शुद्धिः ... .... | ४३१ |
| चैत्यवृक्षादिस्पर्शे सचैलस्नानम्, भूमिशुद्धिः, श्रद्धाप्रशंसा... ... | ४३२ |
| शौचविधिनिरूपणम्, वार्धुषिकलक्षणम्, गोरक्षकादिविप्रेषु शूद्रवद्व्यवहरेदित्यादिकथनम् ... .... | ४३३ |
| जननाशौचमृताशौचयोरभिधानम्, सपिण्डलक्षणम्, अशौचसंपाते निर्णयः | ४३४ |
| क्रिमिदष्टादिप्रायश्चित्तम्, .... | ४३५ |
| मूत्रपुरीषाद्युपहतद्रव्याणा शुद्धिनिरूपणम्... .... .... ... | ४३६ |
| यज्ञाङ्गविधिनिरूपणम्.... .... | ४३७ |
| ब्राह्मणादिवर्णनिरूपणम्, ब्राह्मणस्य क्षत्रियादिकन्यापरिणयेऽधिकार इत्यादिकथनम्, संकरजातिनिरूपणम् | ४३८ |
| राजधर्माः .... .... ... | ४३९ |
| दण्डप्रकरणम्, ब्राह्मणस्य ब्रह्महत्यादिषु दण्डनिरूपणम्, क्षत्रियादिकृतब्राह्मणवधे दण्डाभिधानम्, साक्षिश्रवणम् .... .... .... | ४४० |
| अष्टौ विवाहाः .... ... | ४४१ |
| अनध्यायाः .... ... .... | ४४२ |
| प्रायश्चित्तप्रकरणम्, भ्रूणहप्रायश्चित्तम्, अमत्या ब्राह्मणहनने प्रायश्चित्तम्, गुरुतल्पगमनादिप्रायश्चित्तानि ... .... ... .... | ४४३ |
| समुद्रसंयानादिपतनीयकर्मणां निरूपणम् .... .... ... ... | ४४४ |
| उपपातकानि, अशुचिकराभिधानं, तत्प्रायश्चित्तनिरूपणं च, तिलविक्रये निषेधः ... ... ... .... | ४४५ |
| तप्तकृच्छ्रादिकथनम्, दायविभागः | ४४६ |
| औरसादिपुत्राणामभिधानम् ... | ४४७ |
| स्त्रिया अस्वातन्त्र्यकथनम्, स्त्रीत्यागहेतवः, अगम्यस्त्रीणामभिधानम्, चण्डालीगमने ब्राह्मणस्य पातित्यम्.... | ४४८ |
| आपद्धर्मनिरूपणम्, देवादितर्पणविधिः .... .... .... ... | ४४९ |
| स्नातकव्रतानि .... ... | ४५० |
| संध्योपासनविधिः ... ... | ४५१ |
| संध्यातिक्रमे प्रायश्चित्तम्, संध्याकर्मणः फलम् .... ... .... | ४५२ |
| मध्याह्नस्नानविधिः .... .... | ४५३ |
| ब्रह्मयज्ञाङ्गतर्पणम् ... .... | ४५४ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| पञ्च महायज्ञाः, आश्रमधर्मनिरूपणम् | ४५७ |
| शालीनयायावराणामात्मयाजिनां प्राणाहुतिव्याख्यानम् ... .... | ४५९ |
| पङ्क्तिपावनानां निरूपणम्, श्राद्धाग्नौकरणादिविधिनिरूपणम् | ४६१ |
| सत्पुत्रप्रशंसा, संन्यासविधिव्याख्यानम् ... ... ... | ४६२ |
| भोजने मुन्यादीनां ग्राससंख्या.... | ४६५ |
| शालीनयायावरादीनां षण्निवर्तन्यादयो नव वृत्तयः, शालीनयायावरादीना धर्मनिरूपणम् .... .... .... | ४६६ |
| षण्निवर्तन्यादिवृत्तीना स्वरूपकथनम् ... ... .... ... | ४६७ |
| पचमानकापचमानकभेदेन वानप्रस्थस्य द्वैविध्यबोधनम्, तत्र पचमानकस्य सर्वारण्यकादिभेदेन पञ्च प्रकाराः, सर्वारण्यकस्याप्यवान्तरभेदनिरूपणम् | ४६८ |
| उन्मज्जकादिरूपेणापचमानकस्य पञ्च भेदाः, वैखानसाना दीक्षाभिधानम्, मांसादिभक्षणे ब्रह्मचारिणः प्रायश्चित्तीयहोमविधिः .... .... .... | ४६९ |
| अघमर्षणकल्पव्याख्यानम्, आत्मकृतदुरितोपशमाय प्रसृतयावकस्य हवनविधिः ... .... ... | ४७० |
| कूष्माण्डहोमः .... .... | ४७१ |
| चान्द्रायणकल्पाभिधानम् ... | ४७२ |
| अनश्नत्पारायणविधिव्याख्यानम् | ४७३ |
| याप्यकर्मणोपेतस्य निष्क्रयार्थं जपादिनिरूपणम् .... .... .... | ४७५ |
| चक्षुःश्रोत्रत्वग्घ्राणमनोव्यतिक्रमादिषु प्रायश्चित्तम्, विवाहात्प्राक्कन्याया रजोदर्शने दोषनिरूपणम् .... | ४७६ |
| प्राणायामफलम्, योगप्रशंसा.... | ४७७ |
| पापनिवृत्तये वेदपवित्राणां निरूपणम् .... .... ... .... | ४७८ |
| प्रायश्चित्तविधिः .... .... | ४७९ |
| अघमर्षणादिविधिव्याख्यानम्, कृच्छ्रादिविधिनिरूपणम् .... .... | ४८० |
| सातपनकृच्छ्रः, पराककृच्छ्राभिधानम्, महासातपनम्, चान्द्रायणादिविधिः, तुलापुरुषव्रतनिरूपणम्, ब्रह्मकूर्चव्रताभिधानम्, पापापनुत्तये व्रतान्तरनिरूपणम् ... .... | ४८१ |
| पापनोदकानि, मृगारेष्ट्यादीना निरूपणम्, पवित्रैर्मार्जनादिविधिः, वेदपवित्राणामभिधानम् .... ... | ४८२ |
| गणहोमफलम् .... ... | ४८३ |
| एतदध्यापनादौ फलनिरूपणम् | ४८४ |


इति बौधायनस्मृतिः ।

---

समाप्तेयं स्मृत्यभिहितविषयाणामनुक्रमणिका ।

ॐ तत्सद्ब्रह्मणे नमः ।

# अङ्गिरःस्मृतिः ।

धर्मजिज्ञासुभिः सम्यगमितौजा महाद्युतिः । भारद्वाजादिभिः पृष्टः प्राब्रवीदेतदङ्गिराः ॥१॥ आश्रमेषु च सर्वेषु वर्णानामनुसर्वशः । प्रायश्चित्तविधिं कृत्स्नं वक्ष्यमाणं निबोधत ॥ २ ॥ अन्त्यानामविशेषेण जग्ध्वाऽन्नं हि द्विजन्मनाम् । चान्द्रं कृच्छ्रं तदर्धं च ब्रह्मक्षत्रविशां स्मृतम् ॥ ३ ॥ चाण्डालकूपभाण्डेषु यस्त्वपः पिबते द्विजः। प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत् ॥ ४ ॥ चरेत्सांतपनं विप्रः प्राजापत्यं तु भूमिपः । तदर्धं तु चरेद्वैश्यः पादं शूद्रः समाचरेत् ॥ ५ ॥ चाण्डालोदकभाण्डेषु यः पिबेत्तृषितो जलम् । तत्क्षणं तत्समुत्तार्य प्राजापत्यं समाचरेत् ॥ ६ ॥ यदि चानुद्धृतं तोयं शरीरे तस्य जीर्यति । तदा विप्रः स्वशुद्ध्यर्थं कृच्छ्रं सांतपनं चरेत् ॥ ७ ॥ चाण्डालभाण्डसंस्पृष्टं पिबेच्चेत्तृषितो जलम् । गोमूत्रयावकाहारस्त्रिरात्रेण विशुध्यति ॥ ८ ॥ यस्तु चाण्डालसंस्पृष्टं पिबेत्तोयमकामतः । स तु सांतपनं कृच्छ्रं चरेच्छुद्ध्यर्थमात्मनः ॥ ९ ॥ कृते मूत्रपुरीषे तु भुक्तोच्छिष्टोऽथ वा द्विजः । श्वादि स्पृष्ट्वा जपेत्स्नात्वा गायत्र्या अयुतद्वयम् ॥ १० ॥ कूपे विण्मूत्रसंयुक्ते पीत्वा तोयं द्विजोत्तमः । कृच्छ्रं सांतपनं कृत्वा त्रिरात्रेण विशुध्यति ॥ ११ ॥ बलाकाभासगृध्राखू(खु) खरश्र(श्व)वकसूकराः । दृष्ट्वा चैषाममेध्यानि स्पृष्ट्वाऽऽचम्य विशुध्यति ॥१२॥ इच्छयैषाममेध्यानि भक्षयित्वा द्विजोत्तमाः। कुर्युः सांतपनं कृच्छ्रं प्राजापत्यमनिच्छया॥१३॥ एतदेव व्रतं कुर्युरेषां मांसस्य भक्षणे । श्वकाकयोश्च मांसानि भुक्त्वा चान्द्रायणं चरेत् ॥ १४ ॥ स्पर्शनं चैव कुरुते ब्राह्मणो ब्राह्मणैः सह । आहतुः शङ्खलिखितौ विण्मूत्रोच्चारभोजनं ॥ १५ ॥ तूलिका चोपधानं च पुष्परक्ताम्बराणि च । पतिताद्यैरुपस्पृष्टं शोषणैः प्रोक्षणैः शुचि ॥ १६ ॥ रजकं चर्मकारं च नटं धीवरमेव च । बुरुडं च तथा स्पृष्ट्वा शुध्येदाचमनाद्द्विजः ॥ १७ ॥ संस्पृष्ट एभिरुच्छिष्टैरेकरात्रं पयः पिबेत्। संस्पृश्य चैतानुच्छिष्ट उपोष्य त्रिदिनं क्षिपेत् ॥ १८ ॥ भुक्त्वा चैषां समुच्छिष्टं विप्रः सांतपनं चरेत् । पादोनमर्धपादं च क्षत्रविट्शूद्रयोनयः ॥ १९ ॥ यश्च भार्यां श्वपाकस्य ब्राह्मणो ह्यधिगच्छति । सचैलो जलमाप्लुत्य घृतं प्राश्य विशुध्यति ॥ २० ॥ स चोदक्यादिभिः स्पृष्टो यदा स्यादातुरो नरः । अनातुरः सप्तवारं स्पृष्ट्वा स्नानं समाचरेत ॥ २१ ॥ आतुरा चैव या नारी रजसा मलिनी भवेत् । चतु-

---

१ क. "स्पृष्टे शो" । २ क. ख. शुचि. ।

र्थेऽहनि संप्राप्ते स्पृष्ट्वा तामप्यनातुरः ॥ २२ ॥ दशैकादश वारान्वा स्नानं कुर्याद्वि-
चक्षणः । एवं तस्या विशुद्धिः स्यात्परिवर्तितवाससः ॥ २३ ॥ प्रारब्धदीर्घतपसां
नारीणां यद्रजो भवेत् । न तेन तद्व्रतं तासामुपहन्येत कर्हिचित् ॥ २४ ॥ स्वभाव
एप नारीणां ज्ञेयो मूत्रपुरीषवत् । अत ऊर्ध्वं न दुष्यन्ति चरेयुश्चैव तद्व्रतम् ॥ २५ ॥
चाण्डालपतितोदक्यां स्पृष्ट्वोच्छिष्टो द्विजोत्तमः । प्राजापत्यं चरेत्कृच्छ्रं सुमन्तुवचनं
यथा ॥ २६ ॥ चण्डालपतितादीनामुच्छिष्टान्नादिभोजने । द्विजः शुध्येत्पराकेन शूद्रः
कृच्छ्रेण शुध्यति ॥ २७ ॥ पतितानां स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । मासो-
पवासं कुर्वीत चान्द्रायणमथापि वा ॥ २८ ॥ श्वगर्दभखरादीनां नरमांसादिदूषणे ।
उद्धरेत्सकलं वारि कूपवापीविशोधनम् ॥ २९ ॥ यस्तु कूपे पिबेत्तोयं ब्राह्मणः शव-
दूषिते । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ३० ॥ क्लिन्नभिन्नशवव्याप्तं
वारि विप्रो यदा पिबेत् । शुद्धिश्चान्द्रायणं तस्य तप्तकृच्छ्रमथापि वा ॥ ३१ ॥ अत
ऊर्ध्वं प्रवक्ष्यामि निलि(नीली)शौचस्य यो विधिः । स्त्रीणां क्रीडार्थसंभोगे
शयनीये न दुष्यति ॥ ३२ ॥ संध्या स्नानं जपो होमः स्वाध्यायः पितृत-
र्पणम् । वृथा तस्य महायज्ञा नीलीरक्तस्य धारणात् ॥ ३३ ॥ पालनादिक्रिया-
च्चैव नीलीवृत्त्युपजीवनात् । पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुध्यति ॥ ३४ ॥
नीलीरक्तं यदा वस्त्रं विप्रो देहेषु धारयेत् । अहोरात्रोषितो भूत्वा पञ्चगव्येन
शुध्यति ॥ ३५ ॥ नीलीमध्ये यदा गच्छेत्प्रमादाद्ब्राह्मणः क्वचित् । अहोरात्रोषितः
स्नात्वा पञ्चगव्येन शुध्यति ॥ ३६ ॥ नील्या चोपहते क्षेत्रे सस्यं यच्च प्ररोहति ।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् ॥ ३७ ॥ वापयेद्यत्र नीलीं तु
तावत्स्यादशुचिर्मही । प्रमाणं द्वादश समाम ( अ ) त ऊर्ध्वं शुचिर्भवेत् ॥ ३८ ॥
मृते भर्तरि या नारी नीलीवस्त्रं तु धारयेत् । स्वामी तिष्ठति पाताले नीलीवस्त्रस्य
धारणात् ॥ ३९ ॥ पत्यौ जीवति या नारी उपोष्य व्रतचारिणी । आयुर्वै हरते
भर्तुः सा नारी नरकं व्रजेत् ॥ ४० ॥ स्नानं रजस्वलायास्तु चतुर्थेऽहनि शुध्यति ।
कुर्याद्रजसि निर्वृ ( वृ ) त्ते नानिर्वृ ( वृ ) त्ते कदाचन ॥ ४१ ॥ रजस्वलायाः
प्रेतायाः संस्कारादीनि नाऽऽचरेत् । ऊर्ध्वं त्रिरात्रं स्नातायाः शवधर्मेण दाहयेत्
॥ ४२ ॥ रोगेण यद्रजः स्त्रीणामत्यन्तं संप्रवर्तते । अशुच्यस्ता न तेन स्युस्तासां
वैकारिको मदः ॥ ४३ ॥ साध्वाचारा न तावत्सा रजो यावत्प्रवर्तते[1] । वृत्ते रजसि
साध्वी स्याद्गृहकर्मणि चेन्द्रिये ॥ ४४ ॥ प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।

---

१ घ. ग. °त्ते । निवृ° ।

तृतीये रजकी चैव चतुर्थेऽहनि शुध्यति ॥ ४५ ॥ चाण्डालः श्वपचो वाऽपि यद्यात्रेयीं स्त्रियं स्पृशेत् । अफालकृष्टैर्वर्तेत पञ्चगव्येन शुध्यति ॥ ४६ ॥ रजस्वला तु संस्पृष्टा चण्डालान्त्यश्ववायसैः । तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुध्यति ॥ ४७ ॥ रजस्वले यदा नार्यावन्योन्यं स्पृशतः क्वचित् । सवर्णा पञ्चगव्यं तु त्रिरात्रमसवर्णके ॥ ४८ ॥ उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित्स्त्री रजस्वला । पूर्वाः कृच्छ्रं प्रकुर्वीरञ्शूद्रा दानेन शुध्यति ॥ ४९ ॥ नियमस्था यदा नारी प्रपश्येदन्तरा रजः । उपोष्यैव तु ता रात्रीः शेषं स्नात्वा चरेद्व्रतम् ॥ ५० ॥ आतुरे स्नान उत्पन्ने दशकृत्वस्त्वनातुरः । स्नात्वा स्नात्वा च दशधा ततः शुध्येदनातुरः ॥ ५१ ॥ ऋतौ तु गर्भशङ्कयां स्नानं[1] मैथुनिनः स्मृतम् । अनृतौ तु सदा कुर्याच्छौचं मूत्रपुरीषवत् ॥ ५२ ॥ द्वावेतावशुची स्यातां दंपती शयनं गतौ । शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥ ५३ ॥ रजसा शुध्यते नारी न चेद्गच्छेद्विवर्णताम् । यथा ग्राममलग्राही नदी वेगेन शुध्यति ॥ ५४ ॥ बहूनां संहतानां च यद्यप्येकोऽशुचिर्भवेत् । तस्य मात्रस्य तच्छौचं नेतरेषां कदाचन ॥ ५५ ॥ भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते । सुराविण्मूत्रसंस्पृष्टं शुध्यते तापलेखनैः ॥ ५६ ॥ गवाऽऽघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च । शुध्यन्ते दशभिः क्षारैः श्वकाकोपहतानि च ॥ ५७ ॥ शुद्धिः सुवर्णरूप्याणां मारुतार्केन्दुरश्मिभिः । गण्डूषं पादशौचं च कुर्यात्कांस( स्य )स्य भाजने ॥ ५८ ॥ भूमौ निक्षिप्य षण्मासान्पुनराकारमादिशेत् । निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति ॥ ५९ ॥ आमिषाभि ( भी ) रसंस्पृष्टं ताम्रमम्लेन शुध्यति । रेतःस्पृष्टं शवस्पृष्टमाविकं न च दुष्यति ॥ ६० ॥ दंपत्योर्विप्रयोरग्न्योर्विप्राग्न्योर्गोद्विजन्मनोः । अन्तरे यदि वा गच्छेदहोरात्रेण शुध्यति ॥ ६१ ॥ विना दर्भेण यत्स्नानं यच्च दानं विनोदकम् । असंख्यातं तु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥ ६२ ॥ आसने पादमारूढे यत्स्यादर्धं कृतं पदः । मुखेन धमितं भुङ्क्ते तुल्यं गोमांसभक्षणे ( णम् ) ॥ ६३ ॥ पिबतः पतते तोयं भाजने मुखनिःसृतम् । अभोज्यं तद्भवेदन्नं भुक्त्वा चान्द्रायणं चरेत् ॥ ६४ ॥ शुष्कमन्नमविप्रस्य सप्तरात्रेण जीर्यति । अन्नं व्यञ्जनसंयुक्तमर्धमासेन जीर्यति ॥ ६५ ॥ पयो दधि तु मासेन षण्मासेन घृतं तथा । तैलं संवत्सरेणैव कोष्ठे जीर्यति मा ( वा ) न वा ॥ ६६ ॥ यस्तु भुञ्जीत शूद्रान्नं मासमेकं निरन्तरम् । स जीवन्नेव शूद्रः स्यान्मृतः श्वानोऽभिजायते ॥ ६७ ॥ शूद्रान्नरसपुष्टस्य त्वधीयानस्य नित्यशः । यजतो जुह्वतो वाऽपि गतिरूर्ध्वं न विद्यते

---

[1] घ. स्नानं ।

॥ ६८ ॥ शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति । यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्तते ॥ ६९ ॥ शूद्रान्नेनोदरस्थेन यस्तु प्राणान्विमुञ्चति । स भवेत्सूकरो ग्रामे तस्य वा जायते कुले ॥ ७० ॥ शूद्रान्नं पच्यते येन शूद्रा च गृहमेधिनी । वर्जितः पितृभिर्देवै रौरवं नरकं व्रजेत् ॥ ७१ ॥ शूद्रप्रेक्षणकारी यो ब्राह्मणो ज्ञानदुर्बलः । भूमौ देयं तु तस्यान्नं यथैव श्वा तथैव सः ॥ ७२ ॥ शूद्रान्नं शूद्रसंपर्कः शूद्रेणैव सहासनम् । शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत् ॥ ७३ ॥ शूद्रे कृतप्रणामे तु स्वस्ति चेत्क्रियते द्विजैः । शूद्रोऽग्रे नरकं याति ब्राह्मणस्तदनन्तरम् ॥ ७४ ॥ अग्निहोत्री तु यो विप्रः शूद्रान्नान्न निवर्तते । पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः ॥ ७५ ॥ शूद्रोच्छिष्टस्तु संस्पृष्टः प्रमादाद्द्रव्यपाणिना । तद्द्विजेन न भोक्तव्यमापस्तम्बोऽब्रवीन्मुनिः ॥ ७६ ॥ भुञ्जीत ब्राह्मणस्यान्नं क्षत्रियस्य तु पर्वणि । सकृद्वैश्यस्य भुञ्जीत न शूद्रस्य कथंचन ॥ ७७ ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् । वैश्यान्नमन्नमेव स्याच्छूद्रस्य रुधिरं स्मृतम् ॥ ७८ ॥ ब्राह्मणान्ने पवित्रत्वं क्षत्रान्ने पशुता स्मृता । वैश्यान्ने चापि शूद्रत्वं शूद्रान्ने नरकं व्रजेत् ॥ ७९ ॥ दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति । यस्यान्नं च समश्नाति भुङ्क्ते तस्य च किल्बिषम् ॥ ८० ॥ सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः । पिबेत्पानीयमज्ञानाद्भुङ्क्ते चान्नं स्पृशेत्तथा ॥ ८१ ॥ पानीयपाने कुर्वीत पञ्चगव्यस्य प्राशनम् । त्रिरात्रोपोषितो भूत्वा स्पृष्ट्वा स्नानेन शुध्यति ॥ ८२ ॥ दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु । षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥ ८३ ॥ यद्येकजाता बहवः पृथक्क्षेत्रेषु वर्णिनाम् । सर्वेषां पैतृकं शौचं यावन्नोपरतः पिता ॥ ८४ ॥ मृतसूतकपुष्टाङ्गं द्विजं शूद्रान्नभोजनम् । अहमेव न जानामि कां कां योनिं स गच्छति ॥ ८५ ॥ गृध्रो द्वादश जन्मानि दश जन्मानि सूकरः । श्वा भवेत्सप्त जन्मानि इत्येवं मनुरब्रवीत् * ॥ ८६ ॥ उपनीतं यदा त्वन्नं भोजने समुपस्थितम् । अपीतरसमुत्सृष्टं न दद्यान्नैव होमयेत् ॥ ८७ ॥ अन्ने भोजनसंपन्ने मक्षिकाकेशदूषिते । अनन्तरं स्पृशेदापस्तच्चान्नं भस्मना स्पृशेत् ॥ ८८ ॥ मूत्रं कृत्वा व्रजन्यस्तु स्मृतिभ्रंशाज्जलं पिबेत् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ८९ ॥ अरण्ये निर्जले देशे चौरव्याघ्रादिसंकुले । कृत्वा मूत्रं पुरीषं च द्रव्यहस्तो न दुष्यति ॥ ९० ॥

---

* इति उत्तरमेतद्वचनमुपलभ्यते–ख. ग पुस्तकयोः “ प्रस्तुते दीक्ष(क्षा)होमे च विवाहे यज्ञमण्डपे । अन्तरा मृतकोत्पत्तौ न दोषो मनुरब्रवीत्” इति ।

---

१ क. ख. ग. आत्म ब्र° । २ क ग ग दरिद्रत्वं । ३ क. ख. ग. भुङ्क्ते । ४ क. वर्णित. । स° । ग. वर्णिन । स° । ५ क. ख. °रमते पि° । ६ क ग. भोजने ।

भूमौ निक्षिप्य तद्द्रव्यं शौचं कृत्वा यथाविधि । गृह्णीयाच्चैव तद्द्रव्यमुपस्पृश्य यथाविधि ॥ ९१ ॥ मन्त्रोच्चारं द्विजः कृत्वा न कुर्याच्छौचमात्मनः । मोहाद्भुङ्क्ते त्रिरात्रं तु जलं पीत्वा विशुध्यति ॥ ९२ ॥ यदा भोजनकाले तु अशुचिर्भवति द्विजः । भूमौ निक्षिप्य तद्ग्रासं स्नात्वा विप्रो विशुध्यति ॥९३॥ भक्षयित्वा तु तद्ग्रासमहोरात्रेण शुध्यति । अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुध्यति ॥ ९४ ॥ यस्तु भुञ्जीत पङ्क्तिस्थः कुत्सितान्नं विशेषतः । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥९५॥ एकपङ्क्त्युपविष्टानां दुष्कृत सर्वसाधुनाम् । सर्वे तत्समतां यान्ति पङ्क्तिर्यावन्न भुंञ्जति(?) ॥ ९६ ॥ अग्निना भस्मना चैव स्तम्भेन उदकेन च । द्वारेणाप्यथ मार्गेण पङ्क्तिर्भिद्येत षड्विधा ॥ ९७ ॥ एकपङ्क्तिस्थितो भुङ्क्ते न स्पृशेच्च परस्परम् । भस्मना कृतमर्यादा एकपङ्क्तिर्न दुष्यति ॥ ९८ ॥ कृत्वा पापं हि शोचन्वै ब्राह्मणो वेदपारगः । स्मृत्यर्थं विन्दति योऽपि तस्मात्पापात्प्रमुच्यते॥ ९९ ॥ नैव कुर्यां पुनरिति निवृत्त्यात्मा भवेद्यदि । वह्निर्वेदागमाभ्यासः सर्वं पापं विशुध्यति ॥ १०० ॥ यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् । एवं दहति वेदज्ञः कर्मजं दोषमात्मनः ॥१०१॥ न देव(वेद) बलमाश्रित्य पापकर्मरतिर्भवेत् । अज्ञानाद्वा प्रमादाद्वा दहते कर्म नेतरत् ॥१०२॥उदक एवोदकस्थश्च स्थले स्थलगतः शुचिः। पादौ स्थाप्योभयत्रैव आचान्तो भयतः शुचिः ॥ १०३ ॥ उत्तीर्याऽऽचम्य उदकमवतीर्य उपस्पृशेत् । एवं स श्रेयसा युक्तो वरुणेनाभिमन्त्रितः ॥ १०४ ॥ अग्न्यागारे गवां गोष्ठे देवब्राह्मणसंनिधौ । भोजने जपकाले च पादुकानां विसर्जनम् ॥ १०५ ॥ पादुकासनमारूढः स्वगृहात्परगृहं व्रजेत् । छेदयेत्तस्य पादौ तु धार्मिकः पृथिवीपतिः ॥ १०६ ॥ अग्निहोत्री तपस्वी च श्रोत्रियो वेदपारगः । एते सपादुका यान्ति शेषान्दण्डेन ताडयेत् ॥ १०७ ॥ जन्मप्रभृतिसंस्कारे श्मशानान्ते तथैव च । गणान्ने गणकान्ने वा चौरस्य वृषलीपतेः ॥ १०८ ॥ पाचकान्ने नवश्राद्धे सग्रहे चन्द्रसूर्ययोः । स्त्रीणां प्रथमगर्भेषु भुक्त्वा चान्द्रायणं चरेत् ॥ १०९ ॥ अन्यदत्ता तु या कन्या पुनरन्यत्र दीयते । तस्याश्चैव न भोक्तव्यं पुनर्भूः कीर्तिता बुधैः ॥ ११० ॥ पूर्वं तु स्रवते गर्भो यस्याश्चैवाथ संस्कृतः । द्वितीयो गर्भसंस्कारः पुनरेता तु सोच्यते ॥ १११ ॥ या चाऽऽदौ दशभिर्वर्षैर्जीवत्तिष्ठति गर्भिणी( ? ) । धारितं तु न रेतो वै रेतोधा सा तथोच्यते ॥ ११२ ॥ भर्तुः शयनमुल्लङ्घ्य या चान्येषु प्रवर्तते । तस्या अन्नं न भोक्तव्यं

१ घ. भुञ्जते । २ घ विन्दतो यो° । ३ क घ. °तीये ग° । ४ क. °र्जीवेत्ति° । ५ क. °धाता त° । ६ ख. ग. सा न शुच्य° ।

विज्ञेया कामचारिणी ॥ ११३ ॥ पुनर्भूः पुनरेता च रेतोधा कामचारिणी। तासां प्रथमगर्भे च भुक्त्वा चान्द्रायणं चरेत् ॥११४॥ अनपत्या तु या नारी नाश्नीयादेव तद्गृहे। अथ भुञ्जीत मोहात्मा पूयसं नरकं व्रजेत् ॥ ११५ ॥ स्त्रीधनानि च ये मोहादुपजीवन्ति बान्धवाः। नारीयानानि वस्त्राणि ते पापा यान्त्यधोगतिम्॥११६॥ राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम्। सूतकान्नं तु यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम्[1] ॥ ११७ ॥ रात्रावस्तमिते सूर्ये चण्डाली स्पृशते स्त्रियः। ताः स्पृष्टास्तु यदा किंचित्प्रायश्चित्तं कथं भवेत् ॥ ११८ ॥ जातरूपं स्पृशेदापो दिवाऽऽनीतं तु यज्जलम्। तेन स्नात्वा च पीत्वा च सर्वे( र्वः ) स्पृष्ट्वा शुचिर्भवेत् ॥ ११९ ॥ दासनापितगोपालकुलमित्रार्धसीरिणः। एते शूद्रेषु भोज्यान्ना यश्चाऽऽत्मानं निवेदयेत् ॥ १२० ॥ अन्यशूद्रेषु अन्नाद्यं ये भुञ्जन्ति क्षुधा द्विजाः। प्रायश्चित्तं च संप्राप्तं चरेच्चान्द्रायणं व्रतम् ॥ १२१ ॥ वृषलीफेनजातस्य निःश्वासोपहतस्य च। तासु चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥ १२२ ॥ अजापालो म(मा)हिषश्च तथा च वृषलीपतिः। प्रमादादपि संस्पृश्य सचैलं स्नानमाचरेत् ॥ १२३ ॥ रेतःक्षयकरी वन्ध्या अजास्ताः परिकीर्तिताः। तासां यः पालयेद्विप्रो ह्यजापालः स उच्यते ॥ १२४ ॥ महिषीत्युच्यते नारी या चैव व्यभिचारिणी। तं दोषं क्षमते यस्तु स वै माहिष उच्यते ॥ १२५ ॥ पितुर्वेश्मनि या कन्या रजस्तु समुपस्पृशेत्। भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥ १२६ ॥ माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च। त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ १२७ ॥ उद्वहेद्यस्तु तां कन्यां ब्राह्मणो मदमोहितः। असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥१२८॥ अग्रे च माहिषं दृष्ट्वा मध्ये च वृषलीपतिः। अन्त्ये वार्धुषिकं दृष्ट्वा निराशाः पितरो गताः ॥ १२९ ॥ श्वित्री कुष्ठी तथा तस्य कुनखी श्यावदन्तकः। निराशाः पितरो यान्ति देवता ऋषिभिः सह ॥ १३० ॥ नाश्नन्ति पिशुने देवा नाश्नन्त्यनृतवादिनः। भार्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे ॥१३१॥ नखलोमोपजातस्य न रक्तोन(त्त?)रवाससः। द्व्यङ्गुलातीतकर्णस्य भुञ्जते पितरो हविः ॥१३२॥ यावदुष्णं भवेदन्नं यावद्भुञ्जन्ति वाग्यताः। तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥१३३॥ हविर्गुणा न वक्तव्याः पितरो यत्र तर्पिताः। पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः ॥१३४॥ यावतो ग्रसते पिण्डान्हव्यकव्येष्वमन्त्रवित्। तावतो ग्रसते प्रेत्य दीप्तान्स्थूलानयोमयान् ॥ १३५ ॥ यावद्विप्रा न पूज्यन्ते अन्नदानहिरण्ययोः। तावच्चीर्णव्रतस्यापि

१ क. °म्। अस्तमिते यदि सू°। २ ख. ग. °ननीत°।

तत्पापं न प्रणश्यति ॥ १३६ ॥ यद्विष्ठया काकवलाकयोर्वा अमेध्यलिप्तं च भवेच्छरीरम् । श्रोत्रे मुखे न प्रविशेच्च सम्यक्स्नानेन लेपोपहतस्य शुद्धिः ॥ १३७ ॥ अभक्ष्याणामपेयानामलेह्यानां च भक्षणे । रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत् ॥ १३८ ॥ पद्मोदुम्बरबिल्वानां कुशाश्वत्थपलाशयोः । एतेषामुदकं पीत्वा षड्रात्रेण विशुध्यति ॥१३९॥ ये प्रत्यवसिता विप्राः प्रव्रज्याग्निजलोद्वहाः । अनाशकनिर्वृत्तश्च गृहस्थत्वं चिकीर्षति ॥ १४० ॥ स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च जातकर्मविधिं कृत्वा पुनः संस्कारमर्हति ॥ १४१ ॥ तूलिका चोपधानानि पुष्परक्ताम्बराणि च । शोषयित्वाऽर्कतापेन प्रोक्षणेन विशुध्यति ॥ १४२ ॥ देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा कर्म समाचरेत्॥१४३॥ रथ्याकर्दमतोयानि नाना पथि तृणानि च । मारुतार्केण शुध्यन्ति पक्केष्टकाचितानि च ॥ १४४ ॥ आतुरे स्नानमु(उ)त्पन्ने दशकृत्वो ह्यनातुरः । स्नात्वा स्नात्वा स्पृशेद्वाऽपि ततः शुध्येत्स आतुरः॥ १४५ ॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा । कृच्छ्रमेकं चरेत्पूर्वा पादमेकं तथोत्तरा ॥ १४६ ॥ उपवासैस्त्रिभिर्वाऽपि अहोरात्रेण चोत्तरा । एवं पातकनिर्दिष्टमङ्गिरा मुनिरब्रवीत् ॥१४७ ॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्या च शूद्रिणी तथा । कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानेन शुध्यति ॥१४८॥ रजस्वला तु संस्पृष्टा चण्डालादि यदि स्पृशेत् । गोमूत्रयावकाहारा षड्रात्रेण विशुध्यति ॥ १४९ ॥ नारी रजस्वला[स्पृष्टा]खरचाण्डालकुक्कुटैः । भुक्त्वा ह्येतान्प्रपश्येत मानस्तोकऋचं जपेत् ॥ १५० ॥ भुञ्जानेनैव विप्रेण स्पृष्टा चैव रजस्वला । प्राजापत्येन कृच्छ्रेण प्राणायामशतेन च ॥ १५१ ॥ दिवाकीर्तिमुदक्यां च पतितं सूतकं तथा । शवसंस्पर्शने चैव स्पृष्ट्वा स्नानेन शुध्यति ॥ १५२ ॥ दिवाऽऽहृतेन तोयेन तापितेनाग्निसंनिधौ । दिवा नार्केण संस्पृष्टा रात्रौ नक्षत्रमालिनी (!)॥ १५३ ॥ संध्ययोरुभयोश्चैव पवित्रं सर्वदा जलम् । खातं वापी तथा कूपः प्रपा[४]नद्यास्तु वाक्पतिः॥१५४॥ यष्टि[५]घाते तथा चैव मृत्पिण्डे गोमयेन तु । उपलेपेन शुध्यन्ति अङ्गिरा मुनिरब्रवीत् ॥ १५५ ॥ गोदुग्धं गोमयं क्षीरं दधि तक्रं तथा घृतम् । गोपुच्छं पश्चिमे भागे एते सर्वे पवित्रकाः ॥ १५६ ॥ एवं ते कथितं सर्वं प्रमादाज्ञानवित्तमः(?) यत्र यत्र मृता गावः प्रायश्चित्तं पृथक्पृथक् ॥ १५७ ॥ गवां च पतने कृच्छ्रं पाषाणे च द्वयं चरेत् । अर्धकृच्छ्रं तु वाप्यां स्यात्पादकृच्छ्रं तु कूपके ॥ १५८ ॥ शस्त्रहा त्रीणि

१ क. ख. ग. °वृत्ताश्च । २ ग. °धान्यानि । ३ क. घ. °स्पृष्ट्वा च° । ४ ख. °पातया° । ५ ग. यष्ट्याघा° ।

कृच्छ्राणि यष्टिघाती द्वयं चरेत् । मृत्पिण्डादातिकृच्छ्रं तु प्राजापत्यं च गोमये॥१५९॥ एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् । योजने पादहीनं स्याच्चरेत्सर्वं निपातने ॥ १६० ॥ न स्त्रीषु वचनं कुर्यान्नैव गानमुपव्रजेत् । न च रात्रौ भवेद्गोष्ठे न कुर्याद्वैदिकां (कीं) क्रियाम् ॥ १६१ ॥ लाङ्गूलच्छेदने पादौ तथा चैवानुधारणे । पादहीने शिखावर्जं सशिखं च निपातने ॥ १६२ ॥ एवमेव तु नारीणां मुण्डमुण्डापनं स्मृतम् । एकीकृत्य कचान्सर्वाञ्छेदयेदङ्गुलद्वयम् ॥ १६३ ॥ अनुच्छिष्टेन संस्पृष्टो येन चाऽऽचमनं व्रजेत् । तेनैवोच्छिष्टसंस्पृष्टे त्रिरात्रेण विशुध्यति ॥ १६४ ॥ शवसूत समुत्पन्ने सूतकं तु भवेद्यदि । शवेन शुध्यते सूतिर्न सूत्या शुध्यते शवम् ॥ १६५ ॥ सूतकेन तु जातेन उभाभ्यां सूतकं यदि । पातकेन तु लिप्येत सूतकेनैव गच्छति ॥ १६६ ॥ सर्वव्रतेषु निर्दिष्टं पश्चात्सूतकिनो भवेत् । चीर्णव्रते तु निर्दिष्टं पश्चाद्ब्राह्मणभोजनम् ॥ १६७ ॥ अधीते य इदं शास्त्रमुक्तमाङ्गिरसा स्वयम् । ऋषीणां संनिधौ विप्रः सर्वपापैः प्रमुच्यते ॥ १६८ ॥

इति श्रीमदङ्गिरःप्रोक्तं धर्मशास्त्रं संपूर्णम् ॥

समाप्तेयमाङ्गिरःस्मृतिः ॥

====

१ क. ख. नचारा° ।

ॐ तत्सद्ब्रह्मणे नमः ।

महर्ष्यत्रिप्रणीता

# अत्रिसंहिता ।

---

हुताग्निहोत्रमासीनमत्रिं वेदविदां वरम् । सर्वशास्त्रविधिज्ञातमृषिभिश्च नमस्कृतम् ॥ १ ॥ नमस्कृत्य च ते सर्व इदं वचनमब्रुवन् । हितार्थं सर्वलोकानां भगवन्कथयस्व नः ॥ २ ॥ अत्रिरुवाच—वेदशास्त्रार्थतत्त्वज्ञा यन्मे पृच्छथ संशयम् । हितार्थं संप्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ॥ ३ ॥ सर्वतीर्थान्युपस्पृश्य सर्वान्देवान्प्रणम्य च । जप्त्वा तु सर्वसूक्तानि सर्वशास्त्रानुसारतः ॥ ४ ॥ सर्वपापहरं नित्यं सर्वसंशयनाशनम् । चतुर्णामपि वर्णानामत्रिः शास्त्रमकल्पयत् ॥ ५ ॥ ये च पापकृतो लोके ये चान्ये धर्मदूषकाः । सर्वैः पापैः प्रमुच्यन्ते श्रुत्वेदं शास्त्रमुत्तमम् ॥ ६ ॥ तस्मादिदं वेदविद्भिरध्येतव्यं प्रयत्नतः । शिष्येभ्यश्च प्रवक्तव्यं सद्वृत्तेभ्यश्च धर्मतः ॥ ७ ॥ अकुलीने ह्यसद्वृत्ते जडे शूद्रे शठे द्विजे । एतेष्वेव न दातव्यमिदं शास्त्रं द्विजोत्तमैः ॥ ८ ॥ एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा ह्यनृणी भवेत् ॥ ९ ॥ एकाक्षरप्रदातारं यो गुरुं नाभिमन्यते । शुनां योनिशतं गत्वा चाण्डालेष्वपि जायते ॥ १० ॥ वेदं गृहीत्वा यः कश्चिच्छास्त्रं चैवावमन्यते । स सद्यः पशुतां याति संभवानेकविंशतिम् ॥ ११ ॥ स्वानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः । प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः ॥ १२ ॥ कर्म विप्रस्य यजनं दानमध्ययनं तपः । प्रतिग्रहोऽध्यापनं च याजनं चेति वृत्तयः ॥ १३ ॥ क्षत्रियस्यापि यजनं दानमध्ययनं तपः । शस्त्रोपजीवनं भूतरक्षणं चेति वृत्तयः॥१४॥ दानमध्ययनं वार्ता यजनं चेति वै विशः । शूद्रस्य वार्ता शुश्रूषा द्विजानां कारुकर्म च ॥ १५ ॥ मयैष धर्मोऽभिहितः संस्थिता यत्र वर्णिनः । बहुमानमिह प्राप्य प्रयान्ति परमां गतिम् ॥ १६ ॥ ये व्यपेताः स्वधर्मेभ्यः परधर्मे व्यवस्थिताः । तेषां शास्तिकरो राजा स्वर्गलोके महीयते ॥ १७ ॥ आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते । परधर्मो भवेत्त्याज्यः सुरूपपरदारवत् ॥ १८ ॥ वध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः । ततो राष्ट्रस्य हन्ताऽसौ यथा वह्नेश्च वै जलम् ॥ १९ ॥ प्रतिग्रहोऽध्यापनं च तथाऽविक्रेयविक्रयः । याज्यं चतुर्भिरप्येतैः क्षत्रविट्पतनं स्मृ-

---

१ ग. हुत्वाऽग्निं° । २ ग. °विधानज्ञं मुनिभिं° । ३ ग °दज्ञाः शास्त्रतत्त्व° । ४ क. यन्मा पृ° । ५ ख. ग. दिव्यं । ६ ग. यत्नतः । ७ ग. स प्रेत्य प° । ८ ग. च याज्या च क्रयविक्रयम् । च° ।

तम् ॥ २० ॥ सद्यः पतति मांसेन लाक्षया लवणेन च *। त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥ २१ ॥ अव्रताश्चानधीयाना यत्र भैक्षचरा द्विजाः। तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदं बुधैः ॥ २२ ॥ विद्वद्भोज्यमविद्वांसो येषु राष्ट्रेषु भुञ्जते। तेऽप्यनावृष्टिमिच्छन्ति महद्वा जायते भयम् ॥ २३ ॥ ब्राह्मणान्वेदविदुषः सर्वशास्त्रविशारदान्। तत्र वर्षति पर्जन्यो यत्रैतान्पूजयेन्नृपः ॥ २४ ॥ त्रयो लोकास्त्रयो वेदा आश्रमाश्च त्रयोऽग्नयः। एतेषां रक्षणार्थाय संसृष्टा ब्राह्मणाः पुरा ॥ २५ ॥ उभे संध्ये समाधाय मौनं कुर्वन्ति ये द्विजाः। दिव्यवर्षसहस्राणि स्वर्गलोके महीयते + ॥ २६ ॥ य एवं कुरुते राजा गुणदोषपरीक्षणम्। यशः स्वर्गं नृपत्वं च पुनः कोशं समृद्धयेत् × ॥ २७ ॥ दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः। अपक्षपातोऽर्थिषु राष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ २८ ॥ यत्प्रजापालने पुण्यं प्राप्नुवन्तीह पार्थिवाः। न तु क्रतुसहस्रेण प्राप्नुवन्ति द्विजोत्तमाः ॥ २९ ॥ अलाभे देवखातानां ह्रदेषु च सरःसु च। उद्धृत्य चतुरः पिण्डान्पारके स्नानमाचरेत् ॥ ३० ॥ वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः। श्लेष्मास्थिदूषिकाः स्वेदो द्वादशैते नृणां मलाः ॥ ३१ ॥ षण्णां षण्णां क्रमेणैव शुद्धिरुक्ता मनीषिभिः। मृद्वारिभिश्च पूर्वेषामुत्तरेषां च वारिणा ॥ ३२ ॥ शौचं मङ्गलमायासअ(श्वा)नसूयाऽस्पृहा दमः। लक्षणानि च विप्रस्य तथा दानं दयाऽपि च ॥ ३३ ॥ न गुणान्गुणिनो हन्ति स्तौति चान्यान्गुणानपि। न हसेच्चान्यदोषांश्च साऽनसूया प्रकीर्तिता ॥३४॥ अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः। आचारेषु व्यवस्थानं शौचमित्यभिधीयते ॥ ३५ ॥ प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिर्धर्मदर्शिभिः ॥ ३६ ॥ शरीरं पीड्यते येन शुभेन त्वशुभेन वा। अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते ॥ ३७ ॥ यथोत्पन्नेन कर्तव्यः संतोषः सर्ववस्तुषु। न स्पृहेत्परदारेषु साऽस्पृहा परिकीर्तिता ॥ ३८ ॥ बाह्यमाध्यात्मिकं वाऽपि दुःखमुत्पाद्यते परैः। न कुप्यति न वा हन्ति दम इत्यभिधीयते ॥ ३९ ॥ अहन्यहानि दातव्यमदीनेनान्तरात्मना। स्तोकादपि प्रयत्नेन दानमित्यभिधीयते ॥ ४० ॥ परस्मिन्बन्धुवर्गे वा मित्रे द्वेष्ये रिपौ तथा। आत्मवद्वर्तितव्यं हि दयैषा परिकीर्तिता ॥४१॥ यश्चैतैर्लक्षणैर्युक्तो गृहस्थोऽपि भवेद्द्विजः। स गच्छति परं स्थानं जायते नेह वै पुनः ॥४२॥

* इत परं ग. पुस्तक एतदर्ध विद्यते—“ नील्या तिलैश्च तैलेन गोभिरश्वैश्च गोरसैः ”। इति। + आर्षो वचनव्यत्यय। × इतः परमेतदर्ध ग. पुस्तके—“ य एवं कुरुते राजा तस्य कोटिफलं भवेत् ”। इति।

१ ग. °ह्मणो वेदविक्रयी। अ°। २ ख. °रभुक्त प्रदण्डवत्। वि°। ३ ग. °भक्षप्रदो हि स। वि°। ४ ग °पा तु हितार्थं°। ५ ख स आजये°। ६ ग. °भिर्ब्रह्मवादिभि। ७ ग. °न सुशुभेनापि कर्मणा। अतियत्नं न कु° ८ ग. स्तोकमपि। ९ ग. द्वेष्टरि वा त°।

अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम्। आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥ ४३ ॥ वापीकूपतडागादि देवतायतनानि च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ ४४ ॥ इष्टं पूर्तं प्रकर्तव्यं ब्राह्मणेन प्रयत्नतः। इष्टेन लभते स्वर्गं पूर्तेन मोक्षमाप्नुयात् ॥ ४५ ॥ इष्टापूर्तौ द्विजातीनां सामान्यौ धर्मसाधनौ। अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके ॥ ४६ ॥ यमान्सेवेत सततं न नित्यं नियमान्बुधः। यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥४७॥ आनृशंस्यं क्षमा सत्यमहिंसा दानमार्जवम्। प्रीतिः प्रसादो माधुर्यं मार्दवं च यमा दश ॥ ४८ ॥ शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः। व्रतमौनोपवासाश्च स्नानं च नियमा दश ॥ ४९ ॥ प्रतिकृतिं[1] कुशमयीं तीर्थवारिषु मज्जयेत्[2]। यमुद्दिश्य निमज्जेत[3] अष्टभागं लभेत सः ॥ ५० ॥ मातरं पितरं वाऽपि भ्रातरं सुहृदं गुरुम्। यमुद्दिश्य निमज्जेत[4] द्वादशांशफलं लभेत् ॥ ५१ ॥ अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा। पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥ ५२ ॥ पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्। ऋणमस्मिन्संनयाति अमृतत्वं च गच्छति ॥ ५३ ॥ जातमात्रेण पुत्रेण पितॄणामनृणी पिता। तदह्नि शुद्धिमाप्नोति नरकात्त्रायते हि सः[5] ॥ ५४ ॥ जायन्ते बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजते चाश्वमेधं च नीलं वा वृषमुत्सृजेत् ॥ ५५ ॥ काङ्क्षन्ति पितरः सर्वे नरकान्तरभीरवः। गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ॥ ५६ ॥ फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम्। गयाशीर्षं पदाऽऽक्रम्य मुच्यते ब्रह्महत्यया ॥ ५७ ॥ महानदीमुपस्पृश्य तर्पयेत्पितृदेवताः। अक्षयाँल्लभते लोकान्कुलं चैव समुद्धरेत् ॥ ५८ ॥ शङ्कास्थाने समुत्पन्ने भक्ष्यभोज्यविवर्जिते। आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु ॥ ५९ ॥ अक्षारलवणं रौक्षं[6] पिबेद्ब्राह्मीं सुवर्चलाम्[7]। त्रिरात्रं शङ्खपुष्पीं वा ब्राह्मणः पयसा सह ॥ ६० ॥ मद्यभाण्डे[8] द्विजः कश्चिदज्ञानात्पिबते जलम्। प्रायश्चित्तं कथं तस्य मुच्यते केन कर्मणा ॥ ६१ ॥ पलाशबिल्वपत्राणि कुशान्पद्मान्युदुम्बरम्। क्वाथयित्वा पिबेदपस्त्रिरात्रेणैव शुध्यति ॥ ६२ ॥ सायं प्रातस्तु यः संध्यां प्रमादाद्विक्रमेत्सकृत्। गायत्र्यास्तु सहस्रं हि जपेत्स्नात्वा समाहितः[9] ॥ ६३ ॥ शोकाक्रान्तोऽथवा श्रान्तः स्थितः स्थानजपाद्बहिः। ब्रह्मकूर्चं चरेद्भक्त्या दानं दत्त्वा विशुध्यति ॥ ६४ ॥ गवां शृङ्गोदके स्नात्वा महानद्युपसंगमे। समुद्रदर्शनेनैव व्यालदष्टः शुचिर्भवेत् ॥ ६५ ॥ वृकश्वानशृगालैस्तु यदि दष्टश्च ब्राह्मणः। हिरण्योदकसंमिश्रं घृतं प्राश्य विशुध्यति ॥ ६६ ॥

---

१ ख ग °तिनिधि कु°। २ ख. ग मज्जति। ३ ग °त द्वादशांशं फलं भवेत्। मा°। ४ ग. °त ह्यष्टभागं लभेत स। अ°। ५ ग स.। यष्टव्या घ°। ६ क भैक्षं। ग रुक्षं। ७ क. ख. °र्चसम्। त्रि°। ८ क. °भाण्डाद्द्वि°। ९ ख. ग. °त.। रोगाक्रा°।

ब्राह्मणी तु शुना दष्टा जम्बुकेन वृकेण वा । उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥ ६७ ॥ सव्रतश्च शुना दष्टस्त्रिरात्रमुपवासयेत् । सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥ ६८ ॥ मोहात्प्रमादात्संलोभाद्व्रतभङ्गं तु कारयेत् । त्रिरात्रेणैव शुध्येत पुनरेव व्रती भवेत् ॥ ६९ ॥ ब्राह्मणान्नं यदुच्छिष्टमश्नात्यज्ञानतो द्विजः । दिनद्वयं तु गायत्र्या जपं कृत्वा विशुध्यति ॥ ७० ॥ क्षत्रियान्नं यदुच्छिष्टमश्नात्यज्ञानतो द्विजः । त्रिरात्रेण भवेच्छुद्धिर्यथा क्षत्रे तथा विशि ॥ ७१ ॥ अभोज्यान्नं तु भुक्तान्नं स्त्रीशूद्रोच्छिष्टमेव वा । जग्ध्वा मांसमभक्ष्यं तु सप्तरात्रं यवान्पिबेत् ॥७२॥ शुना चैव तु संस्पृष्टस्तस्य स्नानं विधीयते । तदुच्छिष्टं तु संप्राश्य षण्मासान्कृच्छ्रमाचरेत् ॥ ७३ ॥ असंस्पृष्टेन संस्पृष्टः स्नानं तेन विधीयते । तस्य चोच्छिष्टमश्नीयात्षण्मासान्कृच्छ्रमाचरेत् ॥ ७४ ॥ अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च । पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ ७५ ॥ वपनं मेखलादण्डं भैक्षचर्यव्रतानि च । निवर्तन्ते द्विजातीनां पुनः संस्कारकर्मणि ॥ ७६ ॥ गृहशुद्धिं प्रवक्ष्यामि अँत्यश्वशवदूषिता ( त ) म् । प्रोयोज्यं मृन्मयं भाण्डं सिद्धमन्नं तथैव च ॥ ७७ ॥ गृहान्निष्क्रम्य तत्सर्वं गोमयेनोपलेपयेत् । गोमयेनोपलिप्याथ च्छागेनाऽऽघ्रापयेत्पुनः ॥ ७८ ॥ ब्राह्मैर्मन्त्रैस्तु पूतं तु हिरण्यकुशवारिभिः । तेनैवाभ्युक्ष्य तद्वेश्म शुध्यते नात्र संशयः ॥७९॥ राँज्ञाऽन्यैः श्वपचैर्वाऽपि बलाद्विचालितो द्विजः । पुनः कुर्वीत संस्कारं पश्चात्कृच्छ्रत्रयं चरेत् ॥ ८० ॥ शुना चैव तु संस्पृष्टस्तस्य स्नानं विधीयते । तदुच्छिष्टं तु संप्राश्य यत्नेन कृच्छ्रमाचरेत् ॥ ८१ ॥ अतः परं प्रवक्ष्यामि सूतकस्य विनिर्णयम् । प्रायश्चित्तं पुनश्चैव कथयिष्याम्यतः परम् ॥८२ ॥ एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तु निर्गुणो दशभिर्दिनैः ॥ ८३ ॥ * व्रतिनः शास्त्रपूतस्य आहिताग्नेस्तथैव च । राज्ञस्तु सूतकं नास्ति यस्य चेच्छति ब्राह्मणः ॥ ८४ ॥ ब्राह्मणो दशरात्रेण द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ ८५ ॥ सपिण्डानां तु सर्वेषां गोत्रँजः साप्तपौरुषः । पिण्डांश्चोदकदानं च शावाशौचं तथाऽनुगम् ॥ ८६ ॥ चतुर्थे दशरात्रं स्यात्षडहः पञ्चमे तथा । षष्ठे चैव त्रिरात्रं स्यात्सप्तमे त्र्यहमेव वा ॥ ८७ ॥ ×अष्टमे दिनमेकं तु नवमे प्रहरद्वयम् । दशमे स्नानमात्रेण सूतके तु शुचिर्भवेत् ॥ ८८ ॥

* एतदर्धस्थानेऽर्थे पाठो ग पुस्तके—" संयती शस्त्रपूतस्तु आहिताग्निस्तथैव च । " इति । × एतद्वचनं न विद्यते ख. ग. पुस्तकयो. ।

१ ग. °भङ्गो यदा भवेत् । त्रि° । २ ख. ग. °णाना य° । ३ क. °न्नं यथा भुक्त्वा स्त्री° । ४ क. रा. °अन्तस्थश° । ५ ख. प्रयोज्यं । ग. अभोज्यं । ६ ग राजान्ते श्व° । ७ ग °न्नत. सप्तपूरुषम् । सपिण्डाना सोदकानां शा° । ८ ग. °मेन तु । षष्ठेन तु त्रिरात्रं स्यात्सप्तमे त्वहरेव च । ९ ग. °मे त्वहरेव च । मृतेषु दासदासी° ।

मृतसूतके दासीनां पत्नीनां चानुलोमिनाम् । स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौनिकम्[1] ॥ ८९ ॥ शवस्पृष्टस्तृतीयस्तु[2] सचैलं स्नानमाचरेत् । चतुर्थे सप्तमे[3] भैक्ष्यं स्यादाशौचे विधिः स्मृतः ॥ ९० ॥ एकत्र संस्कृतानां[4] तु मातॄणामेकभोजिनाम् । स्वामितुल्यं भवेच्छौचं विभक्तानां पृथक्पृथक् ॥ ९१ ॥ उष्ट्रीक्षीरमवीक्षीरं यच्चान्नं मृतसूतके । पाचकान्नं नवश्राद्धं भुक्त्वा चान्द्रायणं चरेत् ॥ ९२ ॥ सूतकान्नमधर्माय यस्तु प्राश्नाति मानवः । त्रिरात्रमुपवासः स्यादेकरात्रं जले[5] वसेत् ॥ ९३ ॥ महायज्ञविधानं तु न कुर्यान्मृतजन्मनि । होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा ॥ ९४ ॥ बालस्त्वन्तर्दशाहे तु पञ्चत्वं यदि गच्छति । सद्य एव विशुद्धिः स्यान्न प्रेतं नैव सूतकम् ॥ ९५ ॥ कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च । स्वधाकारं प्रकुर्वीत नामोच्चारणमेव च ॥ ९६ ॥ ब्रह्मचारी[6] यतिश्चैवं मन्त्रे पूर्वकृते तथा । यज्ञे विवाहकाले च सद्यःशौचं विधीयते ॥ ९७ ॥ विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके । पूर्वसंकल्पितार्थस्य न दोषश्चात्रिरब्रवीत् ॥ ९८ ॥ मृतसंजनना[7]दूर्ध्वं[8] सूतकादौ विधीयते । स्पर्शनाचमनाच्छुद्धिः सूतिकां[9] चेन्न संस्पृशेत् ॥ ९९ ॥ पञ्चमेऽहनि विज्ञेयः संस्पर्शः क्षत्रियस्य तु । सप्तमेऽहनि वैश्यस्य विज्ञेयं स्पर्शनं बुधैः ॥ १०० ॥ दशमेऽहनि शूद्रस्य कर्तव्यं स्पर्शनं बुधैः । मासेनैवाऽऽत्मशुद्धिः स्यात्सूतके मृतके तथा ॥ १०१ ॥ व्याधितस्य कदर्थस्य ऋणग्रस्तस्य सर्वदा । क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥ १०२ ॥ व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः[10] । स्वाध्यायव्रतहीनस्य सततं सूतकं भवेत् ॥ १०३ ॥ द्वे कृच्छ्रे परिवित्तेस्तु कन्यायाः कृच्छ्रमेव च । कृच्छ्रातिकृच्छ्रं[11] मातुः स्याद्धेतुः सांतपनं स्मृतम् ॥ १०४ ॥ कुब्ज[12]वामनषण्ढेषु[13] गर्हितेऽथ जडेषु च । जात्यन्धबधिरे मूके न दोषः परिवेदने ॥ १०५ ॥ क्लीवे देशान्तरस्थे च पतिते व्रजितेऽपि वा । योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥ १०६ ॥ पिता पितामहो यस्य अग्रजो वाऽपि कस्यचित्[14] । नाग्निहोत्राधिकारोऽस्ति न दोषः परिवेदने ॥ १०७ ॥ भार्यामरणपक्षे वा देशान्तरगतेऽपि वा । अधिकारी भवेत्पुत्रस्तथा[15] पातकसंयुते ॥ १०८ ॥ ज्येष्ठो भ्राता यदा नष्टो नित्यं रोगसमान्वितः । अनुज्ञातस्तु

---

१ ग. यौगिक° । २ ग. शवं स्पृष्ट्वा तृतीये तु स° । ३ क. °सभैक्ष्यं स्यादेष शाववि° । ४ ग. संभृता° । ५ ग. जलं पिबेत् । भ° । ६ ग °री गृहस्थानां सत्रे पर्व° । ७ ग मृतात्संचयना° । ८ ख. °ननोर्ध्वं । ९ ग सूतकान्ते च सं° । १० ख ग °श. । श्राद्धत्यागविहीनस्य भस्मान्तं सू° । ११ ग. °कृच्छ्रे दातु स्या[ द्वो ]द्धुः सां° । १२ ग कुष्ठिवा° । १३ क °नखञ्जेषु । १४ ख. °त् । अग्नि° । ग. °त् । अग्निहोत्राधिकारोऽस्य न । १५ ग °त्पुत्रो महापातकिनि द्विजे । ज्ये° ।

कुर्वीत शङ्खस्य वचनं यथा ॥ १०९ ॥ नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठो वै विना चैवाभ्यनुज्ञया ॥ ११० ॥ तस्माद्धर्मं सदा कुर्याच्छ्रु-
तिस्मृत्युदितं च यत् । नित्यं नैमित्तं काम्यं यच्च स्वर्गस्य साधनम् ॥ १११ ॥ एकैकं
वर्धयेन्नित्यं शुक्ले कृष्णे च ह्रासयेत् । अमावास्यां न भुञ्जीत एप चान्द्रायणो विधिः
॥ ११२ ॥ एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् । त्र्यहं परं च नाश्नीयाद-
तिकृच्छ्रं तदुच्यते ॥ ११३ ॥ इत्येतत्कथितं पूर्वैर्महापातकनाशनम् । वेदाभ्यासरतं
क्षान्तं महायज्ञक्रियापरम् ॥ ११४ ॥ न स्पृशन्तीह पापानि महापातकजान्यपि । वायु-
भक्षो दिवा तिष्ठेद्रात्रिं चैवाप्सु सूर्यदृक् ॥ ११५ ॥ जप्त्वा सहस्रं गायत्र्याः शुद्धि-
र्ब्रह्मवधादृते । पद्मोदुम्बरबिल्वैश्च कुशाश्वत्थपलाशयोः ॥ ११६ ॥ एतेषामुदकं पीत्वा
पर्णकृच्छ्रं तदुच्यते । पञ्चगव्यं च गोक्षीरं दधिमूत्रशकृद्घृतम् ॥११७॥ जग्ध्वा परेऽ-
ह्न्युपवसेदेप सांतपनो विधिः । पृथक्सांतपनैर्द्रव्यैः षडहः सोपवासकः ॥ ११८ ॥
सप्ताहेन तु कृच्छ्रोऽयं महासांतपनं स्मृतम् । त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुङ्क्ते
त्वयाचितम् ॥ ११९ ॥ त्र्यहं परं च नाश्नीयात्प्राजापत्यो विधिः स्मृतः । सायं तु
द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ॥ १२० ॥ अयाचिते चतुर्विंशः परेऽह्न्यनशनं
स्मृतम् । कुक्कुटाण्डप्रमाणं स्याद्यावद्वाऽस्य मुखं विशेत् ॥ १२१ ॥ एतद्ग्रासं विजा-
नीयाच्छुद्ध्यर्थं कायशोधनम् । त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं पिबेत्पयः ॥ १२२ ॥
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् । षट्पलानि पिबेदापस्त्रिपलं तु पयः
पिबेत् ॥ १२३ ॥ पलमेकं तु वै सर्पिस्तप्तकृच्छ्रं विधीयते । दध्ना च त्रिदिनं भुङ्क्ते
त्र्यहं भुङ्क्ते च सर्पिषा ॥ १२४ ॥ क्षीरेण तु त्र्यहं भुङ्क्ते वायुभक्षो दिनत्रयम् ।
त्रिपलं दधि क्षीरेण पलमेकं तु सर्पिषा ॥ १२५ ॥ एतदेव व्रतं पुण्यं वैदिकं कृच्छ्र-
मुच्यते । एकभक्तेन नक्तेन तथैवायाचितेन च ॥ १२६ ॥ उपवासेन चैकेन पाद-
कृच्छ्रः प्रकीर्तितः । कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ॥ १२७ ॥ द्वाद-
शाहोपवासेन पराकः परिकीर्तितः । पिण्याकंदधिसक्तूनां ग्रासश्च प्रतिवासरम् ॥ १२८ ॥
एकैकमुपवासः स्यात्सौम्यकृच्छ्रः प्रकीर्तितः । एषां त्रिरात्रमभ्यासादेकैकस्य यथा-
क्रमम् ॥ १२९ ॥ तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः । कपिलायास्तु दुग्धाया
धारोष्णं यः पयः पिबेत् ॥ १३० ॥ एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् ।
निशायां भोजनं चैव तज्ज्ञेयं नक्तमेव तु ॥ १३१ ॥ अनादिष्टेषु पापेषु चान्द्राय-
णैर्यथोदितम् । अग्निष्टोमादिभिर्यज्ञैरिष्टैर्द्विगुणदक्षिणैः ॥ १३२ ॥

---

१ ग °द्धं तु नष्टस्य वृपला च न कन्यका । त° । २ रा °त्रिं नीत्वाऽप्सु । ३ ग °द्वा प्रविशेन्मु-
खम् । ए° । ४ रा. °कश्चामतकाम्बुसक्तूना प्र° । ५ ग. कृच्छ्रो महापातकशोधन. । नि° । ६ ग. °मपोह्य-
नम् । अ° । ७ ग. °र्थैर्विपुलद° ।

यत्फलं समवाप्नोति तथा कृच्छ्रैस्तपोधनः। वेदाभ्यासरतं शान्तं महायज्ञक्रियारतम् ॥ १३३ ॥ न स्पृशन्तीह पापानि महापातकजान्यपि। वेदाभ्यासरतः क्षान्तो धर्मशास्त्राण्यवेक्षयेत् ॥ १३४ ॥ शौचाचारसमायुक्तो गृहस्थोऽपि हि मुच्यते। उक्तमेतद्द्विजातीनां महर्षे श्रूयतामिति॥ १३५ ॥ अतःपरं प्रवक्ष्यामि स्त्रीशूद्रपतनानि च। जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ॥ १३६ ॥ देवताराधनं चैव स्त्रीशूद्रपतनानि षट्। जीवद्भर्तरि या नारी उपोष्य व्रतचारिणी ॥ १३७ ॥ आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् ×। तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत्॥१३८॥ शंकरस्यापि विष्णोर्वा प्रयाति परमं पदम्। जीवद्भर्तरि वामाङ्गी मृते वाऽपि सुदक्षिणे ॥ १३९ ॥ श्राद्धे यज्ञे विवाहे च पत्नी दक्षिणतः सदा। सोमः शौचं ददौ तासां गन्धर्वाश्च तथाऽङ्गिराः ॥ १४० ॥ पावकः सर्वमेध्यं च मेध्यं वै योषितां सदा। जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ॥ १४१ ॥ विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च। वेदशास्त्राण्यधीते यः शास्त्रार्थं च निषेवते ॥ १४२ ॥ तदाऽसौ वेदवित्प्रोक्तो वचनं तस्य पावनम्। एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ॥ १४३ ॥ स ज्ञेयः परमो धर्मो नाज्ञानामयुतायुतैः। पावका इव दीप्यन्ते जपहोमैर्द्विजोत्तमाः ॥ १४४ ॥ प्रतिग्रहेण नश्यन्ति वारिणा इव पावकाः। तान्प्रतिग्रहजान्दोषान्प्राणायामैर्द्विजोत्तमाः ॥ १४५ ॥ उत्सादयन्ति विद्वांसो वायुर्मेघानिवाम्बरे। भुक्तमात्रो यदा विप्र आर्द्रपाणिस्तु तिष्ठति ॥ १४६ ॥ लक्ष्मीर्बलं यशस्तेज आयुश्चैव प्रलीयते। यस्तु भोजनशालायामासनस्थ उपस्पृशेत् ॥ १४७ ॥ तच्चान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्। पात्रोपरि स्थितं पात्रं यः संस्थाप्य उपस्पृशेत् ॥ १४८ ॥ तस्यान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्। न देवास्तृप्तिमायान्ति दातुर्भवति निष्फलम् ॥ १४९ ॥ हस्तं प्रक्षाल्य यश्चापः पिबेद्भुक्त्वा द्विजोत्तमः। तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥ १५० ॥ नास्ति वेदात्परं शास्त्रं नास्ति मातुः परो गुरुः। नास्ति दानात्परं मित्रमिह लोके परत्र च ॥१५१॥ अपात्रे ह्यपि यद्दत्तं दहत्यासप्तमं कुलम्। हव्यं देवा न गृह्णन्ति कव्यं च पितरस्तथा ॥ १५२ ॥ आयसेन तु पात्रेण यदन्नमुपदीयते। अन्नं विष्ठासमं भोक्तुर्दाता च नरकं व्रजेत् ॥ १५३ ॥ इतरेण च पात्रेण दीयमानं विचक्षणः। न दद्याद्वामहस्तेन आयसेन कदाचन ॥ १५४ ॥ मृन्मयेषु च पात्रेषु यः श्राद्धे भोजयेत्पितॄन्।

× इत परं ग. पुस्तकेऽधिकं वचनम्—पति विनाऽन्यत्कुरुते व्रतानि देवसेवनम्। न सा तत्फलमाप्नोति स्वपतिस्तु तया हत। अत परं श्लोकत्रयं न विद्यते ग पुस्तके।

१ ग °स्त्रार्थदर्शक। शौ°। २ ख शौचमृद्वार्यभिरतो गृ°। ३ ग °त्रा प्राव्रज्यं लिङ्गधारणम्। ४ ख विवोधयेत्। ५ ग °र्मं यदि ब्रूयाद्द्विजो°। ६ क भुक्त्वाऽऽचम्य य°। ७ क तस्यान्नं। ८ ग तत्रान्नं। ९ ग °न्ति दत्तं भव°। १० ग मातृसमो गु°। ११ ख °ते। श्वानविष्ठासमं भुङ्क्ते दाता। १२ ग. °येद्द्विजान्। अ°।

अन्नदाता च भोक्ता च तावे(तदै)व नरकं व्रजेत् ॥ १५५ ॥ अभावे मृन्मये दद्यादनुज्ञातस्तु तैर्द्विजैः । तेषां वचः प्रमाणं स्यादत्तं चानृतमेव च ॥ १५६ ॥ सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च । भिक्षादातुर्न धर्मोऽस्ति भिक्षुर्भुङ्क्ते तु किल्बिषम् ॥ १५७ ॥ न च कांस्येषु भुञ्जीयादापद्यपि कदाचन । *पलाशे यतयोऽश्नन्ति गृहस्थः कांस्यभाजने ॥ १५८ ॥ कांस्यकस्य च यत्पापं गृहस्थस्य तथैव च । कांस्यभोजी यतिश्चैव प्राप्नुयात्किल्बिषं तयोः ॥ १५९ ॥ अत्राप्युदाहरन्ति[2]— सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च । भुञ्जन्भिक्षुर्न दुष्येत दुष्येच्चैव परिग्रहात् ॥ १६० ॥ यतिहस्ते जलं दद्याद्भिक्षां दद्यात्पुनर्जलम् । तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ १६१ ॥ चरेन्माधुकरीं वृत्तिमपि म्लेच्छकुलादपि[3] । एकान्नं नैव भोक्तव्यं बृहस्पतिसमो यदि ॥ १६२ ॥ अनापदि चरेद्यस्तु सिद्धं भैक्षं गृहे वसन् । दशरात्रं पिबेद्व्रजमपस्तु[4] त्र्यहमेव च ॥ १६३ ॥ गोमूत्रेण तु संमिश्रं यावकं घृतपाचितम् । एतद्व्रजमिति प्रोक्तं भगवानत्रिरब्रवीत् ॥ १६४ ॥ ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः । अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥ १६५ ॥ षण्मांसान्कामयेन्मर्त्यो[5] गर्भिणीमेव च स्त्रियम् । आ दन्तजननादूर्ध्वमेष[6] धर्मो विधीयते ॥ १६६ ॥ ब्रह्महा प्रथमश्चैव[7] द्वितीयो गुरुतल्पगः । तृतीयश्च सुरापोऽयं चतुर्थः स्तेन एव च ॥ १६७ ॥ + आपो गावस्तिला भूमिर्गन्धो वा स्तेयते तथा(!) । पापानां चैव संसर्गः पञ्चमं पातकं महत् ॥ १६८ ॥ एषामेव विशुध्यर्थं चरेत्कृच्छ्राण्यनुक्रमात्[8] । त्रीणि[9] कृच्छ्राण्यकामश्चेद्ब्रह्महत्यां[10] व्यपोहति ॥ १६९ ॥ अर्धं तु ब्रह्महत्यायाः क्षत्रियेषु विधीयते । षड्भागो[11] द्वादशश्चैव विट्शूद्रयोस्तथा भवेत् ॥ १७० ॥ त्रीन्मासान्नक्तमश्नीयाद्भूमौ शयनमेव । स्त्रीघातः शुध्यतेऽप्येवं चरेत्कृच्छ्राब्दमेव च ॥ १७१ ॥ रजकः शैलुषश्चैव वेणुकर्मोपजीवनः । एतेषां यस्तु भुङ्क्ते वै द्विजश्चान्द्रायणं चरेत् ॥ १७२ ॥ सर्वान्त्यजानां गमने भोजने संप्रवेशने । पराकेण विशुद्धिः स्याद्भगवानत्रिरब्रवीत् ॥ १७३ ॥ चाण्डालभाण्डे यत्तोयं पीत्वा चैव द्विजोत्तमः । गोमूत्रयावकाहारः सप्तत्रिंशदहान्यपि[13] ॥ १७४ ॥

---

* एतदर्धस्थानेऽयं पाठ ख पुस्तके—" मलाशा· सर्व एवैते यतयः कास्यभोजना· । " इति ।
+ नास्त्येतदर्धं क पुस्तके । अधिकं चैतत् ।

---

१ ख. स्याद्यदन्न चातिरिक्त[क]म् । सौ° । ग. स्यादमृतं च कृतं भवेत् । सौ° । २ ग. °रन्तीममितिहासं पुरातनम् । सौ° । ३ क. °तिकुलादपि । अ° । ४ ग °वेद्दुग्धम° । ५ ग. °ण्मासं काम° । ६ ख °मेवं धर्मो न हीय° । ७ क. °थमं चैव द्वितीयं गुरुतल्पग. । तृतीयं तु सुरापोऽयं चतुर्थं स्तेयमुच्यते । पापाना । ८ क °रेद्वर्पाण्य° । ९ ख. ग. °णि वर्पाण्य° । १० ख. ग. °हत्वा पृथक्पृथक् । अ° । ११ ग. °गोर्ध्वं तु वैश्यस्य किंचिच्छूद्रे तथा । १२ ग. °सान्कृच्छ्रम° । १३ ख °सपट्त्रिंशहा° । ग. °सपट्त्री-ण्यहानि च । सं° ।

संस्पृष्टं यस्तु पक्कान्नमन्त्यजैर्वाऽप्युदक्यया । अज्ञानाद्ब्राह्मणोऽश्नीयात्प्राजापत्यार्धमा-
चरेत् ॥ १७५ ॥ चाण्डालान्नं यदा भुङ्क्ते चातुर्वर्ण्यस्य निष्कृतिः । चान्द्रायणं
चरेद्विप्रः क्षत्रः सांतपनं चरेत् ॥ १७६ ॥ षड्रात्रमाचरेद्वैश्यः पञ्चगव्यं तथैव च ।
त्रिरात्रमाचरेच्छूद्रो दानं दत्त्वा विशुध्यति ॥ १७७ ॥ ब्राह्मणो वृक्षमारूढश्चाण्डा-
लो मूलसंस्पृशः । फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ॥ १७८ ॥ ब्राह्मणा-
न्समनुज्ञाप्य सवासाः स्नानमाचरेत् । नक्तभोजी भवेद्विप्रो घृतं प्राश्य विशुध्य-
ति ॥ १७९ ॥ एकवृक्षसमारूढश्चाण्डालो ब्राह्मणस्तथा । फलान्यत्ति स्थितस्तत्र
प्रायश्चित्तं कथं भवेत् ॥ १८० ॥ ब्राह्मणान्समनुज्ञाप्य सवासाः स्नानमाचरेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ १८१ ॥ एकशाखासमारूढश्चाण्डालो
ब्राह्मणो यदा । फलान्यत्ति स्थितस्तत्र प्रायश्चित्त कथं भवेत् ॥ १८२ ॥ त्रिरात्रो-
पोषितो भूत्वा पञ्चगव्येन शुध्यति* । स्त्रिया म्लेच्छस्य संपर्काच्छुद्धिः सांतपने
तथा ॥ १८३ ॥ तप्तकृच्छ्रं पुनः कृत्वा शुद्धिरेषाऽभिधीयते । संवर्तेत यथा भार्यां
गत्वा म्लेच्छस्य संगताम् ॥ १८४ ॥ सचैलं स्नानमादाय घृतस्य प्राशनेन च ।
स्नात्वा नद्युदकैश्चैव घृतं प्राश्य विशुध्यति ॥ १८५ ॥ संगृहीतामपत्यार्थमन्यैरपि तथा
पुनः । चाण्डलम्लेच्छश्वपचकपालव्रतधारिणः ॥ १८६ ॥ अकामतः स्त्रियो गत्वा
पराकेण विशुध्यति । कामतस्तु प्रसूतो वा तत्समो नात्र संशयः ॥ १८७ ॥ स एव
पुरुषस्तत्र गर्भो भूत्वा प्रजायते । तैलाभ्यक्तो घृताभ्यक्तो विण्मूत्रं कुरुते द्विजः ॥१८८॥
तैलाभ्यक्तो घृताभ्यक्तश्चाण्डालं स्पृशते द्विजः । अहोरात्रोषितो भूत्वा पञ्चगव्येन
शुध्यति ॥ १८९ ॥ केशकीटनखस्नायु अस्थिकण्टकमेव च । स्पृष्ट्वा नद्युदके स्नात्वा
घृतं प्राश्य विशुध्यति ॥ १९० ॥ मत्स्यास्थिजम्बुकास्थीनि नखशुक्तिकपर्दिकाः ।
स्पृष्ट्वा स्नात्वा हेमतप्तघृतं पीत्वा विशुध्यति ॥ १९१ ॥ गोकुले कन्दुशालायां तैल-
चक्रेक्षुचक्रयोः । अमीमांस्यानि शौचानि स्त्रीणां च व्याधितस्य च ॥ १९२ ॥ न
स्त्री दुष्यति जारेण ब्राह्मणोऽवेदकर्मणा । नाऽऽपो मूत्रपुरीषाभ्यां नाग्निर्दहनकर्म-
णा ॥ १९३ ॥ पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः । भुञ्जते मानवाः पश्चान्न
ता दुष्यन्ति कर्हिचित् ॥ १९४ ॥ असवर्णैस्तु यो गर्भः स्त्रीणां योनौ निषिच्यते ।
अशुद्धा सा भवेन्नारी यावद्गर्भं न मुञ्चति ॥ १९५ ॥ विमुक्ते तु ततः शल्ये रज-

---

* इत उत्तरं पराकेण विशुध्यतीत्यन्तं न विद्यते ग. पुस्तके ।

---

१ ग यस्तु प° । २ ग. °लत. स्पृशेत् । फलं च भक्षयेद्विप्र प्रा° । ३ ग. °का । हेमतप्तं घृतं प्राश्य तत्क्षणादेव शु° । ४ ग. °वच्छल्यं तु तिष्ठति । विनि.सृते तत. शल्ये रजसो वाऽपि दर्शने । त° ।

श्चापि प्रदृश्यते । तदा सा शुध्यते नारी विमलं काञ्चनं यथा ॥ १९६ ॥ स्वयं विप्रतिपन्ना या यदि वा विप्रतारिता । बलान्नारी प्रभुक्ता वा चौरभुक्ता तथाऽपि वा ॥ १९७ ॥ न त्याज्या दूषिता नारी न कामोऽस्या विधीयते । ऋतुकाल उपासीत पुष्पकालेन शुध्यति ॥ १९८ ॥ रजकश्चर्मकारश्च नटो बुरुड एव च । कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥ १९९ ॥ एषां गत्वा स्त्रियो मोहाद्भुक्त्वा च प्रतिगृह्य च । कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥ २०० ॥ सकृद्भुक्त्वा (क्ता)तु या नारी म्लेच्छैर्या पापकर्मभिः । प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन तु ॥ २०१ ॥ बलाद्धृता स्वयं वाऽपि परप्रेरितया यदि । सकृद्भुक्ता तु या नारी प्राजापत्येन शुध्यति ॥ २०२ ॥ प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् । न तेन तद्व्रतं तासां विनश्यति कदाचन ॥ २०३ ॥ मद्यसंस्पृष्टकुम्भेषु यत्तोयं पिबति द्विजः । कृच्छ्रपादेन शुध्येत पुनः संस्कारमर्हति ॥ २०४ ॥ अन्त्यजस्य तु ये वृक्षा बहुपुष्पफलोपगाः । उपभोग्यास्तु ते सर्वे पुष्पेषु च फलेषु च ॥ २०५ ॥ चाण्डालेन तु संस्पृष्टं यत्तोयं पिबति द्विजः । कृच्छ्रपादेन शुध्येत आपस्तम्बोऽब्रवीन्मुनिः॥२०६॥ श्लेष्मोपानहविण्मूत्रस्त्रीरजो मद्यमेव च । एभिः संदूषिते कूपे तोयं पीत्वा कथं विधिः ॥ २०७ ॥ एकं द्व्यहं त्र्यहं चैव द्विजातीनां विशोधनम् । प्रायश्चित्तं पुनश्चैव नक्तं शूद्रस्य दापयेत् ॥ २०८॥ सद्यो वान्ते सचैलं तु विप्रस्तु स्नानमाचरेत् । पर्युषिते त्वहोरात्रमतिरिक्ते दिनत्रयम् ॥ २०९ ॥ शिरःकण्ठोरुपादांश्च सुरया यस्तु लिप्यते । दशषट्त्रितयैकाहं चरेदेवमनुक्रमात् ॥ २१० ॥ अत्राप्युदाहरन्ति— प्रमादान्मद्यपः सुरां सकृत्पीत्वा द्विजोत्तमः । गोमूत्रयावकाहारो दशरात्रेण शुध्यति ॥ २११ ॥ मद्यपस्य निषादस्य यस्तु भुङ्क्ते द्विजोत्तमः । न देवा भुञ्जते तत्र न पिबन्ति हविर्जलम् ॥ २१२ ॥ चितिभ्रष्टा तु या नारी ऋतुभ्रष्टा च व्याधिता । प्राजापत्येन शुध्येत ब्राह्मणानां तु भोजनात् ॥२१३॥ ये च प्रव्रजिता विप्राः प्रव्रज्याग्निजलावहाः । अनाशकान्निवर्तन्ते चिकीर्षन्ति गृहस्थितिम् ॥ २१४ ॥ धारयेत्त्रीणि कृच्छ्राणि चान्द्रायणमथापि वा । जातकर्मादिकं प्रोक्तं पुनः संस्कारमर्हति॥२१५॥ नाशौचं नोदकं नाश्रु नापवादानुकम्पने । ब्रह्मदण्डहतानां तु न कार्यं कटधारणम्॥२१६॥

---

१ ग. °त्तं प्रकुर्वीत न° । २ ग. °द्यो ज्ञाते स° । ३ ग. °पादेषु सुरया यश्च लि° । ४ ग. दशाहषट्त्र्यहैका° । ५ ग. °विर्हुतम् । चित्तभ्र° । ६ ग. °री अपुण्येन च । ७ क. °णान्भोजयेद्दश । ये । ८ ग. नास्ति नोपवासादिकं तप. । प्र° । ९ क. °श्रु नोप° ।

स्नेहं कृत्वा भयादिभ्यो यस्त्वेतानि समाचरेत् । गोमूत्रयावकाहारः कृच्छ्रमेकं विशोधनम् ॥ २१७ ॥ वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥ २१८ ॥ तस्य त्रिरात्रमाशौचं द्वितीये त्वास्थिसंचयम् । तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥ २१९ ॥ यस्यैकाऽपि गृहे नास्ति धेनुर्वत्सानुचारिणी । मङ्गलानि कुतस्तस्य कुतस्तस्य तमःक्षयः ॥ २२० ॥ अतिदोहातिवाहाभ्यां नासिकाभेदनेन वा । नदीपर्वतसंरोधे मृते पादोनमाचरेत् ॥ २२१ ॥ अष्टागवं धर्महलं षड्गवं व्यावहारिकम् । चतुर्गवं नृशंसानां द्विगवं वध्यते सह ॥ २२२ ॥ द्विगवं वाहयेत्पादं मध्याह्ने तु चतुर्गवम् । षड्गवं तु त्रिपादोक्तं पूर्णाहस्त्वष्टभिः स्मृतः ॥ २२३ ॥ काष्ठलोष्टशिलागोघ्नः कृच्छ्रं सांतपनं चरेत् । प्राजापत्यं चरेन्मृत्सा ( ! ) अतिकृच्छ्रं तु आयसैः ॥ २२४ ॥ प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् । अनडुत्सहितां गां च दद्याद्विप्राय दक्षिणाम् ॥ २२५ ॥ शरभोष्ट्रहयान्नागान्सिंहशार्दूलगर्दभान् । हत्वा च शूद्रहत्यायाः प्रायश्चित्तं विधीयते ॥ २२६ ॥ मार्जारगोधानकुलमण्डूकांश्च पतत्रिणः । हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥ २२७ ॥ चाण्डालस्य च संस्पृष्टं विण्मूत्रस्पृष्टमेव वा । त्रिरात्रेण विशुद्धिः स्याद्भुक्त्वोच्छिष्टं समाचरेत् ॥ २२८ ॥ वापीकूपतडागानां दूषितानां च शोधनम् । उद्धरेद्घटशतं पूर्णं पञ्चगव्येन शुध्यति* ॥ २२९ ॥ अस्थिचर्मावसिक्तेषु खरश्वानादिदूषिते । उद्धरेदुदकं सर्वं शोधनं परिमार्जनम् ॥ २३० ॥ गोदोहने चर्मपुटे च तोयं यन्त्राकरे कारुकशिल्पिहस्ते । स्त्रीबालवृद्धाचरितानि यान्यप्रत्यक्षदृष्टानि शुचीनि तानि × ॥ २३१ ॥ प्राकाररोधे विषमप्रदेशे सेनानिवेशे भवनस्य दाहे । आरब्धयज्ञेषु महोत्सवेषु तथैव दोषा न विकल्पनीयाः ॥ २३२ ॥ प्रपास्वरण्ये घटकस्य कूपे द्रोण्यां जलं कोशविनिर्गतं च । श्वपाकचण्डालपरिग्रहे तु पीत्वा जलं पञ्चगव्येन शुद्धिः ॥ २३३ ॥ रेतोविण्मूत्रसंस्पृष्टं कौपं यदि जलं पिबेत् ।

* इत· परं ग. पुस्तक एतद्वचनं वियते—" चाण्डालश्वपचोत्सर्गविण्मूत्रोच्छिष्ट एव वा । त्रिरात्रेण विशुद्धि· स्याद्भुक्त्वोच्छिष्टं षडाचरेत् । " इति । × इत आरभ्य अहोरात्रं समाचरेदित्यन्तं न वियते ग. पुस्तके ।

१ क. ख. °वं गववध्यकृत् । द्वि° । २ ख. °रेन्मुत्सा । ग. °रेन्मुष्टिरिति कृच्छ्रं तु... । प्रा° । ३ ग. त्र्यहमुपोष्यैव कृच्छ्रं सातपनं चरेत् । वापी° । ४ ख. °च्छ्रं व्यापा° । ५ क. °ष्टं तथाऽऽच° । ६ ख. °रेत्षट्शतं । ७ क, झढकस्य ।

त्रिरात्रेणैव शुद्धिः स्यात्कुम्भे सांतपनं तथा ॥ २३४ ॥ छिन्नभिन्नशवं यत्स्याद-ज्ञानादुदकं पिबेत् । प्रायश्चित्तं चरेत्पीत्वा तप्तकृच्छ्रं द्विजोत्तमः ॥ २३५ ॥ उष्ट्रीक्षीरं खरीक्षीरं मानुषीक्षीरमेव च । प्रायश्चित्तं चरेत्पीत्वा तप्तकृच्छ्रं द्विजोत्तमः ॥ २३६ ॥ वर्णवाह्येन संस्पृष्ट उच्छिष्टस्तु द्विजोत्तमः । पञ्चरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ २३७ ॥ शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् । चर्मभाण्डैस्तु धाराभिस्तथा यन्त्रोद्धृतं जलम् ॥ २३८ ॥ चण्डालेन तु संस्पृष्टः (ष्टे) स्नानमेव विधीयते । उच्छिष्टस्तु च संस्पृष्टस्त्रिरात्रेणैव शुध्यति ॥ २३९ ॥ आकराहृतवस्तूनि नाशुचीनि कदाचन । आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् ॥ २४० ॥ भ्र(भृ)ष्टा भ्र(भृ)ष्टयवाश्चैव तथैव चणकाः स्मृताः । खर्जूरं चैव कर्पूरमन्यद्भ्र(भृ)ष्टतरं शुचि ॥ २४१ ॥ अमीमांस्यानि शौचानि स्त्रीभिराचरितानि च* । अदुष्टाः सततं धारा वातोद्धूताश्च रेणवः ॥ २४२ ॥ वहूनामेकलग्नानामेकश्चेदशुचिर्भवेत् । अशौचमेकमात्रस्य नेतरेषां कथंचन ॥ २४३ ॥ एकपङ्क्त्युपविष्टानां भोजनेषु पृथक्पृथक् । यद्येको लभते नीलीं सर्वे तेऽशुचयः स्मृताः ॥ २४४ ॥ यस्य पटे पट्टसूत्रे नीलीरक्तो हि दृश्यते । त्रिरात्रं तस्य दातव्यं शेषाश्चैवोपवासिनः ॥ २४५ ॥ आदित्येऽस्तमिते रात्रावस्पृश्यं स्पृशते यदि । भगवन्केन शुद्धिः स्यात्ततो ब्रूहि तपोधन ॥ २४६ ॥ आदित्येऽस्तमिते रात्रौ स्पृशन्हीनं दिवा जलम् । तेनैव सर्वशुद्धिः स्याच्छवस्पृष्टं तु वर्जयेत् ॥ २४७ ॥ देशं कालं वयः शक्तिं पापं चावेक्षयेत्त(क्ष्य यत्न)तः । प्रायश्चित्तं प्रकल्प्यं स्याद्यस्य चोक्ता न निष्कृतिः ॥ २४८ ॥ देवयात्राविवाहेषु यज्ञप्रकरणेषु च । उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥ २४९ ॥ आरनालं तथा क्षीरं कन्दुकं दधिसक्तवः । स्नेहपक्वं च तक्रं च शूद्रस्यापि न दुष्यति ॥ २५० ॥ आर्द्रमांसं घृतं तैलं स्नेहाश्च फलसंभवाः । अन्त्यभाण्डस्थिता एते निष्क्रान्ताः शुद्धिमाप्नुयुः ॥ २५१ ॥ अज्ञानात्पिबते तोयं ब्राह्मणः शूद्रजातिषु । अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥ २५२ ॥ आहिताग्निस्तु यो विप्रो महापातकवान्भवेत् । अप्सु प्रक्षिप्य पात्राणि पश्चादग्निं विनिर्दिशेत् ॥ २५३ ॥ योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते । अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥ २५४ ॥

---

* इत उत्तरमेतदर्धं "गोकुले कुट्टशालाया तैलयन्त्रेक्षुयन्त्रयोः" इति विद्यते ख. पुस्तके।

---

१ क. ॰रालेयम्। २ ख. ॰शहीनं।

वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः। प्राणानप्सु त्रिराचम्य घृतं प्राश्य विशुध्यति ॥ २५५ ॥ वैदिके लौकिके वाऽपि हुतोच्छिष्टे जले क्षितौ। वैश्वदेवं प्रकुर्वीत पञ्चसूनापनुत्तये ॥ २५६ ॥ कनीयान्गुणवाञ्श्रेष्ठः श्रेष्ठश्चेन्निर्गुणो भवेत्। पूर्वं पाणिं गृहीत्वा च गृह्याग्निं धारयेद्बुधः ॥ २५७ ॥ ज्येष्ठश्चेद्यादि निर्दोषो गृह्णात्यग्निं यवीयकः। नित्यं नित्यं भवेत्तस्य ब्रह्महत्या न संशयः ॥ २५८ ॥ महापातकसंस्पृष्टः (ष्टे) स्नानमेव विधीयते। संस्पृष्टस्य यदा भुङ्क्ते स्नानमेव विधीयते ॥ २५९ ॥ पतितैः सह संसर्गं मासार्धं मासमेव वा। गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ २६० ॥ कृच्छ्रार्धं पतितस्यैव सकृद्भुक्त्वा द्विजोत्तमः। अविज्ञानाच्च तद्भुक्त्वा कृच्छ्रं सांतपनं चरेत् ॥ २६१ ॥ पतितान्नं यदा भुक्तं भुक्तं चाण्डालवेश्मनि। मासार्धं तु पिबेद्वारि इति शातातपोऽब्रवीत् ॥ २६२ ॥ गोब्राह्मणहतानां च पतितानां तथैव च। अग्निना न च संस्कारः शङ्खस्य वचनं यथा ॥ २६२ ॥ यश्चाण्डालीं द्विजो गच्छेत्कथंचित्काममोहितः। त्रिभिः कृच्छ्रैर्विशुध्येत प्राजापत्यानुपूर्वशः ॥ २६४ ॥ पतिताच्चान्नमादाय भुक्त्वा वा ब्राह्मणो यदि। कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं विनिर्दिशेत् ॥ २६५ ॥ अन्त्यहस्तांच्छवे क्षिप्तं(प्त) काष्ठलोष्टतृणानि च। न स्पृशेत्तु तथोच्छिष्टमहोरात्रं समाचरेत् ॥ २६६ ॥ चाण्डालं पतितं म्लेच्छं मद्यभाण्डं रजस्वलाम्। द्विजः स्पृष्ट्वा न भुञ्जीत भुञ्जानो यदि संस्पृशेत् ॥२६७॥ अतः परं न भुञ्जीत त्यक्त्वाऽन्नं स्नानमाचरेत्। ब्राह्मणैः समनुज्ञातस्त्रिरात्रमुपवासयेत्॥२६८॥ सघृतं यावकं प्राश्य व्रतशेषं समापयेत्। भुञ्जानः संस्पृशेद्यस्तु वायसं कुक्कुटं तथा ॥ २६९ ॥ त्रिरात्रेणैव शुद्धिः स्यादथोच्छिष्टस्त्वहेन तु(!)। आरूढो नैष्ठिके धर्मे यस्तु प्रच्यवते पुनः ॥ २७० ॥ चान्द्रायणं चरेन्मासमिति शातातपोऽब्रवीत्। पशुवेश्याभिगमने प्राजापत्यं विधीयते ॥ २७१ ॥ गवां गमने मनुप्रोक्तं व्रतं चान्द्रायणं चरेत्। अमानुषीषु गोवर्जमुदक्यायामयोनिषु ॥ २७२ ॥ रेतः सिक्त्वा जले चैव कृच्छ्रं सांतपनं चरेत्। उदक्यां सूतिकां वाऽपि अन्त्यजां स्पृशते यदि॥२७३॥ त्रिरात्रेणैव शुद्धिः स्याद्विधिरेष पुरातनः। संसर्गं यदि गच्छेच्चेदुदक्यायातथाऽन्त्यजैः ॥ २७४ ॥ प्रायश्चित्ती स विज्ञेयः पूर्वं स्नानं समाचरेत्। एकरात्रं चरेन्मूत्रं पुरीषे तु दिनत्रयम्॥२७५ ॥ दिनत्रयं तथा पाने मैथुने पञ्च सप्त वा* । भोजने तु प्रसक्तानां प्राजापत्यं विधीयते

* इत परं ख पुस्तकेऽधिकम्—" स्मृत्यन्तरे—अङ्गीकारेण ज्ञानिना ब्राह्मणानुग्रहेण च। पूयन्ते तत्र पापिष्ठा महापातकिनोऽपि ये " इति।

१ ख. °णवाश्चैव श्रे°। २ क गृह्णीयादग्निमग्रत। नित्यं नित्यं भ°। ३ ख °स्तात्तु क्षि°। ४ ग. °ते। गोमयेन नर कुर्याद्व्रतं। ५ ग. °रीषेण दिनद्वयम्। दिनद्वयं तु पानेन मैथुने ससमं चरेत्। भो°।

॥२७६॥ दन्तकाष्ठे त्वहोरात्रमेष शौचविधिः स्मृतः । रजस्वला यदा स्पृष्टा श्वानचण्डालवायसैः ॥ २७७ ॥ निराहारा भवेत्तावत्स्नात्वा कालेन शुध्यति । रजस्वला यदा स्पृष्टा उष्ट्रजम्बूकशंवरैः ॥ २७८ ॥ पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति । स्पृष्टं( ष्टा )रजस्वलाऽन्योन्यं ब्राह्मण्या ब्राह्मणी च या ॥ २७९ ॥ एकरात्रं निराहारा पञ्चगव्येन शुध्यति । स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या क्षत्रियी च या॥२८०॥ त्रिरात्रेण विशुद्धिः स्याद्व्यासस्य वचनं यथा । स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या वैश्यसंभवा ॥ २८१ ॥ चतूरात्रं निराहारा पञ्चगव्येन शुध्यति । स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या शूद्रसंभवा ॥ २८२ ॥ षड्रात्रेण विशुद्धिः स्याद्ब्राह्मणी कामकारतः। अकामतश्चरेदेवं ब्राह्मणी सर्वतः स्पृशेत् ॥ २८३॥ चतुर्णामपि वर्णानां शुद्धिरेषा प्रकीर्तिता । उच्छिष्टेन तु संस्पृष्टो ब्राह्मणो ब्राह्मणेन यः ॥ २८४ ॥ भोजने मूत्रचारे च शङ्खस्य वचनं यथा । स्नानं ब्राह्मणसंस्पर्शे जपहोमौ तु क्षत्रिये ॥ २८५ ॥ वैश्ये नक्तं च कुर्वीत शूद्रे चैव उपोषणम् । चर्मको रजको वैण्यो धीवरो नटकस्तथा ॥ २८६ ॥ एतान्स्पृष्ट्वा द्विजो मोहादाचामेत्प्रयतोऽपि सन् । एतैः स्पृष्टो द्विजो नित्यमेकरात्रं पयः पिबेत् ॥ २८७ ॥ उच्छिष्टैस्तैस्त्रिरात्रं स्याद्घृतं प्राश्य विशुध्यति। यस्तु च्छायां श्वपाकस्य ब्राह्मणस्त्वधिगच्छति ॥ २८८ ॥ तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुध्यति । अभिशस्तो द्विजोऽरण्ये ब्रह्महत्याव्रतं चरेत् ॥ २८९ ॥ मासोपवासं कुर्वीत चान्द्रायणमथापि वा । वृथा मिथ्योपयोगेन भ्रूणहत्याव्रतं चरेत् ॥ २९० ॥ अभक्षो द्वादशाहेन पराकेणैव शुध्यति । शठं च ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ॥ २९१ ॥ निर्गुणं सगुणो हत्वा पराकव्रतमाचरेत् । उपपातकसंयुक्तो मानवो म्रियते यदि ॥ २९२ ॥ तस्य संस्कारकर्ता च प्राजापत्यद्वयं चरेत्। प्रभुञ्जानोऽतिसस्नेहं कदाचित्स्पृशते द्विजः ॥ २९३ ॥ त्रिरात्रमाचरेन्नक्तैर्निःस्नेहमथ वा चरेत्। बिडालकाकाद्युच्छिष्टं जग्ध्वा श्वनकुलस्य च ॥२९४॥ [ +स्नात्वा विप्रस्य दिग्वासाः प्राणायामेन शुध्यति । शूद्रसंस्कारकर्तारो वृद्धब्राह्मणसंमतम् ॥ २९५ ॥ हत्वा नक्रं चरेत्कृच्छ्रं ब्रह्महत्यादिपातकम् । ] केशकीटावपन्नं च पिबेद्ब्राह्मी सुवर्चस( ला )म् ॥ २९६ ॥ उष्ट्रयानं समारुह्य खरयानं च कामतः । स्नात्वा विप्रो जितग्रासः प्राणायामेन शुध्यति ॥ २९७ ॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ २९८ ॥ शकृद्द्विगुणगोमूत्रं सर्पिर्दद्याच्चतुर्गुणम् ।

---

+ धनुश्चिह्नान्तर्गतं ग पुस्तकेऽधिकम् ।

क्षीरमष्टगुणं देयं पञ्चगव्ये तथा दधि ॥ २९९ ॥ पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् । उभौ तु तुल्यदोषौ च वसतो नरके चिरम् ॥ ३०० ॥ अजा गावो महिष्यश्च अमेध्यं भक्षयन्ति याः । दुग्धं हव्ये च कव्ये च गोमयं न विलेपयेत् ॥३०१॥ ऊनस्तन्यधिका या च आत्मनः स्तन्यपायिनी । तासां दुग्धं न होतव्यं हुतं चैवाहुतं भवेत् ॥ ३०२ ॥ ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥ ३०३ ॥ राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम् । स्वसुतान्नं च यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ॥३०४॥ स्वसुता अप्रजा तावन्नाश्नीयात्तद्गृहे पिता । अन्नं भुङ्क्ते तु यो मोहात्पूयं स नरकं व्रजेत् ॥ ३०५ ॥ अधीत्य चतुरो वेदान्सर्वशास्त्रार्थतत्त्ववित् । नरेन्द्रभवने भुक्त्वा विष्ठायां जायते कृमिः ॥ ३०६ ॥ नवश्राद्धे त्रिपक्षे च षण्मासे मासिकेऽब्दिके । पतन्ति पितरस्तस्य यो भुङ्क्तेऽनापदि द्विजः ॥ ३०७ ॥ चान्द्रायणं नवश्राद्धे पराको मासिके तथा । त्रिपक्षे चैव कृच्छ्रः स्यात्षण्मासे कृच्छ्रमेव च ॥ ३०८ ॥ आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके। ब्रह्मचर्यमनाधाय मासश्राद्धेषु पर्वसु ॥ ३०९ ॥ द्वादशाहे त्रिपक्षेऽब्दे यस्तु भुङ्क्ते द्विजोत्तमः । पतन्ति पितरस्तस्य ब्रह्मलोके गता अपि ॥ ३१० ॥ एकादशाहेऽहोरात्रं भुक्त्वा संचयने त्र्यहम् । उपोष्य विधिवद्विप्रः कूष्माण्डीं जुहुयाद्घृतम् ॥३११॥ पक्षे वा यदि वा मासे यस्य नाश्नन्ति वै द्विजाः । भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत् ॥ ३१२ ॥ यन्न वेदध्वनिश्रान्तं[2] न च गोभिरलंकृतम् । यन्न बालैः परिवृतं श्मशानमिव तद्गृहम् ॥ ३१३ ॥ हास्येऽपि बहवो यत्र विना धर्मं वदन्ति हि(न)। विनाऽपि धर्मशास्त्रेण स धर्मः पावनः स्मृतः ॥ ३१४ ॥ हीनवर्णे च यः कुर्यादज्ञानादभिवादनम् । तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुध्यति॥ ३१५॥ समुत्पन्ने यदा स्नाने भुङ्क्ते वाऽपि पिबेद्यदि । गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः ॥ ३१६ ॥ अङ्गुल्या दन्तकाष्ठं च प्रत्यक्षं लवणं तथा । मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् ॥ ३१७ ॥ दिवा कपित्थच्छायायां रात्रौ दधि शमीषु च । कार्पासं दन्तकाष्ठं च विष्णोरपि हरेच्छ्रियम् ॥ ३१८ ॥ शूर्पवातनखाग्राम्बुस्नानं[3] वस्त्रपदोदकम् । मार्जनीरेणुकेशाम्बु[4] हन्ति पुण्यं दिवाकृतम् ॥ ३१९ ॥ मार्जनीरजकेशाम्बु देवतायतनोद्भवम् । तेनावगुण्ठितं तेषु गङ्गाम्भःप्लुत एव सः ॥ ३२० ॥ मृत्तिकाः सप्त न ग्राह्या वल्मीके मूषिकस्थले । अन्तर्जले श्मशानान्ते वृक्षमूले सुरालये॥३२१॥ वृषभैश्च तथोत्खाते श्रेयस्कामैः सदा बुधैः । शुचौ देशे तु संग्राह्या शर्कराश्मविवर्जिता ॥ ३२२ ॥ पुरीषे मैथुने होमे प्रस्रावे दन्तधावने । स्नानभोजनजप्येषु सदा

---

१ क. ख. °स्तनीमधिका वा या चान्या स्तनपा° । २ क. ग °निध्वान्तं । ३ क. ख स्नानवस्त्रघटोद° । ४ ग. मार्जाररे° ।

मौनं समाचरेत् ॥ ३२३ ॥ यस्तु संवत्सरं पूर्णं भुङ्क्ते मौनेन सर्वदा । युगकोटिसहस्रेषु स्वर्गलोके महीयते ॥ ३२४ ॥ स्नानं दानं जपं होमं भोजनं देवतार्चनम् । प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥ ३२५ ॥ सर्वस्वमपि यो दद्यात्पातयित्वा द्विजोत्तमम् । नाशयित्वा तु तत्सर्वं भ्रूणहत्याफलं लभेत् ॥ ३२६ ॥ ग्रहणोद्वाहसंक्रान्तौ स्त्रीणां च प्रसवे तथा । दानं नैमित्तिकं ज्ञेयं रात्रौ चापि प्रशस्यते ॥ ३२७ ॥ क्षौमंजं वाऽथ कार्पासं पट्टसूत्रमथापि वा । यज्ञोपवीतं यो दद्याद्वस्त्रदानफलं लभेत् ॥ ३२८ ॥ कांस्यस्य भाजनं दद्याद्घृतपूर्णं सुशोभनम् । तथा भक्त्या विधानेन अग्निष्टोमफलं लभेत् ॥ ३२९ ॥ श्राद्धकाले तु यो दद्याच्छोभने च उपानहौ । स गच्छत्यन्यमार्गेऽपि अश्वदानफलं लभेत् ॥ ३३० ॥ तिलपात्रं तु यो दद्यात्संपूर्णं तु समाहितः । स गच्छति ध्रुवं स्वर्गे नरो नास्त्यत्र संशयः ॥ ३३१ ॥ दुर्भिक्षे अन्नदाता च सुभिक्षे च हिरण्यदः । पानीयदस्त्वरण्ये च स्वर्गलोके महीयते ॥ ३३२ ॥ यावदर्धप्रसूता गौस्तावत्सा पृथिवी स्मृता । पृथिवी तेन दत्ता स्यादीदृशीं गां ददाति यः ॥ ३३३ ॥ तेनाग्नयो हुताः सम्यक्पितरस्तेन तर्पिताः । देवाश्च पूजिताः सर्वे यो ददाति गवाह्निकम् ॥ ३३४ ॥ जन्मप्रभृति यत्पापं मातृकं पैतृकं तथा । तत्सर्वं नश्यति क्षिप्रं वस्त्रदानान्न संशयः ॥ ३३५ ॥ कृष्णाजिनं च यो दद्यात्सर्वोपस्करसंयुतम् । उद्धरेन्नरकस्थानात्कुलान्येकोत्तरं शतम् ॥ ३३६ ॥ आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः । शूलपाणिस्तु भगवानभिनन्दन्ति भूमिदम् ॥ ३३७ ॥ वालुकानां कृता राशिर्यावत्सप्तर्षिमण्डलम् । गते वर्षशते चैव पलमेकं विशीर्यति ॥ ३३८ ॥ क्षयं च दृश्यते तस्य कन्यादाने न चैव हि । आतुरे प्राणदाता च त्रीणि दानफलानि च (!) ॥ ३३९ ॥ सर्वेषामेव दानानां विद्यादानं ततोऽधिकम् । पुत्रादिस्वजने दद्याँद्विप्राय च न कैतवे ॥ ३४० ॥ सकामः स्वर्गमाप्नोति निष्कामो मोक्षमाप्नुयात् । ब्राह्मणे वेदविदुषि सर्वशास्त्रविशारदे ॥ ३४१ ॥ मातृ(ता)पितृपरे चैव ऋतुकालाभिगामिनि । शीलचारित्रसंपूर्णे प्रातःस्नानपरायणे ॥ ३४२ ॥ तस्यैव दीयते दानं यदीच्छेच्छ्रेय आत्मनः । संपूज्य विदुषो विप्रानन्येभ्योऽपि प्रदीयते ॥ ३४३ ॥ तत्कार्यं नैव कर्तव्यं न दृष्टं न श्रुतं मया । अतः परं प्रवक्ष्यामि श्राद्धकर्मणि ये द्विजाः ॥ ३४४ ॥ पितॄणामक्षयं दानं दत्तं येषां तु निष्फलम् । न हीनाङ्गो न रोगी च श्रुतिस्मृतिविवर्जितः ॥ ३४५ ॥ नित्यं चानृतवादी च तांस्तु श्राद्धे न भोजयेत् । *हिंसारतं च कपटमुपगूह्य श्रुतं च यः ॥ ३४६ ॥ किंकरं कपिलं काणं श्वित्रिणं रोगिणं तथा । दुश्चर्माणं शीर्णकेशं पाण्डुरोगं जटाधरम् ॥ ३४७ ॥

* एतदर्धस्थानेऽयं पाठो ग पुस्तके—हिंसको व्यङ्गपादश्च उपगुह्य सुतश्च य इति ।

१ ग. 'म । व्युट° । २ ग °र्थं यज्ञादपि । ३ ग क्षौमं वालं तु का° । ४ ग. °हौ । नश्यन्ते विपुलात्पापादन° । ५ क °त । तैल° । ६ ग न विद्यते । सौं° । ७ ग. °वाद्द्याद्विप्राय दक्षिणाम् । स° । ८ ग. °विगर्हितः ।

भारवाहकमुग्रं च द्विभार्यं वृषलीपतिम् । भेदकारी भवेच्चैव बहुपीडाकरोऽपि वा ॥३४८॥ हीनातिरिक्तगात्रो वा तमप्यपनयेत्तथा । बहुभोक्ता दीनमुखो मत्सरी क्रूरबुद्धिमान् ॥ ३४९ ॥ एतेषां नैव दातव्यः कदाचिद्वै प्रतिग्रहः । अथ चेन्मन्त्रविद्युक्तः शारीरः पङ्क्तिदूषणैः ॥ ३५० ॥ अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः । श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते ॥ ३५१ ॥ काणः स्यादेकहीनोऽपि द्वाभ्यामन्धः प्रकीर्तितः । न श्रुतिर्न स्मृतिर्यस्य न शीलं न कुलं यतः ॥ ३५२ ॥ तस्य श्राद्धं न दातव्यं त्वन्धकस्यात्रिरब्रवीत् । तस्माद्वेदेन शास्त्रेण ब्राह्मण्यं ब्राह्मणस्य तु ॥ ३५३ ॥ न चैकेनैव वेदेन भगवानत्रिरब्रवीत् । योगस्थैर्लोचनैर्युक्तः पादाग्रं च प्रपश्यति ॥ ३५४ ॥ लौकिकज्ञश्च शास्त्रोक्तं पश्येच्चैवाधरोत्तरम् । वेदैश्च ऋषिभिर्गीतं दृष्टिमाञ्शास्त्रवेदवित् ॥ ३५५ ॥ व्रातिनं च कुलीनं च श्रुतिस्मृतिरतं सदा । तादृशं भोजयेच्छ्राद्धे पितृणामक्षयं भवेत् ॥ ३५६ ॥ यावतो ग्रसते ग्रासान्पितॄणां दीप्ततेजसाम् । पिता पितामहश्चैव तथैव प्रपितामहः ॥ ३५७ ॥ नरकस्था विमुच्यन्ते ध्रुवं यान्ति त्रिविष्टपम् । तस्माद्विप्रं परीक्षेत श्राद्धकाले प्रयत्नतः ॥३५८॥ न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः । इन्दुक्षये मासि मासि प्रायश्चित्ती भवेत्तु सः ॥ ३५९ ॥ सूर्ये कन्यागते कुर्याच्छ्राद्धं यो न गृहाश्रमी । * धनं पुत्रान्कुलं तस्य पितृनिश्वासपीडया ॥ ३६० ॥ कन्यागते सवितरि पितरो यान्ति सत्सुतान् । शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनम् + ॥ ३६१ ॥ ततो वृश्चिकसंप्राप्ते निराशाः पितरो गताः । पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥ ३६२ ॥ पुत्रं वा भ्रातरं वाऽपि दौहित्रं पौत्रकं तथा । पितृकार्ये प्रसक्ता ये ते यान्ति परमां गतिम् ॥ ३६३ ॥ यथा निर्मन्थनादग्निः सर्वकाष्ठेषु तिष्ठति । तथा स दृश्यते धर्मः श्राद्धदानान्न संशयः ॥ ३६४ ॥ सर्वशास्त्रार्थगमनं सर्वतीर्थावगाहनम् । सर्वयज्ञफलं विन्द्याच्छ्राद्धदानान्न संशयः ॥ ३६५ ॥ महापातकसंयुक्तो यो युक्तश्चोपपातकैः । घनैर्मुक्तो यथा भानू राहुमुक्तश्च चन्द्रमाः ॥ ३६६ ॥ सर्वपापविनिर्मुक्तः सर्वपापं विलङ्घयेत् । सर्वसौख्यं स्वयं प्राप्तः श्राद्धदानान्न संशयः ॥३६७॥ सर्वेषामेव दानानां श्राद्धदानं विशिष्यते । मेरुतुल्यं कृतं पाप श्राद्धदानं विशोधनम् ॥३६८॥ श्राद्धं कृत्वा तु मर्त्यो वै स्वर्गलोके महीयते । अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ॥३६९॥

---

* एतदर्धस्थानेऽयं पाठो ग. पुस्तके–'धनपुत्रौ कलत्रं च पितृनिश्वासमालिन' इति । + एतदुत्तरम्–" श्रुत्वैतदत्रिणा प्रोक्तं शास्त्रं चैव द्विजोत्तम । यस्त्विदं पठते श्राद्धे ब्राह्मणः शंसितव्रत । अप्रभुग्नं भवेच्छ्राद्धे यावतो नात्र संशय । विद्यार्थी प्राप्नुयाद्विद्या धनकामो धनानि च । आयुष्कामस्तथाऽऽयुश्च पुत्रार्थी पुत्रमाप्नुयात् " इति ग्रन्थो ग. पुस्तके । अत्रैव च स्मृतिसमाप्तिर्दृश्यते ।

---

१ ग. वा वातमप्ययने तथा । २ ग. अर्चयन्मन्त्रविद्युक्तं शा° । ३ ग °नैर्विप्र प्रत्यङ्ग पश्यत. सदा । लौ° । ४ क. प्रयच्छति । ५ ग. 'न्ति स्वान्सुता° । ६ ग °र्शनात् । ७ क. धर्म्याच्छ्राद्ध° ।

वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं भवेत् । एतत्सर्वं मयाऽऽख्यातं श्राद्धकाले समुपस्थिते ॥ ३७० ॥ वैश्वदेवे च होमे च देवताभ्यर्चने जपेत् । अमृतं तेन विप्रान्नमृग्युजुःसामसंस्कृतम् ॥ ३७१ ॥ व्यवहारानुपूर्व्येण धर्मेण वालिभिर्जितम् । क्षत्रियान्नं पयस्तेन घृतान्नं यज्ञपालने ॥ ३७२ ॥ देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः । पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः ॥ ३७३ ॥ संध्यां स्नानं जपं होमं देवतानित्यपूजनम् । अतिथिं वैश्वदेवं च देवब्राह्मण उच्यते ॥ ३७४ ॥ शाके पत्रे फले मूले वनवासे सदा रतः । निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ॥ ३७५ ॥ वेदान्तं पठते नित्यं सर्वसङ्गं परित्यजेत् । सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते ॥ ३७६ ॥ अस्त्राहताश्च धन्वानः संग्रामे सर्वसंमुखे । आरम्भे निर्जिता येन स विप्रः क्षत्र उच्यते ॥ ३७७ ॥ कृषिकर्मरतो यश्च गवां च प्रतिपालकः । वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते ॥ ३७८ ॥ लाक्षालवणसंमिश्रं कुसुम्भं क्षीरसर्पिषः । विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥ ३७९ ॥ चौरश्च तस्करश्चैव सूचको दंशकस्तथा । मत्स्यमांसे सदा लुब्धो विप्रो निषाद उच्यते ॥ ३८० ॥ ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः । तेनैव स च पापेन विप्रः पशुरुदाहृतः ॥ ३८१ ॥ वापीकूपतडागानामारामस्य सरःसु च । निःशङ्कं रोधकश्चैव स विप्रो म्लेच्छ उच्यते ॥ ३८२ ॥ क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः । निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते ॥ ३८३ ॥ वेदैर्विहीनाश्च पठन्ति शास्त्रं शास्त्रेण हीनाश्च पुराणपाठाः । पुराणहीनाः कृषिणो भवन्ति भ्रष्टास्ततो भागवता भवन्ति ॥ ३८४ ॥ ज्योतिर्विदो ह्यथर्वाणः कीराः पौराणपाठकाः । श्राद्धे यज्ञे महादाने वरणीयाः कदाच न ॥ ३८५ ॥ श्राद्धं च पितरं घोरं दानं चैव तु निष्फलम् । यज्ञे च फलहानिः स्यात्तस्मात्तान्परिवर्जयेत् ॥ ३८६ ॥ आविकश्चित्रकारश्च वैद्यो नक्षत्रपाठकः । चतुर्विप्रा न पूज्यन्ते बृहस्पतिसमा यदि ॥ ३८७ ॥ मागधो माथुरश्चैव कापटः कीटकानजौ । पञ्च विप्रा न पूज्यन्ते बृहस्पतिसमा यदि ॥ ३८८ ॥ क्रयक्रीता च या कन्या पत्नी सा न विधीयते । तस्यां जाताः सुतास्तेषां पितृपिण्डं न विद्यते ॥ ३८९ ॥ अष्टशल्यागतो नीरं पाणिना पिवते द्विजः । सुरापानेन तत्तुल्यं तुल्यं गोमांसभक्षणम् ॥ ३९० ॥ ऊर्ध्वजङ्घेषु विप्रेषु प्रक्षाल्य चरणद्वयम् । तावच्चाण्डालरूपेण यावद्गङ्गां न मज्जति ॥ ३९१ ॥ दीपशय्यासनच्छाया कार्पासं दन्तधावनम् । अजारेणुस्पृशं चै ( श्वै ) व शक्रस्यापि श्रियं हरेत् ॥ ३९२ ॥ गृहाद्दशगुणं कूपं कूपाद्दशगुणं तटम् । तटाद्दशगुणं नद्यां गङ्गासंख्या न विद्यते ॥ ३९३ ॥ स्वगृहब्राह्मणं तोयं रहस्यं क्षत्रियं तथा । वापीकूपे तु वैश्यस्य शौद्रं भाण्डोदकं तथा ॥ ३९४ ॥

---

१ ह. माथुर ।

तीर्थस्नानं महादानं यच्चान्यत्तिलतर्पणम् । अब्दमेकं न कुर्वीत महागुरुनिपाततः
॥ ३९५ ॥ गङ्गा गया त्वमावस्यावृद्धिश्राद्धेक्षयेऽहानि । मघापिण्डप्रदानं स्यादन्यत्र
परिवर्जयेत् ॥ ३९६ ॥ घृतं वा यदि वा तैलं पयो वा यदि वा दधि । चत्वारो
ह्याज्यसंस्थानं हुतं नैव तु वर्जयेत् ॥ ३९७ ॥ श्रुत्वैतानृषयो धर्मान्भाषितानत्रिणा
स्वयम् । इदमूचुर्महात्मानं सर्वे ते धर्मनिष्ठिताः ॥ ३९८ ॥ य इदं धारयिष्यन्ति
धर्मशास्त्रमतन्द्रिताः । इह लोके यशः प्राप्य ते यास्यन्ति त्रिविष्टपम् ॥ ३९९ ॥
विद्यार्थी लभते विद्यां धनकामो धनानि च । आयुष्कामस्तथैवाऽऽयुः श्रीकामो
महतीं श्रियम् ॥ ४०० ॥

इति श्रीमदत्रिमहर्षिसंहिता ।



ॐ तत्सद्ब्रह्मणे नमः ।

महर्ष्यत्रिप्रणीता

# अत्रिस्मृतिः ।

(तत्र प्रथमोऽध्यायः ।)

हुताग्निहोत्रमासीनमत्रिं वेदविदां वरम् । पृच्छन्ति जातसंदेहा ऋषयः शंसितव्रताः॥१॥ भगवन्केन दानेन जप्येन तपसैव च । मुच्यन्ते पातकैर्युक्तास्तन्नो ब्रूहि महामुने॥ २ ॥ अत्रिरुवाच–अविख्यापितदोषाणां पापानां महतां तथा । सर्वेषां चोपपापानां शुद्धिं वक्ष्यामि तत्त्वतः ॥३॥ प्राणायामैः पवित्रैश्च व्याहृतिप्रणवैस्तथा । पवित्रपाणिरासीनो ब्रह्मविन्यस्तमभ्यसेत् ॥४॥ आवर्तयेत्सदा युक्तः प्राणायामं पुनः पुनः । आ केशादा नखाग्राच्च तपस्तप्तं तदुत्तमम् ॥ ५ ॥ निरोधाज्जायते वायुर्वायोरग्निः प्रजायते । अग्नेरापश्च जायन्ते ततोऽन्तः शुध्यते त्रिभिः॥ ६ ॥ न तां तीव्रेण तपसा न ध्यानैर्न च वेज्यया । गतिं गन्तुं द्विजाः शक्ता योगात्संप्राप्नुवन्ति याम् ॥ ७ ॥ योगात्संप्राप्यते ज्ञानं योगो धर्मस्य लक्षणम् । योगः परं तपो नित्यं तस्माद्युक्तः सदा भवेत् ॥ ८ ॥ प्रणवाद्यास्त्रयो वेदाः प्रणवे पर्यवस्थिताः । वाङ्मयं प्रणवे सर्वं तस्मात्प्रणवमभ्यसेत् ॥ ९ ॥ प्रणवे नित्ययुक्तस्य सव्याहृतिषु सप्तसु । त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ॥ १० ॥ एकाक्षरं परं ब्रह्म प्राणायामः परं तपः । सावित्र्यास्तु परं नास्ति पावनं परमं स्मृतम् ॥ ११ ॥ सव्याहृतिं सप्रणवां गायत्रीं च शिरस्तथा । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ १२ ॥

इत्यात्रेये धर्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

(अथात्रिस्मृतौ द्वितीयोऽध्यायः ।)

प्राणायामांश्चरेन्नित्यं यथाकालमतन्द्रितः । अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ॥ १ ॥ कर्मणा मनसा वाचा यद्रात्रौ क्रियते त्वघम् । संतिष्ठन्पूर्वसंध्यायां प्राणायामैस्तु पूयते ॥ २ ॥ कर्मणा मनसा वाचा यदह्ना कुरुते त्वघम् । आसीनः पश्चिमां संध्यां प्राणायामैस्तु शुध्यति ॥ ३ ॥ प्राणायामैर्य आत्मानं नियम्याऽऽस्ते पुनः पुनः । दशद्वादशभिर्वाऽपि चतुर्विंशात्परं तपः ॥ ४ ॥

१ ग. हुताग्नि° । २ ग. °स्ताल्लनाम् । स° । ३ ग. °म । विरो° । ४ क. °त्रीं शिरसा तथा ।

सव्याहृतिकाः सप्रणवाः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥ ५ ॥ अपि चाप्सु निमज्जित्वा यः पठेदघमर्षणम् । यथाऽश्वमेधावभृथस्तथैव मनुरब्रवीत् ॥ ६ ॥ आरम्भयज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशु स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥ ७ ॥ ध्वनिरोष्ठाविकारेण निःश्वासोपांशुलक्षणः । निर्विकारेण वक्त्रेण मनसा मानसः स्मृतः ॥ ८ ॥ सहस्रपरमां देवीं शतमध्यां दशावराम् । गायत्रीं यो जपेद्विप्रो न स पापेन लिप्यते ॥ ९ ॥ क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः । धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥ १० ॥ यथाऽश्वा रथहीनास्तु रथाश्चाश्वैर्विना यथा । एवं तपोऽप्यविद्यस्य विद्या चाप्यतपस्विनः ॥ ११ ॥ यथाऽन्नं मधुसंयुक्तं मधु चान्नेन संयुतम् । एवं तपश्च विद्या च संयुक्तं भेषजं महत् ॥ १२ ॥ विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपतत्परम् । कुत्सितेष्वपि वर्तन्तं नैनः संस्पृशते क्वचित् ॥ १३ ॥

इत्यात्रेये धर्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

( अथात्रिस्मृतौ तृतीयोऽध्यायः । )

अथ कार्यशतं साग्रं कृतं वेदश्च धार्यते । सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनम् ॥ १ ॥ यथाऽतिप्रबलो वह्निर्दहत्यार्द्रानपि द्रुमान् । तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥ २ ॥ यथा पर्वतधातूनां दोषा दह्यन्ति धाम्यताम् । तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ ३ ॥ तपस्तप्यति योऽरण्ये मुनिर्मूलफलाशनः । ऋचमेकां च योऽधीते तच्च तानि च तत्समम् ॥ ४ ॥ न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् । न हि कामकृतं पापं वेदेन प्रतिहन्यते ॥ ५ ॥ याजनाध्यापनाद्यौनात्तथैवासत्प्रतिग्रहात् । विप्रेषु न भवेद्दोषो ज्वलनार्कसमो द्विजः ॥ ६ ॥ मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च । नोच्छिष्टस्तु भवेद्विप्र आत्रेयवचनं यथा ॥ ७ ॥ शङ्कास्थाने समुत्पन्ने भक्ष्यभोज्यसमन्विते । आहारशुद्धिं वक्ष्यामि तां मे निगदतः शृणु ॥ ८ ॥ अक्षारलवणं यत्नात्पिबेद्ब्राह्मीं सुवर्चलाम् । त्रिरात्रं शङ्खपुष्पीं वा ब्राह्मणः पयसा सह ॥९ ॥ पलाशबिल्वपत्राणि कुशं पद्ममुदुम्बरम् । काथयित्वा पिबेदम्भस्त्रिरात्रेणैव शुध्यति ॥ १० ॥ हविष्यं प्रातरश्नंस्त्रीन्हविष्यं सायमेव च । हविष्यायाचितं त्र्यहमुपवासं त्र्यहं चरेत् ॥ ११ ॥ अथ चेत्त्वरते कर्तुं[1] दिवसं मारुताशनः । रात्रौ जले स्थितो व्युष्टः प्राजापत्येन तत्समम् ॥ १२ ॥ दुरितेषु त्वरिष्ठानां पापानां महतामपि । सर्वेषां चोपपानां शुद्धिश्चान्द्रायणं भवेत् ॥१३॥ एकैकं वर्धयेद्ग्रासं शुक्ले कृष्णे च ह्रासयेत् । अमावास्यां न भुञ्जीत एष चान्द्रायणो विधिः ॥ १४ ॥ गायत्र्यष्टसहस्रं तु जप्यं कृत्वा स्थिते रवौ । मुच्यते सर्वपापेभ्यो यदि न ब्रह्महा भवेत् ॥ १५ ॥

इत्यात्रेये धर्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

---

१ ग. कृतवे° ।

( अत्रात्रिस्मृतौ चतुर्थोऽध्यायः । )

अचीर्णप्रायश्चित्तानां यमविषयनरकयातनाभिश्च पातितानां यदि कदाचिन्मानुष्यं भवति तदैतच्चिह्नाङ्कितशरीरा जायन्ते ॥ १ ॥ तथा—अनृतवादी खलो ब्रह्महा कुष्ठी ॥ २ ॥ न्यासापहारी चानपत्यः ॥ ३ ॥ रत्नापहारी चात्यन्तदरिद्रः ॥ ४ ॥ अयाज्ययाजको वराहः ॥ ५॥ वहुयाजकः प्लवः ॥ ६ ॥ असत्सु भोजी वानरः॥७॥ अनिमन्त्रितभोजी वायसः ॥ ८ ॥ इतस्ततस्तर्कको मार्जारः ॥ ९ ॥ कक्षागारदाहकः खद्योतः ॥ १० ॥ दारकाचार्यो मुखगन्धी ॥ ११ ॥ अवधूतदायी बलीवर्दः ॥१२॥ मिष्टान्नमदत्त्वा यः स्वयंभोजी[स]कृमिः ॥ १३ ॥ मत्सरी भ्रमरः ॥१४॥ फलहरणाद्गलगण्डी ॥ १५ ॥ वस्त्रहरणाच्छ्वित्री ॥ १६ ॥ चण्डालीपुल्कसीगमनेऽजगरः॥१७॥ प्रव्राजितोपगमने मरुपिशाचः ॥१८॥ शूद्रीगमने दीर्घकीटः ॥१९॥ जलहरणान्मत्स्यः ॥ २० ॥ क्षीरहरणाद्बलाका ॥२१॥ धान्यहरणान्मूषकः॥२२॥ क्रयविक्रयणाद्गृध्रः ॥ २३ ॥ गोमैथुनान्मण्डूकः ॥ २४ ॥ चित्रोपजीवी श्वा ॥ २५ ॥ भृतकाध्यापकः शृगालः ॥ २६ ॥ तस्करो विड्वराहः ॥ २७ ॥ गुरुदारगमनादुष्ट्रः ॥ २८ ॥ परदारगमनात्कुररः ॥ २९ ॥ परद्रव्यहरणात्प्रेतः ॥३०॥ मत्स्यबन्धकः परप्रेष्यः ॥३१॥ गरद ऋक्षः ॥ ३२ ॥ विषदो व्याघ्रः ॥ ३३ ॥ तैलहरणात्तैलपायिका ॥ ३४ ॥ लवणहरणादरसंज्ञः ॥ ३५ ॥ राजमहिषीहरणात्खरः ॥ ३६ ॥ राजाक्रोशे गर्दभः ॥ ३७ ॥ ब्राह्मणपरिवादात्कृकलासः ॥ ३८ ॥ देवलश्चाण्डालः ॥ ३९ ॥ वार्धुषिकः कूर्मः ॥ ४० ॥ फलविक्रयादफलः ॥४१॥ वस्त्रविक्रयादुलूकः ॥ ४२ ॥ ऊर्णनाभो न स्तिकः कृतघ्नश्च ॥ ४३ ॥ शरणागतत्यागी ब्रह्मराक्षसोऽविक्र(क्रे)यविक्रयकारी च ॥ ४४ ॥ सर्वदाऽनृतवचनात्पापः ॥ ४५ ॥

इत्यात्रेये धर्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

( अथात्रिस्मृतौ पञ्चमोऽध्यायः । )

न स्त्री दुष्यति जारेण न विप्रो वेदपारगः । नाऽऽपो मूत्रपुरीषेण नाग्निर्दहनकर्मणा ॥ १ ॥ बलात्कारोपभुक्ता वा चौरहस्तगताऽपि वा । स्वयं चापि विपन्ना वा यदि वा विप्रवादिता ॥ २ ॥ न त्याज्या दूषिता नारी नास्यास्त्यागो विधीयते । पुष्पकालमुपासीत्वा ( मपास्याथ) ऋतुकालेन शुध्यति ॥ ३ ॥ स्त्रियः पवित्रमतुलं नैता

१ ख. महापि° । २ ग. °प्रचोदि° ।

दुष्यन्ति केनाचित् । मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥ ४ ॥ पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः । भुज्यन्ते मानुषैः पश्चान्नैता दुष्यन्ति कर्हिचित् ॥५॥ असवर्णेन यो गर्भः स्त्रीणां योनौ निषिच्यते । अशुद्धा तु भवेन्नारी यावच्छल्यं न मुञ्चति ॥ ६ ॥ निःसृते तु ततः शल्ये रजसोऽपीह दर्शनात् । ततः सा शुध्यते नारी विमला काञ्चनोपमा ॥७॥ सोमः शौचं ददौ तासां गन्धर्वश्च शुभां गिरम् । पावकः सर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः ॥८॥ व्यञ्जनेषु च जातेषु सोमो भुङ्क्ते च कन्यकाम्। पयोधरेषु गन्धर्वा रजस्यग्निः प्रतिष्ठितः ॥९॥ भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्याति । रजसा शुध्यते नारी नदी वेगेन शुध्यति ॥ १० ॥ गोकरीषेण रजतं सुवर्णं चापि वारिणा । आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् ॥११॥ आसनं शयनस्थानं स्त्रीमुखं कुनपः(पं) खुरम् । न दूषयन्ति विद्वांसो यज्ञेषु चमसं यथा ॥१२॥ मक्षिका संततिर्धारा भूमिस्तोयं हुताशनः । मार्जारश्चैव दर्वी च नकुलश्च सदा शुचिः ॥ १३ ॥ वत्सः प्रस्रवणे मेध्यः शकुनिः फलपातने । स्त्रियश्च रतिसंयोगे श्वा मृगग्रहणे शुचिः ॥ १४ ॥ पादुके खञ्जतो मेध्ये उत्तमाङ्गे (दुष्टमार्गे) ह्युपानहौ । वस्त्रं कौपीनके मेध्यं स्त्रियो मेध्यास्तु सर्वतः ॥ १५ ॥ * अजाश्वौ मुखतो मेध्यौ गावो मेध्यास्तु पृष्ठतः । ब्राह्मणाः पादतो मेध्याः स्त्रियो मेध्यास्तु सर्वतः ॥ १६ ॥

इत्यात्रेये धर्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

(अथात्रिस्मृतौ षष्ठोऽध्यायः ।)

सर्ववेदपवित्राणि तानि वक्ष्याम्यशेषतः । येषां जप्यैश्च होमैश्च पूयन्ते कल्मषात्पृताः॥१॥ अघमर्षणं देवकृतश्चोदुत्यं तरत्समन्दी पावमान्यश्च सावित्री रेवती शतरुद्रियमथर्वशिरास्त्रिसुपर्णं महाव्रतमभिशंसाति स्तोत्रसामानि व्याहृतयः ॥ २ ॥ भारुण्डानि च सामानि गायत्रं रैवतं तथा । ×पुरुषव्रतं च भाषं(?)च तथा देवव्रतानि च ॥ ३ ॥ अशुचि गां बार्हस्पत्यांश्च काकं सार्कमब्देवतं तथा(?) । गोसूक्तमश्वसूक्तं च इन्द्रसूक्ते च सामनी ॥ ४ ॥ त्रीण्याज्यदोहानि रथंतरं च आग्नेयमेवं सहवामदेव्यम् । एतानि जप्तानि पुनन्ति जन्तूञ्जातिरमरत्व लभते यदीच्छेत् ॥ ५ ॥ अग्नेरपत्यं प्रथमं सुवर्णं

* एतद्वचनं न विद्यते ख. पुस्तके । × एतदर्धं न ख. पुस्तके ।

भूर्वैष्णवी[1] सूर्यसुताश्च गावः । लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च महीं च दद्यात् ॥ ६ ॥ वैशाख्यां पौर्णमास्यां तु ब्राह्मणान्सप्त पञ्च वा । तिलान्क्षौद्रेण संयुक्तान्ग्राहयेद्विधिपूर्वकम् ॥ ७ ॥ प्रीयतां धर्मराजेति यद्वा मनसि वर्तते । यावज्जन्मकृतं पापं तेन दानेन शुध्यति ॥ ८ ॥ सुवर्णनाभं यः कृत्वा सखुरं कृष्णमार्गकम् । तिलैः प्रच्छाद्य यो दद्यात्तस्य पुण्यफलं शृणु ॥ ९ ॥ ससमुद्रगुहा तेन सशैलवनकानना । चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥ १० ॥ तिलान्कृष्णाजिने कृत्वा सुवर्णं मधुसर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥ ११ ॥

इत्यात्रेये धर्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

---

( अथात्रिस्मृतौ सप्तमोऽध्यायः । )

---

अथातो रहस्यानि व्याख्यास्यामः ॥ १ ॥ नटनर्तकगायनगान्धर्विकश्वपाककारुकर्वी[2]शोत्कटवीर्णो[3]शास्त्रस(श)कयवनकाम्बोजबाह्लीकखशद्रविडवङ्गपारशवा[4]विल्वाता[5]दीनां भुक्त्वा प्रतिगृह्य च स्त्रीगमने सह भोजने रहस्ये रहस्यानि प्रकाशे प्रकाश्यानि चरेत् ॥ २ ॥ यावत्तु तिष्ठेदप्सु निमज्ज्य तरत्समन्दीं त्रिरावर्त्य शुध्येत् ॥ ३ ॥ रहस्ये तप्तकृच्छ्रं तु चरेद्विप्रः समाहितः । प्रकाशे चैन्दवं कुर्यात्सकृद्भुक्त्वा द्विजोत्तमः ॥ ४ ॥ गोवैश्यवधे कन्यादूषणे चैवम् ॥ ५ ॥ मृतकाष्ठे अधोत्सर्गलशुनपलाण्डुगृञ्जनकु[6]म्भीरकगोमायुविड्वराहाश्वादीनामन्येषां वाऽभक्ष्याणां भक्षणे ॐशुद्धेनापः पीत्वा शुध्येत् ॥ ६ ॥ वेदस्यैकगुणं चापि सद्यः शोधनमुच्यते । एकादश गुणान्रुद्रान् (?) ॥ ७ ॥ अनृतमहापातकोपपातकैर्मलिनीकरणीयैर्मुच्यते ॥ ८ ॥ ब्राह्मणीगमने स्नात्वा ब्राह्मणायोदकुम्भं दद्यात् ॥ ९ ॥ क्षत्रियावैश्यागमने तापसीं त्रिरावर्त्य शुध्येत् ॥ १० ॥ शूद्रागमने त्वघमर्षणेनापः पीत्वा शुध्येत् ॥ ११ ॥ वियोनिगमने कूष्माण्डैर्घृतहोमान्मुच्यते ॥ १२ ॥ गुरुदारान्गत्वा ऋषभं द्वादश गा दत्त्वा शुध्येत् ॥ १३ ॥ अपेयं पीत्वाऽभक्ष्यं भक्षयित्वाऽकार्यं कृत्वाऽघमर्षणेनापः पीत्वा शुध्येत् ॥ १४ ॥ अशक्तः प्रायश्चित्ते सर्वत्रानुशोचनेन शुध्येत् ॥ १५ ॥

इत्यात्रेये धर्मशास्त्रे सप्तमोऽध्यायः ॥ ७ ॥

---

१ ख ग. °वैंणवी । २ ग. °कविपोतक° । ३ ख. °वीपोतक° । ४ ख ग °णा वाशा° । ५ क. °शवील्वा° । ६ क °म्भीक° ।

( अथात्रिस्मृतावष्टमोऽध्यायः । )

---

त ऋषयः पुनरत्रिमाहुः ॥ १ ॥ भगवन्किमेतानि प्रायश्चित्तानि भवन्त्याहोस्विदन्यानि सन्ति रहस्यानि ॥ २ ॥ व्याख्यास्यामः ॥ ३ ॥ तत्र रजनीं यावद्याममेकं समाचरेत् । तत्पूर्वं ब्रह्म तत्सवितुर्वरेण्यमित्यभक्ष्यभक्षणादपेयपानादकार्यकरणादशेषतो मुच्यते ॥ ४ ॥ वामदेव्यं त्रिरावर्त्य मुच्यते ब्रह्महत्यया । आतूनइन्द्रसोमेन कन्यादूषी च शुध्यति ॥ ५ ॥ उदुत्यमिति सप्तरूपेणाऽऽदित्यमुपास्येहकृतैः पुराकृतैश्च मुच्यते ॥ ६ ॥ सोमं राजानमिति विषगराग्निदाहाच्च मुच्यते ॥ ७ ॥ सर्वेषामेव पापानां संकरे समुपस्थिते । दशसाहस्रमभ्यस्ता गायत्री शोधनं परम् ॥ ८ ॥ रुद्रकूष्माण्डरूपैश्च जपैस्तैर्विविधैस्तथा । वैराजार्षिभिर्जप्यैश्च गायत्र्यास्तु विशेषतः ॥९॥ यानि पूर्वप्रणीतानि पवित्राणि महर्षिभिः । तेषां जप्यैश्च होमैश्च पूयन्ते कल्मषावृताः ॥ १० ॥ ब्रह्महा गुरुतल्पी वाऽगम्यागामी सुवर्णस्तेयी सुरापो गोघ्नो विश्वासघाती मित्रध्रुक्शरणागतघाती कूटसाक्ष्यकार्यकृच्चैवमादिष्वन्येष्वपि नरः प्राणायामशतं कृत्वा सूर्योदयं प्रतीदमापः प्रवहतामिति त्रिरावर्त्य मुच्यते सर्वकिल्बिषैः॥११॥ सूर्यस्योदयनं प्राप्य निर्मला धौतकल्मषाः । भवन्ति भास्कराभास्ते विधूमा इव पावकाः ॥ १२ ॥ ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् । श्वपाकेष्वपि भुञ्जानो ध्यानेनेह विशुध्यति ॥ १३ ॥ ध्यानमेव परं शौचं ध्यानमेव परं तपः । ध्यानमेव परं शौचं ध्यानमेव परं पदम् ॥ १४ ॥ सर्वपापप्रसक्तोऽपि ध्यायन्नेव प्रमुच्यते । तपस्वी च भवेदेवं पङ्क्तिपावनपावकः ॥ १५ ॥ आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्यति कर्मणा ॥ १६ ॥ रक्तवस्त्रं यथा धौतं न रक्तं न च पाण्डुरम् । एवं विधिविहीनस्तु न शूद्रो न च स द्विजः ॥ १७ ॥ ये च प्रव्राजितापत्या या चैषां बीजसंततिः । विदूरा नाम चाण्डाला जायन्ते नात्र संशयः ॥ १८ ॥ शतिको म्रियते गृध्रश्वाषो द्वादशिकस्तथा । भासो विंशतिवर्षैश्च सूकरो दशभिस्तथा ॥ १९ ॥ अपुष्पो विफलो वृक्षो जायते कण्टकावृतः । वने दावाग्निदग्धश्च स्थाणुर्भवति सानुगः ॥ २० ॥ ततो वर्षशतान्यष्टौ द्वे च तिष्ठत्यचेतनः । पूर्णे वर्षसहस्रे तु जायते ब्रह्मराक्षसः ॥ २१ ॥ जले प्लवो वा भवति कुलस्योत्सादनेन च । पतत्यर्धशरीरेण यस्य भार्या सुरां पिबेत् ॥ २२ ॥ पतितार्धशरीरस्य निष्कृतिर्न विधीयते ॥ २३ ॥

इत्यात्रेये धर्मशास्त्रेऽष्टमोऽध्यायः ॥ ८ ॥

---

१ ख. °जस्वनीं यावद्ध्यानमे° । ग. °जस्वनायावद्ध्यानमे° ।

( अथात्रिस्मृतौ नवमोऽध्यायः । )

---

यो ध्याता यच्च यद्ध्यानं यद्ध्येयं यत्प्रयोजनम् । सर्वाण्येतानि यो वेत्ति स योगं योक्तुमर्हति ॥ १ ॥ आत्मा ध्याता मनो ध्यानं ध्येयः सूक्ष्मो महेश्वरः । यत्परापरमैश्वर्यमेतद्ध्यानप्रयोजनम् ॥ २ ॥ विदित्वा सर्वसूक्ष्माणि षडङ्गं च महेश्वरम् । प्रधानगुणतत्त्वज्ञः परं ब्रह्माधिगच्छति ॥ ३ ॥ विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन् । शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणः ॥ ४ ॥ उपलब्धिः स्मृतिर्ध्यानं संकल्पः प्रणवं प्रति । कल्पना भावना चिन्ता ध्यानमित्यभिधीयते ॥ ५ ॥ प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा । तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ६ ॥ यस्त्विदं पठते शास्त्रं विप्रेभ्यश्च प्रयच्छति । मुच्यते सर्वपापेभ्यो ब्रह्मलोकं स गच्छति ॥ ७ ॥

इत्यात्रेये धर्मशास्त्रे नवमोऽध्यायः ॥ ९ ॥

अत्रिस्मृतिः समाप्ता ॥

---

ॐ तत्सद्ब्रह्मणे नमः ।

# आपस्तम्बस्मृतिः ।

( तत्र प्रथमोऽध्यायः । )

आपस्तम्बं प्रवक्ष्यामि प्रायश्चित्तविनिर्णयम् । दूषितानां हितार्थाय वर्णानामनुपूर्वशः ॥ १ ॥ परेषां परिवादेषु निवृत्तमृषिसत्तमम् । विविक्तदेश आसीनमात्मविद्यापरायणम् ॥ २ ॥ अनन्यमनसं शान्तं सत्त्वस्थं योगवित्तमम् । आपस्तम्बमृषिं सर्वे[3] समेत्य मुनयोऽब्रुवन् ॥ ३ ॥ भगवन्मानवाः सर्वेऽसन्मार्गेऽपि स्थिता यदा । चरेयुर्धर्मकार्याणां तेषां ब्रूहि विनिष्कृतिम् ॥ ४ ॥ यतोऽवश्यं गृहस्थेन गवादिपरिपालनम् । कृषिकर्मादि[6]वपने द्विजामन्त्रणमेव च ॥ ५ ॥ बालानां स्तन्यपानादि कार्यं च परिपालनम् । देयं चानाथकेऽवश्यं विप्रादीनां च भेषजम् ॥ ६ ॥ एवं कृते कथंचित्स्यात्प्रमादो यद्यकामतः । गवादीनां ततोऽस्माकं भगवन्ब्रूहि निष्कृतिम् ॥ ७ ॥ एवमुक्तः क्षणं ध्यात्वा प्रणिपातादधोमुखः । दृष्ट्वा ऋषीनुवाचेदमापस्तम्बः सुनिश्चितम् ॥ ८ ॥ बालानां स्तन्यपानादिकार्ये दोषो न विद्यते । विपत्तावपि विप्राणामामन्त्रणचिकित्सने ॥ ९ ॥ गवादीनां प्रवक्ष्यामि प्रायश्चित्तं तृणादिषु । केचिदाहुर्न दोषोऽत्र स्नेहे लवणभेषजे ॥ १० ॥ औषधं लवणं चैव स्नेहं पुष्ट्यर्थभोजनम् । प्राणिनां प्राणवृत्त्यर्थं प्रायश्चित्तं न विद्यते ॥ ११ ॥ अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत् । अतिरिक्ते विपन्नानां कृच्छ्रमेव विधीयते ॥ १२ ॥ त्र्यहं निरशनं[11] पादः पादश्चायाचितं त्र्यहम्[12] । * सायं त्र्यहं तथा पादः पादः प्रातस्तथा त्र्यहम् ॥ १३ ॥ प्रातः सायं दिनार्धं[13] च पादोनं सायमर्जितम् । प्रातः पादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् ॥ १४ ॥ अयाचितं तु राजन्ये त्रिरात्रं ब्राह्मणस्य च । पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ॥ १५ ॥ योजने पादहीनं च चरेत्सर्वं निपातने । घण्टाभरणदोषेण गोस्तु यत्र विपद्भवेत् ॥ १६ ॥ चरेदर्धव्रतं तत्र भूषणार्थं कृतं हि तत् । दमने वा[14] निरोधे वा संघाते चैव योजने ॥ १७ ॥ स्तम्भशृङ्खलपाशैश्च मृते पादोनमाचरेत् । पाषाणैर्लकुटैर्वाऽपि शस्त्रेणान्येन वा बलात् ॥ १८ ॥ निपातयन्ति ये[15] गास्तु तेषां सर्वं विधीयते । प्राजापत्यं चरेद्विप्रः पादोनं क्षत्त्रियस्तथा ॥ १९ ॥

---

* एतदर्धस्थानेऽयं पाठश्छ. पुस्तके–" एकभक्तं त्र्यहं पादो नक्तं पादस्त्र्यहं निशि " इति ।

---

१ घ. परवा° । २ ख. तत्त्वस्थं । ३ ख ग. °र्वे असन्मार्गे स्थि° । ४ ग. यदि । ५ क. घ. ङ. च. छ. झ. °दा । भवेयु° । ६ ग °दि चाऽऽपत्सु द्वि° । घ °दिपचने । ७ घ. °मुखान् । दृ° । ८ क. °त्तं तुषादि° । ग °त्तं रुजादि° । ङ. °त्तं वधादि° । ९ ग. °त्र देहधारण° । १० क. ङ च. झ. कृत्स्नमे° । ११ ग. °शनात्पाद° । १२ ग. °म् । पादः सायं त्र्यहं पाद प्रातर्भोज्यं तथा । १३ क. घ. ङ. च. विनार्धं । १४ क. घ. च. झ. वाहने रोधे सं° । १५ ख. ये पापास्तेषा ।

कृच्छ्रार्धं तु चरेद्वैश्यः पादं शूद्रस्य दापयेत्। द्वौ मासौ पाययेद्वत्सं द्वौ मासौ द्वौ स्तनौ दुहेत् ॥ २० ॥ द्वौ मासावेकवेलायां शेषकालं यथारुचि। दशरात्रार्धमासेन गौस्तु यत्र विपद्यते ॥ २१ ॥ सशिखं वपनं कृत्वा प्राजापत्यं समाचरेत्। हलमष्टगवं धर्म्यं षड्गवं जीवितार्थिनाम् ॥ २२ ॥ चतुर्गवं नृशंसानां द्विगवं हि जिघांसिनाम्। अतिवाहातिदोहाभ्यां नासिकाभेदनेन वा ॥ २३ ॥ नदीपर्वतसंरोहे मृते पादोनमाचरेत्। न नारिकेलबालाभ्यां न मुञ्जेन न चर्मणा ॥ २४ ॥ एभिर्गास्तु न बध्नीयाद्बद्ध्वा परवशो भवेत्। कुशैः काशैस्तु बध्नीयाद्वृषभं दक्षिणामुखम् ॥२५॥ पादलग्नाग्निदाहेषु प्रायश्चित्तं न विद्यते। व्यापन्नानां बहूनां तु रोधने बन्धनेऽपि च ॥ २६ ॥ भिषङ्मिथ्यापचारे च द्विगुणं गोव्रतं चरेत्। शृङ्गभङ्गेऽस्थिभङ्गे च लाङ्गूलस्य च कर्तने ॥ २७ ॥ सप्तरात्रं पिबेद्वज्रं यावत्स्वस्था पुनर्भवेत्। गोमूत्रेण तु संमिश्रं यावकं भक्षयेद्द्विजः ॥ २८ ॥ एतद्विमिश्रितं वज्रमुक्तं चोशनसा स्वयम्। देवद्रोण्यां विहारेषु कूपेष्वायतनेषु च ॥ २९ ॥ एषु गोषु विपन्नासु प्रायश्चित्तं न विद्यते। एका यदा तु बहुभिर्दैवाद्व्यापादिता क्वचित् ॥ ३० ॥ पादं पादं तु हत्यायाश्चरेयुस्ते पृथक्पृथक्। यन्त्रणे गोचिकित्सार्थे गूढगर्भविमोचने ॥ ३१ ॥ यत्ने कृते विपत्तिश्चेत्प्रायश्चित्तं न विद्यते। सरोमं प्रथमे पादे द्वितीये श्मश्रुधारणम् ॥ ३२ ॥ तृतीये तु शिखा धार्या सशिखं तु निपातने। सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् ॥ ३३ ॥ एवमेव तु नारीणां शिरसो मुण्डनं स्मृतम् ॥ ३४ ॥

इत्यापस्तम्बीये प्रथमोऽध्यायः ॥ १ ॥

---

( अथ द्वितीयोऽध्यायः। )

कारुहस्तगतं पुण्यं यच्च पात्राद्विनिःसृतम्। स्त्रीबालवृद्धाचरितं सर्वमेतच्छुचि स्मृतम् ॥ १ ॥ प्रपास्वरण्येषु जलेषु वै गिरौ द्रोण्यां जलं केशविनिःसृतं च। श्वपाकचाण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन शुद्धिः ॥ २ ॥ न दुष्येत्संतता धारा वातोद्धूताश्च रेणवः। स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ॥ ३ ॥ आत्मशय्या च वस्त्रं च जायाऽपत्यं कमण्डलुः। आत्मनः शुचीन्येतानि परेषामशुचीनि तु ॥ ४ ॥ अन्यैस्तु खानिताः कूपास्तडागानि तथैव च। येषु स्नात्वा च पीत्वा च पञ्चगव्येन शुध्यति ॥५॥

१ ग च. °रोधे मृ°। २ क °त्तं विधीयते। ३ ख. ग °ङ्मिथ्योप°। ४ क. घ. च °त्स्वस्थ. पु°। ५ छ. °ताद्वि मि°। ६ ग. ज गोश्चिकि°। ७ ग °च ग्रामाद्वि°। ज. ग्रासाद्वि°। ८ क. ख. घ. °वृद्धच°। ९ ग. ज. °तं प्रत्यक्षादृष्टमेव च। प्र°। १० ग ज °लेऽथ नीरे द्रोण्या जलं यच्च विनिःसृतं भवेत्। श्व°। ११ ग. ज. शुचिरेता।

उच्छिष्टमशुचित्वं च यच्च विष्ठानुलेपनम् । सर्वं शुध्यति तोयेन तत्तोयं केन शुध्यति ॥ ६ ॥ सूर्यरश्मिनिपातेन मारुतस्पर्शनेन च । गवां मूत्रपुरीषेण तत्तोयं तेन शुध्यति ॥ ७ ॥ आस्थिचर्मादियुक्तं च खरैश्वोष्ट्रोपदूषितम् । उद्धरेददुकं सर्वं शोधनं परिमार्जनम् ॥ ८ ॥ कूपो मूत्रपुरीषेण ष्ठीवनेनापि दूषितः । श्वशृगालखरोष्ट्रैश्च क्रव्यादैश्च जुगुप्सितः ॥ ९ ॥ उद्धृत्यैव च तत्तोयं सप्त पिण्डान्समुद्धरेत् । पञ्चगव्यं मृदा पूतं कूपे तच्छोधनं स्मृतम् ॥ १० ॥ वापीकूपतडागानां दूषितानां च शोधनम् । कुम्भानां शतमुद्धृत्य पञ्चगव्यं ततः क्षिपेत् ॥ ११ ॥ यच्च कूपात्पिबेत्तोयं ब्राह्मणः शवदूषितात् । कथं तत्र विशुद्धः स्यादिति मे संशयो भवेत् ॥ १२ ॥ अक्लिन्नेनाप्यभिन्नेन शवेन परिदूषितात् । पीत्वा कूपादहोरात्रं पञ्चगव्येन शुध्यति ॥ १३ ॥ क्लिन्ने भिन्ने शवे चैव तत्रस्थं यदि तत्पिबेत् । शुद्धिश्चान्द्रायणं तस्य तप्तकृच्छ्रमथापि वा ॥ १४ ॥

इत्यापस्तम्बीये द्वितीयोऽध्यायः ॥ २ ॥

( अथ तृतीयोऽध्यायः । )

अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनि । सम्यग्ज्ञात्वा तु कालेन द्विजाः कुर्वन्त्यनुग्रहम् ॥ १ ॥ चान्द्रायणं पराको वा द्विजातीनां विशोधनम् । प्राजापत्यं तु शूद्रस्य शेषं तदनुसारतः ॥ २ ॥ यैर्भुक्तं तत्र पक्वान्नं कृच्छ्रं तेषां प्रदापयेत् । तेषामपि च यैर्भुक्तं कृच्छ्रपादं प्रदापयेत् ॥ ३ ॥ कूपैकपानैर्दुष्टानां स्पर्शसंसर्गदूषणात् । तेषामेकोपवासेन पञ्चगव्येन शोधनम् ॥ ४ ॥ बालो वृद्धस्तथा रोगी गर्भिणी वायुपीडिता । तेषां नक्तं प्रदातव्यं बालानां प्रहरद्वयम् ॥ ५ ॥ अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च ॥ ६ ॥ न्यूनैकादशवर्षस्य पञ्चवर्षाधिकस्य च । चरेद्गुरुः सुहृद्वाऽपि प्रायश्चित्तं विशोधनम् ॥ ७ ॥ अथ तैः क्रियमाणेषु येषामार्तिः प्रदृश्यते । शेषसंपादनाच्छुद्धिर्विपत्तिर्न भवेद्यथा ॥ ८ ॥ क्षुधा व्याधितकायानां प्राणो येषां विपद्यते । ये न रक्षन्ति वक्तारस्तेषां तत्किल्बिषं भवेत् ॥ ९ ॥ पूर्णेऽपि कालनियमे न शुद्धिर्ब्राह्मणैर्विना । अपूर्णेष्वपि कालेषु शोधयन्ति द्विजोत्तमाः ॥ १० ॥ समाप्तमिति नो वाच्यं त्रिषु वर्णेषु कर्हिचित् । विप्रसंपादनं कार्यमुत्पन्ने प्राणसंशये ॥ ११ ॥

---

१ ग खराश्वो° । २ क ख घ °रश्वानोप° । ३ ख °ण यवने° । ४ क घ ङ. °न्नेन न भिन्नेन केवलं शवदू° । ख °न्नेन च भिन्नेन शवदूषिते । पी° । ५ ग ज °षिते । पी° । ६ ख °नि । तस्य ज्ञात्वा । ७ घ. च यद्भुक्तम् । ८ ग. °र्शने शवदूषिणाम् । ते° । ज °र्शने गवदूषणम् । ते° । ९ ग. ज. °थवा क्लि° । १० ङ. ज °नाद्वुद्धि° । ११ ग °न्ति भक्तेन तेषा । १२ क घ पूर्णोऽपि । १३ क ङ. झ. °मासिमि° ।

संपादयन्ति ये विप्राः स्नानतीर्थफलप्रदम् । सम्यक्कर्तुरपापं स्याद्व्रती च फलमाप्नुयात् ॥ १२ ॥

इत्यापस्तम्बीये तृतीयोऽध्यायः ॥ ३ ॥

( अथ चतुर्थोऽध्यायः । )

चाण्डालकूपभाण्डेषु योऽज्ञानात्पिबते जलम् । प्रायश्चित्तं कथं तस्य वर्णे वर्णे विधीयते ॥ १ ॥ चरेत्सांतपनं विप्रः प्राजापत्यं तु भूमिपः । तदर्धं तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥ २ ॥ भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा । प्रमादात्स्पर्शनं गच्छेत्तत्र कुर्याद्विशोधनम् ॥ ३ ॥ गायत्र्यष्टसहस्रं तु द्रुपदां वा शतं जपेत् । जपंस्त्रिरात्रमनश्नन्पञ्चगव्येन शुध्यति ॥ ४ ॥ चाण्डालेन यदा स्पृष्टो विण्मूत्रे च कृते द्विजः। प्रायश्चित्तं त्रिरात्रं स्याद्भुक्तोच्छिष्टः षडाचरेत् ॥ ५ ॥ पानमैथुनसंपर्के तथा मूत्रपुरीषयोः । संपर्कं यदि गच्छेत्तु उदक्या चान्त्यजैस्तथा ॥ ६ ॥ एतैरेव यदा स्पृष्टः प्रायश्चित्तं कथं भवेत् । भोजने च त्रिरात्रं स्यात्पाने तु त्र्यहमेव च ॥ ७ ॥ मैथुने पादकृच्छ्रं स्यात्तथा मूत्रपुरीषयोः । दिनमेकं तथा मूत्रे पुरीषे तु दिनत्रयम् ॥ ८ ॥ एकाहं तत्र निर्दिष्टं दन्तधावनभक्षणे । वृक्षारूढे तु चाण्डाले द्विजस्तत्रैव तिष्ठति ॥ ९ ॥ फलानि भक्षयंस्तस्य कथं शुद्धिं विनिर्दिशेत् । ब्राह्मणान्समनुज्ञाप्य सवासाः स्नानमाचरेत् ॥ १० ॥ एकरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति । येन केनचिदुच्छिष्टो अ(ह्य)मेध्यं स्पृशति द्विज ॥ ११ ॥ अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ १२ ॥

इत्यापस्तम्बीये चतुर्थोऽध्यायः ॥ ४ ॥

( अथ पञ्चमोऽध्याय । )

चाण्डालेन यदा स्पृष्टो द्विजवर्णः कदाचन । अनभ्युक्ष्य पिबेत्तोयं प्रायश्चित्तं कथं भवेत् ॥ १ ॥ ब्राह्मणस्तु त्रिरात्रेण पञ्चगव्येन शुध्यति । क्षत्रियस्तु द्विरात्रेण पञ्चगव्येन शुध्यति ॥२॥ अहोरात्रेण वैश्यस्तु पञ्चगव्येन शुध्यति । चतुर्थस्य तु वर्णस्य प्रायश्चित्तं कथं भवेत् ॥३॥ व्रतं नास्ति तपो नास्ति होमो नैव च विद्यते । पञ्चगव्यं न दातव्यं तस्य मन्त्रविवर्जनात् ॥ ४ ॥ ख्यापयित्वा द्विजानां तु शूद्रो दानेन शुध्यति । ब्राह्मणस्य यदोच्छिष्टमश्नात्यज्ञानतो द्विजः ॥ ५ ॥ अहोरात्रं तु गायत्र्या

१ ग. ज. °न्ति यद्विप्रा॰ स्नानतीर्थफलं च तत् । स° । २ छ. स्नानं ती° । ३ छ °त् । याने मै° । ४ क घ ञ. संसर्ग । ५ क. घ. ङ शुद्धिर्विनि° । ६ क. ख. °णस्य त्रिरात्रं तु प° । ७ क. ख. घ. °यस्य द्विरात्रं तु प° । ८ क ख. घ. ङ. °रात्रं तु वैश्यस्य प° । ९ ग ज °तं न वै भ° ।

जपं कृत्वा विशुध्यति। उच्छिष्टं वैश्यजातीनां भुङ्क्तेऽज्ञानाद्द्विजो यदि ॥ ६ ॥ शङ्खपुष्पीपयः पीत्वा त्रिरात्रेणैव शुध्यति। ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन ॥ ७ ॥ न तत्र दोषं मन्यन्ते नित्यमेव मनीषिणः। उच्छिष्टमितरस्त्रीणामश्नीयात्स्पृशतेऽपि वा ॥ ८ ॥ प्राजापत्येन शुद्धिः स्याद्भगवानाङ्गिरा*ऽब्रवीत्। अन्त्यानां भुक्तशेषं तु भक्षयित्वा द्विजातयः ॥ ९ ॥ चान्द्रायणं तदर्धार्धं ब्रह्मक्षत्रविशां विधिः। विण्मूत्रभक्षणे विप्रस्तप्तकृच्छ्रं समाचरेत् ॥ १० ॥ श्वकाकोच्छिष्टभोगे च प्राजापत्यविधिः स्मृतः। उच्छिष्टः स्पृशते विप्रो यदि कश्चिदकामतः ॥ ११ ॥ शुनः कुक्कुटशूद्रांश्च मद्यभाण्डं तथैव च। पक्षिणाऽधिष्ठितं यच्च यद्यमेध्यं कदाचन ॥ १२ ॥ अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति। वैश्येन च यदा स्पृष्ट उच्छिष्टेन कदाचन ॥ १३ ॥ स्नानं जप्यं च त्रैकाल्यं दिनस्यान्ते विशुध्यति। विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन ॥१४॥ स्नानान्ते च विशुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः॥१५॥

इत्यापस्तम्बीये पञ्चमोऽध्यायः ॥ ५ ॥

( अथ षष्ठोऽध्यायः । )

अत ऊर्ध्वं प्रवक्ष्यामि नीलीशौचस्य यो विधिः। स्त्रीणां क्रीडार्थसंभोगे शयनीये न दुष्यति ॥ १ ॥ पालने विक्रये चैव तद्वृत्तेरुपजीवने। पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुध्यति ॥ २ ॥ स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्। पञ्चयज्ञा वृथा तस्य नीलीवस्त्रस्य धारणात् ॥ ३ ॥ नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ४ ॥ रोमकूपैर्यदा गच्छेद्रसो नील्यास्तु कर्हिचित्। पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुध्यति ॥ ५ ॥ नीलीदारु यदा भिन्द्याद्ब्राह्मणस्य शरीरकम्। शोणितं दृश्यते तत्र द्विजश्चान्द्रायणं चरेत् ॥ ६ ॥ नीलीमध्ये यदा गच्छेत्प्रमादाद्ब्राह्मणः क्वचित्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ७ ॥ नीलीरक्तेन वस्त्रेण यदन्नमुपनीयते। अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् ॥ ८ ॥ भक्षयेद्यस्तु नीलीं तु प्रमादाद्ब्राह्मणः क्वचित्। चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥ ९ ॥ × यावत्यां वापि-

* अत्र संधिरार्षः। × एतद्वचनं न विद्यते क. घ. च. झ. पुस्तकेषु।

१ क. ख. घ. °श्वगोमिश्च प्रा° । २ ग. ज. स्नात्वाऽऽचम्य वि° । ३ ग. छ. ज. °लीवस्त्रस्य।

ता नीली तावती वाऽशुचिर्मही । प्रमाणं द्वादशाब्दानि अत ऊर्ध्वं शुचिर्भवेत् ॥१०॥

इत्यापस्तम्बीये धर्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

( अथ सप्तमोऽध्यायः । )

स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते । वृत्ते रजसि गम्या स्त्री नानिवृत्ते कथंचन ॥ १ ॥ रोगेण यद्रजः स्त्रीणामत्यर्थं हि प्रवर्तते । अशुद्धास्तास्तु नैवेह तासां वैकारिको मदः ॥ २ ॥ साध्वाचारा न तावत्सा रजो यावत्प्रवर्तते । वृत्ते रजसि साध्वी स्याद्गृहकर्मणि चेन्द्रिये ॥ ३ ॥ प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥ ४ ॥ अन्त्यजातिश्वपाकेन संस्पृष्टा वै रजस्वला । अहानि तान्यतिक्रम्य प्रायश्चित्तं प्रकल्पयेत् ॥ ५ ॥ त्रिरात्रमुपवासः स्यात्पञ्चगव्यं विशोधनम् । निशां प्राप्य तु तां योनिमजाघ्रातां तु कारयेत् ॥ ६ ॥ रजस्वलाऽन्त्यजैः स्पृष्टा शुना च श्वपचेन च । त्रिरात्रोपोषिता भूत्वा पञ्चगव्येन शुध्यति ॥ ७ ॥ प्रथमेऽहनि षड्रात्रं द्वितीये तु त्र्यहस्तथा । तृतीये चोपवासस्तु चतुर्थे वह्निदर्शनात् ॥ ८ ॥ विवाहे वितते यज्ञे संस्कारे च कृते यदा । रजस्वला भवेत्कन्या संस्कारस्तु कथं भवेत् ॥ ९ ॥ स्नापयित्वा तदा कन्यामन्यैर्वस्त्रैरलंकृताम् । पुनर्मत्याहुतिं हुत्वा शेषं कर्म समाचरेत् ॥ १० ॥ रजस्वला तु संस्पृष्टा प्लवकुक्कुटवायसैः । सा त्रिरात्रोपवासेन पञ्चगव्येन शुध्यति ॥ ११ ॥ × रजस्वला तु या नारी अन्योन्यं स्पृशते यदि । तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुध्यति ॥१२ ॥ उच्छिष्टेन तु संस्पृष्टा कदाचित्स्त्री रजस्वला । कृच्छ्रेण शुध्यते विप्रा शूद्रा दानेन शुध्यति ॥ १३ ॥ एकशाखां समारूढाश्चाण्डाला वा रजस्वला । ब्राह्मणश्च समं तत्र सवासाः स्नानमाचरेत् ॥ १४ ॥ रजस्वलायाः संस्पर्शः कथंचिज्जायते शुना । रजोदिनानां यच्छेषं तदुपोष्य विशुध्यति ॥ १५ ॥ अशक्ता चोपवासे तु स्नानं पश्चात्समाचरेत् । तथाऽप्यशक्तावेकेन पञ्चगव्येन शुध्यति ॥ १६ ॥ उच्छिष्टस्तु यदा विप्रः स्पृशेन्मद्यं रजस्वलाम् । मद्यं स्पृष्ट्वा चरेत्कृच्छ्रं तदर्धं तु रजस्वलाम् ॥ १७ ॥

× नैतद्वचनं ग. ज. झ. पुस्तकेषु ।

१ ग. च. न सा त वद्रजो । २ ख. ग. च. छ योनिं प्रजाकारं(रीं)च वा° । ३ ख. ग. ज. तथा । ४ ग. पुन. प्रत्या° । ५ ख. °मेध्याहु° । ६ क. छ. °ण्डाली वा । ७ ग. तत्राप्य° । ८ ग ज. °क्ता चैकेन पञ्चगव्यं पिबेत्ततः । उ° ।

उदक्यां सूतिकां विप्र उच्छिष्टः स्पृशते यदि । कृच्छ्रार्धं तु चरेद्विप्रः प्रायश्चित्तं विशोधनम् ॥ १८ ॥ चण्डालः श्वपचो वाऽपि आत्रेयीं स्पृशते यदि । शेषाहात्फालकृष्टेन पञ्चगव्येन शुध्यति ॥ १९ ॥ उदक्या ब्राह्मणी शूद्रामुदक्यां स्पृशते यदि । अहोरात्रोषिता भूत्वा पञ्चगव्येन शुध्यति ॥ २० ॥ एवं तु क्षत्रियां वैश्यां ब्राह्मणी चेद्रजस्वला । सचैलं प्लवनं कृत्वा दिनस्यान्ते घृतं पिबेत् ॥ २१ ॥ सवर्णेषु तु नारीणां सद्यः स्नानं विधीयते । एवमेव विशुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥ २२ ॥

इत्यापस्तम्बीये सप्तमोऽध्यायः ॥ ७ ॥

=====

( अथाष्टमोऽध्यायः । )

भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते । सुराविण्मूत्रसंस्पृष्टं शुध्यते तापलेखनैः ॥ १ ॥ गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च । दशभिः क्षारैः शुध्यन्ति श्वकाकोपहतानि च ॥ २ ॥ शौचं सुवर्णनारीणां वायुसूर्येन्दुरश्मिभिः । रेतःस्पृष्टं शवस्पृष्टमाविकं न प्रदुष्यति ॥ ३ ॥ अद्भिर्मृदा च तन्मात्रं प्रक्षाल्य च विशुध्यति । शुष्कमन्नमवेदस्य पञ्चरात्रेण जीर्यति ॥ ४ ॥ अन्नं व्यञ्जनसंयुक्तमर्धमासेन जीर्यति । पयस्तु दधि मासेन षण्मासेन घृतं तथा ॥ ५ ॥ संवत्सरेण तैलं तु कोष्ठे जीर्यति वा न वा । भुञ्जते ये तु शूद्रान्नं मासमेकं निरन्तरम् ॥ ६ ॥ इह जन्मनि शूद्रत्वं जायन्ते ते मृताः शुनि । शूद्रान्नं शूद्रसंपर्कः शूद्रेणैव सहाऽऽसनम् ॥ ७ ॥ शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत् । आहिताग्निस्तु यो विप्रः शूद्रान्नान्न निवर्तते ॥ ८ ॥ तथा तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः । शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति ॥ ९ ॥ यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रस्य संभवः । शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः ॥ १० ॥ स भवेत्सूकरो ग्राम्यस्तस्य वा जायते कुले । ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य तु पर्वणि ॥ ११ ॥ वैश्यस्य यज्ञदीक्षायां शूद्रस्य न कदाचन । अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् ॥ १२ ॥ वैश्यस्याप्यन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् । वैश्वदेवेन होमेन देवताभ्यर्चनैर्जपैः ॥ १३ ॥ अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतम् । व्यवहारानुरूपेण धर्मेण च्छलवर्जितम् ॥ १४ ॥ क्षत्रियस्य पयस्तेन भूतानां यच्च पालनम् । स्वकर्मणा च वृषभैरनुसृत्याऽऽद्यशक्तितः ॥ १५ ॥ खलयज्ञातिथित्वेन वैश्यान्नं तेन संस्कृतम् । अज्ञानतिमिरान्धस्य मद्यपानरतस्य च ॥ १६ ॥

---

१ सूतकां । २ ग. ज. °ण्डालैः श्वपचैर्वाऽपि आत्रेयी स्पृश्यते । ३ क. ङ च °प्राह्ना फाल° । ख घ. छ. °प्राहा फाल° । ४ क. ख. घ. °श भस्मानि शु° । ५ ग. शुद्धमन्नमविप्रस्य । ६ ज °मविप्रस्य । ७ ख. °वैश्यस्य । ८ च. °नुस्मृत्या° । ९ ज. खलु य° ।

रुधिरं तेन शूद्रान्नं विधिमन्त्रविवर्जितम्। आममांसं मधुघृतं धानाक्षीरं तथैव च॥१७॥ गुडस्तक्रं रसा ग्राह्या निवृत्तेनापि शूद्रतः। शाकं मांसं मृणालानि तुम्बुरुः सक्तवस्तिलाः॥ १८ ॥ रसाः फलानि पिण्याकं प्रतिग्राह्याणि सर्वतः। आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ॥ १९ ॥ मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत्। द्रव्यपाणिस्तु शूद्रेण स्पृष्टोच्छिष्टेन कर्हिचित् ॥ २० ॥ तद्द्विजेन न भोक्तव्यमापस्तम्बोऽब्रवीन्मुनिः ॥ २१ ॥

इत्यापस्तम्बीयेऽष्टमोऽध्यायः ॥ ८ ॥

(अथ नवमोऽध्यायः।)

भुञ्जानस्य तु विप्रस्य कदाचित्स्रवते गुदम्। उच्छिष्टस्याशुचेस्तस्य प्रायश्चित्तं कथं भवेत् ॥ १ ॥ पूर्वं शौचं तु निर्वर्त्य ततः पश्चादुपस्पृशेत्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ २ ॥ अशित्वा सर्वमेवान्नमकृत्वा शौचमात्मनः। मोहाद्भुक्त्वा त्रिरात्रं तु यवान्पीत्वा विशुध्यति ॥ ३ ॥ प्रसृतं यवसस्येन पलमेकं तु सर्पिषा। पलानि पञ्च गोमूत्रं नातिरिक्तवदाशयेत् ॥ ४ ॥ अलेह्यानामपेयानामभक्ष्याणां च भक्षणे। रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत् ॥ ५ ॥ पद्मोदुम्बरबिल्वाश्च कुशाश्च सपलाशकाः। एतेषामुदकं पीत्वा षड्रात्रेण विशुध्यति ॥ ६ ॥ ये प्रत्यवसिता विप्राः प्रव्रज्याग्निजलादिषु। अनाशकनिवृत्ताश्च गृहस्थत्वं चिकीर्षतः (वः) ॥ ७ ॥ चरेयुस्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि वा। जातकर्मादिभिः सर्वैः पुनःसंस्कारभागिनः (णः) ॥ ८ ॥ तेषां सांतपनं कृच्छ्रं चान्द्रायणमथापि वा ॥ ९ ॥ यद्व्रेष्टितं काकवलाकयोर्वा अमेध्यलिप्तं च भवेच्छरीरम्। श्रोत्रे मुखे च प्रविशेच्च सम्यक्स्नानेन लेपोपहतस्य शुद्धिः ॥ १० ॥ ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते। ऊर्ध्वं स्नानमधः शौचमात्रेणैव विशुध्यति ॥ ११ ॥ उपानहावमेध्यं वा यस्य संस्पृशते मुखम्। मृत्तिकाशोधनं स्नानं पञ्चगव्यं विशोधनम् ॥ १२ ॥ दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु। षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥ १३ ॥ उपनीतं यदा त्वन्नं भोक्तारं समुपस्थितम्। अपीतरसमुत्सृष्टं न दद्यान्नैव होमयेत् ॥ १४ ॥ अन्ने भोजनसंपन्ने मक्षिकाकेशदूषिते। अनन्तरं स्पृशेदा(च्चा)पस्तच्चान्नं भस्मना स्पृशेत् ॥ १५ ॥ शुष्कमांसमयं चान्नं शूद्रान्नं वाऽप्यकामतः। भुक्त्वा कृच्छ्रं चरेद्विप्रो ज्ञानात्कृच्छ्रत्रयं चरेत् ॥ १६ ॥

---

१ ग. ज. गुडं तक्रं रसं ग्रा°। २ ड. °रिक्तं च दापये°। ३ ज. यद्विष्टि°। ४ ग. ज. °कचिल्लिरसे°। ५ च. झ. दशभिः शुध्य°। ६ ग. °क्ता च समुपस्थितः। अ°। ७ ग. °तवत्समु°। ८ क. °मय वाऽन्नं शू°। छ. °मथान्नं वा शू।

अभुक्तो मुच्यते यश्च भुंक्तो यश्चापि मुच्यते। भोक्ता च मोचकश्चैव पश्चाच्चरति दुष्कृतम् ॥ १७ ॥ यस्तु भुंञ्जति भुक्तं वा दुष्टं वाऽपि विशेषतः। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ १८ ॥ उदके चोदकस्थस्तु स्थलस्थश्च स्थले शुचिः। पादौ स्थाप्योभयत्रैव आचम्योभयतः शुचिः ॥ १९ ॥ उत्तीर्याऽऽचामेदुदकादवतीर्य उपस्पृशेत्। एवं तु श्रेयसा युक्तो वरुणेनाभिपूज्यते ॥ २० ॥ अग्न्यगारे गवां गोष्ठे ब्राह्मणानां च संनिधौ। स्वाध्याये भोजने चैव पादुकानां विसर्जनम् ॥ २१ ॥ जन्मप्रभृतिसंस्कारे श्मशानान्ते च भोजनम्। असपिण्डैर्न कर्तव्यं चूडाकार्ये विशेषतः ॥ २२ ॥ याजकान्नं नवश्राद्धं संग्रहे चैव भोजनम्। स्त्रीणां प्रथमगर्भे च भुक्त्वा चान्द्रायणं चरेत् ॥ २३ ॥ ब्रह्मौदनेऽवसाने च सीमन्तोन्नयनेऽथ वा। अन्नश्राद्धे मृतश्राद्धे भुक्त्वा चान्द्रायण चरेत् ॥ २४ ॥ अप्रजा या तु नारी स्यान्नाश्नीयादेव तद्गृहे। अथ भुञ्जीत मोहाद्यः पूयसं नरकं व्रजेत् ॥ २५ ॥ अल्पेनापि हि शुल्केन पिता कन्यां ददाति यः। रौरवे बहुवर्षाणि पुरीषं मूत्रमश्नुते ॥ २६ ॥ स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः। स्वर्णं यानानि वस्त्राणि ते पापा यान्त्यधोगतिम् ॥ २७ ॥ राजान्नमोज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्। असंस्कृतं तु यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ॥२८॥ मृतके सूतके चैव गृहीते शशिभास्करे। हस्तिच्छायां तु (यायां) यो भुङ्क्ते पापः स पुरुषो भवेत् ॥ २९ ॥ पुनर्भूः पुनरेता च रेतोधा कामचारिणी। आसां प्रथमगर्भेषु भुक्त्वा चान्द्रायणं चरेत् ॥ ३० ॥ मातृघ्नश्च पितृघ्नश्च ब्रह्मघ्नो गुरुतल्पगः। विशेषाद्भुक्तमेतेषां भुक्त्वा चान्द्रायणं चरेत् ॥ ३१ ॥ रजकव्याधशैलूषवेणुचर्मोपजीविनाम्। भुक्त्वैषां ब्राह्मणश्चान्नं शुद्धि (द्ध) श्चान्द्रायणेन तु ॥३२॥ उच्छिष्टोच्छिष्टसंस्पृष्टः कदाचिदुपजायते। सवर्णेन तदोत्थाय उपस्पृश्य शुचिर्भवेत् ॥ ३३ ॥ उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः। उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ ३४ ॥ ब्राह्मणस्य सदाकालं शूद्रप्रेषणकारिणः। भूमावन्नं प्रदातव्यं यथा हि श्वा तथैव सः ॥ ३५ ॥ अनुदकेष्वरण्येषु चौरव्याघ्राकुले पथि। कृत्वा मूत्रपुरीषं च द्रव्यहस्तः कथं शुचिः ॥ ३६ ॥ भूमावन्नं प्रतिष्ठाप्य कृत्वा शौचं यथार्थतः। उत्सङ्गे गृह्य पक्वान्नमुपस्पृश्य ततः शुचिः ॥ ३७ ॥ मूत्रोच्चारं द्विजः कृत्वा अकृत्वा शौचमात्मनः। मोहाद्भुक्त्वा त्रिरात्रं तु गव्यं पीत्वा विशुध्यति ॥ ३८ ॥

---

१ ग. ज. °भुक्ते भुञ्जते यश्च भुञ्जन्यश्चा°। २ छ भुक्त्वा यश्च विमु°। ३ ज. मुञ्चते। ४ ग. च. भोजकश्चैव पङ्क्त्या गच्छति। ५ ज. पङ्क्त्या हर°। ६ ग ज भुक्ते तु भु°। ७ ग °र्याऽऽचम्य उद°। ८ ख. संग्रहे। ९ ग. ज. °ने च श्राद्धे च सी°। १० ग ज. °जान्न तेज। ११ ग. छ. ज. °ष्ट शु°। १२ ख ग. शूद्रे प्रे°। १३ क. ख घ. अनूद°।

उदक्यां यदि गच्छेत्तु ब्राह्मणो मदमोहितः । चान्द्रायणेन शुध्येत ब्राह्मणानां च भोजनैः ॥ ३९ ॥ भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा । प्रमादाद्यदि संस्पृष्टो ब्राह्मणो ज्ञानदुर्बलः ॥ ४० ॥ स्नात्वा त्रिषवणं नित्यं ब्रह्मचारी धराशयः । स त्रिरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ४१ ॥ चाण्डालेन तु संस्पृष्टो यश्चापः पिबति द्विजः । अहोरात्रोषितो भूत्वा त्रिषवणेन शुध्यति॥४२॥सायं प्रातस्त्वहोरात्रं पादं कृच्छ्रस्य तं विदुः । सायं प्रातस्तथैवैकं दिनद्वयमयाचितम् ॥ ४३ ॥ दिनद्वयं च नाश्नीयात्कृच्छ्रार्धं तद्विधीयते । प्रायश्चित्तं लघुष्वेतत्पापेषु तु तथाऽर्हतः ॥ ४४ ॥ कृष्णाजिनतिलग्राही हरत्यश्वांश्यादिविक्रयी । प्रेतनिर्यातकश्चैव न भूयः पुरुषो भवेत् ॥ ४५ ॥

इत्यापस्तम्बीये नवमोऽध्यायः ॥ ९ ॥

---

( अथ दशमोऽध्यायः । )

---

आचान्तोऽप्यशुचिस्तावद्यावन्नोद्ध्रियते जलम् । उद्धृतेऽप्यशुचिस्तावद्यावद्भूमिर्न लिप्यते ॥ १ ॥ भूमावपि च लिप्तायां तावत्स्यादशुचिः पुमान् । आसनादुत्थितस्तस्माद्यावन्नाऽऽक्रमते महीम् ॥ २ ॥ न यमं यममित्याहुरात्मा वै यम उच्यते । आत्मा संयमितो येन तं यमः किं करिष्यति ॥ ३ ॥ न तथाऽसिस्तथा तीक्ष्णः सर्पो वा दुरधिष्ठितः । *यथा क्रोधो हि जन्तूनां शरीरस्थो विनाशकः ॥ ४ ॥ क्षमा गुणो हि जन्तूनामिहामुत्र सुखप्रदः ।–अरिर्वा नित्यसंक्रुद्धो यथाऽऽत्मा दुरधिष्ठितः ॥ ५ ॥ एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ६ ॥ न शब्दशास्त्राभिरतस्य मोक्षो न चैव रम्यावसथप्रियस्य । न भोजनाच्छादनतत्परस्य न लोकचित्तग्रहणे रतस्य ॥ ७ ॥ एकान्तशीलस्य दृढव्रतस्य मोक्षो भवेत्प्रीतिनिवर्तकस्य । अध्यात्मयोगैकरतस्य सम्यङ्मोक्षो भवेन्नित्यमहिंसकस्य ॥ ८ ॥ क्रोधयुक्तो यद्यजते यज्जुहोति यदर्चति । सर्वं हरति तत्तस्य आमकुम्भ इवोदकम् ॥ ९ ॥

---

* एतद्वचनं क. घ. ङ. च छ. पुस्तकेषु न विद्यते । – एतदर्धं ख. ग. ञ. पुस्तकेषु न ।

---

१ ग. ज. °घु ह्येतन्न्यायेषु तु यथा° । २ क ख. झ. °ग्राहो ह° । ३ ग. ज. °श्वानां च वि° । ४ ज °या न तत्स्या° । ५ ज तीक्ष्णो न स° । ६ ग. शक्तिशा° । ७ ग. ज. °स्य ए° । ८ ग. ज. °स्य । स्वाध्याययोगागतमानसस्य । क्रो° ।

अपमानात्तपोवृद्धिः संमानात्तपसः क्षयः । अर्चितः पूजितो विप्रो दुग्ध्वा गौरिव सीदति ॥ १० ॥ आप्यायते यथा धेनुस्तृणैरमृतसंभवैः । एवं जपैश्च होमैश्च पुनराप्यायते द्विजः ॥ ११ ॥ मातृवत्परदारांश्च परद्रव्याणि लोष्टवत् । आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ १२ ॥ रजकव्याधशैलूषवेणुचर्मोपजीविनाम् । यो भुङ्क्ते भुक्तमेतेषां प्राजापत्यं समाचरेत् ॥ १३ ॥ अगम्यागमनं कृत्वा अभक्ष्यस्य च भक्षणम् । शुद्धिश्चान्द्रायणं कृत्वा अथर्वोक्तं तथैव च ॥ १४ ॥ अग्निहोत्रं त्यजेद्यस्तु स नरो वीरहा भवेत् । तस्य शुद्धिर्विधातव्या नान्या चान्द्रायणादृते ॥ १५ ॥ विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके । सद्यः शुद्धिं विजानीयात्पूर्वं संकल्पितं च यत् ॥ १६ ॥ देवद्रोण्यां विवाहे च यज्ञेषु प्रततेषु च । कल्पितं सिद्धमन्नाद्यं नाशौचं मृतसूतके ॥ १७ ॥

इत्यापस्तम्बीये धर्मशास्त्रे दशमोऽध्यायः ॥ १० ॥

इत्यापस्तम्बस्मृतिः समाप्ता ।

=====

१ क घ. ङ. च. °व गच्छति । आ° । २ ग छ ज विशोधनम् । ३ क. ख छ °भक्षस्य । ४ छ. अथर्वाज्मत° । ५ क. °थवान्नेत° । ख, घ, ङ, झ. °थर्वान्नेत° । ६ ग. ज. चरेत् ।

ॐ तत्सद्ब्रह्मणे नमः ।

# औशनसस्मृतिः ।

※ अतः परं प्रवक्ष्यामि जातिवृत्तिविधानकम् । अनुलोमविधानं च प्रतिलोमविधिं तथा ॥१॥ सान्तरालकसंयुक्तं सर्वं संक्षिप्य चोच्यते । नृपाद्ब्राह्मणकन्यायां विवाहेषु समन्वयात् ॥२॥ जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः । वेदानर्हस्तथा चैषां धर्माणामनुबोधकः ॥३॥ सूताद्विप्रप्रसूतायां सुतो वेणुक उच्यते । नृपायामेव तस्यैव जातो यश्चर्मकारकः ॥ ४ ॥ ब्राह्मण्यां क्षत्रियाच्चौर्याद्रथकारः प्रकीर्तितः । वृत्तं च शूद्रवत्तस्य द्विजत्वं प्रतिषिध्यते ॥ ५ ॥ यानानां ये च वोढारस्तेषां च परिचारकाः । शूद्रवृत्त्यां तु जीवन्ते(न्ति)न क्षात्रं धर्ममाचरेत् ॥ ६ ॥ ब्राह्मण्यां वैश्यसंसर्गाज्जातो मागध उच्यते । बन्दित्वं ब्राह्मणानां च क्षत्रियाणां विशेषतः ॥ ७ ॥ प्रशंसावृत्तिको जीवेद्वैश्यप्रेषकरस्तथा । ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डाल उच्यते ॥८॥ सीसमाभरणं तेषां कार्ष्णायसमथापि वा । ब(व)र्ध्रीं कण्ठे समाबध्य झल्लरीं कक्षतोऽपि वा ॥ ९ ॥ मलापकर्षणं ग्रामे पूर्वार्धे परिशुद्धिकम् । नापराह्णे प्रविष्टोऽपि बहिर्ग्रामाच्च नैर्ऋते ॥ १० ॥ पिण्डीभूता भवन्त्यत्र नो चेद्वध्या विशेषतः । चाण्डालाद्वैश्यकन्यकायां जातः श्वपच उच्यते ॥ ११ ॥ श्वमांसभक्षणं तेषां श्वान एव तु तद्धनम् । नृपायां वैश्यसंसर्गादायोगव इति स्मृतः ॥ १२ ॥ तन्तुवाया भवन्त्येते वसुकांस्योपजीविनः । शालिकाः केचिदत्रैव जीवनं वस्त्रनिर्मितम् ॥१३॥ आयोगवस्य विप्रायां जातास्ताम्रोपजीविनः । तस्यैव नृपकन्यायां जातः सूनिक उच्यते ॥ १४ ॥ सूनिकस्य नृपायां तु जात उद्बन्धकः स्मृतः । निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्युत ॥ १५ ॥ नृपायां वैश्यतश्चौर्यात्पुलिन्दश्चेति कीर्तितः । पशुवृत्तिर्भवेत्तस्य हन्याद्वा दुष्टसत्त्वकान् ॥ १६ ॥ नृपायां शूद्रसंसर्गाज्जातः पुल्कस उच्यते । सुरावृत्तिं समारुह्य मधुविक्रयकर्मणा ॥ १७ ॥ कृतकानां सुराणां च विक्रेता पाचको भवेत् । पुल्कसाद्वैश्यकन्यायां जातो रजक उच्यते ॥ १८ ॥ ※ नृपायां शूद्रतश्चौर्याज्जातो रञ्जक उच्यते । वैश्यायां रञ्जकाज्जातो नर्तको गायको भवेत् ॥ १९ ॥ वैश्यायां शूद्रसंसर्गाज्जातो वैदेहकः स्मृतः । अजानां पालनं कुर्यान्महिषीणां गवामपि ॥ २० ॥

---

※ अयं न ग्रन्थारम्भः किं तु तद्भागारम्भ इति भाति । × एतदर्धस्थाने घ. पुस्तकेऽय पाठः—"अस्पृश्याज्जम्बुकाज्जातो नर्तको गायको भवेत्" इति ।

---

१ घ. °रालिक° । २ क. ङ °धिद्विज । ३ ख. ग प्रजायते । ४ क. ख. °द्वृत्त° । ५ घ. °स्याऽत्तुर्जा° । ६ क. ग. ङ. °तिकार्जा° । ७ ख. ङ. °प्रेष्यक° । ८ ख ङ मलप° । ९ ख घ पूर्वाह्णे । १० क °द्वध्यवि° । ११ ख तद्बलम् । १२ ख. ङ °न. । शालि° । १३ ख ङ °गवेन वि° । १४ क ग घ. °तिकसस्यास्तु ह° । १५ ख. ग °ता या° । १६ क. रजक उच्यते । अस्पृश्याज्जम्बुकाज्जातो न... भवेत् । वै° ।

दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत् । वैदेहकात्तु विप्रायां जाताश्चर्मोपजीविनः ॥ २१ ॥ नृपायामेव तस्यैव सूचिकः पाचकः स्मृतः । वैश्यायां शूद्रतश्चौर्याज्जातश्चक्री च उच्यते ॥ २२ ॥ तैलपिष्टकजीवी तु लवणं[1] भावयन्[3]पुनः । विधिना ब्राह्मणः प्राप्य नृपायां तु समन्त्रकम् ॥ २३ ॥ जातः सुवर्ण इत्युक्तः[4] सानुलोमाद्द्विजः स्मृतः । अथ वर्णक्रियां कुर्वन्नित्यनैमित्तिकीं क्रियाम् ॥ २४ ॥ अश्वं रथं हस्तिनं वा वाहयेद्वै नृपाज्ञया । सैनापत्यं च भैषज्यं कुर्याज्जीवेत वृत्तिषु ॥ २५ ॥ नृपायां विप्रतश्चौर्यात्संजातो यो भिषक्स्मृतः । अभिषिक्तनृपस्याऽऽज्ञां प्रतिपाल्य तु वैद्यकः ॥ २६ ॥ आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्ममाचरेत् । ज्यौतिषं गणितं वाऽपि कायिकीं वृत्तिमाचरेत् ॥ २७ ॥ नृपायां विधिना विप्राज्जातो नृप इति स्मृतः । नृपायां नृपसंसर्गात्प्रमादाद्गूढजातकः ॥ २८ ॥ सोऽपि क्षत्रिय एव स्यादभिषेके तु वर्जितः । अभिषेकं विना प्राप्य गोज इत्यभिधायकः ॥ २९ ॥ सर्वं तु राजवत्तस्य शस्यते पट्टबन्धनम् । पुनर्भूकरणे राज्ञां नृपकानीन एव च ॥ ३० ॥ वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते । कृष्याजीवो भवेत्तस्य तथैवाऽऽग्नेयनर्तकः ॥ ३१ ॥ ध्वजविश्रावका वाऽपि अम्बष्ठाः शस्त्रजीविनः । वैश्यायां विप्रतश्चौर्यात्कुम्भकारः प्रजायते ॥ ३२ ॥ कुलालवृत्त्या जीवेत नापिता वा भवन्त्युत । सूतके प्रेतके वाऽपि दीक्षाकालेऽथ वापनम् ॥ ३३ ॥ नाभेरूर्ध्वं तु वपनं तस्मान्नापित उच्यते । कायस्थ इति जीवेत्तु विचरेच्च इतस्ततः ॥ ३४ ॥ काकाल्लौल्यं यमात्क्रौर्यं स्थपतेरथ कृन्तनम् । आद्यक्षराणि संगृह्य कायस्थ इति निर्दिशेत् ॥ ३५ ॥ शूद्रायां विधिना[10] विप्राज्जातः पारशवो[11] मतः । भद्रकालीं[12] समाश्रित्य जीवेयुः पूजकाः स्मृताः ॥ ३६ ॥ शिवाद्यागमविद्याद्यैस्तथा मर्दलवृत्तिभिः[13] । तस्यां वै चौरसद्वृत्तो[14] निषादो जात उच्यते ॥ ३७ ॥ वने दुष्टमृगान्हत्वा जीवनं मांसविक्रयम् । नृपाज्जातोऽथ गूढायां[15] वैश्याया विधिना सुतः[16] ॥ ३८ ॥ वैश्यवृत्त्या तु जीवेत न क्षात्रं धर्ममाचरेत् । तस्यां तस्यैव चौर्येण मणिकारः प्रजायते ॥ ३९ ॥ मणीनां राजतां कुर्यान्[17]मुक्तानां वेधनक्रियाम् । प्रवालानां च सूत्रत्वं[18] शङ्खानां वलनाक्रियाम् ॥ ४० ॥ शूद्रायां विप्रसंसर्गाज्जात उग्र इति स्मृतः । नृपस्य दण्डधारः[19] स्याद्दण्डं[20] दण्डे(ण्ड्ये)षु संचरेत् ॥ ४१ ॥

---

१ क. °ण वा भवेत्युत । °वि । २ ग. भाजयेत्युत । वि° । ३ घ. ङ °वयेत्युत । वि° । ४ क. घ. °क्त. सोऽनु° । ५ घ. °ष्टाङ्गप्रोक्तं च ध° । ६ ङ. गोड इ° । ७ घ. °वाङ्गेय । ८ ख. ङ. °यवृत्तिक । ९ ख. ध्वजिनीजीविका । १० क विप्रसंजात. पार्श्वदस्तस्य उ° । ११ क. ग. °श उच्यते । भ° । १२ ख. °कादीन्सम° । ग वार्थे स° । १३ क. घ. °त्तिक. । त° । १४ ग. चौर्येस° । १५ क. घ. °गुह्यायां । १६ क. ग स्मृत. । १७ क. घ. °कुब्जा मुक्ता° । १८ ख. ग. ङ. °त्वं शाखाना वलयाक्रि° । १९ क. °धारस्था दण्ड्याद° । ग. °धारि स्याद्दण्ड्योद° । २० ङ. °द्दण्ड्यो द° ।

तस्यां वै चौरसंवृत्त्या जातः शूलिक उच्यते। जातंदुष्टान्समारोप्यं शूलकर्माणि योजयेत् ॥ ४२ ॥ शूद्रायां वैश्यसंसर्गाद्विधिना सूचकः स्मृतः। सूचकाद्विप्रकन्यायां जातस्तक्षक उच्यते ॥ ४३ ॥ शिल्पकर्माणि चान्यानि प्रासादलक्षणं तथा। नृपायामेव तस्यैव जातो यो मत्स्यबन्धकः ॥ ४४ ॥ शूद्रायां वैश्यतश्चौर्यात्कटकार इति स्मृतः। वसिष्ठशापात्त्रेतायां केचित्पारशवास्तथा ॥ ४५ ॥ वैखानसेन केचित्तु केचिद्भागवतेन च। वेदशास्त्रावलम्बास्ते भविष्यन्ति कलौ युगे ॥ ४६ ॥ कटकारास्ततः पश्चान्नारायणगणाः स्मृताः। शाखा वैखानसेनोक्ता तन्त्रमार्गविधिक्रियाः ॥ ४७ ॥ निषेकाद्याः श्मशानान्ताः क्रियाः पूजाङ्गसूत्रधृक्। पञ्चरात्रेण वा कश्चित्तन्त्रोक्तं धर्ममाचरेत् ॥ ४८ ॥ शूद्रादेव तु शूद्रायां जातः शूद्र इति स्मृतः। द्विजशुश्रूषणपरः पाकयज्ञपरान्वितः ॥ ४९ ॥ सच्छूद्रं तं विजानीयादसच्छूद्रस्ततोऽन्यथा। चौर्यात्काकवचो ज्ञेया अश्वानां तृणवाहकः(!) ॥ ५० ॥ एतत्संक्षेपतः प्रोक्तं जातिवृत्तिविभागशः। जात्यन्तराणि दृश्यन्ते संकल्पादित एव तत् ॥ ५१ ॥

इत्यौशनसं धर्मशास्त्रम्।

शुक्र( औशनस )स्मृतिः समाप्ता।

---

१ ख. ग. तस्य वै चार°। २ ख. शुण्डक। ग. शुष्टिक। ङ. सुष्टिक। ३ क. जाता दुष्टात्समारोप्यं°। ङ. जाताद्दुष्टात्समाराप्य सुष्टक°। ४ ग. °यशुष्टक°। ५ क. °खान्ते विश्वसेनोक्तं त°। ६ ख. °सुचिका। प°। ७ ख. वा प्रातं प्रोक्त धर्म समा° ८ क घ. °कल्पोदि°।

ॐ तत्सद्ब्रह्मणे नमः ।

ॐ सामवेदाय नमः ।

# गोभिलस्मृतिः ।

( तत्र प्रथमः प्रपाठकः । )

अथातो गोभिलोक्तानामन्येषां चैव कर्मणाम् । अस्पष्टानां विधिं सम्यग्दर्शयिष्ये प्रदीपवत् ॥ १ ॥ त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम् । त्रिवृत्तच्चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥ २ ॥ पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् । तद्धार्यमुपवीतं स्यान्नात्र(ति)लम्बं न चोच्छ्रितम् ॥ ३ ॥ सदोपवीतिना भाव्यं सदा बद्धशिखेन च। विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥ ४ ॥ त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् । आस्यनासाक्षिकर्णांश्च* नाभिवक्षाः शिरोंसकान्× ॥ ५ ॥ अङ्गुष्ठेन प्रदेशिन्या घ्राणं चैवमुपस्पृशेत् । अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रोत्रं पुनः पुनः ॥ ६ ॥ ÷ कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं च तलेन वै । सर्वाभिस्तु शिरः पश्चाद्बाहु चाग्रेण संस्पृशेत् ॥ ७ ॥ यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते । दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ ८ ॥ यत्र दिङ्नियमो न स्याज्जपहोमादिकर्मसु । तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्रीसौम्यापराजिताः ॥ ९ ॥ तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृशः । तदासीनेन कर्तव्यं न प्रह्वेन न तिष्ठता ॥ १० ॥ गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ ११ ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह । गणेशेनाधिकास्त्वेता वृद्धौ पूज्याश्चतुर्दश (षोडश) ॥ १२ ॥ कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥ १३ ॥ प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु । अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥ १४ ॥ कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु । कारयेत्पञ्चधारां वा नातिनीचां न चोच्छ्रिताम् ॥ १५ ॥ अनिष्ट्वा तु पितॄञ्श्राद्धे न कुर्यात्कर्म वैदिकम् । तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥ १६ ॥

---

* अत्र कर्णं चेति भवितुं युक्तम् । मध्यमपदलोपी वा समास । × अत्रापि नपुंसकप्रथमैकवचनान्तः पाठो युक्तः । पूर्ववत्समासो वा । – तृतीयार्थे षष्ठी ज्ञेया ।

आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः । षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेत् ॥ १७ ॥ वसिष्ठोक्तो विधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः । अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् ॥ १८ ॥ प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथा । उपवेश्य कुशान्दद्यादृजुनैव हि पाणिना ॥ १९ ॥ हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञिकाः । समूलाः पितृदै(दे)वत्याः कल्माषा वैश्वदेविकाः ॥ २० ॥ हरिता वै सपिञ्जूलाः शुद्धाः स्निग्धाः समाहिताः । रत्निमात्राः प्रमाणेन पितृतीर्थेन संस्कृताः ॥ २१ ॥ पिण्डार्थं ये स्कृ(स्तृ)ता दर्भाः स्तरणार्थे तथैव च । धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते ॥ २२ ॥ दक्षिणं पातयेज्जानु देवान्परिचरन्सदा । पातयेदितरज्जानु पितॄन्परिचरन्नपि ॥ २३ ॥ निपातो नैव सव्यस्य जानुनो विद्यते क्वचित् । सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ॥ २४ ॥ पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान् । गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत् ॥ २५ ॥ नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते । पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ॥ २६ ॥ ज्येष्ठोत्तरकरान्युग्मान्कराग्राग्रपवित्रकान् । कृत्वाऽर्घ्यं संप्रदातव्यं नैकैकस्य प्रदीयते ॥ २७ ॥ अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ २८ ॥ एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतम् । आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥ २९ ॥ एतत्प्रमाणमेवैके कौशीमेवाऽऽर्द्रमञ्जरीम् । शुष्कां वा शीर्णकुसुमां पिञ्जूलीं परिचक्षते ॥३०॥ पित्र्यमन्त्र्या(न्त्रा)नुद्रवण आत्मालम्भेऽधमेक्षणे । अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ ३१ ॥ मार्जारमूख(ष)कस्पर्शे आक्रु(क्रु)ष्टे क्रोधसंभवे । निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत् ॥ ३२ ॥ अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् । अक्रिया च परोक्ता च तृतीया चायथाक्रिया ॥३३॥ स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं च यः । कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥३४॥ यन्नाऽऽम्नातं स्वशाखायां परोक्तमविरोधि च । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ ३५ ॥ प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथंचन । यतस्तदन्यथाभूतं तत एव समापयेत् ॥ ३६ ॥ समाप्ते यदि जानीयान्मयैतदयथा कृतम् । तावदेव पुनः कुर्यान्नाऽऽवृत्तिः सर्वकर्मणः ॥ ३७ ॥ प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः । तदङ्गस्याक्रियायां च नाऽऽवृत्तिर्नैव तत्क्रिया ॥ ३८ ॥ मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् । गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः ॥ ३९ ॥ न चाश्नत्सु जपेदत्र कदाचित्पितृसंहिताम् । अन्य एव जपः कार्यः सोमसामादिकः शुभः ॥ ४० ॥

यस्तत्र प्रक(कि)रोऽन्नस्य तिलम(व)द्यववत्तथा । उच्छिष्टसंनिधौ सोऽत्र तृप्तेषु विपरीतकः ॥ ४१ ॥ संपन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते । सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥ ४२ ॥ प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् । अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेनि(ति) पात्रतः ॥४३॥ द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः । मातामहप्रभृतींस्तु एतेषामेव वामतः ॥ ४४ ॥ सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपासिच्य च । संयोज्य यवकर्कन्धुदधिभिः प्राङ्मुखस्ततः ॥ ४५ ॥ अवनेजनवत्पिण्डान्दत्त्वा बिल्वप्रमाणकान् । तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् ॥ ४६ ॥ उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरम् । भवेदधश्चाधराणामधरश्राद्धकर्मणि ॥ ४७ ॥ तस्माच्छ्राद्धेषु सर्वेषु वृद्धिमत्स्वितरेषु च । मूलमध्याग्रदेशेषु ईषत्सिक्तांश्च निर्वपेत् ॥ ४८ ॥ गन्धादीनि क्षिपेत्तूष्णीं तत आवाहयेद्द्विजान् । अन्यत्राप्येष एव स्याद्यवादिरहितो विधिः ॥ ४९ ॥ दक्षिणाप्रवणे देशे दक्षिणाभिमुखस्य च । दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः ॥ ५० ॥ अथाग्रभूमिमासिञ्चेत्सुसंप्रोक्ष(क्षि)तमस्त्विति । शिवा आपः सन्त्विति च युग्मानेवोदकेन च ॥ ५१ ॥ सौमनस्यमस्त्विति च पुष्पदानमनन्तरम् । अक्षि(क्ष)तं चारिष्टं चास्त्वित्यक्षतान्प्रतिदापयेत् ॥ ५२ ॥ अक्षय्योदकदानं तु अर्घ(र्घ्य)दानवदिष्यते । षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन ॥ ५३ ॥ प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः । पवित्रान्तर्हितान्पिण्डान्सिञ्चेदुत्तानपात्रकृत् ॥ ५४ ॥ युग्मानेव स्वस्तिवाच्याङ्गुष्ठप्रश्रहैतत्सदा (?) । कृत्वा धुर्यस्य पित्र्यस्य प्रणम्यानुव्रजेत्ततः ॥ ५५ ॥ एष श्राद्धविधिः कृत्स्न उक्तः संक्षेपतो मया । ये विदन्ति न मुह्यन्ति श्राद्धकर्मसु ते क्वचित् ॥ ५६ ॥ इदं शास्त्रं च गुह्यं च परिसंख्यानमेव च । वसिष्ठोक्तं च यो वेद स श्राद्धं वेद नेतरः ॥ ५७ ॥ असकृद्यानि कर्माणि क्रियेरन्कर्मकारिभिः । प्रतिप्रयोगं नैताः स्युर्म[र]चिरश्राद्धं एव च ॥ ५८ ॥ आधाने होमयोश्चैव वैश्वदेवे तथैव च । बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥ ५९ ॥ नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः । एकमेव भवेच्छ्राद्धमेतेषु न पृथक्पृथक् ॥ ६० ॥ नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥ ६१ ॥ विवाहादि(दिः) कर्मगणो य उक्तो गर्भाधानपुंसवनान्तः (?) । विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नाऽऽदौ कर्मणः कर्मणः स्यात् ॥ ६२ ॥

---

१ क °धस्वाध° । २ क °र्थना सुप्रतिप्रोक्तं स° । ३ क °स्वेवं द्वि° । ४ ख. °हृते सदा । ५ ख. ग. विन्दन्ति । ६ ख. ग. °द्धमेव ।

प्रदोषे श्राद्धमेकं स्याद्गोनिष्क्रान्तप्रवेशयोः । न श्राद्धं युज्यते कर्तुं प्रथमे पुष्टिकर्मणि ॥ ६३ ॥ हलाभियोगादिषु तु षट्सु कुर्यात्पृथक्पृथक् । प्रतिप्रयोगमप्येषामादावेकं तु कारयेत् ॥ ६४ ॥ बृहत्पत्रक्षुद्रपशुस्वस्त्यर्थं परिविष्यतोः । सूर्येन्द्वोः कर्मणी ये तु तयोः श्राद्धं न विद्यते ॥ ६५ ॥ गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् । सकृद्दे( दे )व भवेच्छ्राद्धमादौ न प्र( पृ )थगादिषु ॥६६॥ न दशाग्रन्थिकेनैव विषवद्दष्टकर्मणि । कृमिदष्टचिकित्सायां नैव शेषेषु विद्यते ॥ ६७ ॥ यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः । प्रासाङ्गिकमिदं प्रोक्तमतः प्रकृतमुच्यते ॥ ६८ ॥ आधानकाला ये प्रोक्तास्तथा याश्चाग्नियोनयः । तदाश्रयोऽग्निमादध्यादग्निमानग्रजो यदि ॥ ६९ ॥ दाराधिगमनाधाने यः कुर्यादग्रजाग्रिमः । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ ७० ॥ परिवित्तिपर(रि)वेत्तारौ नरकं गच्छतो ध्रुवम् । अपि चीर्णप्रायश्चित्तौ पादोनफलभागिनौ ॥ ७१ ॥ देशान्तरस्थक्लीबैकवृषणानसहोदरान्॥ वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥ ७२ ॥ जडमूकान्धबधिरकुब्जवामनकुण्ठकान् । अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥ ७३ ॥ धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा । कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति ॥ ७४ ॥ धनवार्धुषिकं राजसेवकं कर्मकं तथा । प्रोक्षि(षि)तं च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥ ७५ ॥ प्रोषितं यद्यशृण्वानस्त्वब्दादन्ते समाचरेत्(?) । आगते तु पुनस्तस्मिन्पादं वा शुद्धये चरेत् ॥ ७६ ॥ लक्षणे[1] प्राग्गनाथा(ताया)स्तु प्रमाणं द्वादशाङ्गुलम् । तन्मूलसक्ता योदीची तस्या एतन्न चोत्तरम् ॥ ७७ ॥ उदग्गताया (याः) संलग्ना ज्ञेयाः प्रादेशमात्रिकाः । सप्तसप्ताङ्गुलानि स्युः कुशेनैव समुल्लिखेत् ॥ ७८ ॥ मानक्रियायां युक्तायामनुक्ते मानकर्तरि । मानकृद्यजमान(नः) स्यावि(द्वि) दुषामेव(ष) निश्चयः ॥ ७९ ॥ पुण्यमेवाऽऽदधीताग्निं स हि सर्वैः प्रशस्यते । अनर्धुकत्वं यत्तस्य काम्यैस्तन्नीयते शमम् ॥ ८० ॥ यस्य दत्ता भवेत्कन्या वाचा सत्येन केनचित् । सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा ॥ ८१ ॥ अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति । न तथा व्रतलोपोऽस्य तेनैवान्यां समुद्वहेत् ॥ ८२ ॥ अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम् । तमग्निमात्मसात्कृत्वा क्षिप्रं स्यादुत्तराश्रमी ॥ ८३ ॥

---

१ क °णे प्रग° ।

*षष्ठी कण्डिका ॥ ६ ॥

अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः । तस्य या प्राङ्मुखी शाखा वोदीची चोर्ध्वगाऽपि वा ॥८४॥ अरणिस्तन्मयी प्रोक्ता तन्मध्ये चोत्तरारणिः। सारवद्दार्वचत्रम्वो(मू)वीली च प्रशस्यते[2] ॥ ८६ ॥ संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते। अलाभे त्वशमीगर्भाद्धारे देवा विलम्बितः(ताः)(!) ॥ ८६ ॥ चतुर्विंशतिरङ्गुष्ठा दैर्घ्यं षडपि पार्थिवम्। चत्वार उच्छ्रयो मानमरण्योः परिकीर्तितम् ॥ ८७ ॥ अष्टाङ्गुलः प्रमन्थः स्याच्चत्रं स्याद्द्वादशाङ्गुलम्। ऊवीली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥ ८८ ॥ अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते। तत्र तत्र बृहत्पर्व ग्रन्थिभिर्मनुयात्सदा ॥ ८९ ॥ गोवालैः शणसंमिश्रैस्त्रिवृद्वृत्तमनं स्वकम्(!) । व्यामप्रमाणं नेत्रं स्यात्प्रमथ्यस्तेन पावकः ॥ ९० ॥ मूर्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी। अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुष्ठं वक्ष उच्यते ॥९१॥ अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं स्मृतम्। एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ वस्तिर्द्वौ च गुह्यकम् ॥९२॥ ऊरू जङ्घे च पादौ च चतुरुयेकैर्यथाक्रमम् । अरण्यवयवा ह्येते याज्ञिकैः परिकीर्तिताः ॥ ९३ ॥ यत्तद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते। तस्यां यो जायते वह्निः स कल्याणकृदुच्यते ॥ ९४ ॥ अन्येषु ये तु मथ्नन्ति ते रोगभयमाप्नुयुः। प्रथमे मन्थने त्वेष नियमो नोत्तरेषु च ॥ ९५ ॥ उत्तरारणिनिर्यन्त्रैप्रमथः सर्वदा भवेत् । योनिसंकरदोषेण युज्यते स्त्व(त्व)न्यमन्थकृत् ॥ ९६ ॥ आर्द्रा सुसुखि(षि)रा चै(नै)व पूर्णाङ्गी पाटिता[6] तथा। न हिता यजमानानामरण्ये(ण्य)श्चोत्तरारणिः ॥ ९७ ॥

सप्तमी कण्डिका ॥ ७ ॥

परिधायाहतं वासः प्रावृत्य च यथाविधि। विभृयात्प्राङ्मुखो यन्त्रमावृत्ता(ता)वक्ष(क्ष्य)माणया ॥ ९८ ॥ चत्रबुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः। कृत्वोत्तराग्रामरणिं न बुध्नमुपरि न्यसेत् ॥ ९९ ॥ चत्राग्रकीलकाग्रस्तामो(मू)वीलीमुदगग्रकाम् । विष्कम्भाद्धारयेद्यन्त्रं निष्कम्पं प्रयतः शुचिः ॥ १०० ॥ त्रिरुद्वेष्ट्याथ नेत्रेण चित्रपत्न्यौह तंसकाः (?) । पूर्वं मन्थत्यरण्यन्ते प्राच्यग्नेः स्याद्यथा च्युतिः ॥ १०१ ॥ नैकयाऽपि विना कार्यमाधानं भार्यया द्विजैः। अकृतं तद्विजानीयात्सर्वान्मा(ना)न्वारभन्ति यत्(?) ॥ १०२ ॥ वर्णज्यैष्ठे(ष्ठ्ये)न

* अन्यकण्डिकाविभागो न दृश्यते।

१ क ग °रणी तन्म°। २ क. °ते । असं° । ३ ग °ङ्गुष्ठै°। ४ क °ङ्गुल । ऊ°। ५ ख. °न्त्रप्रथम' स°। ६ क °टिना त°। ७ क. °णिं तद्बु°। ८ क ग °ग्रकम्।वि°। ९ क. ग. °च्यग्नेय°।

वह्वीभिः सवर्णाभिश्च जन्मतः । कार्यमग्निच्युतेराभिः साध्वीभिर्मन्थनं पृथक् ॥१०३॥ नात्र शूद्रीं प्रयुञ्जीत न द्रोहद्वेषकारिणीम् । न चैवाव्रतस्थां नान्यपुंसा च सह संगताम् ॥ १०४ ॥ ततः शक्ततरा पश्चादासामन्यतराऽपि वा । उपेतानां वाऽन्यतमो मन्थे-दग्निं निकामतः ॥ १०५ ॥ जातस्य लक्षणं कृत्वा तं प्रणीय समिध्य च । आधाय समिधं चैव ब्रह्माणं चोपवेशयेत् ॥ १०६ ॥ ततः पूर्णाहुतिं हुत्वा सर्वतन्त्रसमन्विताम् । गां दद्याद्यज्ञवांस्त्वन्ते ब्रह्मणे वाससी तथा ॥ १०७ ॥ होमपात्रमनादेशे द्रव-द्रव्ये स्रुवः स्मृतः । पाणिरेवेतरस्मिंस्तु स्रुचै( चा ) वाऽत्र तु हूयते ॥१०८॥ खादिरो वाऽथ पार्णो वा द्विवितस्तिः स्रुवः स्मृतः । स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रह-स्तयोः ॥१०९॥ स्रुवाग्रे घ्राणवत्खातं द्व्यङ्गुष्ठं *परिमण्डलम् । सर्वखातं स निर्वाहं स्रुचश्चार्धषडङ्गुलम्= ॥ ११० ॥ प्रागग्रैश्च कुशैः कार्यः संप्रमार्गो जुहु( हू )षता । प्रतापनं च लिप्तानां प्रक्षाल्योष्णेन वारिणा ॥ १११ ॥ प्राञ्चं प्राञ्चमुदङ्ङग्नेरुदगग्रसमीपतः । तत्तथाऽऽसादयेद्द्रव्यं यद्यथा विनियुज्यते ॥ ११२ ॥ आज्यं हव्यमनादेशे जुहोतिषु विधीयते । मन्त्रश्च देवतायाश्च प्रजापतिरिति स्थितिः ॥ ११३ ॥ नाङ्गुष्ठादधिक(का) ग्राह्या समित्स्थूलतया क्वचित् । न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ ११४ ॥ प्रादेशान्नाधिका न्यूना न च(स)शाखाविशाखिका । न सपर्णा न निर्वीर्या होमेषु च विजानता ॥ ११५ ॥ प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्तितम् । एवंविधाभिरेवेह समिद्भिः सर्वकर्मसु ॥ ११६ ॥ समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः । दर्शे च पौर्णमासे च क्रियास्त्व(स्व)न्यासु विंशतिः ॥ ११७ ॥ समिधा-दिषु होमेषु मन्त्रदैवतवर्जिताः । पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् ॥ ११८ ॥ इध्मोऽप्येधार्थमाचार्यैर्हविराहुतिषु स्मृतः । यत्र वाऽस्य निवृत्तिः स्यात्तत्स्पष्टी करवाण्यहम् ॥ ११९ ॥ अङ्गहोमसमित्तन्त्रसौष्पा(ष्य)न्त्याख्येषु कर्मसु । येषां चैतदुपर्युक्तं तेषु तत्सदृशेषु च ॥१२०॥ अक्षभङ्गादि विपदि जपहोमादिकर्मणि । कृत्वाऽऽहुतिषु सर्वासु नैतेष्विध्मो विधीयते ॥१२१॥ सूर्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिः सदाऽङ्गुलैः ।

---

* एतदग्रे स्थलमित्यधिकमादर्शपुस्तकेषु । = एतदग्रे कुर्यादित्यधिकमादर्शपुस्तकेषु ।

---

१ क °देशाद्द्रव्यद्र° । २ ख. °दङ्ग्रे° । ३ क. °गग्रस° । ४ क ग. °ते । तन्त्रश्च । ५ क. °दशोष्पा° । ६ रा. °मिदादि° । ७ क. सोर्प्यात्याख्ये° । ८ ख. जलहो° ।

प्रादुष्करणमग्नीनां प्रातर्भासां च दर्शनात् ॥ १२२ ॥ हस्तादूर्ध्वं रविर्यावद्गिरिं हित्वा न गच्छति । तावद्धोमविधिः पुण्यो नान्येत्यु( न्योऽभ्यु )दितहोमिनाम् ॥ १२३ ॥ यावत्सम्यङ् न भासन्ते नभस्यृक्षाणि सर्वतः । न च लोहितमापैति तावत्सायं न हूयते ॥ १२४ ॥ रजोनीहारधूमाभ्रवृक्षाग्रान्तरिते रवौ । संध्यामुद्दिश्य जुहुयाद्व्रतमस्य न लुप्यते ॥ १२५ ॥ न कुर्यात्क्षिप्रहोमेषु द्विजः परिसमूहनम् । वैरूपाक्षं च न जपेत्प्रपदं च विवर्जयेत् ॥ १२६ ॥ पर्युक्षणं तु सर्वत्र कर्तव्यमदितेऽन्विति । अन्ते च वामदेव्यस्य गानं कुर्यात्रि(त्तृ)चेऽर्चिषा ॥ १२७ ॥ अहोमकेष्वपि भवेद्यथोक्तं चन्द्रदर्शने । वामदेव्यं गणेष्वन्ते वल्यन्ते वैश्वदेविके ॥ १२८ ॥ यान्य(येष्व)धस्तरणाम्नानं न तेषु स्तरणं भवेत् । एककार्यार्थसाध्यत्वात्परिधीनावि(पि) वर्जयेत् ॥१२९॥ वहिः पर्युक्षणं चैव वामदेव्यजपं तथा । कृत्वाऽऽहुतीषु सर्वासु त्रिकमेतन्न विद्यते ॥ १३० ॥ हविष्येषु यवा मुख्यास्तदनु व्रीहियः स्मृताः । माषकोद्रवगौरादि सर्वालाभे विवर्जयेत् ॥ १३१ ॥ पाण्याहुतिर्द्वादशपर्वपूरिका कंसादिना चेत्सु(त्स्रु)वपूरमात्रिका । दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तच्च पावके ॥ १३२ ॥ योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः । मन्दाग्निरामयावी च दरिद्रश्च स जायते ॥ १३३ ॥ तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन । आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं पराम् ॥ १३४ ॥ होतव्ये च हुते चैव पाणिशूर्पास्यदर्विभिः । न कुर्यादग्निधमनं कुर्याद्वा व्यजनादिना ॥ १३५ ॥ मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत । नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत् ॥ १३६ ॥ यथाऽहानि तथा प्रातर्नित्यं स्नायादनातुरः । दन्तान्प्रक्षाल्य नद्यादौ गृहे चेत्तदमन्त्रवत् ॥ १३७ ॥ नारदाद्युक्तवार्क्ष यदष्टाङ्गुलमपो(पा)टितम् । सत्वक्चन्दनकाष्ठं स्यात्तदग्रेण प्रधावयेत् ॥ १३८ ॥ उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः । परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥ १३९ ॥ आयुर्बलं यशो वर्चः प्रजां पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥१४०॥ मासद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥ १४१ ॥ धनुःसहस्राण्यष्टौ तु तोयं यासां न विद्यते । न ता नदी शब्दवाहा(च्या) गर्तास्ते परिकीर्तिताः ॥१४२॥ उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥ १४३ ॥ वेदाश्छन्दांसि सर्वाणि ब्रह्माद्याश्च दिवौकसः । जलार्थिनोऽथ पितरो मरीचाद्यास्तथर्षयः ॥ १४४ ॥ उपाकर्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः । यियासूननुगच्छन्ति संहृष्टाथ(श्च)शरीरिणः ॥ १४५ ॥ समागमस्तु यत्रैषां तत्र हत्यादयो

१ क. ग. °र्यांतक्षत्रहो° । २ ख. °जपस्तथा । ३ क. ग. तासा ।

-मलाः। नूनं सर्वे क्षयं यान्ति किमुतैकं नदीरजः ॥ १४६ ॥ ऋषीणां सिच्यमानानामन्तरालं समाश्रितः। संपिबेद्यः शरीरेण पर्व(र्ष)न्मुक्तजलच्छदाः ॥ १४७ ॥ विद्यादीन्ब्राह्मणः कामान्वरादीन्कन्यका ध्रुवम्। आमुष्मिकान्य(न)पि मुख्यानाप्नुयात्स न संशयः ॥ १४८ ॥ अशुच्यशुचिना दत्तमा[1]सं[2]मृच्छं जलादिना(?)। अन्तर्गतदशाहास्तु प्रेता रक्षांसि भुञ्जते ॥ १४९ ॥ स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले। कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥ १५० ॥

इति श्री[गोभिलप्रोक्ते]कर्मप्रदीपे प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ द्वितीयः प्रपाठकः। )

---

अत ऊर्ध्वं प्रवक्ष्यामि संध्योपासनकं विधिम्। अनर्हः कर्मणां विप्रः संध्याहीनो यतः स्मृतः ॥ १ ॥ सव्ये पाणौ कुशान्कृत्वा कुर्यादाचमनक्रियाम्। ह्रस्वाः प्रचरणाय स्युः कुशा दीर्घास्तु बर्हिषः ॥ २ ॥ दर्भाः पवित्रमित्युक्तम[3]तः संध्यादिकर्मणि। सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥ ३ ॥ रक्षयेद्वारिणाऽऽत्मानं परिक्षिप्य समन्ततः। शिरसो मार्जनं कुर्यात्कुशैः सोदकबिन्दुभिः ॥४॥ प्रणवो भूर्भुवः स्वश्च सावित्री च तृतीयका। अब्दैवतस्तृचश्चैव चतुर्थ इति मार्जनम् ॥ ५ ॥ भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः। महर्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥ ६ ॥ आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरिति शिरः। प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते शिरसः ॥७॥ अर्चयन्ति तपः सत्यं मधु क्षरन्ति दिवि आपो०(?)। एता एनां सहानेन तथैभिर्दशभिः सह ॥ ८ ॥ त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते। करेणोद्धृत्य सलिलं घ्राणमासाद्य तत्र च ॥ ९ ॥ जपेदनायतासुर्वा त्रिः सकृद्वाऽघमर्षणम्। उत्थायार्कं प्रति प्रोहे[4]त्रिकोणाञ्जलिमम्भसः ॥ १० ॥ उचित्रमित्यृग्द्वयेन उपतिष्ठेदनन्तरम्। संध्याद्वयेपूपस्थानमेतदाहुर्मनीषिणः ॥ ११ ॥ मध्ये त्वह्न उपस्पर्श-(स्पृश्य) विभ्राडादीच्छया जपेत्। तदसंपृक्तपार्ष्णिर्वै(वा ए)कपादर्धपादपि ॥ १२ ॥ कुर्यात्कृताञ्जलिर्वाऽपि ऊर्ध्वबाहुरथापि वा। यत्र स्यात्कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः ॥ १३ ॥

---

१ ख. °मामन्नं। २ क. °समच्छं। ३ ख °मनः सं°। ४ ख. त्रिकेणा°।

भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते। तिष्ठेदुदयनात्पूर्वां मध्यमामपि शक्तितः ॥ १४ ॥ आसीतास्तमयाच्चान्त्यां संध्यां पूर्वत्रिकं जपेत्। एतत्संध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति ॥ १५ ॥ यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते। संध्यालोपाच्च चकितः स्नानशीलस्तु यः सदा ॥ १६ ॥ ते दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगाः। वेदमादित आरभ्य शक्तितोऽहरहर्जपेत् ॥ १७ ॥ उपतिष्ठेत्ततो रुद्रमर्वाग्वा वैदिकाज्जपात्। अथाद्भिस्तर्पयेद्देवान्सतिलाभिः पितॄनपि। नामान्ते तर्पयामीति आदावोमिति च ब्रुवन् ॥ १८ ॥ ब्रह्माणं विष्णुं रुद्रं प्रजापतिं वेदान्देवांश्छन्दांस्यृषीन्पुराणानाचार्यान्गन्धर्वानितरान्। मासं संवत्सरं सावयवं देवीरप्सरसो देवानुगान्नागान्सागरान्पर्वतान्सरितो दिव्यान्मनुष्यान्यक्षान्रक्षांसि सुपर्णान्पिशाचान्पृथिवीमोषधीभ्यः(धीः) पशून्वनस्पतीन्भूतग्रामं चतुर्विधमित्युपवीतीति ॥१९॥ अथ प्राचीनावीती यमं यमपुरुषान्कव्यवाहानं(हम)नलं सोममर्यमणमग्निष्वात्तान्सोमपीथान्बर्हिषदोऽथ स्वान्पितॄन्सकृत्सकृन्मातामहांश्चेति प्रतिपुरुषमभ्यसेज्ज्येष्ठभ्रातृस्वसु(श्वशु)रपितृव्यमातुलांश्च पितृवंशमातृवंशौ ये चान्ये मत्त उदकमर्हन्ति तांस्तर्पयामीति। अयमवसानाञ्जलिरथ श्लोकः ॥ २० ॥ छायां यथेच्छेच्छरदातपार्तः पयः पिपासुः क्षुधितोऽलमन्नम्। बालो जनित्रीं जननी च बालं योषित्पुमांसं पुरुषश्च योषाम् ॥ २१ ॥ तथा भूतानि सर्वाणि स्थावराणि चराणि च। विप्रादुदकमिच्छन्ति सर्वाभ्युदयकृद्धि सः ॥ २२ ॥ तस्मात्सदैतत्कर्तव्यमकुर्वन्महतैनसा। युज्यते ब्राह्मणः कुर्वन्विश्वमेतद्बिभर्ति हि ॥ २३ ॥ अल्पत्वाद्धोमकालस्य हुत्वा तत्स्नानकर्मणः। प्रातर्न तनुयात्स्नानं होमलोपो हि गर्ह(र्हि)तः ॥ २४ ॥ पञ्चानामथ सत्राणां महतामुच्यते विधिः। यैरिष्ट्वा सततं विप्रः प्राप्नुयात्सद्म शाश्वतम् ॥ २५ ॥ देवभूतपितृब्रह्ममनुष्याणामनुक्रमात्। महासत्राणि जानीयात्त एवेह महामखाः ॥२६ ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भूतो(त)नृयज्ञोऽतिथिपूजनम् ॥२७॥ श्राद्धं वा पितृयज्ञः स्यात्पित्र्योर्बलिरथापि वा। यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स वो(चो)च्यते ॥ २८ ॥ स चार्वाक्तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः। वैश्वदेवावसाने वा नान्यत्रर्ते निमित्तकात् ॥ २९ ॥ अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये। अदैवं[1] नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥ ३० ॥ अप्युद्धृत्य यथाशक्त्या(क्ति)

---

१ क. अदेवं।

किंचिदन्यं (न्नं) यथाविधि। पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजे ॥ ३१ ॥ पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेत्। हन्तकारं मनुष्येभ्यस्तदर्थे(र्थं) निनयेदपः ॥ ३२ ॥ ऋषिभिर्द्विरश्नमुक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि तथा च तमश्वि(स्वि)न्याः सार्धप्रथमयामान्तः ॥ ३३ ॥ सायंप्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च। अनश्नताऽर्थिमन्नमन्यथा किल्विषी भवेत् ॥ ३४ ॥ अमुष्यै नम इत्येवं बलिदानं विधीयते। बलिदानः (न) प्रमाणार्थं नमस्कारः कृतो यतः ॥ ३५ ॥ स्वाहाकारवषट्कारनमस्कारा दिवौकसाम्। स्वधाकारः पितॄणां च हन्तकारो नृणां कृतः ॥ ३६ ॥ स्वधाकारेण निनयेत्पित्र्यं बलिमतः सदा। तदप्येके नमस्कारं कुर्वते नेति गौतमः ॥ ३७ ॥ नावराध्यां बलयो भवन्ति महामार्जारः। श्रवणः प्रमाणादेकत्र वेदविक्रुष्टा भवन्तीतरेतरमसंसक्ताश्च (?) ॥ ३८ ॥ अथ तद्विन्यासो वृद्धिपिण्डानिवोत्तरोत्तरांश्चतुरो बलीन्निदध्यात् ॥ ३९ ॥ पृथिव्यै वायवे विश्वेभ्यो देवेभ्यः प्रजापतय इति सव्यत एतेषामेकैकस्यैकैकमद्भ्य ओषधिवनस्पतिभ्य आकाशाय कामायेत्येतेषामपि ॥ ४० ॥ मन्यश्च(व) इन्द्राय वासुकये ब्रह्मण इत्येतेषामपि रक्षोजनेभ्य इति ॥ ४१ ॥ सर्वेषां दक्षिणतः पितृभ्य इति चतुर्दश नित्याः ॥ ४२ ॥ आसस्यप्रभृतयः काम्याः (!) ॥ ४३ ॥ सर्वेषामुभयतोऽद्भिः परिषेव(कः) पिण्डवच्च पश्चिमात्प्रतिपत्तिर्ना(र्न) स्याताम् ॥ ४४ ॥ काम्यसामान्ये जुहोतिबलिकर्मणि ॥ ४५ ॥ पूर्वं नित्यविशेषोक्तं जुहोतिबलिकर्मणोः। काममन्ते भवेयातां न तु मध्ये कदाचन ॥ ४६ ॥ नैकस्मिन्कर्मणि तते कर्मान्यत्तायते यतः। अग्न्यादि गौतमाद्युक्तो होमः शाकल्य एव च ॥ ४७ ॥ अनाहिताग्नेरप्येष युज्यते बलिभिः सह। स्पृष्ट्वाऽपो वीक्ष्य(क्ष)माणोऽग्निं कृताञ्जलिपुटस्ततः ॥ ४८ ॥ वामदेव्यजपात्पूर्वं प्रार्थयेद्द्रविणोदकम्। आरोग्यमायुरैश्वर्यं धीर्धृतिः शं बलं यशः ॥ ४९ ॥ ओजो वर्चः पशून्वीर्यं ब्रह्म ब्राह्मणमेव च। सौभाग्यं कर्मसिद्धिं च कुलज्यैष्ठ्यं सुकर्तृताम् ॥ ५० ॥ सर्वमेतत्सर्वसाक्ष्यं द्रविणोदररोहिणः (!) ॥ ५१ ॥ न ब्रह्मयज्ञादधिकोऽस्ति यज्ञो न तत्प्रदानात्परमस्ति दानम्। सर्वेऽन्तवन्तः क्रतवः सदाना नान्तो दृष्टः कैश्चिदस्य द्विजस्य ॥ ५२ ॥ ऋचः पठन्मधुपयःकुल्याभिस्तर्पयेत्सुरान्। घृतामृतौघकुल्याभिर्यजूंष्यपि पठन्सदा ॥ ५३ ॥ सामान्यपि पठन्सोमघृतकुल्याभिरन्वहम्। मेदःकुल्याभिरपि वा अथर्वाङ्गिरसः पठन् ॥ ५४ ॥ मांसक्षीरौदनमधुकुल्याभिस्तर्पयेत्पठन्। वाको वाक्यं पुराणानि इतिहासानि चान्वहम् ॥ ५५ ॥

---

१ क °दमयुक्तं। २ ग. °पेयं पि°।

ऋगादीनामन्यतममेतेषां शक्तितोऽन्वहम् । पठन्मध्वाज्यकुल्याभिः पितॄनपि उद-(सुत)र्पयेत् ॥ ५६ ॥ ते तृप्तास्तर्पयन्त्येनं जीवन्तं प्रेतमेव च । कामचारी स भवति सर्वेषु सुरसद्मसु ॥ ५७ ॥ गुर्वप्येनो न तं स्पर्शे( स्पृशे )त्पङ्क्तिं चैव पुनाति सः । यं यं क्रतुं च पठति फलभाक्तस्य तस्य च ॥ ५८ ॥ वसुपूर्णा-(र्ण)वसुमतीत्रिर्दानफलमाप्नुयात् । ब्रह्मयज्ञादपि ब्रह्मदानमेवातिरिच्यते ॥ ५९ ॥ तद्ददाद्धि समाप्नोति ब्रह्मलोकमविच्युतम् । ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता ॥ ६० ॥ कर्मान्ते नोच्यमानाऽपि पूर्णपात्रादि कारयेत् । यावता वहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते ॥ ६१ ॥ नावराध्यर्यमतः कुर्यात्पूर्णपात्रमिति स्थितिः । विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्धहरो भवेत् ॥ ६२ ॥ स्वयं चेदुभयं कुर्यादन्यस्मै प्रतिदापयेत् । कुलर्त्विन( ज )मधीयानं संनिकृष्टं तथा गुरुम् ॥ ६३ ॥ नातिक्रामेत्सदा दित्सेन( द्य ) इच्छेदात्मनो हितम् । अहमस्मै ददामीति एवमाभाष्य दीयते ॥ ६४ ॥ नैतावपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि । दूरस्थाभ्यामपि त्वाभ्यां प्रदाय मनसा वरम् ॥ ६५ ॥ इतरेभ्यस्ततो देयादेष दानविधिः परः । संनिकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ॥ ६६ ॥ यद्ददाति तमुल्लङ्घ्य तत्स्तेयेन स युज्यते । यस्य चास्ति गृहे मूर्खो दूरस्थश्च गुणान्वितः ॥ ६७ ॥ गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः । ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ॥ ६८ ॥ ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते । आज्यस्थाली च कर्तव्या तैजसद्रव्यसंभवा ॥ ६९ ॥ महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च । आज्यस्थाल्याः प्रमाणं तु यथाकामं तु कारयेत् ॥ ७० ॥ सुदृढामव्रणां भद्रामाज्यस्थालीं प्रचक्षते । तिर्यगूर्ध्वं समिन्मात्रा दृढा नातिबृहन्मुखी ॥ ७१ ॥ मृन्मय्यौदुम्बरी वाऽपि चरुस्थाली प्रशस्यते । स्वशाखोक्तश्च सुस्विन्नो ह्यदग्धोऽकठिनः शुभः ॥ ७२ ॥ न चातिशिथिलः पाच्यो न चरुश्चारसस्तथा । इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् ॥ ७३ ॥ वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानाक्रियाक्षमम् । एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे ॥ ७४ ॥ दर्वी द्व्यङ्गुष्ठपृथ्वग्रा तुरीयोनं तु मेक्षणम् । मुसलोलूखले चा( वा )र्क्षे स्वायते सुदृढे तथा ॥ ७५ ॥ इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च । दक्षिणं वामतो वाह्यमात्माभिमुखमेव च ॥ ७६ ॥ करं करस्य कुर्वीत करणे न्यञ्चकर्मणः । कृत्वाऽग्न्यभिमुखौ पाणी स्वस्थानस्थौ सुसंयुतौ ॥ ७७ ॥ प्रदक्षिणं तथाऽऽसीनः कुर्यात्परिसमूहनम् । वाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः ॥ ७८ ॥ त्रयो भवन्त्यशीर्णाग्रा एकेषां च चतुर्दशम् । प्रागग्रावभितः पश्चादुदगग्रमथापरम् ॥ ७९ ॥

१ क. ग. °धयोऽनृज° ।

न्यसेत्परिधिमन्यश्चेदुदगग्रं स पूर्वतः । यथोक्तवस्तु(स्त्व)संपत्तौ ग्राह्यं तदनुकारि यत् ॥ ८० ॥ यवानामिव गोधूमा व्रीहीणामिव शालयः । पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ॥ ८१ ॥ वासरस्य तुरीयेंऽशे नातिसंध्यासमीपतः । यदा चतुर्दशी यामं तुरीयमनुपूरयेत् ॥ ८२ ॥ अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते । यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः ॥ ८३ ॥ अमावास्याष्टमेंऽशे च पुनः किल भवेदणु । *आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत् ॥ ८४ ॥ विशेषमस्यां ब्रुवते चन्द्रचारविदो जनाः । अनयाऽपेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि ॥ ८५ ॥ यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया । अमावास्यां प्रतीक्षेद्वा तदन्ते वाऽपि निर्वपेत् ॥ ८६ ॥ अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ॥ ८७ ॥ अत्रेन्दुराद्ये प्रहरेऽवतिष्ठेच्चतुर्थभागो न कलावशिष्टः । तदन्त एव क्षयमेति कृत्स्न एवं ज्योतिश्चक्रविदो वदन्ति ॥ ८८ ॥ यस्मिन्नब्दे द्वादशैकश्च यव्यस्तस्मिंस्तृतीये परिदृश्य नोपजायते ( ! ) । एवं चारं चन्द्रमसो विदित्वा क्षीणे तस्मिन्नपराह्णे च दद्यात् ॥ ८९ ॥ संमिश्रा या चतुर्दश्या अमावास्या क्वचिद्भवेत् । स्ववि( चि )तां तां विदुः केचिद्गताध्वामिति चापरे ॥ ९० ॥ वर्धमानाममावास्यां लभेच्चेदपरेऽहनि । यामांस्त्रीनधिकां वाऽ(कान्वाऽ)पि पितृयज्ञस्ततो भवेत् ॥ ९१ ॥ पक्षादावेव कुर्वीत सदा पक्षादिकं चरुम् । पूर्वाह्ण एव कुर्वन्ति विद्धेऽप्यन्ये मनीषिणः ॥ ९२ ॥ सपितुः पितृकृत्वेष्व ( त्येषु अ ) धिकारो न विद्यते । न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः ॥ ९३ ॥ पितामहो भ्रियते च पितुः प्रेतस्य निर्वपेत् । पितुस्तस्य च वृत्तस्य जीवेच्च प्रपितामहः ॥ ९४ ॥ पितुः पितुः पितुश्चैव तस्यापि पितुरेव च । कुर्यात्पिण्डत्रयं यः स्यात्संस्थिता( तः ) प्रपितामहः ॥ ९५ ॥ जीवन्तम(त्पिता)पि दद्याद्वा प्रेतायान्नोदके द्विजः । पितुः पितृभ्यो वा देयात्सपितेत्यपरा श्रुतिः ॥ ९६ ॥ पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति । पौत्रेणैकादशाहानि( दि ) कर्तव्यं श्राद्धषोडशम् ॥ ९७ ॥ नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः । पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम् ॥ ९८ ॥ असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः । पितरस्तस्य संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥ ९९ ॥

---

* नैतद्वचनं क. पुस्तके ।

---

१ क. ग. 'णा न दे' ।

पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा । पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥ १०० ॥ ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते । व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥ १०१ ॥ मातुः सपिण्डीकरणं पितामह्या सहोदितम् । यथोक्तेनैव कल्पेन पुत्रिकाया न चेत्सुतः ॥ १०२ ॥ न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते । स्वभर्तृपिण्डमात्राच्च तृप्तिरासां यतः स्मृता ॥ १०३ ॥ न योषयोः(षायाः)पतिर्दद्यादपुत्राया अपि क्वचित् । न पुत्रस्य पिता चैव नानुजस्य तथाऽग्रजः ॥ १०४ ॥ मातुः प्रथमतः पिण्डे(ण्डं) निर्वपेत्पुत्रिकासुतः । द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः ॥ १०५ ॥ पुरतो नाऽऽत्मनः कर्षूः सा पूर्वा परिकीर्त्यते । मध्यमा दक्षिणेनास्या तद्दक्षिणतदुत्तमाः(!) ॥ १०६ ॥ वाय्वग्निदिङ्मुखान्तास्ताः कार्याः सार्धाङ्गुलान्तराः । तीक्ष्णान्ता यवमध्याश्च मध्यं नाव इवोत्किरन् ॥ १०७ ॥ शङ्कुश्च खादिरः कार्यो रजतेन विभूषितः । शङ्कुश्चैवोपवेषश्च द्वादशाङ्गुल इष्यते ॥१०८॥ अग्न्याशाग्रैः कुशैः कार्यं कर्षूणां स्तरणं घनैः । दक्षिणान्तां तदंयै(दन्यै)स्तु पितृयज्ञे परिस्तरेत् ॥ १०९ ॥ स्थगरं(नं) सुरभि ज्ञेयं चन्दनादि विलेपनम् । सौवीराञ्जनमप्युक्तं पिञ्जूलीनां यदञ्जनम् ॥ ११० ॥ स्वस्तरे सर्वमासाद्यं यथा यदुपयुज्यते । दैवपूर्वमतः श्राद्धमत्वरः शुचिरारभेत् ॥ १११ ॥ आसनाद्यर्घपर्यन्तं वसिष्ठेन यथेरितम् । कृत्वा कर्मार्थ पात्रेषु उक्तं दद्यात्तिलोदकम् ॥ ११२ ॥ तूष्णीं पृथगपो दत्त्वा मन्त्रेण तु तिलोदकम् । गन्धोदकं च दातव्यं संनिकर्षक्रमेण तु ॥ ११३ ॥ आसुरेण तु पात्रेण यस्तु दद्यात्तिलोदकम् । पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च ॥११४॥ कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम् । तदेव हस्तं(स्त)घटितं स्थाल्यादि दैवकं भवेत् ॥११५॥ गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभवानि च । धूपं चैवाऽऽनुपूर्वे(र्व्ये)ण अग्नौ कुर्यादनन्तरम् ॥११६॥ अग्नौकरणहोमश्च कर्तव्य उपवीतिना । प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिश्रुतेः ॥ ११७ ॥ अपसव्येन वा कार्यो(र्यो) दक्षिणाभिमुखेन च । निरुप्य हविरन्यस्मादन्यस्मै न हि हूयते ॥ ११८ ॥ स्वाहा कुर्यान्न चात्रान्ते न चैव जुहुयाद्धविः । स्वाहाकारेण हुत्वाऽग्नौ पश्चान्मन्त्रं समापयेत् ॥ ११९ ॥ पित्रे(त्र्ये)ण पङ्क्तिमूर्धन्यस्तस्य पाणावनग्निमान् । हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥ १२० ॥ नो कुर्याद्धोममन्त्राणां प्रथमादिषु कुत्रचित् । अन्येषां चाविकृष्टानां काले-

१ क ग. °णा पृथगादि° ।

नाऽऽचमनादिना(!) ॥ १२१ ॥ सव्येन पाणिनेन्यै(त्ये)वं यदन्नं समुदीरितम् । परिग्रहणमात्रं तत्सव्यस्याऽऽदिशति व्रतम् ॥ १२२ ॥ पिञ्जूल्यादिभि(भिः) संगृह्य दक्षिणेनेतरात्करात् । अन्वारभ्य च सव्येन कुर्यादुल्लेखनादिकम् ॥ १२३ ॥ यावदर्थमुपादाय हविषो॰ऽभकमर्भकः[1]( ! ) । चरुणा सह संनीय पिण्डान्दातुमुपक्रमेत् ॥ १२४ ॥ पितुरुत्तरकर्ष(र्षा)शे मध्यमे मध्यमस्य तु । दक्षिणे तु पितुश्चैव पिण्डान्पर्वाणि निर्वपेत् ॥ १२५ ॥ वाममावर्तनां केचिदुदगन्तं प्रचक्षते । सर्वा गौतमशाण्डिल्यौ शाण्डिल्यायन एव च(!) ॥ १२६ ॥ आवृत्य प्राणमायम्य पितॄन्ध्यायन्यथार्थतः । जपंस्तेनैव त्वावृत्य ततः प्राणं प्रमोचयेत् ॥१२७॥ शाकं च फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत्[3] । यस्तु शाकादिहोमश्च कार्योऽपूपाष्टकावृता ॥ १२८ ॥ अन्वष्टक्यं मध्यमायामिति गोभिलगौतमौ । वार्कषण्डिश्च[4] सर्वासु कौत्सो मेनेऽष्टकासु च ॥१२९॥ स्थालीपाकं पशुस्थाने कुर्याद्यद्यानुकल्पित(क)म् । श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस्थतु (स्तथा) ॥ १३० ॥ सायमादि प्रातरन्तमेकं कर्म प्रचक्षते । दर्शान्तं पौर्णमासाद्यमेकमेव मनीषिणः ॥ १३१ ॥ ऊर्ध्वं पूर्णाहुतेर्दर्शः पौर्णमासोऽपि वाऽग्रिमः । य आयाति स होतव्यः स एवाऽऽदिरिति श्रुतेः ॥ १३२ ॥ ऊर्ध्वं पूर्णाहुतेः कुर्यात्सायंहोमादनन्तरम् । वैश्वदेवं तु पाकान्ते वलिकर्मसमान्वितम् ॥ १३३ ॥ ब्राह्मणान्भोजयेत्पश्चादभिरूपांश्च शक्तितः । यजमानस्ततोऽश्नीयादिति कात्यायनोऽब्रवीत् ॥ १३४ ॥ वैवाहिकेऽग्नौ कुर्वीत सायंप्रातस्त्वतन्द्रितः । चतुर्थीकर्म कुर्वीत एतच्छात्यायनेर्मतम् ॥ १३५ ॥ ऊर्ध्वं पूर्णाहुतेः प्रातर्हुत्वा तां सायमाहुतिम् । प्रातर्होमं ततः कुर्यादेप एवोत्तरो विधिः ॥ १३६ ॥ सायंहोमात्यये प्रातर्हुत्वा तां सायमाहुतिम् । प्रातर्होमं ततः कुर्यादेप एवोत्तरो विधिः ॥ १३७ ॥ पौर्णमासात्यये हव्यं होता वा यदहर्भवेत् । तदहर्जुहुयादेवममावास्यात्ययेऽपि च ॥ १३८ ॥ अहूयमानेऽनश्नंश्चेन्नयेत्कालं समाहितः । संपन्ने तु यथा तत्र हूयते तदिहोच्यते ॥१३९॥ अहुताः परिसंख्याय पात्रे कृत्वाऽऽहुतीः सकृत् । मन्त्रेण विधिवद्धुत्वा एवमेव परा अपि ॥ १४० ॥ यत्र व्याहृतिभिर्होमः प्रायश्चित्तार्थको भवेत् । चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा ॥ १४१ ॥ अपि वाऽज्ञातमप्येषा प्राजापत्याऽपि चाऽऽहुतिः । होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः ॥ १४२ ॥ यद्यग्निरग्निनाऽन्येन संभ-

---

१ क °पोभकम° । २ ख °र्भकम् । न° । ग. °र्भक । च° । ३ ख °पयेत् । य° । ४ क वार्पपण्डि° ।

वेदाहितः क्वचित् । अग्नये विविचय इति जुहुयाद्वा घृताहुतिम् ॥ १४३ ॥ अग्नये शुचये चैव जुहुयाद्वैद्युतेन च । अग्नयेऽप्सुमते चैव जुहुयाच्चेद्ध(दृद्ध)राग्निना ॥ १४४ ॥ गृहदाहाग्निना यस्तु यष्टव्यः क्षामवान्द्विजैः । दावाग्निना च संसर्गो हृदयं यदि तप्यते ॥ १४५ ॥ द्विर्भूतो यदि संसृज्येत्संस्पृष्टमुपशामयेत् । असंसृष्टं जागरये गिरिशमैवमुक्तवान् ॥ १४६ ॥ न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् । स्वं भगसत्क्रियार्थाश्च यावचा(च्चा)सौ प्रजायते (?) ॥ १४७ ॥ अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः । न हि पित्रा समानीतः पुत्रस्य भवति क्वचित् ॥ १४८ ॥ यस्याग्नावन्यहोमः स्यात्स वैश्वानरदैवतम् । चरुं निरुप्य जुहुयात्प्रायश्चित्तं तु तस्य तत् ॥ १४९ ॥ परेणाग्नौ हुते स्वार्थे परस्याग्नौ हुते स्वयम् । पितृयज्ञात्यये चैव वैश्वदेवद्वयस्य च ॥ १५० ॥ अनिष्ट्वा नवयज्ञेन नवान्नप्राशनेन च । भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ॥ १५१ ॥ स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ॥ १५२ ॥ भूतप्रवाचने पत्नी यद्यसंनिहिता भवेत् । रजोरोगादिना तत्र कथं कुर्वन्ति याज्ञिकाः ॥ १५३ ॥ महानसेऽन्नं या कुर्यात्सवर्णा तां प्रवाचयेत् । प्रणवाद्यापि वा कुर्यात्कात्यायनवचो यथा ॥१५४॥ यज्ञवास्तुनि मुष्ट्यां च स्तम्बे दर्भच(व)टौ तथा । दर्भसंख्या न विहिता विष्टरास्तरणेषु च ॥ १५५ ॥ निक्षिप्याग्निं स्वदारेषु परिकल्प्याऽऽर्त्विजं तथा । प्रवसेत्कार्यवान्विप्रो मृषैव न चिरं क्वचित् ॥ १५६ ॥ मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः । उपविश्य शुचिः सर्वं यथाकालमनुद्रवेत् ॥ १५७ ॥ पत्न्या चाप्यवियोगिन्या शुश्रु(श्रू)ष्योऽग्निर्विनीतया । सौभाग्यवित्ताऽवैधव्यकामया भर्तृभक्तया ॥ १५८ ॥ या वा स्याद्वीरसूरासामाज्ञासंपादिनी प्रिया । दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत् ॥ १५९ ॥ दिनक्रमेण वा कर्म यथाज्येष्ठं स्वशक्तितः । विभज्य सह वा कुर्युर्यथाज्ञानमशाठ्यवत् ॥ १६० ॥ स्त्रीणां सौभाग्यतो ज्यैष्ठ्यं विद्ययैव द्विजन्मनाम् । न हि स्वल्पेन तपसा भर्ता तुष्यति योषिताम् ॥ १६१ ॥ भर्तुरादेशवर्तिन्या यथोमा वहुभिर्व्रतैः । अग्निश्च तोषितोऽमुत्र सा स्त्री सौभाग्यमाप्नुयात् ॥ १६२ ॥ श्रोत्रियं सुभगां गां वा साग्निमग्निचितिं यथा । प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥ १६३ ॥ विनयावनताऽपि स्त्री भर्तुर्या दुर्भगा भवेत् । अमुत्रोमाग्निभर्तृणामवज्ञाऽतिकृता तया ॥ १६४ ॥ पापिष्ठं दुर्भगामन्त्यं नग्नमुत्कृत्तनासिकम् । प्रातरुत्थाय

१ क °यार्थश्च । २ ख ग. °वन्वासौ । ३ क. मृषेव ।

यः पश्येत्स कालरु(भ)पयुज्यते ॥ १६५ ॥ पतिमुल्लङ्घ्य मोहात्स्त्री कं कं न नरकं व्रजेत्। कृच्छ्रान्मानुषतां प्राप्य किं किं दुःखं न पश्यति ॥ १६६ ॥ पतिशुश्रूषयैव स्त्री सर्वांल्लोकान्समश्नुते । दिवः पुनरिहाऽऽयाता सुखानामम्बुधिर्भवेत् ॥ १६७ ॥ स्व(स)दारोऽन्यान्पुनर्दारान्कथंचित्कारणान्तरात् । यदिच्छेदग्निमान्कर्तुं ह्वहोमोऽस्य विधीयते ॥ १६८ ॥ स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन। न ह्याहिताग्नेः स्वं कर्म लौकिकेऽग्नौ विधीयते ॥ १६९ ॥ षडाहुतिकमन्ये तु जुह्वत्याध्रुवदर्शनात् । न ह्यात्मनाऽर्थं(र्थः) स्यात्तावद्यावन्न परिणीयते ॥ १७० ॥ पुरस्तात्त्रिविकल्पो(ल्पं) यत्प्रायश्चित्तमुदाहृतम्। तत्षडाहुतिकं शिष्टैर्यज्ञविद्भिः प्रकीर्तितम् ॥ १७१ ॥

इति श्री [ गोभिलप्रोक्ते ] कर्मप्रदीपे द्वितीयः प्रपाठकः ॥ २ ॥

---

(अथ तृतीयः प्रपाठकः।)

---

असमक्षं तु दंपत्योर्होतव्यं नर्त्विगादिना। द्वयोरप्यसमक्षं हि भवेद्धुतमनर्थकम् ॥१॥ विहायाग्निं सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति । होमकालात्यये तस्य पुनराध्मा(धा)-नमिष्यते ॥ २ ॥ अरण्यो(ण्योः) क्षयनाशाग्निदाहेष्वग्निं समाहितः। पालयेदुपशान्तेऽस्मिन्पुनराधानमिष्यते ॥ ३ ॥ ज्येष्ठा चेद्बहुभार्यस्य अतिचारेण गच्छति। पुनराधानमत्रैक इच्छन्ति न तु गौतमः ॥ ४ ॥ दाहयित्वाऽग्निभिर्भार्यां सदृशीं पूर्वसंस्थिताम्। पात्रैश्चाथाग्निमादध्यात्कृतदारोऽविलम्बितः ॥ ५ ॥ एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वसारिणीम् । दाहयित्वाऽग्निहोत्रेण यज्ञपात्रैश्च धर्मवित्×॥६॥ द्वितीयां चैव यः पत्नीं दहेद्वैतानिकाग्निभिः । जीवन्त्यां प्रथमायां तु ब्रह्मघ्नेन समं हि तत् ॥ ७ ॥ मृतायां तु द्वितीयायां योऽग्निहोत्रं समुत्सृजेत्। ब्रह्मोज्झं तं विजानीयाद्यस्य (श्च) कामात्समुत्सृजेत् ॥ ८ ॥ मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत्। उपाधिनाऽपि तत्कर्म यावज्जीवं समापयेत् ॥ ९ ॥

---

× एतदग्रे " अत्र विपयज्येष्ठा समानवर्णा इति " इत्यधिकं सकलादर्शपुस्तकेषु।

---

१ क. °तमम्। दा°। २ ख. तु सुरापान°। ३ क. ग. °ह्योद्धृतं।

रामोऽपि कृत्वा सौवर्णे(र्णीं) सीतां पत्नीं यशस्विनीम्। ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरर्चितैः ॥ १० ॥ यो दहेदग्निहोत्रेण स्वेन भार्यां कथंचन। स स्त्री संपद्यते तेन भार्या चास्य पुमान्भवेत् ॥ ११ ॥ भार्या मरणमापन्ना देशान्तरगताऽपि वा। अधिकारी भवेत्पुत्रो महापातकिनि द्विजे ॥ १२ ॥ मान्या चेन्म्रियते पूर्वं भार्या पतिविमानिता। त्रीणि जन्मानि सा पुंस्त्वं पुरुषः स्त्रीत्वमर्हति ॥ १३ ॥ पूर्वैव योनिः पूर्वावृत्पुनराधानकर्मणि। विशेषोऽत्राग्न्युपस्थानमाज्याहुत्यष्टकं तथा ॥ १४ ॥ कृत्वा व्याहृतिहोमान्त उपतिष्ठेत पावकम्। अध्यायः केवलाग्नेयः कस्ते जामिरमानसः ॥१५॥ अग्निमीडेऽग्न आयाहि अग्न आयाहि वीतये। तिस्रोऽग्निर्ज्योतिरित्यग्निं दूतमग्ने मृडेति च ॥१६॥ इत्यष्ट वाऽऽहुतीर्हुत्वा यथाविध्यनुपूर्वशः। पूर्णाहुत्यादिकं कर्म अन्यत्पूर्ववदाचरेत् ॥ १७ ॥ अरण्योरल्पमप्यङ्गं यावत्तिष्ठति पूर्वयोः। न तावत्पुनराधानमन्यारण्योर्विधीयते ॥ १८॥ विनष्टे स्रुक्स्रुवं न्युब्जं प्रत्यक्स्थालमुदर्चिषि। प्रत्यगग्रं च मुशलं प्रहरेज्जातवेदसि ॥१९॥ स्वयं होमासमर्थस्य समीपमुपसर्पणम्। तत्राप्यस(श)क्तस्य सतः शयनाच्चोपवेशनम् ॥ २० ॥ हुतायां सायमाहुत्यां दुर्वलश्चेद्गृही भवेत्। प्रातर्होमस्तदैव स्याज्जीवेच्चेच्छ्वः पुनर्न वा ॥ २१ ॥ दुर्वलं स्नापयित्वा तु शुद्धचैलाभिसंवृतम्। दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् ॥ २२ ॥ घृतेनाभ्यु(भ्य)क्तमाप्लाव्य सुवस्त्रमुपवीतिनम्। चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषयेत्॥२३॥ हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु। मुख्येष्वथापिधायैनं निर्हरेयुः सुतादयः ॥ २४ ॥ आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम्। एकोऽन(नु)गच्छन्नस्यार्धमर्धं पथ्युत्सृजेद्भुवि ॥ २५ ॥ ऊर्ध्वमादहनं प्राप्त आसीनो दक्षिणामुखः। सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत् ॥ २६ ॥ अथ पुत्रादिनाऽऽप्लुत्य कुर्याद्दारुचयं महत्। भूप्रदेशे शुचौ देशे पश्चादित्यादिलक्षणे ॥ २७ ॥ तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे। आज्यपूर्णां स्रुचं दद्याद्दक्षिणाग्रां नसि स्रुवम् ॥ २८ ॥ पादयोरधरां प्राचीमरणीमुरसीतराम्। पार्श्वयोः शूर्पचमसे सव्यदक्षिणयोः क्रमात् ॥ २९ ॥ मुशलेन सह न्युब्जमन्तरूर्वोरुलूष(ख)लम्। तत्रोवीलीकमत्रैव(चत्रे च) अनश्रुनयनो विभीः ॥ ३० ॥ अग्सव्येन कृत्वैतद्वाग्यतः पितृदिङ्मुखः। अथाग्निं सव्यजान्वक्तो दद्याद(द)क्षिणतः शनैः ॥ ३१ ॥ अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः। असौ स्वर्गाय लोकाय स्वाहेति यजुरीरयन् ॥ ३२ ॥ एवं गृहपतिर्दग्धः सर्वं तरति दुष्कृतम्। †यश्चैनं दाहयेत्सोऽपि प्रजां प्राप्नोत्यनिन्दिताम् ॥ ३३ ॥ यथा सायुधधृ-

† एतद्वचनं न क. पुस्तके।

क्पान्थो ह्यरण्यान्यपि निर्भयः । *अतिक्रम्याऽऽत्मनोऽभीष्टं स्थानमिष्टांश्च विन्दति॥३४॥ एवमेषोऽग्निमान्यज्ञपात्रायुधविभूषितः । लोकानन्यानतिक्रम्य परं ब्रह्मैव विन्दति॥३५॥ अथानपेक्षयेत्पापः सर्व एव शवस्पृशः । (?) । स्नात्वा सचैलमाचम्य दद्युरस्योदकं स्थले ॥ ३६ ॥ गोत्रनामानुवाक्यं ते तर्पयामीत्यनन्तरम् । दक्षिणाग्रान्कुशान्कृत्वा सतिलं[2] पिण्डदानवत् ॥ ३७ ॥ एवं कृतोदकान्सम्यक्सर्वाञ्शाड्वलसंस्थितान् । आप्लुत्य पुनराचान्तान्वदेयुस्तेऽनुयायिनः ॥ ३८ ॥ मा शोकं कुरुतानित्ये सर्वस्मिन्प्राण(णि)धर्मणि । धर्मं कुरुत यत्नेन यो वः सह गमिष्यति ॥ ३९ ॥ मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् । करोति यः स संमूढो जलबुद्बुदसंनिभे ॥ ४० ॥ गन्त्री वसुमती नाशमुदधिर्दैवतानि च । के(फे)नप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ ४१ ॥ पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः । कर्मभिश्च शरीरोत्थैस्तत्र का परिदेवना ॥ ४२ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ ४३ ॥ श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ ४४ ॥ एवमुक्त्वा व्रजेयुस्ते गृहाल्लँघुपुरःसराः । स्नानाग्निः(ग्नि)स्पर्शनो(ने)ज्याशैः[3](द्यैः)शुद्धे(ध्ये)युरितरे कृतैः ॥ ४५ ॥ एवमेवाऽऽहिताग्निस्तु पात्रन्यासादिकं भवेत् । कृष्णाजिनादिकश्चात्र विशेषोऽध्वर्युनोदितः[4] ॥ ४६ ॥ विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा । दाहयेदूर्णयाऽऽच्छाद्य पात्रन्यासादि पूर्ववत् ॥ ४७ ॥ अस्थ्नामलाभे पर्णानि शकलान्युक्तयाऽऽवृता । भर्जयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ॥ ४८ ॥ महापातकसंयुक्तो दैवात्स्यादग्निमान्यदि । पुत्रादिः पालयेदग्नीन्युक्त आदोपसंक्षयम् ॥ ४९ ॥ प्रायश्चित्तं ततः कुर्यात्कुर्वन्वा म्रियते यदि । गृह्यं निर्वापयेच्छ्रौतमप्स्वस्ये ( न्यश्चे ) त्सपरिच्छदम् ॥ ५० ॥ सादयेदुभयं वाऽप्सु अद्भ्योऽग्निरभवद्यतः । पात्राणि दद्याद्विप्राय दहेदप्स्वेव वा क्षिपेत् ॥ ५१ ॥ अनयैवाऽऽवृता नारी दग्धव्या या व्यवस्थिता । अग्निप्रदानमन्त्रोऽस्या न प्रयुज्य इति स्थितिः ॥ ५२ ॥

---

१ ख. °न्तरः । द° । २ ख. °लं तु पृथक्पृथक् । ए° । ३ क. ग. °शैर्युद्धे° । ४ ख. °शेषः सूत्रचोदि° । ५ क. °यावृता । ग. °यादत° । ६ क. वादता ।

अग्निनैव दहेद्भार्यां स्वतन्त्रां पतितां न चेत् । तदुत्तरेण पात्राणि दाहयेत्पृथगन्तिके ॥ ५३ ॥ अपरेद्युस्तृतीये वा अस्थ्नां संचयनं भवेत् । यस्तत्र विधिना ( रा ) दिष्ट ऋषिभिः सोऽधुनोच्यते ॥ ५४ ॥ स्नानान्तं पूर्ववत्कृत्वा गव्येन पयसा ततः । संच ( ची ) यास्थीनि सर्वाणि प्राचीनावीत्यभाषयन् ॥ ५५ ॥ शमीपलाशशाखाभ्यामुद्धृत्योद्धृत्य भस्मतः । आज्येनाभ्यज्य गव्येन सेचयेद्गन्धवारिणा ॥ ५६ ॥ मृत्पात्रसंपुटे कृत्वा सूत्रेण परिवेष्ट्य च । श्वभ्रं स्ना ( खा ) त्वा शुचौ भूमौ निखनेद्दक्षिणामुखः ॥ ५७ ॥ पूरयित्वाऽवटं पङ्कपिण्डं से ( शै )वालसंयुतम् । दत्त्वोपरि समं शेषं कुर्यात्पूर्वाह्णकर्मणा ॥ ५८ ॥ एवमेवागृहीताग्नेः प्रेतस्य विधिरिष्यते । स्त्रीणामिवाग्निदानं स्यादथातोऽनुक्त उच्यते ॥ ५९ ॥ सूतके कर्मणां त्यागः संध्यादीनां विधीयते । होमः श्रौते तु ( तस्तु ) कर्तव्यः शुष्कान्नेनापि वा फलैः ॥ ६० ॥ अकृतं हावयेत्स्मार्ते तदभावे कृताकृतम् । कृतं वा हावयेदन्नमनारम्भविधानतः ॥ ६१ ॥ कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् । व्रीह्यादि वा कृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥ ६२ ॥ सूतके च प्रवासे वा शक्तौ वा श्राद्धभोजने । एवमादिनिमित्तेषु हावयेद्वेति योजयेत् ॥ ६३ ॥ न त्यजेत्सूतके कर्म ब्रह्मचारी स्वकं क्वचित् । न दीक्षिण्यात्परं (?) यज्ञे न कृच्छ्रादि तपश्चरन् ॥ ६४ ॥ पितर्यपि मृते[1] नैषां दोषो भवति कर्हिचित् । आशौचं कर्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणः ॥ ६५ ॥ श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि । प्रत्याब्दिकं प्रकुर्वीत प्रमीताहनि सर्वदा ॥ ६६ ॥ द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा । सपिण्डीकरणं चैव एतद्वै श्राद्धषोडशम् ॥ ६७ ॥ एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः । न्यूना[3]ः संवत्सराश्चै ( श्चै ) व स्यातां षाण्मासिके तथा ॥ ६८ ॥ यानि पञ्चदशाऽऽद्यानि अपुत्रस्येतराण्यपि । एकस्मिन्नह्नि देयानि सपुत्रस्यैव सर्वदा ॥ ६९ ॥ न योषायाः पतिर्दद्यादपुत्राया अपि क्वचित् । न पुत्रस्य पिता चैव नानुजस्य तथाऽग्रजः ॥ ७० ॥ एकादशेऽह्नि निर्वर्त्य अर्वाग्दर्शाद्यथाविधि । प्रकुर्वीताग्निमान्पुत्रो मातापित्रोः सपिण्डताम् ॥ ७१ ॥ सपिण्डीकरणादूर्ध्वं न दद्यात्प्रतिमासिकम् । एकोद्दिष्टविधानेन दद्यादित्याह गौतमः ॥ ७२ ॥ कर्षू[4]समन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोडशम् । प्रत्याब्दिकं तु शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥ ७३ ॥ अर्घेऽक्षय्योदके चैव पिण्डदानेऽवनेजने । तन्त्रस्य तु निवृत्तिः स्यात्स्वधावाचन एव च ॥ ७४ ॥ ब्रह्मदण्डादियुक्तानां येषां

१ क. ग. न्योषा । २ क. °मान्वायं । ३ क. ग न्यून सं° । ४ क. कर्पूरस° ।

नास्त्यग्निसत्क्रिया । श्राद्धादिसत्क्रियाभाजो न भवन्तीह ते क्वचित् ॥ ७५ ॥ मन्त्राम्नायेऽग्न इत्येतत्पञ्चकं लाघवार्थिभिः । पठ्यते तत्प्रयोगे स्यान्मन्त्रेण[1] मन्त्रविंशतिम् ॥ ७६ ॥ अग्नेः स्थाने वायुचन्द्रसूर्या बहुवद्दूह्य[2] च । समस्य पञ्चमीसूत्रे[3] चतुश्चतुरिति श्रुतेः ॥ ७७ ॥ प्रथमे पञ्चके[4] पापी लक्ष्मीरिति पदं भवेत् । अपि पञ्चसु मन्त्रेषु इति यज्ञविदो विदुः ॥ ७८ ॥ द्वितीये तु पतिघ्नी स्यादपुत्रेति तृतीयके । चतुर्थे त्वपसिच्येति इदमाहुतिविंशकम् ॥ ७९ ॥ धृतिहोमे न प्रयुञ्ज्याद्यो नामसु तथाऽष्टसु । चतुर्थीमघ्न्य इत्येतद्धोनाम न हि हूयते ॥ ८० ॥ लताग्रपल्लवो बुध्नः शुङ्गेति[5] परिकीर्त्यते । पतिव्रता व्रतवती ब्रह्मबन्धुस्तथा श्रुतः ॥ ८१ ॥ शिलाद्वु नीलमित्युक्तं ग्रन्थस्तवक उच्यते । कपुष्पिका[6]भितः केशान्मूर्ध्नि पश्चात्कपुच्छलम्[7] ॥ ८२ ॥ श्वाविच्छलाका शलली तथा वीरतरः शरः । तिलतण्डुलसंपक्वकृशरः सोऽभिधीयते ॥ ८३ ॥ नामधेये मुनिवसुपिशाचा बहुवत्सदा । यक्षाश्च पितरो देवा यष्टव्यास्तिथिदेवताः ॥ ८४ ॥ आग्नेयाद्येऽथ सार्पाद्ये विशाखाद्ये तथैव च । आषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च ॥ ८५ ॥ द्वंद्वान्येतानि[च]बहून्नक्षत्राणां जुहुयात्सदा । द्वंद्वद्वयं वि(व्य)वच्छेद्यमवशिष्टान्यथैकवत् ॥ ८६ ॥ देवतास्वपि हूयन्ते बहुवत्सर्प्यपि त्रयः । देवाश्च वसवश्चापि द्विवदेवाश्विनौ सदा ॥ ८७ ॥ ब्रह्मचारी समादिष्टो गुरुणा व्रतकर्मणि । बाढमोमिति च ब्रूयात्तत्तथैवानुपालयेत् ॥ ८८ ॥ सशिखं वपनं कार्यमास्नानब्रह्मचारिणाम्[8] । आशरीरविमोक्षाय ब्रह्मचर्यं न चेद्भवेत् ॥ ८९ ॥ वपनं नास्य कर्तव्यमर्वागोदनिकव्रतात् । व्रतिनो वत्सरं यावत्षण्मासानिति गोतमः ॥ ९० ॥ न गात्रोत्सादनं कुर्यादनापदि कदाचन । जलक्रीडामलंकारं व्रती दण्ड इवाऽऽप्लवेत् ॥ ९१ ॥ देवतानां विपर्यास(सो)जुहोतिषु कथं भवेत् । सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात्पुनः ॥ ९२ ॥ संस्कारा अतिपद्येरन्स्वकालाच्च कथंचन । हुत्वैव(त) देब कर्तव्या ये तूपनयनादधः ॥९३॥ अनिष्ट्वा नवयज्ञेन नवान्नं योऽत्ति कामतः । वैश्वानरश्चरुस्तस्य प्रायश्चित्तं विधीयते ॥ ९४ ॥ चरुः समशनीयो यस्तथा गोयज्ञकर्मणि । ऋषभोत्सर्जने चैव अश्वयज्ञे तथैव च ॥ ९५ ॥ श्रावण्यां च प्रदोषे यः कृष्यारम्भे तथैव च । कथमेतेषु निर्वापाः कथं चैव जुहोतयः ॥ ९६ ॥ देवतासंख्यया गृह्य निर्वापांस्तु पृथक्पृथक् । तूष्णीं द्वेरे(द्विर)वगृह्णीयाद्धोमश्चापि पृथक्पृथक्(!) ॥९७॥ यावता[9] होमनिर्वृत्तिर्भवेद्या यत्र कीर्तिता । शेषं चैव भवेत्किंचित्तावन्तं निर्वपेच्चरुम् ॥ ९८ ॥ चरुसमशनीये तु पितृयज्ञे चरौ यथा । होतव्यं मेक्षणेनान्य उपस्तीर्णाभिघारितः ॥ ९९ ॥ कालः कात्यायनेनोक्तो विधिश्चैव समासतः । वृषोत्सर्गे यतो नात्र

1 ख. न्त्रेणामत्रविं° । २ क. °वदह्य । ३ ख पञ्चमीं । ४ क. °के वापी° । ५ क °ङ्गादुनी° । ६ क. °पुस्तिका° । ७ क °म् । श्रीवि° । ८ क. ग °म् । अश° । ९ ग. °वत् । दे° । १० क °वती हो° ।

गोभिलेन तु भाषितः ॥ १०० ॥ पारिभाषिक एव स्यात्कालो गोवाजियज्ञयोः । अन्यस्यानुपदेशाच्च स्वस्तवारोहणस्य च(!) ॥ १०१ ॥ अथवा मार्गपाल्येऽह्नि कालो गोयज्ञकर्मणः । नीराजनेऽह्नि वाऽश्वानामिति तन्त्रान्तरे विधिः ॥ १०२ ॥ शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते । धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥ १०३ ॥ आश्वयुज्यां तथा कृष्यां वास्तुकर्मणि याज्ञिकाः । यज्ञार्थतत्त्ववेत्तारो होममेवं प्रचक्षते ॥ १०४ ॥ द्वे पञ्च क्रमेणैता हविराहुतयः स्मृताः । शेषा आज्येन होतव्या इति कात्यायनोऽब्रवीत् ॥ १०५ ॥ पयो यदाज्यसंयुक्तं तत्पृषातक उच्यते । दध्येकतदु(उ)पासाद्य कर्तव्यः पायसश्चरुः ॥ १०६ ॥ व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः । यवाश्चौषधयः सप्त विपदं घ्नन्ति धारिताः ॥ १०७ ॥ संस्काराः पुरुषस्यैते स्मर्यन्ते गौतमादिभिः । अतोऽष्टकादयः कार्याः सर्वे कालक्रमादितः ॥ १०८ ॥ सकृदप्यष्टकादीनि कुर्यात्कर्माणि यो द्विजः । स पङ्क्तिपावको भूत्वा लोकान्प्रैति घृतश्चुतः ॥ १०९ ॥ एकाहमपि कर्मस्थो योऽग्निशुश्रूषकः शुचिः । नयत्पत्रवदे[1]वास्य(!) शताहं दिवि जायते ॥ ११० ॥ यस्त्वाधायाग्निमाशोस्य[2] देवादीन्नैभिरिष्टवान् । निराकर्ताऽमरादीनां स विज्ञेयो निराकृतिः ॥ १११ ॥ यच्छ्राद्धं कर्मणामादौ यागान्ते दक्षिणा भवेत् । आमावास्यं द्वितीयं यदन्वाहार्यं तदुच्यते ॥ ११२ ॥ एकसाध्येष्वबर्हिःषु न स्यात्परिसमूहनम् । नोदगासादनं चैव क्षिप्रहोमादि ते(के) मता(तम्) ॥ ११३ ॥ अभावे व्रीहियवयोर्दध्ना वा पयसाऽपि वा । तदभावे यवाग्वा वा जुहुयादुदकेन वा ॥ ११४ ॥ रौद्रं तु राक्षसं पित्र्यमासुरं चाऽऽभिचारिकम् । उक्त्वा मन्त्रं स्पृशेदा(द)प आलभ्याऽऽत्मानमेव च ॥ ११५ ॥ यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये ॥ ११६ ॥ लवणं मधुमांसं च क्षारा[3]ञ्श्वो येन हूयते(!) । उपवासे न भुञ्जीत नोरुरात्रौ कथंचन ॥ ११७ स्वकाले सायमाहुतेरप्राप्तौ होतृहव्ययोः । प्राक्प्रातराहुतेः कालः प्रायश्चित्ते हुते सति ॥ ११८ ॥ प्राक्सायमाहुतेः प्रातर्होमकालामतिक्रमः । प्राक्पूर्णमासाद्दर्शस्य प्राग्दर्शादितरस्य तु ॥ ११९ ॥ वैश्वदेवे त्वतिक्रान्ते अहोरात्रमभोजनम् । प्रायश्चितमथो हुत्वा पुनः संतनुयाद्धुतम् ॥ १२० ॥ होमद्वयात्यये दर्शपौर्णमासात्यये तथा । पुनरेवाग्निमादध्यादिति भार्गवशासनम् ॥ १२१ ॥ अनूचो मानवो ज्ञेय एणः कृष्णमृगः स्मृतः । रुरुर्गौरमृगः प्रोक्तस्तम्बलं(!)शण उच्यते ॥ १२२ ॥ केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः । ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥ १२३ ॥ ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः । अनुद्वेगकरा नृणां सत्त्वचोऽनाग्निदूषिताः ॥ १२४ ॥ गौर्व(र्वि)शिष्टतमा विप्रैर्वेदेष्वपि निगद्यते । न ततोऽन्यद्वरं यस्मात्तस्माद्गौर्वर उच्यते ॥ १२५ ॥ येषां व्रतानामन्तेषु दक्षिणा न

---

१ क. °देकारस्य । ग. °देक्यस्य । २ क. °शास्यं दे° । ३ क. °रान्श्वोये° ।

विधीयते । वरस्तत्र भवेद्दानमपि वाऽऽच्छादयेद्गुरुम् ॥ १२६ ॥ अस्थानोश्वा(च्छ्वा)सविच्छेदघोषणाध्यापनादिकम् । प्रामाणिकश्रुतौ यस्माद्यातयामत्वकारि तत् ॥ १२७ ॥ प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः । क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥ १२८ ॥ अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः । क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम् ॥ १२९ ॥ गायत्रीं च सगायत्रां बार्हस्पत्यमिति त्रिकम् । शिष्येभ्योऽनूच्य विधिवदुपाकुर्यात्ततः श्रुतिम् ॥ १३० ॥ छन्दसामेकविंशानां संहितायां यथाक्रमम् । न च्छन्दस्काभिरेवाऽऽभिराघा(द्या)भिर्होम इष्यते ॥ १३१ ॥ पर्वभिश्चैव गानेषु ब्राह्मणेषूत्तरादिभिः । अङ्गेषु चर्चामन्त्रेषु इति षष्टिं जुहोति यः ॥ १३२ ॥ अक्षतास्तु यवाः प्रोक्ता भ्रष्टा धाना भवन्ति ते । भ्रष्टास्तु व्रीहयो लाजा घटाः षण्डिक उच्यते ॥ १३३ ॥ नाधीयीत रहस्यानि सोत्तराणि विचक्षणः । न चोपनिषदश्चैव षण्मासान्दक्षिणायनात् ॥ १३४ ॥ उपाकृत्योदगयने ततोऽधीयीत धर्मवित् । उत्सर्गश्चैक एवैषां नैष्ट्यं(?)प्रोष्ठपदेऽपि वा ॥ १३५ ॥ अजातव्यञ्जनाऽलोम्नी न तया सह संविशेत् । अयुगूः(?)काकवन्ध्याया जातो (तां) तां न विवाहयेत् ॥ १३६ ॥ संसक्तपदविन्यासः संपदः प्रक्रमः स्मृतः । स्मार्तकर्मणि सर्वत्र श्रौते त्वध्वर्युणोदितः ॥ १३७ ॥ यस्यां दिशि बलिं दद्यात्तामेवाभिमुखो दिशम् । श्रवणाकर्मणि भवेन्यश्चकर्म(?)न सर्वदा ॥ १३८ ॥ बलिशेषस्य हवनमग्निप्रणयनं तथा । प्रत्यहं न भवेयातामुल्मुकं तु भवेत्सदा ॥ १३९ ॥ वृषान्तकप्रेक्षणयोर्नवस्य हविषस्तथा । शिष्टस्य प्राशनं मन्त्रस्तत्र सर्वेऽधिकारिणः ॥ १४० ॥ ब्राह्मणानामसांनिध्ये स्वयमेव प्र(पृ)षातकम् । आचक्षेद्धविषः शेषं नवयज्ञेऽपि भक्षयेत् ॥ १४१ ॥ सफला बदरीशाखा फलवत्यभिधीयते । धना विशक्तताशङ्का स्मृता जातशिला स्मृताः(?) ॥ १४२ ॥ नष्टो विनष्टो मणिकः शिलानाशे तथैव च । न(त)दैवाऽऽहृत्य संस्कार्यो न क्षिपेदाग्रहायणीम् ॥ १४३ ॥ श्रवणाकर्म लुप्तं चेत्कथंचित्सूतकादिना । आग्रहायणिकं कुर्याद्बलिवर्जमशेषतः ॥ १४४ ॥ ऊर्ध्वं स्वस्तरशायी स्यान्मासमर्धमथापि वा । सप्तरात्रं त्रिरात्रं च एका वा सद्य एव वा ॥ १४५ ॥ नोर्ध्वं मन्त्रप्रयोगः स्यान्नाग्न्यगारं नियम्यते । नाऽऽहतास्तरणं चैव न पार्श्वं चापि दक्षिणम् ॥ १४६ ॥ दृढश्चेदाग्रहायण्यामावृतावपि कर्मणः । कुम्भौ मन्त्रवदासिञ्चेत्प्रतिकुम्भमृचं पठेत् ॥ १४७ ॥ अल्पानां यो विघातः स्यात्स बाधो

१ क. ग. °द्गुरु अ° । २ ख. ग. °म् । प्रमा° । ३ ग. श्रुतिः । ४ क. ग. नष्टयं । ५ क. ग. °दा । दपा° । ६ क. °शक्तताश° । ७ क. ग. °शाणायी । ८ ग. °माद्दताप्वपि । ९ क. ताप्वपि ।

बहुभिः स्मृतः । प्राणसंमित इत्यादि वासिष्ठं बाधितं यथा ॥ १४८ ॥ विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम् । तुल्यप्रमाणकत्वे[1] तु न्याय एवं प्रकीर्तितः ॥ १४९ ॥ त्रैयम्बकं करतलमपूपा मण्डकाः स्मृताः । पालाशा गोलकाश्चैव लोहचूर्णं तु चीवरम् ॥ १५० ॥ स्पृशंस्त्वनामिकाग्रेण क्वचिदालोकयन्नपि । अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेत् ॥ १५१ ॥ क्षालनं दर्भकूर्चेन सर्वत्र स्रोतसां पशोः । तूष्णीमिच्छाक्रमेण स्याद्वपार्थे पार्णदारुणी ॥ १५२ ॥ सप्त तावन्मूर्धन्यानि तथा स्तनचतुष्टयम् । नाभिश्रोणीरपानं च गोः स्रोतांसि चतुर्दश ॥ १५३ ॥ क्षुरो मांसावदानार्थं कृत्स्नां स्विष्टप्रदावृतौ । वपामादाय जुहुयात्तत्र मन्त्रं समापयेत् ॥ १५४ ॥ हृज्जिह्वाक्रोडसक्थीनि यत्तद्वृक्कौ गुदस्तनाः । श्रोणिस्कन्ध(न्धं)सदा पार्श्वे पश्वङ्गानि प्रचक्षते ॥ १५५ ॥ एकादशानामङ्गानामवदनानि संख्यया । पार्श्वस्वं[2] वृक्सत्कौ (स्यद्वृक्कसक्थ्नो)श्च द्वित्वादाहुश्चतुर्दश ॥ १५६ ॥ चरितार्था[3] श्रुतिः कार्या तस्मादप्यनुकल्पतः । अतो ह्यार्चेन होमः स्याच्छागपक्षे चरावपि ॥ १५७ ॥ अवदानानि यावन्ति क्रियेरन्प्रस्तरे पशोः । तावतः पायसान्पिण्डान्पश्वभावेऽपि कारयेत् ॥ १५८ ॥ ओदनव्यञ्जनार्थं तु पश्वभावेऽपि पायसम् । सद्रवं श्रपयेत्तद्वदन्वष्टक्येऽपि कर्मणि ॥ २५९ ॥ प्राधान्यं पिण्डदानस्य केचिदाहुर्मनीषिणः । गयादौ पिण्डमात्रं तु दीयमाननिदर्शनात् ॥ १६० ॥ भोजनस्य प्रधानत्वं वदन्त्यन्ये महर्षयः । ब्राह्मणानां परीक्षायां महायज्ञे प्रदर्शनात् ॥ १६१ ॥ आमश्राद्धविधानस्य विना पिण्डैः क्रियाविधिः । तदालभ्याप्यनध्यायविधानश्रवणादपि ॥ १६२ ॥ विद्वन्मतमुपादाय ममाप्येतद्धृदि स्थितम् । प्राधान्यमुभयोर्यस्मात्तस्मादेष समुच्चयः ॥ १६३ ॥ प्राचीनावीतिना कार्यं पित्र्येषु प्रोक्षणं पशोः । दक्षिणोद्वासनान्त च चरोर्निर्वपणादिकम् ॥ १६४ ॥ सन्नपश्ववदानानां प्रधानार्थो न हीतरः । प्रधानहवनं चैव शेषं प्रकृतिवद्भवेत् ॥ १६५ ॥ द्वीपमुन्नतमाख्यातं[4] शादाश्चैवेष्टकाः स्मृताः । किलिनं यजुलं(!)प्रोक्तं दूरखातोदको मरुः ॥ १६६ ॥ द्वारगवाक्षः संदर्भैः कर्दमभित्त्यन्तकोणवा । वेधैश्वानष्टं वास्तु घोरं विद्वन्मनाक्रान्तमार्गैश्च(?) ॥ १६७ ॥ वशंगमाविति व्रीहीञ्शेषश्चेति यवांस्तथा(!) । असावित्यत्र नामोक्त्या जुहुयात्क्षिप्रहोमवत् ॥ १६८ ॥ साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम् । अर्घ्यं दाधिमधुभ्यां च मधुपर्कोऽभिधीयते ॥ १६९ ॥ कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ । कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत् * ॥ १७० ॥

इति [ गोभिलप्रोक्ते ] श्रीकर्मप्रदीपे तृतीयः प्रपाठकः ॥ ३ ॥

* अत्र ग्रन्थसमाप्तिचिह्नं नास्ति तस्मादयं ग्रन्थः समाप्तो न वेत्यत्र संदेहः ।

१ क. ग. तुल्यं प्र° । २ क. ग. °स्वदक्य° । ३ क ग. °तार्थश्रु° । ४ क. ग. °ख्यानं सा° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# दक्षस्मृतिः ।

---

( तत्र प्रथमोऽध्यायः । )

ॐ सर्वशास्त्रार्थतत्त्वज्ञः सर्ववेदविदां वरः । पारगः सर्वविद्यानां दक्षो नाम प्रजापतिः ॥ १ ॥ * ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । एतेषां तु हितार्थाय धर्मशास्त्रमकल्पयत् ॥ २ ॥ जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः । स हि गर्भसमो ज्ञेयो जातिमात्रप्रदर्शकः ॥ ३ ॥ भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथाऽनृते । अस्मिन्बाले न दोषः स्यात्स यावन्नोपनीयते ॥ ४ ॥ उपनीते[2] तु दोषोऽस्ति क्रियमाणैर्विगर्हितैः । अप्राप्तव्यवहारोऽसौ बालः षोडशवार्षिकः ॥ ५ ॥ स्वी करोति यदा वेदं धत्ते वेदव्रतानि च । ब्रह्मचारी भवेत्तावदूर्ध्वं स्नातो गृही भवेत् ॥ ६ ॥ द्विविधो ब्रह्मचारी[3] स्यादाद्यो ह्युपकुर्वाणकः । द्वितीयो नैष्ठिकश्चैव तस्मिन्नेव व्रते स्थितः ॥ ७ ॥ त्रयाणामानुलोम्येन प्रातिलोम्येन वा पुनः । + प्रतिलोमं व्रतं यस्य स भवेत्पापकृत्तमः ॥ ८ ॥ यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः । न यतिर्न वनस्थश्च स सर्वाश्रमवर्जितः ॥ ९ ॥ अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विजः । आश्रमेण विना तिष्ठन्प्रायश्चित्तीयते हि सः ॥ १० ॥ जपे होमे तथा दाने स्वाध्याये च रतः सदा । नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमाच्च्युतः ॥ ११ ॥ मेखलाजिनदण्डैश्च ब्रह्मचारीति लक्ष्यते । गृहस्थो यष्टिवेदाद्यैर्नखलोमैर्वनाश्रमी ॥ १२ ॥ त्रिदण्डेन यतिश्चैवं लक्षणानि पृथक्पृथक् । यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाऽऽश्रमी ॥ १३ ॥ उक्तं कर्म क्रमेणैवं यः काल ऋषिभिः स्मृतः । द्विजानां तु हितार्थाय दक्षस्तु स्वयमब्रवीत् = ॥ १४ ॥

इति दाक्षे धर्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

---

* क. घ. च. पुस्तकातिरिक्तपुस्तकेषु एतस्मात्प्रागधिकः श्लोक " उत्पत्तिः प्रलयश्चैव स्थिति. संहार एव च । आत्मा चाऽऽत्मनि तिष्ठेत चाऽऽत्मा ब्रह्मण्यवस्थितः " इति । + इत. प्रभृति भवेत्पुनरित्यन्तग्रन्थो न विद्यते च. छ. ज. पुस्तकेषु । = अत्र प्रथमाध्यायसमाप्ति ख. ग. पुस्तकातिरिक्तपुस्तकेषु नास्ति । एवमग्रेऽप्यध्यायसमाप्ति. ख. ग व्यातिरिक्तपुस्तकेषु नास्तीति बोध्यम् ।

---

१ ख. ग. °यो व्यक्तिमात्रप्रदर्शित· । भ° । घ °यो व्यक्तिमा° । २ ग ते । तस्मिन्काले न दोषोऽस्ति स या° । ३ ग. °री तु स्मृतः शास्त्रे मनीषिभिः । उपकुर्वाणकस्त्वाद्यो द्वितीयो नैष्ठिक' स्मृत । यो । ४ ख. °स्थो दानवेदाद्यैर्न विलो° । ग. °स्थो वयष्ठाद्यैर्नखलोम्ना वनाश्रित. । त्रि° । च °स्थोऽतिथिपूजाद्यं° । ५ ग. उक्तकर्मक्रमो नोक्तो न कालो मुनिभिः । ६ च. छ. °व स्वका° ।

( अथ द्वितीयोऽध्यायः । )

प्रातरुत्थाय कर्तव्यं यद्द्विजेन दिने दिने। तत्सर्वं संप्रवक्ष्यामि द्विजानामुपकारकम् ॥ १ ॥ उदयास्तमयं यावन्न विप्रः क्षणिको भवेत्। नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः * ॥ २ ॥ स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः। अज्ञानादथ वा लोभात्स तेन पतितो भवेत् ॥ ३ ॥ दिवसस्याऽऽद्यभागे तु कृत्यं तस्योपदिश्यते। द्वितीये च तृतीये च तुरीये पञ्चमे तथा ॥ ४ ॥ षष्ठे च सप्तमे चैव त्वष्टमे च पृथक्पृथक्। विभागेष्वेषु यत्कर्म तत्प्रवक्ष्याम्यशेषतः ॥ ५ ॥ उषःकाले तु संप्राप्ते शौचं कुर्याद्यथार्थवत्। ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥ ६ ॥ अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः। स्रवत्येष दिवा रात्रौ प्रातःस्नानं विशोधनम् ॥ ७ ॥ क्लिद्यन्ति हि प्रसुप्तस्य चेन्द्रियाणि क्षरन्ति च। अङ्गानि समतां गच्छन्त्युत्तमान्यधमैः सह + ॥ ८ ॥ प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्। सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥ ९ ॥ उषस्युषसि यत्स्नानं संध्यायामुदिते रवौ। प्राजापत्येन तत्तुल्यं सर्वपापापनोदनम् × ॥ १० ॥ लालास्वेदसमाकीर्णः शयनादुत्थितो द्विजः। स्नात्वा समारभेन्नित्यं जपहोमं विशेषतः ॥ ११ ॥ प्रातरुत्थाय यो नित्यं संध्यास्नायी भवेद्द्विजः। सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति ॥ १२ ॥ गुणा दश स्नानपरस्य साधो रूपं च तेजश्च बलं च शौचम्। आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्नघातश्च तपश्च मेधाः ॥ १३ ॥ मनःप्रसादजननं रूपसौभाग्यवर्धनम्। दुःखशोकापहं स्नानं मोक्षदं ज्ञानदं तथा ॥ १४ ॥ आग्नेयं भस्मना स्नानमवगाह्य च वारुणम्। आपो हि ष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥ १५ ॥ यत्तु सातपवर्षं तु तत्स्नानं दिव्यमुच्यते। पञ्च स्नानानि पुण्यानि मनुः स्वायंभुवोऽब्रवीत् ॥ १६ ॥ आपस्नानं व्रतस्नानं मन्त्रस्नानं तथैव च। आपस्नानं गृहस्थस्य व्रतमन्त्रे तपस्विनाम् ॥ १७ ॥ कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च। प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १८ ॥ दानं प्रतिग्रहो होमो भोजनं बलिकं तथा। साङ्गुष्ठं तु सदा कार्यमापतेत्तदधोऽन्यथा ॥१९॥ स्नानादनन्तरं तावदुपस्पर्शनमुच्यते।

* इत. परमेतदर्धं विद्यते ख. पुस्तके—" संध्यायां वैश्वदेवान्तं स्वकं कर्म समाचरेत् " इति। + इत आरभ्य उपस्पृशेदित्यन्तं ग्रन्थव्यत्यासः ख. ग. पुस्तकयो। × इत. परं द्वि प्रमृज्यात्ततो मुखमित्यन्तं ग्रन्थव्यत्यासः, च. छ पुस्तकयो.।

१ ख. स्तमितं याव°। २ ङ. च. छ. °मनं या°। ३ च छ. °भात्त्यक्तेन। ४ ख. ग. °चं कृत्वा यथा°। ५ ख. घ. °त्येव दि°। ६ ख. ग. स्रवन्ति। ७ ग °ता यान्ति उत्त°। ८ च छ. दृष्टिप्रीतिक°। ९ ख. ग. पूतात्मा। १० क. °श्च जप°। ११ क. ङ मौनदं।

अनेनैव विधानेन ह्याचान्तः शुचितामियात् ॥ २० ॥ उदक एवोदकस्थश्चेत्स्थलस्थश्च स्थले शुचिः । पादौ स्थाप्योभयत्रैव आचम्योभयतः शुचिः ॥ २१ ॥ प्रक्षाल्य पादौ पाणी च त्रिः पिबेदम्बु वीक्षितम् । संहताङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ॥ २२ ॥ संहत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत् । अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ॥ २३ ॥ अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनः पुनः । नाभिं कनिष्ठाङ्गुष्ठाभ्यां हृदयं तु तलेन वै ॥ २४ ॥ सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् । संध्याकाले च संप्राप्ते मध्याह्ने च ततः पुनः ॥ २५ ॥ यो न संध्यामुपासीत ब्राह्मणो हि विशेषतः । स जीवन्नेव शूद्रस्तु मृतः श्वा चैव जायते ॥ २६ ॥ संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥ २७ ॥ संध्याकर्मावसाने तु स्वयं होमो विधीयते । स्वयं होमे फलं यत्स्यान्न तदन्येन जायते ॥ २८ ॥ ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः । एभिरेव हुतं यत्तु तद्धुतं स्वयमेव तु ॥ २९ ॥ देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् । देवकार्यस्य सर्वस्य पूर्वाह्णो हि विधीयते ॥ ३० ॥ देवकार्याणि पूर्वाह्णे मनुष्याणां च मध्यमे । पितॄणामपराह्णे तु कुर्यादेतानि यत्नतः ॥ ३१ ॥ पौर्वाह्णिकं तु यत्कर्म यदि तत्सायमाचरेत् । न तत्फलमवाप्नोति वन्ध्यास्त्रीमैथुनं यथा * ॥ ३२ ॥ द्वितीये च तथा भागे वेदाभ्यासो विधीयते । वेदाभ्यासो हि विप्राणां विशिष्टं तप उच्यते = ॥ ३३ ॥ वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ ३४ ॥ समित्पुष्पकुशादीनां स कालः परिकीर्तितः । तृतीये च तथा भागे पोष्यवर्गान्नसाधनम् ॥ ३५ ॥ माता पिता गुरुर्भार्या प्रजा दीनः समाश्रितः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥ ३६ ॥ ज्ञातिर्बन्धुर्जनः क्षीणस्तथाऽनाथः समाश्रितः । अन्योऽपि धनयुक्तस्य पोष्यवर्ग उदाहृतः ॥ ३७ ॥ सार्वभौतिकमन्नाद्यं कर्तव्यं गृहमेधिना । ज्ञानविद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत् ॥ ३८ ॥

---

* इत· परमेतदर्धं ख ग. पुस्तकयोः—" दिवसस्याऽऽद्यभागे तु सर्वमेतद्विधीयते " इति । = इत उत्तरमेतदर्धमधिकं ख. ग. पुस्तकयोः—" [illegible] स विज्ञेय· षडङ्गसहितस्तु सः " इति ।

---

१ घ. ङ °न व्याचा° । २ छ. संहिताभि[illegible]भि· । ३ ख. °श्चादुपस्पृशेत् । अ° । ४ च. छ. श्रोत्रं पुनः पु° । ५ ख ग. °ध्यायां च प्रभातं च म° । घ. ङ. °ध्यास्नानं प्रभाते च म° । ६ ग. °लमश्नुते । सं° । ७ ङ. छ. ञ. °तः पश्चात्कुर्यान्मङ्ग° । ८ च. [illegible]. ज. दृश्यते । ९ ख. ग. परमं । १० ख. °प. । [illegible]दानं । ११ ग. ततो दानं [illegible] शि° । १२ ख. °नां [illegible]तीये ( य ) समुदाहृतः । १३ ख. ग. °गार्थसा° । १४ च. छ दीनस्तथा सुताः । १५ ग. °श्चान्य. पो° ।

भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् । नरकः पीडने चास्य तस्माद्यत्नेन तच्च-
रेत्[1] ॥ ३९ ॥ जीवत्येकः स लोकेषु बहुभिर्योऽनुजीव्यते । जीवन्तोऽपि[3] मृताश्चान्ये
पुरुषाः स्वोदरंभराः ॥ ४० ॥ बह्वर्थं[4] जीवते कश्चित्कुटुम्बार्थे तथा परः[5] * । आत्मार्थे
यो न शक्नोति[6] स्वोदरेणापि दुःखितः ॥ ४१ ॥ दीनानाथविशिष्टेभ्यो दातव्यं भूति-
मिच्छता । अदत्तदाना जायन्ते परभाग्योपजीविनः × ॥ ४२ ॥ चतुर्थेऽह्नस्तथा
भागे स्नानार्थं मृदमाहरेत् । तिलपुष्पकुशादींश्च[7] स्नायाच्चाकृत्रिमे[8] जले ॥ ४३ ॥
+मृत्तिकाः सप्त न ग्राह्या वल्मीकान्मूषकस्थलात् । अन्तर्जलाच्च मार्गान्ताद्वृक्षमूला-
त्सुरालयात् ॥ ४४ ॥ परशौचावशिष्टा च श्रेयस्कामैः सदा बुधैः । शुचिदेशात्तु
संग्राह्या मृत्तिका स्नानहेतवे ॥ ४५ ॥ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे ।
मृत्तिके हर मे पापं यन्मया पूर्वसंचितम् ॥ ४६ ॥ उद्धृताऽसि वराहेण कृष्णेन शत-
बाहुना । मृत्तिके प्रतिगृह्णामि प्रजया च धनेन च ॥ ४७ ॥ नित्यं नैमित्तिकं काम्यं
त्रिविधं स्नानमुच्यते । तेषां मध्ये तु यन्नित्यं तत्पुनर्भिद्यते त्रिधा ॥ ४८ ॥ मला-
पकर्षणं पूर्वं मन्त्रवर्जं जले स्मृतम् । संध्ययोरुभयोः[9] स्नानं स्नानदेशाः प्रकीर्तिताः[10]
॥ ४९ ॥ मार्जनं जलमध्ये तु प्राणायामो यतस्ततः । उपस्थानं ततः पश्चात्सावि-
त्रीजप उच्यते ॥ ५० ॥ सविता देवता यस्या मुखमग्निरुदाहृतः[11] । विश्वामित्र ऋषि-
श्छन्दो गायत्री सा विशिष्यते ॥ ५१ ॥ ◡ अङ्गारकदिने प्राप्ते कृष्णपक्षे चतुर्दशी ।
यमुनायां विशेषेण नियतो नियताशनः ॥ ५२ ॥ यमाय धर्मराजाय मृत्यवे चान्त-
काय च । वैवस्वताय कालाय सर्वभूतक्षयाय[12] च ॥ ५३ ॥ औदुम्बराय दध्नाय
नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै[13] पुनः ॥ ५४ ॥ एकैकस्य
तिलान्मिश्रान्दद्यात्त्रीनष्ट वाऽञ्जलीन् । यावज्जीवकृतं पापं तत्क्षणादेव नश्यति
॥ ५५ ॥ पञ्चमे च तथा भागे संविभागो यथार्हतः । देवपितृमनुष्याणां कीटानां
चोपदिश्यते ॥ ५६ ॥ देवैश्चैव मनुष्यैश्च तिर्यग्भिश्चोपजीर्य( व्य )ते । गृहस्थः
प्रत्यहं यस्मात्तस्माच्छ्रेष्ठो[14] गृहाश्रमी ॥ ५७ ॥ त्रयाणामाश्रमाणां च गृहस्थो

---

* एतदुत्तरं—" गुणधर्मपरिभ्रष्टो जीवन्नपि न जीवति " इति च. छ. ज. पुस्तकेषु । × एतदनन्तर-मेतद्वचनम्—" यद्ददासि विशिष्टेभ्यो यज्जुहोषि दिने दिने । तत्तु वित्तमहं मन्ये शेषं कस्यापि रक्षसि । " इति ख. ग. पुस्तकयोः । + इत आरभ्य धनेन चेत्यन्तग्रन्थो न विद्यते ख. ग. पुस्तकयोः । ◡ इत.प्रभृति तत्क्षणादेव नश्यतीत्यन्तग्रन्थ ख. ग. पुस्तकयोर्नास्ति ।

---

१ च. छ. °ने यस्मात्तस्माद्यत्नेन तं भरे° । २ ग छ. °त् । स जीवति य एवैको बहुभिश्चोपजीव्य° । ३ ग. °न्तो मृतकाश्चान्ये य आत्मंभरयो नराः । ४ च. छ ज. °ह्वर्थं जीवितं यस्य कुटु° । ५ च. छ. ज. पुनः । ६ घ. ङ. शक्तो हि स्वो° । ७ ख. ग. °शादीनि स्नानं चाकृ° । ८ च. छ °त्रिमैर्जलैः । मृ° । ९ ख. ग. संध्यास्नानमुभाभ्या च स्नानभेदाः प्र° । १० ग °विन्या ज° । ११ ख. ज. °मिस्त्रिपात्स्थित. । ग. °म्रिस्त्रिधा स्थित. । १२ क. ङ. च. °तहिताय । १३ क. ख. है । १४ क. °च्छ्रेष्ठाश्रमो गृही । त्र° ।

योनिरुच्यते । सीदमानेन तेनैव सीदन्तीहेतरे त्रयः ॥ ५८ ॥ मूलं[१] प्राणो भवेत्स्कं[२]न्धस्तस्माच्छाखाश्च पल्लवाः । मूलेनैकेन नष्टेन सर्वमेव विनश्यति ॥ ५९ ॥ तस्मात्सर्वप्रयत्नेन रक्षणीयो गृहाश्रमी । राज्ञा चान्यैस्त्रिभिः पूज्यो माननीयश्च सर्वदा ॥ ६० ॥ गृहस्थोऽपि क्रियायुक्तो न गृहेण गृही भवेत् । तथैव पुत्रदारैश्च स्वकर्मपरिवर्जितः ॥ ६१ ॥ अस्नात्वा चाप्यहुत्वा चाप्यदत्त्वा ये तु भुञ्जते । देवादीनामृणी भूत्वा नरकं ते व्रजन्त्यधः ॥ ६२ ॥ अस्नात्वा शमलं भुङ्क्ते त्वजापी पूयशोणितम् । अहुत्वा च कृमिं भुङ्क्ते ह्यदत्त्वाऽमेध्यमेव च ॥ ६३ ॥ वृथा तप्तोदकं स्नानं वृथा जाप्यमवैदिकम् । वृथा रतमपुत्रस्य वृथा भुक्तमसाक्षिकम् ॥ ६४ ॥ एको हि भक्षयत्यन्नमपरोऽन्नेन भक्ष्यते । न भुज्यते स एवैको योऽन्नं भुङ्क्ते ससाक्षिकम् ॥ ६५ ॥ विभागशीलसंपन्नः क्षमायुक्तो दयालुकः । * स्वकर्मणि सदा युक्तो गृहस्थः स्वर्गभाग्भवेत् ॥ ६६ ॥ दया लज्जा क्षमा श्रद्धा प्रज्ञा त्यागः कृतज्ञता । एते यस्य गुणाः सन्ति गृहस्थो मुख्य उच्यते ॥ ६७ ॥ संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् । भुक्त्वाऽथ सुखमास्थाय तदन्नं परिणामयेत् ॥ ६८ ॥ इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् । अष्टमे लोकयात्रां तु बहिः संध्यां[१०] ततः पुनः ॥ ६९ ॥ होमं[११] भोजनकालं तु यदन्यद्गृहकृत्यकम् । कृत्वा चैवं ततः पश्चात्स्वाध्यायं किंचिदाचरेत् ॥ ७० प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते × ॥ ७१ ॥ अस्मिन्नेव प्रयुञ्जानो ह्यस्मिन्नेव प्रलीयते । तस्मात्सर्वप्रयत्नेन स्वाध्यायं[१२] सर्वदाऽभ्यसेत् ॥ ७२ ॥ नैमित्तिकानि काम्यानि[१३] निपतन्ति यथा यथा । तथा तथा हि कार्याणि न कालं[१४] तु विलम्बयेत् ॥ ७३ ॥

* एतदर्धस्थानेऽयं पाठः ख. ग. पुस्तकयोः—" देवतातिथिभक्तश्च गृहस्थ. स तु धार्मिकः " इति ।
× इतः परं न कालं तु विलम्बयेदित्यन्तं ग्रन्थव्यत्यास. ख. ग. पुस्तकयोः ।

१ क ट. च. मूलप्रा° । ख मूलत्राणे भ° । २ ख °त्स्कन्धः स्कन्धाच्छा° । घ. °त्स्कन्धं तस्मा° । ३ ग. गृहाश्रमी । न चैव । ४ ग. चाजप्त्वाऽदत्त्वा च मानव. । दे° । ५ ख. °त्वा दरिद्रश्च भवेन्नरः । एको हि भुञ्जते ह्यन्न° । ६ ख. यो भुङ्क्ते तु स मासकम् । विभागशीलता यस्य क्ष° । ७ घ. °गयुक्तः सं° । ८ क. °शील. सं° । ग. °शीलो यो नित्यं क्ष° । ९ ख. षष्ठं वा सप्तमं न° । १० ख. घ. संध्या ततः । ११ ख. होमभोजनकृत्यं च य° । ग. होमो भोजनकं चैव य° । १२ ख. °यं च समभ्य° । १३ ख. कर्माणि । १४ ख. ग. कालस्तु विधीयते ।

(*सर्वत्र मध्यमौ यामौ हुतशेषं हविश्च यत् । भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ॥ ७४ ॥)

इति दाक्षे धर्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

=====

( अथ तृतीयोऽध्यायः । )

---

+ देवपितृमनुष्याणां दीनानां च तपस्विनाम् । गुरुमातृपितॄणां च[1] स विभागी विकर्मकृत् ॥ १ ॥ सुधा नव गृहस्थस्यं[2] मध्यमानि नवैव च । नव कर्माणि तस्यैव विकर्माणि तथा नव ॥ २ ॥ प्रच्छन्नानि नवान्यानि प्रकाशा(श्या)नि तथा नव । सफलानि नवान्यानि निष्फलानि नवैव तु ॥ ३ ॥ अदेयानि नवान्यानि वस्तुजातानि सर्वदा । नवका नव निर्दिष्टा गृहस्थोन्नतिकारकाः ॥४॥ सुधावस्तूनि वक्ष्यामि शिष्टे च गृहमागते । मनश्चक्षुर्मुखं वाचं[3] सौम्यं दद्या[4]च्चतुष्टयम् ॥ ५ ॥ अभ्युत्थानमिहाऽऽगच्छे[5] पूर्वालापः प्रियान्वितः । उपासन[6]मनुव्रज्या कार्याण्येतानि यत्नतः ॥ ६ ॥ ईषद्[7]व्ययानि चान्यानि भूमिरापस्तृणानि च । पादशौचं तथाऽभ्यङ्ग आसनं शयनं तथा ॥ ७ ॥ किंचि[8]द्रात्रौ यथाशक्ति नास्यानश्नन्गृहे वसेत् । मृज्जलं चार्थिने देयमेतान्यपि सतां[9] गृहे ॥ ८ ॥ संध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम् । वैश्वदेवस्तथाऽऽतिथ्यमुद्धृतं चापि शक्तितः = ॥ ९ ॥ नव कर्माणि कार्याणि पूर्वोक्तानि मनीषिभिः । कृत्वैवं नव कर्माणि सर्वकर्मा भवेन्नरः ॥ १० ॥ अनृतं पारदार्यं च तथाऽभक्ष्यस्य भक्षणम् । अगम्यागम[11]नापेयं हिंसा स्तेयं तथैव च ॥ ११ ॥ अश्रौ[12]तधर्माचरणं मैत्रं[13][14] धर्मबहिष्कृतम् । नवैता[15]नि विकर्माणि सततं तानि वर्जयेत् × ॥ १२ ॥ पैशुन्यमनृतं माया कामः क्रोधस्तथाऽप्रियम् । दोषो दम्भः परद्रोहो विकर्माणीति वर्जयेत् ॥ १३ ॥

---

* धनुश्चिह्नान्तर्गतं ख. ग पुस्तकयोरेव + अयं श्लोकोऽत्र नास्ति ख. ग. पुस्तकयोः । = इतः सार्ध वचनमधिकं ख. ग. पुस्तकयो.–"पितृदेवमनुष्याणा दीनानाथतपास्विनाम् । मातापितृगुरूणा च संविभागो यथार्हत. । एतानि नव कर्माणि विकर्माणि तथा पुन. " इति । ×इत. प्रभृति विकर्म चेत्यन्तं न विद्यते ख. ग. पुस्तकयो. ।

---

१ घ. च संवि° । २ ख °स्य ईषद्दानानि वै नव । नव क° । ग. °स्य सद्व्ययानि । घ. °स्य सव्ययानि । ३ च. वाचा । ४ ख. दत्त्वा चतु° । ५ ख ग. °च्छ पृच्छाला° । ६ च. उच्चास° । ७ ख. ग. °षद्दानानि । ८ ग. °ड्गमाश्रयः श° । ९ ख. °चिद्द्याद्यथा° । ग. °चिच्चान्नं य° । १० ख. ण. सदा । ११ च. °मनं स्तेयं हिंसा चैव तु पैशुनम् । अ° । १२ ख. ग. °तकर्माच° । १३ ग. °णं मित्रध° । १४ ख. °मैत्रध° । १५ क. °नि च क° ।

गीतनृत्ये कृषिः सेवा वाणिज्यं लवणक्रिया । द्यूतकर्मायुधान्यात्मप्रशंसा च विकर्म च ॥ १४ ॥ आयुर्वित्तं गृहच्छिद्रं मन्त्रं[1] मैथुनमौषधम् । पापकर्मापमानश्च धर्मो गोप्यानि यत्नतः ॥ १५ ॥ *अगोप्यमृणशुद्धिश्च[2] दायादो धनविक्रयः । कन्यादानं वृषोत्सर्गो रहः[3] पापं[4] जुगुप्सितम् ॥ १६ ॥ मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि । दीनानाथविशिष्टेषु दत्तं च सफलं भवेत् ॥ १७ ॥ धूर्ते बन्दिनि मल्ले च कुवैद्ये कितवे शठे । चाटचारणचौरेषु दत्तं भवति निष्फलम् ॥ १८ ॥ सामान्यं याचितं[5] न्यास आधिर्दाराः[6] सुहृद्धनम् । भयार्दितं च निक्षेपः सर्वस्वं चान्वये सति ॥ १९ ॥ आपत्स्वपि न देयानि नव वस्तूनि सर्वदा । यो ददाति स मूढात्मा[7] प्रायश्चित्तीयते नरः ॥२०॥ नवनवकवेत्तारमनुष्ठानपरं नरम् । इह लोके परत्रापि[8] श्रीश्च तं नैव[9] मुञ्चति॥२१॥ यथैवाऽऽत्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता । सुखदुःखानि तुल्यानि यथाऽऽत्मनि तथा परे ॥ २२ ॥ सुखं वा यदि वा दुःखं यत्किंचित्क्रियते परे । तत्कृतं तु पुनः पश्चात्सर्वमात्मनि तद्भवेत् ॥ २३ ॥ न क्लेशेन विना द्रव्यं द्रव्यहीने कुतः क्रिया । क्रियाहीने न धर्मः स्याद्धर्महीने कुतः सुखम् ॥ २४ ॥ सुखं च वाञ्छते सर्वस्तच्च धर्मसमुद्भवम् । तस्माद्धर्मः सदा कार्यः सर्ववर्णेन[10] यत्नतः ॥ २५ ॥ न्यायागतेन द्रव्येण कर्तव्यं पारलौकिकम् । दानं च विधिना देयं काले पात्रे गुणान्विते ॥२६॥ समद्विगुणसाहस्रमानन्त्यं च यथाक्रमम् । दाने फलविशेषः स्याद्धिंसायां[11] तद्वदेव हि ॥ २७ ॥ सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । सहस्रगुणमाचार्ये त्वनन्तं वेदपारगे ॥२८॥ विधिहीने तथाऽपात्रे यो[12] ददाति प्रतिग्रहम् । न केवलं हि तद्दानं शेषमप्यस्य नश्यति॥ २९ ॥ व्यसनप्रतिकारार्थं[13] कुटुम्बार्थं च याचते । एवमन्विष्य दातव्यं[14] सर्वदानेष्वयं विधिः ॥ ३० ॥ यद्यदिष्टतमं लोके यच्चास्य दयितं भवेत् । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ३१ ॥ मातापितृविहीनं तु संस्कारोद्वाहनादिभिः । यः स्थापयति तस्येह पुण्यसंख्या न विद्यते ॥ ३२ ॥ न तच्छ्रेयोऽग्निहोत्रेण नाग्निष्टोमेन लभ्यते । यच्छ्रेयः प्राप्यते पुंसां विप्रेण स्थापितेन वै ॥ ३३ ॥

इति दाक्षे धर्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

* एतदर्धस्थानेऽयं पाठः ख. ग. पुस्तकयोः–" प्रायोग्यमृणशुद्धिश्च दानाध्ययनविक्रयाः " इति ।

१ क. मन्त्रो मैथुनमर्दने । पा° । ग. मन्त्रमैथुनभेषजम् । तपोदानावमानौ च नव गो° । २ क ड. °शुद्धा च दा° । ३ ख. रहस्येतानि वर्जयेत् । मा° । ४ ग. °पापमकुत्सनम् । प्रकाश्यानि नवैतानि गृहस्थाश्रमिणस्तथा । मा° ५ क. ड. °तं त्वास° । ६ ख. ग. °दाराश्च तद्धनम् । अन्वाहितं च । ७ ख. मूर्खस्तु प्रायश्चित्तेन युज्यते । नवन° । ८ ग परे च श्री· स्वर्गस्थं च न मु° । ९ ग° ञ्चति(न्ति)सर्वे हि तच्च । १० ख ग. °वर्णै· प्रय° । ११ ग. °यां तावदेव तु । स° । १२ ग. °कं तद्विनश्येच्छेष° । १३ ग. °राय कु° । १४ ग. °तव्यमन्यथा न फलं भवेत् । मा° ।

( अथ चतुर्थोऽध्यायः । )

---

*गृहाश्रमात्परं नास्ति यदि भार्या वशानुगा । तया धर्मार्थकामानां त्रिवर्गफलमश्नुते ॥ १ ॥ ( × प्राकाम्ये वर्तमाना तु स्नेहान्न तु निवारिता । अवश्या सा भवेत्पश्चाद्यथा व्याधिरुपेक्षितः ॥ २ ॥ अनुकूला न वाग्दुष्टा दक्षा साध्वी प्रियंवदा । आत्मगुप्ता स्वामिभक्ता देवता सा न मानुषी ॥ ३ ॥ ) अनुकूलकलत्रस्य स्वर्गस्तस्य न संशयः । प्रतिकूलकलत्रस्य नरको नात्र संशयः ॥ ४ ॥ स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम् । रक्तमेकं विरक्तं तु तस्मात्कष्टतरं नु किम् ॥ ५ ॥ गृहवासः सुखार्थं हि पत्नीमूलं च तत्सुखम् । सा पत्नी या विनीता स्याच्चित्तज्ञा वशवर्तिनी ॥ ६ ॥ दुःखान्विता कलिर्भेदश्छिद्रं पीडा परस्परम् । प्रतिकूलकलत्रस्य द्विदारस्य विशेषतः ॥ ७ ॥ जलौकेव हि सर्वा स्त्री भूषणाच्छादनाशनैः । सुकृताऽपकृता नित्यं पुरुषं ह्यपकर्षति ॥ ८ ॥ जलौका रक्तमादत्ते केवलं सा तपस्विनी । अङ्गना तु धनं वित्तं मांसं वीर्यं बलं सुखम् ॥ ९ ॥ साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् । तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् ॥ १० ॥ अनुकूला ह्यवाग्दुष्टा दक्षा साध्वी प्रजावती । एतावद्गुणसंयुक्ता श्रीरेव स्त्री न संशयः ॥ ११ ॥ प्रहृष्टा मनसा नित्यं स्थानमानविचक्षणा । भर्तुः प्रीतिकरा या तु सा भार्या त्वितरा जरा ॥ १२ ॥ जिह्वा भार्या शिशुर्भ्राता मित्रो दासः समाश्रिताः । यस्यैते तु विनीताः स्युस्तस्य लोकेऽपि गौरवम् ॥ १३ ॥ प्रथमा धर्मपत्नी स्याद्द्वितीया रतिवर्धिनी । दृष्टमेव फलं तत्र नादृष्टमुपलभ्यते ॥ १४॥ धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत् । दोषे सति न दोषः स्यादन्या कार्या गुणान्विता ॥ १५ ॥ ( = अदुष्टापतितां भार्यां यौवने यः परित्यजेत् । स जीवनान्ते स्त्रीत्वं च वन्ध्यत्वं च समाप्नुयात् ॥ १६ ॥ दरिद्रं व्याधितं चैव भर्तारं याऽवमन्यते । शुनी गृध्री च

---

* एतदर्धात्प्राक् " पत्नीमलं गृहं पुंसा यदि च्छन्दानुवर्तिनी " इति ख. ग. पुस्तकयोः । × धनुश्चिह्नान्तर्गतं ग. पुस्तक एव । = धनुश्चिह्नान्तर्गतस्थानेऽयं ग्रन्थ –ख. ग. पुस्तकातिरिक्तपुस्तकेषु " रूपौदार्यसमायुक्ता विशालकुलसंभवा । सति भर्तरि या नारी उपोष्य व्रतचारिणी । आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् " इति ।

---

१ ग. °लत्रो यस्तस्य स्वर्ग इहैव हि । प्र° । २ ग °क्त एको विरक्तोऽन्यस्तस्मा° । ३ ग. °लं गृहे सुख° । ४ ग °खाद्यन्या सदा खिन्ना चित्तभेद प° । ५ ख. सुभृताऽपि कृ° । ६ ग. °म् । सश° । ७ ग. °ने विमु° । ८ ग. °ते पश्चाद्वृद्ध° । ९ क. घ. च. °क्ता सा स्त्रीरेव । १० ग. °य. । या हृष्टम° । ११ ग. शिष्यो १२ ख. °पपद्यते । ग °पजायते ।

मकरी जायते सा पुनः पुनः ॥ १७ ॥ मृते भर्तरि या नारी समारोहेद्धुताशनम् । सा भवेत्तु शुभाचारा स्वर्गलोके महीयते ॥ १८ ॥ व्यालग्राही यथा व्यालं बला- दुद्धरते विलात् । तथा सा पतिमुद्धृत्य तेनैव सह मोदते ॥ १९ ॥ चाण्डालप्रत्यव- सितपरिव्राजकतापसाः । तेषां जातान्यपत्यानि चाण्डालैः सह वासयेत् ) ॥ २० ॥

इति दाक्षे धर्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

=====

( अथ पञ्चमोऽध्यायः । )

---

( * उक्तं शौचमशौचं च[1] कार्यं त्याज्यं मनीषिभिः । विशेषार्थं तयोः किंचिद्वक्ष्यामि हितकाम्यया ॥ १ ॥ शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः । शौचाचा- रविहीनस्य समस्ता निष्फलाः क्रियाः ॥ २ ॥ शौचं च द्विविधं प्रोक्तं बाह्यमाभ्य- न्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशु[2]द्धिस्तथाऽऽन्तरम्[3] ॥ ३ ॥ आ[4]शौचाद्धि वरं[5] बाह्यं तस्मादाभ्यन्तरं वरम्[6] । उभा[7]भ्यां च शुचिर्यस्तु स शुचिर्नेतरः शुचिः ॥४॥ × एका लिङ्गे गुदे तिस्रो दश वामकरे तथा । उभयोः सप्त दातव्या मृदस्तिस्रस्तु पादयोः ॥ ५ ॥ गृहस्थे शौचमाख्यातं त्रिष्वन्येषु यथाक्रमम् । द्विगुणं त्रिगुणं चैव चतुर्थे च चतुर्गुणम् + ॥ ६ ॥ अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता । द्वितीया च तृतीया च तदर्धार्धा प्रकीर्तिता ॥ ७ ॥ लिङ्गेऽप्यत्र समाख्याता त्रिपर्वं पूर्यते यथा[8] । एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥ ८ ॥ त्रिगुणं तु वनस्थानां यतीनां च चतुर्गुणम् । दातव्यमुदकं तावन्मृदभावो यथा भवेत् ❀ ॥ ९ ॥ मृदा जलेन शुद्धिः स्यान्न क्लेशो[10] न धनव्ययः । यस्य शौचेऽपि शैथिल्यं चित्तं[11] तस्य परीक्षितम् ॥ १० ॥

---

* एतच्चिह्नान्तर्गतग्रन्थः ख. ग. पुस्तकातिरिक्तपुस्तकेषु पूर्वं ( अ० ३ श्लो० २१ ) इत्यस्मादनन्तरं विद्यते । × ख ग पुस्तकातिरिक्तपुस्तकेषु अयं श्लोकः " एका लिङ्गे तिस्रः सव्ये उभयोर्मृद्द्वयं स्मृतम् । पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः " इति वर्तते । + एतदग्रेऽधिकं ख. ग. पुस्तकातिरिक्तपुस्तकेषु " एतच्छौचं द्विजातीनामर्धं शूद्रे विनिर्दिशेत् । ❀ एतदग्रेऽयं श्लोकोऽधिकः ख. ग. पुस्तकातिरिक्तपुस्तकेषु " मृत्तिकाना सहस्रेण उदकुम्भशतेन च । न शुध्यन्ति दुरात्मानो येषा भावो न निर्मल. " इति ।

---

१ क. च पुराविद्भिर्मनी° । घ. च पुरा शौचं म° । २ क. °शुध्या तथाऽऽ° । च. छ. °शुद्धिस्तथा पर° । ३ च. °म् । शौचं त्वन्पतरं वा° । ४ क. शौचं तु ( चास्तु ) व° । ५ घ. परं । ६ क. परम् । ७ क. घ. उभयेन शु° । ८ क घ. °था । दा° । ९ क घ. द्रव्येण । १० क. घ. °शो नैव च व्य° । ११ क. घ. वृत्तं ।

अन्यदेव दिवा शौचं रात्रावन्यद्विधीयते । अन्यदापत्सु विप्राणामन्यदेव ह्यनापदि ॥ ११ ॥ दिवोदितस्य शौचस्य रात्रावर्धं विधीयते । तदर्धमातुरस्याऽऽहुस्त्वरायामर्धमध्वनि ॥ १२ ॥ न्यूनाधिकं न कर्तव्यं शौचं शुद्धिमभीप्सता । प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते ॥ १३ ॥ )

इति दाक्षे धर्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

( अथ षष्ठोऽध्यायः । )

सूतकं तु प्रवक्ष्यामि जन्ममृत्युनिमित्तकम् । यावज्जीवं तृतीयं तु यथावदनुपूर्वशः ॥ १ ॥ सद्यः शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा । षड्दशद्वादशाहाश्च पक्षो मासस्तथैव च ॥ २ ॥ मरणान्तं तथा चान्यद्दश पक्षास्तु सूतके । उपन्यासक्रमेणैव तन्मे निगदतः शृणु ॥ ३ ॥ ग्रन्थार्थं यो विजानाति वेदमङ्गैः समन्वितम् । सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम् ॥ ४ ॥ राजर्त्विग्दीक्षितानां च बाले देशान्तरे तथा । व्रतिनां सत्रिणां चैव सद्यः शौचं विधीयते ॥ ५ ॥ एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥ ६ ॥ शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ ७ ॥ अस्नात्वा चाप्यहुत्वा च ह्यदत्त्वा ये तु भुञ्जते । एवंविधानां सर्वेषां यावज्जीवं तु सूतकम् ॥ ८ ॥ व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा । क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥ ९ ॥ व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः । श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत् ॥ १० ॥ सूतकं न कदाचित्स्याद्यावज्जीवं तु सूतकम् । एवं गुणविशेषेण सूतकं समुदाहृतम् × ॥ ११ ॥ वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः । दशाहषट्त्र्यहैकाहं प्रसवे सूतकं भवेत् ॥ १२ ॥ यज्ञे प्रवर्तमाने तु जायते म्रियतेऽपि वा । पूर्वसंकल्पितार्थानां न दोषस्तत्र विद्यते ॥ १३ ॥ यज्ञकाले विवाहे च देवयागे तथैव च । हूयमाने तथा चाग्नौ नाशौचं नैव सूतकम् ॥ १४ ॥ स्वस्थकाले तथा सर्वं सूतकं परिकीर्तितम् । आपद्ग्रस्तस्य सर्वस्य सूतकेऽपि न सूतकम् ॥ १५ ॥

इति दाक्षे धर्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

× इतः परमधिकवचनान्युपलभ्यन्ते ख ग पुस्तकयोः—"सूतके मृतके चैव तथा च मृतसूतके । एतत्संहतशौचाना मृतशौचेन शुध्यति । दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते । दशाहात्तु परं शौचं विप्रोऽर्हति च धर्मवित् । दानं च विधिना देयमशुभात्तारकं हि तत् । मृतकान्ते मृतो यस्तु सूतकान्ते च सूतकम् । एतत्संहतशौचाना पूर्वाशौचेन शुध्यति । उभयत्र दशाहानि कुलस्यान्नं न भुज्यते । चतुर्थेऽहनि कर्तव्यमस्थिसंचयनं द्विजैः । ततः संचयनादूर्ध्वमङ्गस्पर्शो विधीयते" इति ।

१ क. घ. च °दि । यद्दिवा विहितं शौचं तदर्धं तु निशि स्मृतम् । तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि । २ क. घ. च °व्यं नित्यं शु° । ३ घ. °मेण च । ४ ग °त्युसमुद्भवम् । ५ ग °था । दशाहो द्वादशाहश्च । ६ क. ग घ. षडहद्वा° । ७ ख. ग °न्यार्यतो वि° । च छ °न्यार्यान्यो वि° । ८ ख ग. °तकी । रा° । ९ ख. ग. °ले त्विदं सर्वमशौचं प° । १० ख. ग. °पद्गतस्य स° ।

( अथ सप्तमोऽध्यायः । )

---

अतः परं प्रवक्ष्यामि योगस्य विधिमुत्तमम् । लोको वशीकृतो यैस्तु यैरात्मा च वशीकृतः ॥ १ ॥ इन्द्रियार्था[1]स्तपस्तेषां योगं वक्ष्याम्यशेषतः (?)॥ २ ॥ प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा । तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ३ ॥ नारण्यसेवनाद्योगो नानेकग्रन्थचिन्तनात् । व्रतैर्यज्ञैस्तपोभिर्वा न योगः कस्यचिद्भवेत् ॥४॥ न च[2] पद्मासनाद्योगो न नासाग्रनिरीक्षणात् । न च शास्त्राति[3]रिक्तेन शौचेन भवति क्वचित् ॥ ५ ॥ न मौनमन्त्रकुहकै[4]रनेकैः सुकृतैस्तथा[5] । लोकयात्रा[6]भियुक्तस्य न योगः कस्यचिद्भवेत् ॥ ६ ॥ अभियोगात्तथाऽभ्यासात्तस्मिन्नेव सुनिश्चयात् । पुनः पुनश्च निर्वेदाद्योगा[7]ः सिध्यन्ति नान्यथा * ॥ ७ ॥ यश्चाऽऽत्म[8]मिथुनो नित्यमात्मक्रीडस्तथैव च । आत्मानन्दश्च[9] सततमात्मन्येव[10][11] समाहितः ॥ ८ ॥ अस्मिन्नेव सुतृप्तश्च संतुष्टो नान्यमानसः । आत्मन्येव सुतृ[12]प्तस्य योगो भवति नान्यथा ॥ ९ ॥ स्वप्नेऽपि योऽभियुक्तश्च जाग्रच्चैव विशेषतः । ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥१०॥ यस्त्वात्मव्यतिरेकेण द्वितीयं नैव पश्यति । ब्रह्मभूतः स विज्ञेयो दक्षपक्ष उदाहृतः ॥११॥ विषयासक्तचित्तो हि[13] कश्चिद्योगं न विन्दति । यत्नेन विषयास[14]ङ्गं तस्माद्योगी विवर्जयेत् ॥ १२ ॥ विषयेन्द्रियसंयोगं केचिद्योगं वदन्ति च । अधर्मो धर्मबुध्या तु गृहीतस्तैरपण्डितैः ॥ १३ ॥ आत्मनो मनसश्चैव संयोगं च तथा परे । उ[15]त्तानमनसो ह्येते केवलं योगवञ्चिताः ॥ १४ ॥ वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि । एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥ १५ ॥ कषायमोहविक्षेपलज्जाशङ्कादिचेतसः । व्यापारास्तु समाख्याता[16]स्तैर्हीनं वशमानयेत् ॥ १६ ॥ कुटुम्बैः पञ्चभिर्ग्रामः ष[17]ष्ठं तत्र महत्तमः । देवासुरमनुष्यैस्तु स जेतुं नैव शक्यते ॥ १७ ॥

---

* इत उत्तरमेतद्वचनमधिकं ख. ग. पुस्तकयोः—" आत्मचिन्ताविनोदेन शौचक्रीडनकेन च । सर्वभूतसमत्वेन योगः सिध्यति नान्यथा " इति ।

---

१ ख. °यार्थमतस्तस्य यो° । ग. °यार्थो जितो येन तं योगं प्रब्रवीम्यहम् । प्रा° । २ च. च भद्रास° । ३ ख ग. पथ्याशना° । ४ च. °तिरेकेण न शौचं न भवेत्क्वचि° । ५ क. घ. ङ. °कैः कुसृतै° । ६ च. °था । योगशास्त्राभि° । ७ ख. °त्रानियु° । ग. °त्राविंयु° । ८ घ. च. °द्योगः सिध्यति ना° । ९ ग. °त्मनि रतो नि° । १० ग. आत्मनिष्ठश्च । ११ ग. °व स्वभावतः । रतश्चैव स्वयं तुष्टः सं° । १२ ख. ग. °तृप्तोऽसौ योगस्तस्य प्रसिध्यति । सुप्तोऽपि योगयुक्त स्याज्जाग्रच्चापि वि° । १३ ग. हि यतिर्मोक्षं न । १४ ख. ग. °सक्तिं त° । १५ ख ग. उक्तानामधिका ह्ये° । १६ ग. °तास्ताञ्जित्वा व° । १७ ख. ग. षष्ठस्तत्र महत्तरः । दे° ।

बलेन परराष्ट्राणि गृह्णञ्शूरस्तु नोच्यते । जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः ॥ १८ ॥ न स्थिरं क्षणमप्येकमुदकं च यथोर्मिभिः । वाताहतं तथा चित्तं तस्मात्तस्य न विश्वसेत् ॥ १९ ॥ बाहिर्मुखानि( णि ) सर्वाणि कृत्वा चान्तर्मुखानि ( णि ) वै[2] । मनसैवेन्द्रियग्रामं मनश्चाऽऽत्मनि योजयेत् ॥ २० ॥ सर्वभावविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् । एतज्ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तरः ॥ २१ ॥ चतुर्णां संनिकर्षेण फलं यत्तदशाश्वतम् । द्वयोस्तु संनिकर्षेण शाश्वतं पदमव्ययम् ॥ २२ ॥ यन्नास्ति सर्वलोकस्य तदस्तीति विरुध्यते[6] । कथ्यमानं तथाऽन्यस्य हृदये नावतिष्ठते ॥ २३ ॥ स्वसंवेद्यं हि तद्ब्रह्म कुमारी स्त्रीसुखं यथा । अयोगी नैव जानाति जात्यन्धो हि यथा घटम् ॥ २४ ॥ नित्याभ्यसनशीलस्य स्वसंवेद्यं हि तद्भवेत् । तत्सूक्ष्मत्वादनिर्देश्यं परं ब्रह्म सनातनम् ॥ २५ ॥ बुधा ह्याभरणं भारं मलमालेपनं तथा । मन्यन्ते स्त्री च मूर्खश्च तदेव बहु मन्यते ॥ २६ ॥ सत्त्वोत्कटाः सुराः सर्वे विषयैश्च वशीकृताः । प्रमादिनि[10] क्षुद्रसत्त्वे मनुष्ये चात्र का कथा ॥ २७ ॥ तस्मात्त्यक्तकषायेण कर्तव्यं दण्डधारणम् । इतरस्तु न शक्नोति विषयैरभिभूयते ॥ २८ ॥ वैणवेन त्रिदण्डेन न त्रिदण्डीति कथ्यते । अध्यात्मदण्डयुक्तो यः स त्रिदण्डीति कथ्यते २९ ॥ वाग्दण्डोऽथ मनोदण्डः कर्मदण्डश्च ते त्रयः । यस्यैते तु त्रयो दण्डाः स त्रिदण्डीति कथ्यते ॥ ३० ॥ त्रिदण्डव्यपदेशेन जीवन्ति बहवो जनाः । यो हि ब्रह्म न जानाति त्रिदण्डार्हो भवेन्न सः * ॥ ३१ ॥ नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन । एतैः सर्वैस्तु संपन्नो यतिर्भवति नेतरः ॥ ३२ ॥ पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति । श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥ ३३ ॥ एको भिक्षुर्यथोक्तस्तु द्वौ भिक्षू मिथुनं स्मृतम् । त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥ ३४ ॥ नगरं हि न कर्तव्यं ग्रामो वा मिथुनं तथा । एतत्त्रयं प्रकुर्वाणः स्वधर्माच्च्यवते यतिः ॥ ३५ ॥ राजवार्ता ततस्तेषां भिक्षावार्ता परस्परम् । स्नेहपैशुन्यमात्सर्यं संनिकर्षान्न संशयः ॥ ३६ ॥ लाभपूजानिमित्तं तु व्याख्यानं शिष्यसंग्रहः । एते चान्ये च बहवः प्रपञ्चाः कुतपस्विनाम् ॥ ३७ ॥ ध्यानं शौचं तथा भिक्षा नित्यमेकान्तशीलता । भिक्षोश्चत्वारि कर्माणि पञ्चमं नोपपद्यते ॥ ३८ ॥

---

* इतः परमधिको ग्रन्थ. ख. ग. पुस्तकयोः–" ब्रह्मचर्यं सदा रक्षेदष्टधा मैथुनं पृथक् । स्मरणं कीर्तनं केलि प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिण. " इति ।

---

१ ख ग. चाभिमुखा° । २ ग. वै । सर्वं चैवे° । ३ ग °तद्ध्यानं च योगश्च शेषा स्युर्ग्रन्थविस्तराः । त्यक्त्वा विषयभोगांश्च मनो निश्चलता गतम् । आत्मशक्तिस्वरूपेण समाधि. परिकीर्तित । च° । ४ ग. पदं । ५ ख. ग. °तं ध्रुवमक्षय° । ६ ख निरुच्यते । ७ ख ग. °री मैथनं य° । ८ ख. ग °स्य सुखं° । ९ ख. सुरास्तेऽपि °वि । १० ख. ग. °दिभि. क्षुद्रसत्त्वैर्मानुषैरत्र ।

तपोजपैः[1] कृशी भूत्वा व्याधिता वसथाद्बहिः । वृद्धा ग्रहगृहीताश्च ये चान्ये विकलेन्द्रियाः[3] ॥ ३९ ॥ नीरुजश्च युवा चैव ब्रह्मचर्याद्विनश्यति । ब्रह्मचर्याद्विनष्टश्च कुलं गोत्रं च नाशयेत् ॥ ४० ॥ वसन्नावसथे भिक्षुर्मैथुनं यदि सेवते । तस्यावसथनाशः स्यात्कुलान्यपि[5] हि कृन्तति ॥ ४१ ॥ आश्रमे तु यतिर्यस्य मुहूर्तमपि विश्रमेत् । किं तस्यान्येन धर्मेण कृतकृत्योऽभिजायते ॥ ४२ ॥ संचितं यद्गृहस्थेन पापमामरणान्तिकम्[6] । निर्दहत्येव[7] तत्सर्वमेकरात्रोषितो यतिः[8] ॥ ४३ ॥ अध्वश्रमपरिश्रान्तं[9] यस्तु भोजयते यतिम् । निखिलं भोजितं तेन त्रैलोक्यं सचराचरम् ॥ ४४ ॥ यस्मिन्देशे वसेद्योगी ध्यायी[10] योगविचक्षणः । सोऽपि देशो भवेत्पूतः किं पुनस्तस्य बान्धवाः ॥ ४५ ॥ अद्वैतं च तथा द्वैतं द्वैताद्वैतं तथैव च । न द्वैतं नापि चाद्वैतमित्येतत्पारमार्थिकम् ॥ ४६ ॥ नाहं[11] द्वैतं च संबन्धो ब्रह्मभावेन भावितः । ईदृशायामवस्थायामवाप्तं[12] परमं पदम् ॥ ४७ ॥ द्वैतपक्षः समाख्यातो[13] द्वैतं ये तु समाश्रिताः । अद्वैतानां प्रवक्ष्यामि यथा शास्त्रस्य निश्चयः ॥ ४८ ॥ अत्राऽऽत्मव्यतिरेकेण द्वितीयं[14] नैव पश्यति । अतः[15] शास्त्राण्यधीयन्ते श्रूयन्ते ग्रन्थविस्तराः[16] ॥ ४९ ॥ (*दक्षशास्त्रं[17] यथाप्रोक्तमशेषाश्रममुत्तमम् । अधीयते तु ये विप्रास्ते यान्त्यमरलोकताम् ॥ ५० ॥ इदं तु यः पठेद्भक्त्या शृणुयादधमोऽपि वा । स पुत्रपौत्रपशुमान्कीर्तिं च समवाप्नुयात् ॥ ५१ ॥ श्रावयित्वा त्विदं शास्त्रं श्राद्धकालेऽपि वा द्विजः । अक्षय्यं भवति श्राद्धं पितृभ्यश्चो[18]पजायते ॥ ५२ ॥ )

इति दाक्षे धर्मशास्त्रे सप्तमोऽध्यायः ॥ ७ ॥

समाप्तमिदं दक्षप्रणीतं धर्मशास्त्रम् ।

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ख. ग. पुस्तकातिरिक्तपुस्तकेष्वयं ग्रन्थ –" योगमभ्यसमानस्य ध्रुवं कश्चिदुपद्रवः । विद्या वा यदि वाऽविद्या शरणं तु जनार्दनः । कृत्वा पर्यङ्कबन्धं करकमलपुटे न्यस्य हृत्संज्ञदेशे नासाग्रे स्थाप्य दृष्टिं स्थिरनिभृतपदं निश्चलं स्वस्थकाय. । इच्छन्नोंकारमेकं स भवति सुकृती योगमार्गानुकारी तत्त्वज्ञानेन सर्वं भुवि भुवनमिदं मण्डलं याति भित्त्वा । य इदं पठते शास्त्रं विप्रेभ्यश्च प्रयच्छति । सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते " इति ।

---

१ ख. °पोभिर्ये कृशीभूता व्याधितावसथार्हतः । वृद्धा रोगगृ° । २ ग. कृशीभूतो व्याधितोऽवसथावह. । गृ° । ३ क च. °याः । निरु० । ४ ख. ग °नाथस्य मूला° । ५ ख. ग. °पि निकृ° । ६ ख °मात्मनि आब्दिकम् । विप्र(प्र)ष्यति त° । ७ क. ङ. च निर्हरत्ये° । ८ ख °तिः । ध्यानयोगप° । ग. °ति. । योगाश्र° । ९ क. ङ. अथाऽश्र° । १० ख. ग. ध्यानयो° । ११ ख. °हं नैव तु सं° । ग. °हं नैवान्यसं° । १२ ग. °वाप्यं प° । १३ ख. ग. °तो येऽद्वैतं तु व्यवस्थिता । १४ ख. °यं यो विप° । ग. °यं यदि प° । १५ ग. तत । १६ ग. ग्रन्थसंचयाः । १७ ख °शास्त्रे यथा प्रोक्तमाश्रमप्रतिपालनम् । अ° । १८ ख. पितृंश्चैवोपतिष्ठते ।

ॐ तत्सद्ब्रह्मणे नमः ।

# देवलस्मृतिः ।

सिन्धुतीरे सुखासीनं देवलं मुनिसत्तमम् । समेत्य मुनयः सर्वे इदं वचनमब्रुवन् ॥ १ ॥ भगवन्म्लेच्छनीता हि कथं शुद्धिमवाप्नुयुः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवानुपूर्वशः ॥ २ ॥ कथं स्नानं कथं शौचं प्रायश्चित्तं कथं भवेत् । किमाचारा भवेयुस्ते तदाचक्ष्व सविस्तरम् ॥ ३ ॥

देवल उवाच—

त्रिशङ्कुं वर्जयेद्देशं सर्वं द्वादशयोजनम् । उत्तरेण महानद्या दक्षिणेन तु कीकटम् ॥ ४ ॥ प्रायश्चित्तं प्रवक्ष्यामि विस्तरेण महर्षयः ॥ ५ ॥ मृतसूते तु दासीनां पत्नीनां चानुलोमिनाम् । स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौनिकम् ॥ ६ ॥ अपेयं येन संपीतमभक्ष्यं चापि भक्षितम् । म्लेच्छैर्नीतेन विप्रेण अगम्यागमनं कृतम् ॥ ७ ॥ तस्य शुद्धिं प्रवक्ष्यामि यावदेकं तु वत्सरम् । चान्द्रायणं तु विप्रस्य सपराकं प्रकीर्तितम् ॥ ८ ॥ पराकमेकं क्षत्रस्य पादकृच्छ्रेण संयुतम् । पराकार्धं तु वैश्यस्य शूद्रस्य दिनपञ्चकम् ॥ ९ ॥ नखलोमविहीनानां प्रायश्चित्तं प्रदापयेत् । चतुर्णामपि वर्णानामन्यथाऽशुद्धिरस्ति हि ॥ १० ॥ प्रायश्चित्तविहीनं तु यदा तेषां कलेवरम् । कर्तव्यस्तत्र संस्कारो मेखलादण्डवर्जितः ॥ ११ ॥ म्लेच्छैर्नीतेन शूद्रैर्वा हारिते दण्डमेखले । संस्कारप्रमुखं तस्य सर्वं कार्यं यथाविधि ॥ १२ ॥ संस्कारान्ते च विप्राणां दानं धेनुश्च दक्षिणा । दातव्यं शुद्धिमिच्छद्भिरश्वगोभूमिकाञ्चनम् ॥ १३ ॥ तदाऽसौ तु कुटुम्बानां पङ्क्तिं प्राप्नोति नान्यथा । स्वभार्यां च यथान्यायं गच्छन्नेव विशुध्यति ॥ १४ ॥ अथ संवत्सरादूर्ध्वं म्लेच्छैर्नीतो यदा भवेत् । प्रायश्चित्ते तु संचीर्णे गङ्गास्नानेन शुध्यति ॥ १५ ॥ सिन्धुसौवीरसौराष्ट्रं तथा प्रत्यन्तवासिनः । *कलिङ्गकौङ्कणान्वङ्गान्गत्वा संस्कारमर्हति ॥ १६ ॥ बलाद्दासीकृता ये च म्लेच्छचाण्डालदस्युभिः । अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ॥ १७ ॥ उच्छिष्टमार्जनं चैव तथा तस्यैव भोजनम् । खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् ॥ १८ ॥ तत्स्त्रीणां च तथा सङ्गं ताभिश्च सह भोजनम् ।

---

* एतदर्धस्थानेऽयं पाठो घ. पुस्तके—" काम्बोजसकलिङ्गाश्च गत्वा " इति ।

---

१ ख. °निपुंगवम् । २ ग. घ. ये । ३ घ. °ना तु विलो° । ४ ग. यौनक° । ५ क धर्नं । ६ ग. घ. °रश्वगो° । ७ घ. °सौ स्वकु° । ८ क गच्छन्नैव । ख. गच्छेचैव । ९ क ख. °न्गाङ्गास्नानेन शुध्यति । १० घ. °व भक्षणम् ।

मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् ॥ १९ ॥ चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथ वा भवेत् । चान्द्रायणं पराकं च चरेत्संवत्सरोषितः ॥ २० ॥ संवत्सरोषितः शूद्रो मासार्धं यावकं पिबेत् । मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति॥२१॥ ऊर्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः । संवत्सरैश्चतुर्भिश्च तद्भावमधिगच्छति ॥ २२ ॥ ह्रासो न विद्यते यस्य प्रायश्चित्तं दुरात्मनः । गुह्यकक्षाशिरोभ्रूणां कर्तव्यं केशवापनम् ॥ २३ ॥ प्रायश्चित्तं समारभ्य प्रायश्चित्तं तु कारयेत् । स्नानं त्रिकालं कुर्वीत धौतवासा जितेन्द्रियः ॥ २४ ॥ कुशहस्तः सत्यवक्ता देवलेन ह्युदाहृतम् । वत्सरं वत्सरार्धं वा मासं मासार्धमेव वा ॥ २५ ॥ बलान्म्लेच्छैस्तु यो नीतस्तस्य शुद्धिस्तु कीदृशी । संवत्सरोषिते शूद्रे शुद्धिश्चान्द्रायणेन तु ॥ २६ ॥ पराकं वत्सरार्धे च पराकार्धं त्रिमासिके । मासिके पादकृच्छ्रश्च नखरोमाविवर्जितः॥२७॥ पादोनं क्षत्रियस्योक्तमर्धं वैश्यस्य दापयेत् । प्रायश्चित्तं द्विजस्योक्तं पादं शूद्रस्य दापयेत् ॥ २८ ॥ प्रायश्चित्तावसाने तु दोग्ध्री गौर्दक्षिणा मता । तथाऽसौ तु कुटुम्बान्ते ह्युपविष्टो न दुष्यति ॥ २९ ॥ अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च ॥ ३० ॥ ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च । प्रायश्चित्तं चरेद्भ्राता पिता वाऽन्योऽपि वर्धिता ॥ ३१ ॥ स्वयं व्रतं चरेत्सर्वमन्यथा नैव शुध्यति । तिलहोमं प्रकुर्वीत जपं कुर्यादतन्द्रितः ॥ ३२ ॥ संलापस्पर्शनिःश्वाससहयानासनाशनात् । याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम् ॥३३॥ याजनं योनिसंबन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतत्येव पतितेन न संशयः ॥ ३४ ॥ संवत्सरेण पतति पतितेन सहाऽऽचरन् । याजनासनयज्ञादि कुर्वाणः सार्वकामिकम् ॥ ३५ ॥ अतः परं प्रवक्ष्यामि प्रायश्चित्तमिदं शुभम् । स्त्रीणां म्लेच्छैश्च नीतानां बलात्संवेशने क्वचित् ॥ ३६ ॥ ब्राह्मणी क्षत्रिया वैश्या शूद्रा नीता यदाऽन्त्यजैः । ब्राह्मण्याः कीदृशं न्याय्यं प्रायश्चित्तं विधीयते ॥ ३७ ॥ ब्राह्मणी भोजयेन्म्लेच्छमभक्ष्यं भक्षयेद्यदि । पराकेण ततः शुद्धिः पादेनोत्तरतोत्तरान् ( दानेनोत्तरोत्तरा ) ॥ ३८ ॥ न कृतं मैथुनं ताभिरभक्ष्यं नैव भक्षितम् । शुद्धिस्तदा त्रिरात्रेण म्लेच्छान्नेनैव भक्षिते ॥ ३९ ॥ रजस्वला यदा स्पृष्टा म्लेच्छेनान्येन वा पुनः । त्रिरात्रमुषिता स्नात्वा पञ्चगव्येन शुध्यति ॥४०॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया

---

१ घ. °जातीना प्रायश्चित्तं वि° । २ ग. °द्भावं स च ग° । ३ ग तस्य । ४ ग. विप्रे । ५ ख. ग. तु पुष्कला दक्षिणा स्मृता । ६ क. °म्बान्तैरुप° । ७ ग. °णः सार्वकालिक° । ८ ग. अयात संप्र° । ९ ख. °णीभाग° । ग. °णी भजते म्लेच्छ° । १० ख. ग. °सुपोपि° ।

तथा । त्रिरात्रेण विशुद्धिः स्याद्देवलस्य वचो यथा ॥ ४१ ॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजा तथा । पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥ ४२ ॥ ब्राह्मण्यनशनं कुर्यात्क्षत्रिया स्नानमाचरेत् । सचैलं वैश्यजातीनां नक्तं शूद्रे विनिर्दिशेत् ॥ ४३ ॥ म्लेच्छान्नं म्लेच्छसंस्पर्शो म्लेच्छेन सह संस्थितिः । वत्सरं वत्सरादूर्ध्वं त्रिरात्रेण विशुध्यति ॥ ४४ ॥ म्लेच्छैर्हृतानां चौरैर्वा कान्तारेषु प्रवासिनाम् । भुक्त्वा भक्ष्यमभक्ष्यं वा क्षुधार्तेन भयेन वा ॥ ४५ ॥ पुनः प्राप्य स्वकं देशं चातुर्वर्ण्यस्य निष्कृतिः । कृच्छ्रमेकं चरेद्विप्रस्तदर्धं क्षत्रियश्चरेत् । पादोनं च चरेद्वैश्यः शूद्रः पादेन शुध्यति ॥ ४६ ॥ गृहीता स्त्री बलादेव म्लेच्छैर्गुर्वीकृता यदि । गुर्वी न शुद्धिमाप्नोति त्रिरात्रेणेतरा शुचिः ॥ ४७ ॥ योषा गर्भं विधत्ते या म्लेच्छात्कामादकामतः । ब्राह्मणी क्षत्रिया वैश्या शूद्रा वर्णेतरा च या ॥ ४८ ॥ अभक्ष्यभक्षणं कुर्यात्तस्याः शुद्धिः कथं भवेत् । कृच्छ्रं सांतपनं शुद्धिर्घृतैर्योनेश्च पाचनम् ॥ ४९ ॥ असवर्णेन यो गर्भः स्त्रीणां योनौ निषिच्यते । अशुद्धा सा भवेन्नारी यावच्छल्यं न मुञ्चति ॥ ५० ॥ विनिःसृते ततः शल्ये रजसो वाऽपि दर्शने । तदा सा शुध्यते नारी विमलं काञ्चनं यथा ॥ ५१ ॥ स गर्भो दीयतेऽन्यस्मै स्वयं ग्राह्यो न कर्हिचित् । स्वजातौ वर्जयेद्यस्मात्संकरः स्यादतोऽन्यथा ॥ ५२ ॥ गृहीतो यो बलान्म्लेच्छैः पञ्च षट् सप्त वा समाः । दशादि विंशतिं यावत्तस्य शुद्धिर्विधीयते ॥ ५३ ॥ प्राजापत्यद्वयं तस्य शुद्धिरेषा विधीयते । अतः परं नास्ति शुद्धिः कृच्छ्रमेव सहोषिते ॥ ५४ ॥ म्लेच्छैः सहोषितो यस्तु पञ्चप्रभृति विंशतिः । वर्षाणि शुद्धिरेषोक्ता तस्य चान्द्रायणद्वयम् ॥ ५५ ॥ कक्षागुह्यशिरःश्मश्रुभ्रूलोमपरिकृन्तनम् । प्राहृत्य पाणिपादानां नखलोम ततः शुचिः ॥ ५६ ॥ यो दातुं न विजानाति प्रायश्चित्तं द्विजोत्तमः । शुद्धिं ददाति चान्यस्मै तदशुद्धेः स भाजनम् ॥ ५७ ॥ सभायां स्पर्शने चैव म्लेच्छेन सह संविशेत् । कुर्यात्स्नानं सचैलं तु दिनमेकमभो-

---

१ क °द्र्या त° । २ क °च्छैर्हृता° । ३ घ. °षु निवा° । ४ ख. गुर्व्या न शुद्धिमिच्छन्ति त्रि° । ५ क. ख. °त्रेण विशुध्यति । योषा । ६ ग °णं कृत्वा शुद्धिस्तस्या. क° । ७ घ °र्योनिविपा° । ८ क. तत । ९ ग. °त् । स योनौ व° । १० ग. प्रकीर्तिता । ११ ग. शुद्धिर्यस्तु म्लेच्छै. सहोषितः । म्ले° ।

जनम् ॥ ५८ ॥ माता म्लेच्छत्वमागच्छेत्पितरो वा कथंचन। असूतकं च नष्टस्य देवलस्य वचो यथा ॥ ५९ ॥ मातरं च परित्यज्य पितरं च तथा सुतः। ततः पितामहं चैव शेषपिण्डं तु निर्वपेत् ॥ ६० ॥ स्त्रीणां चैव तु शूद्राणां पतितानां तथैव च। पञ्चगव्यं न दातव्यं दातव्यं मन्त्रवर्जितम् ॥ ६१ ॥ वरुणो देवता मूत्रे गोमये हव्यवाहनः। सोमः क्षीरे दध्नि वायुर्घृते रविरुदाहृतः ॥ ६२ ॥ गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चैव गोमयम्। पयः काञ्चनवर्णाया नीलायाश्चापि गोर्दधि ॥ ६३ ॥ घृतं वै कृष्णवर्णाया विभक्तिर्वर्णगोचरा[1]। उदकं सर्ववर्णं[2] स्यात्कस्य वर्णो न गृह्यते ॥ ६४ ॥ *षण्मात्रिकं तु गोमूत्रं गोमयं च कुशोदकम्। त्रिमात्रिकं घृतं क्षीरं दधि स्याद्दशमात्रिकम् ॥ ६५ ॥ व्रते तु[3] सर्ववर्णानां पञ्चगव्यं तु संख्यया। प्रायश्चित्तं यथोक्तं तु दातव्यं[4] ब्रह्मवादिभिः ॥ ६६ ॥ अन्यथा दापयेद्यस्तु प्रायश्चित्ती भवेद्द्विजः ॥ ६७ ॥ कपिलायाश्च गोर्दुग्ध्वा धारोष्णं यः पयः पिबेत्। एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् ॥ ६८ ॥ तिलहोमं प्रकुर्वीत जपं कुर्यादतन्द्रितः। विष्णोः रराटमन्त्रेण प्रायश्चित्ती विशुध्यति ॥ ६९ ॥ बहुनाऽत्र किमुक्तेन तिलहोमो विधीयते। तिलान्दत्त्वा तिलान्भुक्त्वा कुर्वीताघनिवारणम् ॥७०॥ संपादयन्ति यद्विप्राः स्नानं तीर्थफलं तपः[5]। संपादी क्रमते पापं तस्य संपद्यते फलम् ॥ ७१ ॥ प्रायश्चित्तं समाख्यातं यथोक्तं देवलेन तु। इतरेषामृषीणां च नान्यथा[6] वाक्यमर्हथ ॥ ७२ ॥ सुवर्णदानं गोदानं भूमिदानं गवाह्निकम्। विप्रेभ्यः संप्रयच्छेत प्रायश्चित्ती विशुध्यति[7] ॥ ७३ ॥ पञ्चाहान्सहवासेन संभाषणसहाशनैः। संप्राश्य पञ्चगव्यं तु दानं दत्त्वा विशुध्यति ॥ ७४ ॥ एकद्वित्रिचतुःसंख्यान्वत्सरान्संवसेद्यदि। म्लेच्छवासं द्विजश्रेष्ठः क्रमतो[8] द्रव्ययोगतः ॥ ७५ ॥ एकाहेन तु गोमूत्रं द्व्यहेनैव तु गोमयम्। त्र्यहात्क्षीरेण संयुक्तं चतुर्थे दधिमिश्रितम् ॥ ७६ ॥ पञ्चमे घृतसंपूर्णं पञ्चगव्यं प्रदापयेत्। पञ्चसप्तदशाहानि[11] पञ्चदशाच्च[12][13] विंशतिः ॥७७॥ संवासं च प्रवक्ष्यामि देहशुद्धिं द्विजन्मनाम्। पञ्चाहं[14] पञ्चगव्यं स्यात्पादकृच्छ्रं दशाहिके ॥ ७८ ॥ पराकं पञ्चदशभिर्विंशे[15]ऽतिकृच्छ्रमेव च। उदरं प्रविशेद्यस्य[16] पञ्चगव्यं विधानतः ॥ ७९ ॥

---

*एतद्वचनस्थानेऽयं पाठः—"एकमात्रं तु गोमूत्रं गोमयं तु द्विमात्रकम्। त्रिमात्रकं घृतं क्षीरं दधि स्याद्दशमात्रकम्" इति ख. ग. पुस्तकयोः।

---

१ क. °र्वनगो°। २ ख. ग. °र्णं तु कस्य। ३ ग दुष्यति। ४ ग. तु पञ्चव°। ५ ख. ग. °व्यं ब्राह्मणैः सह। अ°। ६ घ. °पः। सम्यक्पादकृते। ७ ग. °था वक्तुमर्हति। सु°। ८ घ. °भ्य. प्रथमं यच्छेत्प्राय°। ९ क. °ति। एवं द्विसहवा°। घ. °ति। सहद्विवा°। १० ख. ग. °मते द्र°। ११ ग. °नि सपञ्च दशविंशतिः। १२ घ. पञ्चाशदन्तर्विं°। १३ ख. °दशवि। १४ क. ख. पञ्चाहे। १५ ख. ग. °शके विंशे कृच्छ्रं समाचरेत्। क°। १६ क. घ. °यस्तु प°।

यत्किंचिद्दुष्कृतं तस्य सर्वं नश्यति देहिनः । पञ्च सप्ताष्ट दश वा द्वादशाहोऽपि विंशतिः । म्लेच्छैर्नीतस्य विप्रस्य पञ्चगव्यं विशोधनम् × ॥ ८० ॥ * पञ्चगव्यं च गोक्षीरं दधि मूत्रं घृतं पयः । प्राश्यापरेऽह्न्युपवसेत्कृच्छ्रं सांतपनं चरेत् ॥ ८१ ॥ पृथक्सांतपनं द्रव्यैः षडहः सोपवासकः । सप्ताहेन तु कृच्छ्रोऽयं महासांतपनः स्मृतः ॥ ८२ ॥ पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः । प्रत्येकं प्रत्यहं पीतैः पू(प)र्णकृच्छ्र उदाहृतः ॥ ८३ ॥ तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् । एकरात्रोपवासश्च तप्तकृच्छ्रस्तु पावनः ॥ ८४ ॥ एकभक्तेन नक्तेन तथैवायाचितेन तु । उपवासेन चैकेन पादकृच्छ्र उदाहृतः ॥ ८५ ॥ कच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् । द्वादशाहोपवासेन पराकः परिकीर्तितः ॥ ८६ ॥ पिण्याकशाकतक्राम्बुसक्तूनां प्रतिवासरम् । एकरात्रोपवासश्च कृच्छ्रः सौम्यः प्रकीर्तितः ॥ ८७ ॥ एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् । तुलापुरुषं इत्येष ज्ञेयः पञ्चदशाहिकः ॥ ८८ ॥ तिथिवृद्ध्या चरेत्पिण्डाञ्शुक्ले शिख्यण्डसंमितान् । एकैकं ह्रासयेत्पिण्डान्कृच्छ्रचान्द्रायणं चरेत् ॥ ८९ ॥ यथाकथंचित्पिण्डानां चत्वारिंशच्छतद्वयम् । इति देवल(ले) [न]कृतं धर्मशास्त्रं प्रकीर्तितम् ॥ ९० ॥

समाप्तेयं देवलस्मृतिः ।



× अत्रैव देवलस्मृतेः परिसमाप्तिर्दृश्यते ख ग पुस्तकयोः । अग्रिमग्रन्थस्तु न विद्यते । * एतदादिवचनानां पाठो याज्ञवल्क्यस्मृतौ किंचिद्भेदेनोपलभ्यते ।

१ घ. °पनं स्मृतम् । प° । २ क. °प्रमित्ये° । ३ क °हिकम् । ति° । ४ घ. स्मृतम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

# प्रजापतिस्मृतिः ।

पितुर्वाक्यार्थकारी च रुचिः प्रम्लोचया सह ।ःनमस्योवाच देवेशं ब्रह्माणं जगतः पतिम् ॥ १ ॥ ब्रह्मन्विधे विरिञ्चेति धातः शंभो प्रजापते । त्वत्प्रसादादिमं धर्मं जग्राह पितृवाक्यतः ॥ २ ॥ अनया सह तीर्थेषु मया श्राद्धान्यनेकशः । कृतानि पितृतुष्ट्यर्थं धनार्थं पुत्रकाम्यया ॥ ३ ॥ स्मृतयश्च पुराणानि त्वया दृष्टान्यनेकशः । दृष्टस्त्वनेकधा धातः श्राद्धकल्पः सविस्तरः ॥ ४ ॥ तथाऽप्यसंशयापन्नं क्रियमाणविधिं वद । येन विज्ञानमात्रेण न मुह्येऽहं कदाचन ॥ ५ ॥ चतुर्णामपि वेदानां शाखाः सन्ति सहस्रशः । अज्ञानादल्पशास्त्रार्था मोहयन्ति पदे पदे ॥ ६ ॥ कस्मिन्काले च कर्तव्यं कर्ता श्राद्धस्य कीदृशः । द्रव्यं देशः पाककर्ता कदा विप्रान्निमन्त्रयेत् ॥ ७ ॥ ब्राह्मणाः कीदृशास्तत्र नियमास्तत्र कीदृशाः । श्राद्धोपहारपात्राणि भक्ष्यं तत्कालदेवता ॥ ८ ॥ ततः श्राद्धेषु के मन्त्राः पदार्थादिक्रमः कथम् । आसनावाहनान्यर्घोऽग्नौ होमः पात्रा(त्र)लम्भनम् ॥ ९ ॥ विप्रभोज्यं पिण्डदानं क्षमापनविधिक्रमम् । वैश्वदेवं भृत्यभोज्यं वद सायंतनं विधिम् ॥ १० ॥ ब्रह्मोवाच— पितरस्तत्र तुष्टा वै रुचे शृणु महामते । मालिन्यां रौच्यनामा वै त्वत्तः पुत्रो भविष्यति ॥ ११ ॥ नदी तर्तुमनाः पारं पराचारस्य वि(वे)त्ति कस्(कः) । त(क)ल्पशास्त्र(स्त्राणि)स्मृतय श्राद्धकल्पा बुधैर्द्विजाः(कृताः) ॥ १२ ॥ ममापि संशयस्तत्र श्राद्धकल्पाम्बुधौ रुचे । तथाऽपि शास्त्राण्यालोच्य वक्ष्ये निःसंशयं वचः ॥ १३ ॥ शास्त्रनिष्ठैः शुक्रवाक्यैर्मुह्यन्ति द्विजसत्तमाः । भवन्ति बलिनस्तस्माद्राक्षसा बलहारिणः ॥१४॥ निरस्य शुक्रवाक्यानि(णि) सिद्धान्तस्मृतिनिश्चयम् । श्राद्धकल्पस्य वक्ष्येऽहं भक्त्या तुष्टो रुचे तव ॥ १५ ॥ त्वया पृष्टं कदा श्राद्धं रुचे प्रम्लोचया सह । शृणु संक्षेपतो वच्मि कालकर्ता ह्यनुक्रमात् ॥ १६ ॥ वृद्धौ क्षयेऽह्नि ग्रहणे युगादौ महालये श्राद्धसमासु तीर्थे । सूर्यक्रमे पर्वसु वैधृतौ च रुचौ व्यतीपातगतेऽष्टकासु ॥ १७ ॥

द्रव्यस्य संपत्सु मुन्यं ( नी ) न्द्रसङ्गे काम्येषु मन्वादिषु सद्व्रते स्यात् ।
छायासु मातंगभवासु नित्यं श्राद्धस्य कालः स च सर्वदोक्तः ॥ १८ ॥

---

१ ख. "क्षमां व" । २ क. "म्यं च स" ।

वृद्धौ प्राप्ते च यः कुर्याच्छ्राद्धं नान्दीमुखं पुमान् । तस्याऽऽरोग्यं यशः सौख्यं विवर्धन्ते धनप्रजाः ॥१९॥ श्राद्धं कृतं येन महालयेऽस्मिन्पित्रोः क्षयाहे ग्रहणे गयायाम् । किमश्वमेधैः पुरुषैरनेकैः × पुण्यैरिमैरन्यतमैः कृतैः किम् ॥ २० ॥ दर्शश्राद्धं च यः कुर्याद्ब्राह्मणैर्ब्रह्मवादिभिः । पितरस्तेन तुष्टा वै प्रयच्छन्ति यथेप्सितम् ॥ २१ ॥ माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी । तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः ॥ २२ ॥ भाद्रे कलिर्द्वापरे चैव माघे त्रेतातृतीया नवमी कृते च । युगादयः पुण्यतमा इमाश्च दत्तं पितॄणां किल चाक्षयं स्यात् ॥ २३ ॥ यावदायाति तत्पर्व वर्धते द्विगुणक्रमम् । दिने दिनेऽखिलं दानं दत्तं वैधृतपर्वणि ॥ २४ ॥ संक्रान्तौ च व्यतीपाते मन्वादिषु युगादिषु । श्रद्धया स्वल्पमात्रं च दत्तं कोटिगुणं भवेत् ॥ २५ ॥ पूर्वजान्मनुजान्देवान्सति द्रव्ये न वै यजेत् । मन्दाग्नि रामयावी च दरिद्रश्च प्रजायते ॥ २६॥

छायासु सोमोद्भवजासु पुण्यं देवार्चनं गोतिलभूप्रदानम् ।
करोति यो वै पितृपिण्डदानं दूरे न तस्यास्ति विभोर्विमानम् ॥ २७ ॥
चन्द्रग्रहे लक्षगुणं प्रदत्तं विवर्धते कोटिगुणं रविग्रहे ।
गजाश्वभूरुक्मतिलाज्ययोषिद्दानस्य संख्या न मयाऽत्र गण्यते ॥ २८ ॥

पितॄणां नरकस्थानां जलं तीर्थस्य दुर्लभम् । तेन संतर्पिताः सर्वे स्वर्गं यान्तीति मद्वचः ॥ २९ ॥ अष्टकासु च सर्वासु तथा चान्वष्टकासु च । पिण्डदानं प्रकर्तव्यमक्षय्यतृप्तिकारकम् ॥ ३० ॥ अष्टकासु च सर्वासु साग्निकैर्नवदैवतम् । पित्राद्यं मातृमध्यं च कर्तव्यं न निरग्निकैः ॥ ३१ ॥ महायज्ञरतः शान्तो लौकिकाग्निं च रक्षयेत् । धर्मशास्त्रोक्तमार्गी यः स साग्निकसमो मतः ॥ ३२ ॥ इष्टे गृहसमायाते पूज्ये यज्वानि मन्त्रदे । वेदज्ञैः सर्वशास्त्रज्ञैर्हृष्यन्त्यखिलपूर्वजाः ॥ ३३ ॥ व्रतस्थो व्रतसिद्ध्यर्थं श्राद्धं कुर्यादपिण्डकम् । विना श्राद्धेन यत्कर्म तत्सर्वं निष्फलं भवेत् ॥ ३४ ॥ सपिण्डदानं सौभाग्यं काम्यश्राद्धं त्रिपौरुषम् । कार्यं भार्यासु तेनैतत्सर्वकामफलप्रदम् ॥ ३५ ॥ नित्यश्राद्धं सदा कार्यं पितॄणां तृप्तिहेतुकम् । स विष्णुरिति विज्ञेयो नित्यं प्रीणाति पूर्वजान् ॥ ३६ ॥ श्राद्धान्यनेकशः सन्ति पुराणोक्तानि वै रुचे । फलप्रदानि सर्वाणि तेषामग्र्यो महालयः ॥ ३७ ॥ सत्यवाक्शुद्धचेता यः सत्यव्रतपरायणः । नित्यं धर्मरतः शान्तः स भिन्नालापवर्जितः ॥ ३८ ॥ अद्रोहोऽस्तेयकर्मा च सर्वप्राणिहिते रतः । स्वस्त्रीरतः सविनया ( यो ) नयचक्षुरकर्कशः ॥ ३९ ॥ पितृमातृवचःकर्ता गुरुवृद्धपराष्टि ( स्ति ) कः । श्रद्धालुर्वेदशास्त्रज्ञः क्रियावान्भैक्ष्य ( क्ष ) जीवकः ॥ ४० ॥ स तु श्राद्धं यदा

× एतत्प्रयोगस्याऽऽर्षत्वात्साधुत्वं ज्ञेयम् ।

कुर्यात्पत्रपाकेन सद्द्विजैः । तदा श्राद्धसहस्रैर्यत्प्रीतिरतज्जायते भृशम् ॥ ४१ ॥ तिर्यङ्मनुष्ययोनौ हि को भेदः क्षुत्तृषा समाः । सत्यवाङ्मानुषो धर्मः सुखं दुःखं समं स्मृतम् ॥ ४२ ॥ भैक्ष्यं ( क्षं ) द्रव्यं हि विप्राणां क्षत्रियाणां प्रजार्पितम् । वैश्यानां कृषिवाणिज्यं शूद्राणां सेवयाऽऽगतम् ॥ ४३ ॥ धनं पवित्रं विप्राणामस्ति तीर्थसमर्पितम् । तर्पयेत्तेन वै देवान्मृतान्पितृगणातिथीन् ॥ ४४ ॥ स्वस्ति वाच्य द्विजैर्नीतं धनं दुष्टप्रतिग्रहम् । अग्नितीर्थेषु पतितं सद्यो याति पवित्रताम् ॥ ४५ ॥ अयाचितं धनं पूतं शुक्लवृत्त्या समागतम् । विवाहलब्धं वेजिनं ( विजितं ) पैत्रं ( पित्र्यं ) शिष्यनिवेदितम् ॥ ४६ ॥ ब्राह्मणः क्षत्रियविशां जीव्यवृत्तिं समाश्रयेत् । स्ववृत्तेरुपहानित्वान्न श्ववृत्त्या ( त्तिं ) कदाचन ॥ ४७ ॥ वर्णानां तु त्रिधा वृत्तिरुत्तमा मध्यमाऽधमा । ह्रासपुण्यफलांशस्य क्रमात्तद्धनदानलः ( तः ) ॥ ४८ ॥ धनं चिकित्सासंबन्धि ग्रामयाच(ज)कगायिनी(नाम्) । कथत्व (या च) समानीतमग्राह्यं पितृकर्मणि ॥ ४९ ॥ चित्रकृन्नटवेश्यानां धारकार(रे)क्षुमर्दिनाम् । स्वस्त्या अपि न तद्ग्राह्यं धनं कथककूटयोः ॥ ५० ॥ मूल्यैश्चिकित्सां कुरुते कथां चित्रां तनोति यः । गीतं गायति भृत्यर्थं विप्रः सन्प्लववर्गो मतः ॥ ५१ ॥ युगधर्मेण वर्णानां धनं ग्राह्यं द्विजातिभिः । प्रकृतिना परिस्वस्त्या न्यायागतमथो[3] यदि ॥ ५२ ॥ सरित्समुद्रतोयैक्ये वापीकूपसरित्तटे । देवजुष्टे च संप्राप्ते देशे श्राद्धे गृहान्तरे ॥ ५३ ॥ धात्रीविल्ववटाश्वत्थमुनिचैत्यगजावि(न्वि)ना । श्राद्धं छायासु कर्तव्यं प्रासादाद्रौ महावने ॥ ५४ ॥ न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । गृहे तिष्ठति सा यावत्तावत्तीर्थसमं गृहम् ॥ ५५ ॥ पत्नी पाकं यदा कुर्यात्पुत्रः पुष्पकुशान्हरेत् । किं गयायां यदि श्राद्धं स्वकाले स्वगृहे भवेत् ॥ ५६ ॥ स्वगोत्रा सुभागा नारी भ्रातृभर्तृसुतान्विता । गुरुशुश्रूषणोपेता पित्रन्नं कर्तुमर्हति ॥ ५७ ॥ आचार्यानी मातुलानी पितृमातृस्वसा स्वसा । एता ह्यविधवाः कुर्युः पितृपाकं सुता स्नुषा ॥ ५८ ॥ वहुप्रजास्तु या नार्यो भ्रातृवत्यः कुलोद्भवाः । पञ्चाशत्परितोऽब्दानां यदि वा विधवा अपि ॥ ५९ ॥ पितृव्यभ्रातृजायाश्च मातरः पितृमातरः । कुर्युः सदा पित्र (त्र्यं)मृदुः(दु)शीला च गोत्रिणी ॥ ६० ॥ सितार्द्रवाससा युक्ता मुक्तकेशा विकञ्चुकी । शिरोस्नाता व्याधिता स्त्री पाकं कुर्यान्न पैतृकम् ॥ ६१ ॥

---

१ क °क्षुरम° । २ ख °गोत्तमः । यु° । ३ ख. °थोऽपि वा । स° ।

भ्राता पितृव्यो भ्रातृव्यः स्वस्रपुत्रः स्वयं पचेत्। पित्रान्नं(ताऽन्नं) च सुतः शिष्यो दौहित्रो दुहितुः पतिः ॥ ६२ ॥ अक्रोधनैः शौचपरैरिति गाथामुदीरयन्। सायमामन्त्रयेद्विप्राञ्श्राद्धे दैवे च कर्मणि ॥ ६३ ॥ निमन्त्रणं स्वयं दद्याद्भ्रातृ(ता)शिष्यः सुता अपि। न स्त्रीबालैः स्वगोत्रान्यैर्न ख्याप्यं न च दूरतः ॥ ६४ ॥ दैवे वृद्धौ तीर्थकाम्यनदोत्पन्नैः(न्ने)समागते। न दुष्यति मनःस्थैर्यात्मातः सद्योनिमन्त्रणम् ॥६५॥ प्रसाद्यतामितीत्युक्त्वा द्विस्त्रिर्देयं निमन्त्रणम्। यत्स्वीकृतं स्त्रिया सम्यक्सत्यं वितथमन्यथा(!) ॥ ६६ ॥ यतीनामगृहस्थानां प्राघूर्णब्रह्मचारिणाम्। सर्वदानं मन्त्रणं बन्धुभृत्यबालसुहृत्स्त्रिया(!) ॥ ६७ ॥ अदैवान्तरतःश्राद्धेदम्पत्यङ्गी वृथा भवेत् (!) निमन्त्रणं भवेद्यस्य लोभात्काकत्वमाप्नुयात् ॥ ६८ ॥ निमन्त्रणेऽप्रयातव्यं तं नियुक्तो लघुर्व्रजेत्(!)। सर्वदानलघोर्ज्यैष्ठौ वृथापाकीतु वा यतः (!) ॥ ६९ ॥ ब्रह्मकर्मरताः शान्ता अपापा अग्निसंश्रिताः। कर्मनिष्ठास्तपोनिष्ठा वेदार्थज्ञाः कुलोद्भवाः ॥ ७० ॥ मातृपितृपराश्चैव ब्राह्म्यै(ह्म) वृत्त्युपजीविनः। अध्यापको ब्रह्मविदो ब्राह्मणाः श्राद्धसंपदि ॥ ७१ ॥ स्वकीयशाखिनो मुख्याः श्राद्धे वेदविदां वर। पङ्क्तिपावनाः सर्वेषामेको वै सामविद्भवेत् ॥ ७२ ॥ गुरुश्वशुरजामातृदौहित्रभगिनीसुताः। आसनार्हाः पितृश्राद्धे योग्याः पूज्याश्च मातुलाः ॥ ७३ ॥ भार्या रजस्वला यस्य हृता त्यक्त्वा दिवं गता। अश्राद्धार्हाः सर्वध्यास्य मृततुकं गर्भदूषिता(!) ॥ ७४ ॥ योऽभार्यः सन्बलं चेतः संयम्याविधुरो भवेत्। क्रियापरः श्रुतेर्वेत्ता श्राद्धे वै भोजयेत्पितुः ॥७५॥ श्रुतिज्ञं कुलजं शान्तं प्रजावन्तं जितेन्द्रियम्। मृतभार्यमपि श्राद्धे भोजयेदविशङ्कितः ॥ ७६ ॥ * अप्रजो मृतपत्नीकः सर्वकर्मसु गर्हितः। छन्दो विनाऽपि न स्थेयं दिनमेकं विनाऽऽश्रमम् ॥ ७७ ॥ यस्य पुत्राः सदाचाराः श्रुतिज्ञा धर्मसंमुखाः। पितृभक्तिरता दान्ता न वैधव्यं( धुर्यं ) मृतस्त्रियि ॥ ७८ ॥ तुरीये धाम्नि यस्तिष्ठेत्संधौ मध्यानिशि क्षणम्। अनार्योऽप्यनपत्योऽपि श्राद्धे पुण्यैरवाप्यते ॥ ७९ ॥

---

* अप्रजा इत्येव भवितुं युक्तम्।

---

१ क. °दानम°। २ ख °द्धपत्यङ्गी।

षोडशाब्दात्परं श्राद्धे विप्राणां सहस्रकैः । भोजयेत्पितृकार्यार्थे ततोऽन्यान्देवकर्मणि

न पुत्रपुत्री तदपत्यभार्या न बन्धुरङ्गीकृतचित्तधारणम् ।

संप्राप्य वैधव्य(धुर्य)मनङ्गसंभवो यस्तिष्ठति व्यक्ततया स वर्ज्यः ॥८१॥

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा । अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः॥८२॥भृतकाध्यापकः कुष्ठी कन्यादूष्यभिशस्तकः । क्लीबान्धमूकबधिराः कुजशी (नखी)वृषलीपतिः ॥ ८३ ॥ परपूर्वापतिः स्तेनः कर्मदुष्टश्च निन्दितः । भोक्तारः षोडशे ग्रस्य(ये च)ते वर्ज्या द्रव्यलोभतः ॥ ८४ ॥ वृषोत्सर्गस्य कर्तारो वर्जनीयाः सदैव हि । पितुर्गृहेषु या कन्या रजः पश्यत्यसंस्कृता ॥ ८५ ॥ सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः । महिषीत्युच्यते भार्या सा चैव व्यभिचारिणी ॥ ८६ ॥ तान्दोषान्क्षमते यस्तु स वै माहिषकः स्मृतः । अज्ञानादथ वा लोभान्मोहाद्वाऽपि विशेषतः ॥ ८७ ॥ समर्घं योऽन्नमादाय महार्घं तु प्रयच्छति । स वै वार्धुषिको नाम अनर्हः सर्वकर्मसु ॥ ८८ ॥ वृषोत्सर्गस्य कर्तारं यदि पश्यन्ति पूर्वजाः । रौरवं नरकं यान्ति कुम्भीपाकं सुदारुणम् ॥ ८९ ॥ कालालकं वार्धुषिकं मध्ये च वृषलीपतिम् । श्राद्धे माहिषकं दृष्ट्वा निराशा यान्ति पूर्वजाः ॥ ९० ॥ यो लोभादसवर्णानामाद्यश्राद्धान्यनुक्रमात् । स षोडशकं(शं) वृषोत्सर्गं कुर्यात्कालालकः स्मृतः ॥ ९१ ॥

अथ नियमानाह—

दन्तधावनताम्बूलं स्निग्धस्नानमभोजनम् । दानं प्रतिग्रहो होमः श्राद्धभुगष्ट वर्जयेत् ॥ ९२ ॥ श्राद्धे निमन्त्रितो विप्रो वर्जयेत्स्त्रीनिषेवणम् । पूर्वेद्युश्च परेद्युश्च वर्जयेद्भोजनद्वयम् ॥ ९३ ॥ नीचसंभाषणं याज्यं दिवानिद्रां प्रतिग्रहम् । क्षौमसुष्णोदकैः स्नानं वर्जयेच्छ्राद्धकृद्ध्रुवम् ॥ ९४ ॥ न च सीमान्तरं गच्छेन्न श्मशानं जिनालयम् । श्राद्धकृत्सर्वदा पश्येन्नोदक्याः(क्यां) श्वपचं शवम् ॥ ९५ ॥

श्रीखण्डं दर्भसूत्रं यवतिलतुलसीशतपवित्रा(शतपत्रं च)कर्ता

धूपं(पो)दीपोदपात्रं कुसुम्भ(म)फलजत्यं(लं) पत्रभृम्भोम(म्यास)नानि ।

श्रीशः शाल्वे च पात्रे द्विजमधुसकृदाच्छिन्नहेमार्घपात्रा-

ण्यन्नं श्राद्धोपहारः सुतगृहगृहिणीशुभ्रवासांसि कालः ॥ ॥ ९६ ॥

श्रीखण्डमर्चयेच्छ्रेष्ठं सकर्पूरं सकेसरम् । पूर्वजानां तु देवानां नान्यन्मलयजादिकम्॥९७॥ मन्त्रपूता हरिद्वर्णाः प्रातर्विप्रसमुद्धृताः । गोकर्णमात्रा दर्भाः स्युः पवित्राः पुण्यभू-

---

१ ख. ग. °तवित्त° ।

मिजाः ॥ ९८ ॥ शुक्लः कृष्णः कृष्णतरश्चतुर्थो जर्तिलास्तिलः । उत्तरोत्तरतः श्राद्धे पितॄणां तृप्तिकारका ॥ ९९ ॥ तुलस्यः सर्वदेवानां समञ्जर्यः शुभावहाः । पूर्वजानां यथा प्राप्ता सैकोद्दिष्टे विमञ्जरी ॥ १०० ॥ अगस्त्यं भृङ्गिराजं च तुलसी शतपत्रिका । तिलं च तिलपुष्पं च षडेते पितृवल्लभाः ॥ १०१ ॥ त्रिगुणं सूत्रमादद्यात्प्रतिपिण्डं नवोद्धतम् । सामगानां तु संलग्नं सर्वेषामेकतन्तुना ॥ १०२ ॥ धूपं(पो) गुग्गुलुना कार्यं(र्यो) दीपस्तैलघृतेन तु । तुलसीशतपत्राभ्यां पूजनं पितृवल्लभम् ॥ १०३ ॥ चम्पको दमनः कुन्दकल्म(र)वीरोऽथ केतकी। जातिदर्शनमात्रेण निराशा यान्ति पूर्वजाः ॥ १०४ ॥ अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं सर्वत्र पवित्रं सर्वकर्मसु ॥ १०५ ॥ वासश्चतुर्विधं प्रोक्तं त्वक्सूत्रं कृमिरोमजम् । उत्तरोत्तरतः श्रेष्ठं प्रक्षाल्यं श्राद्धकर्मणि ॥ १०६ ॥ धौतं सप्ताष्टहस्तैः स्यादुत्तरीयं तदर्धकम् । वाससी सर्वदाचा(धा)र्ये दग्धरूच्यो(क्षा)र्द्रवर्जिते ॥ १०७ ॥ त्यजेत्पर्युषितं पुष्पं त्यजेत्पर्युषितं जलम् । न त्यजेज्जाह्नवीतोयं तुलसीदलपङ्कजम् ॥१०८॥ गोमयेनोपलिप्ता भूः पवित्रा सर्वकर्मसु । गोमूत्रेणोक्षिता तीर्थे विष्णुपादाम्बुसेविता ॥१०९॥पात्राण्यर्घ्याणि ख(खा)ड्गानि हेमरूप्यमृदामपि । उ(औ)दुम्बराणि प(पा)र्णानि देवत्वे(कृ)त्योद्भवानि च ॥ ११० ॥ हेमरूप्यमये पात्रे पिण्डत्रयं विनिक्षिपेत् शौल्बे कांस्ये खाड्गपात्रे न च मृन्मयकाष्ठजे ॥ १११ ॥ पाकपात्राणि शौल्बानि सर्वधातुमयानि वा । सर्वेभ्यो मृन्मयं श्रेष्ठमग्निपूतजलाप्लुतम् ॥ ११२ ॥ लोहपात्रेषु यत्पक्वं तदन्नं काकमांसवत् । भुक्त्वा चान्द्रायणं कुर्याच्छ्राद्धे नान्येषु कर्मसु॥११३॥ ताम्रपात्रे न गोक्षीरं पचेदन्नं न लोहजे । क्रमेण घृततैलाक्ते ताम्रलोहे न दुष्यतः ॥११४॥ रौप्यहैमानि पात्राणि नव्यसौराष्ट्रजानि वा । पत्रावल्यः पवित्राः स्युर्विप्राणां श्राद्धभोजने ॥ ११५ ॥ कांस्यखर्परशुक्राश्मसृत्काष्ठफललोहजैः । नाऽऽचामेद्रैकृतैः पात्रैः श्राद्धे वै चर्मवारिणा ॥ ११६ ॥ औदुम्बरेण पात्रेण कुर्यादाचमनक्रियाम् । तारताम्रसुवर्णांशैर्मिश्रधातुसमुद्भवैः ॥ ११७ ॥ कांस्यपात्राच्च्युतं वारि स्नाने च देवतार्चने । श्वानमूत्रसमं तोयं पुनः स्नानेन शुध्यति ॥ ११८ ॥ नीवारा माषमुद्गाश्च गोधूमाः शालयस्तथा । यवाश्च चणकाश्चैव श्राद्धे भक्ष्यास्तथा तिलाः ॥ ११९ ॥ कदलीकन्दफलकं धात्री विल्वी च तूलकाः । कारकद्रोणपुष्पी च तण्डुली चक्रवर्तिका ॥ १२० ॥ उपोदकी चर्मफलं कोशातक्याः फलं शमी । जीवन्ती तुण्डिकाऽम्लीका कालशाकस्तथाऽऽर्द्रकम् ॥ १२१ ॥ उर्वारुक्षीरिणीपीलुद्राक्षाम्रकदलीफलम् । वीजपूरं कलिम्बुनि चर्भटं जोनि चिर्भटम् (?) ॥ १२२ ॥ कर्कोटकं कारवेल्लं सूरणं मृष्टपिण्डिकाः। कोटिभण्टं त्रिविधं निशाचिह्ली च वासुकः(?)॥१२३॥

१ क °ग्धमूच्यीर्द्रै° । २ क जाति ।चि° ।

मरीचं हिङ्गु तैलानि सद्द्रव्याण्यविदाहि च । श्राद्धेष्वेतानि मुख्यानि तथा लवणजीरकैः ॥ १२४ ॥ गवां क्षीरं दधि घृतं क्षौद्रमिक्षुरसं तथा । शर्करा गुडमत्स्यण्डी तथा मृष्टफलानि च ॥ १२५ ॥ श्यामाकान्कोद्रवान्कङ्गून्कलञ्जान्राजमाषकान् । निष्पावकान्कदम्बानि वर्जयेच्छ्राद्धकर्मणि ॥ १२६ ॥ कलिङ्गं चैव वृन्ताकं कूष्माण्डं रक्तनीलकम् । हस्तीमुण्डफलं वर्ज्यमलाबु च तुषाम्रकम् ॥ १२७ ॥ करीरजं कुमारीजं सार्षपं राजिकोद्भवम् । वर्जयेत्पितृकार्येषु वल्लकौसुम्भपर्परौ ॥ १२८ ॥ क्षीरं दधि घृतं तक्रमविच्छागसमुद्भवम् । माहिषं च दधि क्षीरं श्राद्धे वर्ज्यं प्रयत्नतः ॥ १२९ ॥ माहिषं मृतवत्सागोः सूतिकागोश्च वर्जयेत् (?) ॥ १३० ॥ मिश्रितं धेनुपयसा सापत्यमहिषीपयः । मेध्यमभ्युक्षितं गा ह्ये)तद्गायत्र्या सर्वकर्मसु ॥१३१॥ क्षैरं कठिनपक्वं स्याद्घ्रायसं स्याद्विलेपकम् । पीशी(रं)द्रवरूपं तत्क्षीरे यत्त्रिविधा मता (?) ॥ १३२ ॥ पितृमानवदेवानां पाशीरक्षीरपायसैः(?)। जायते परमा तृप्तिः समध्वाज्यैः सशर्करैः ॥ १३३ ॥ पायसं शूद्रतो ग्राह्यं यद्यम्बुरहितं भवेत् । नव्यमृत्पात्रपक्वं चेत्पित्रर्थेऽपि न दुष्यति ॥ १३४ ॥ पायसं सक्तवो धानास्तिलपिष्टं तथौषधम् । साम्बून्येतानि गृह्णीयादपि शूद्रान्न दुष्यति ॥१३५॥ क्रीतं विप्रघृतं नीत्वा यदि विप्रांश्च भोजयेत् । दाता भोक्ता च विक्रेता पूर्वजाश्च पतन्ति ते॥१३६॥लावण्य(क्य)तित्तिरिशकुन्तकपिञ्जलानां भारण्डसारसमसू(यू)र[क]वी(की)रकाण(णाम्) । धूम्यारकारिकुटरीदहनाटभारद्वा[जा]ख्यलाटशि(कुर?)रीकिकिदीविकानाम् ॥१३७॥ सारङ्गशम्बरवराहकक्कृष्णसार * शशसानि(शाशानि)दुर्लभतमानि सदा पितृणाम् ॥ १३८ ॥ खड्गमांसैर्यदा पिण्डान्कुर्याद्वा भोजयेद्द्विजान् । तदा भवति पूर्वेषां तृप्तिर्द्वादशवार्षिकी ॥ १३९ ॥ खड्गास्थि यदि विद्येत श्राद्धकाले समीपगम् । गयाश्राद्धेन सा तृप्तिः पितृणां सा भवेत्तदा ॥ १४० ॥ कथयन्तीति पितरः कुले कश्चिद्भविष्यति । यः खड्गमांसपिण्डांश्च कुर्याद्वा पितृभोजनम् ॥ ४१ ॥ कूर्चलो विलपण्डश्च गोधा कक्रपजाहकः(?) । पञ्च पञ्चनखा ह्येते दुर्लभाः श्राद्धकर्मणि ॥ १४२ ॥ व्याधेभ्यो मेध्यमांसानि ग्राह्याणि द्रव्यपर्ययैः । पित्रर्थं स्वगृहे हिंसन्खादन्मांसं न पापभाक् ॥ १४३ ॥ विना श्राद्धं विना यज्ञं मधुपर्कविधिं विना । पापी स्यात्स्वार्थतः कुर्वञ्जीवघातं वलिं विना ॥ १४४ ॥ न जीवेन विना तृप्तिर्जीवस्यापि हि सर्वदा । अतः ससर्ज भगवाञ्जीवो जीवेन हिंस्यते ॥ १४५ ॥ मद्वात्तिर्व(त्तिं व)चनात्कुर्वन्निद्दात्तिर(म)पि कर्मणाम् । एवं व्यवहरेन्नित्यं गृहस्थोऽपि हि मुच्यते॥१४६॥

---

* एतदनन्तरं सकलादर्शपुस्तकेषु 'रत्नाल्पखड्गा' इत्यधिकान्यक्षराणि ।

---

१ क. 'ररका' ।

न प्रवृत्तेः पुण्यहानिस्तन्निवृत्तेर्महत्फलम् । तदा दातव्यं धर्मज्ञैर्धर्मकारुण्यसंश्रयः (यैः) ॥ १४७ ॥ कारुण्यं प्राणिषु प्रायः कर्तव्यं पुण्यहेतवे । अहिंसा परमो धर्मस्तस्मादात्मवदाचरेत् ॥ १४८ ॥ यज्ञेषु पशुहिंसायां सावर्णिव्यवसायवत् । फलं सहस्रगुणितं हिंस्यो राजा भवेदनु ॥ १४९ ॥ कारुण्यात्सर्वभूतेषु आत्मवतः सतः सतः । उक्तकर्मसु सर्वत्र तदा मांसनिषेधनम् ॥ १५० ॥ मद्यमप्यानृ(प्यमृ)तं श्राद्धे कलौ तत्तु विवर्जयेत् । मांसान्यपि हि सर्वाणि युगधर्मक्रमाद्भवेत् ॥ १५१ ॥ अतो माखा(षा)न्नमेवैतन्मांसार्थे ब्रह्मणा कृतम् । पितरस्तेन तृप्यन्ति श्राद्धं कुर्व(र्या)न्न तद्विना ॥ १५२ ॥ यथा बलिष्ठं मांसत्वान्माखा(षा)न्नमपि तत्समम् । सौगन्धिकं च स्वादिष्ठं मधुरं द्रव्यभेदतः ॥ १५३ ॥ भक्ष्यं भक्ष्यविधौ यत्तु गर्हितं तद्विवर्जयेत् । अभक्ष्यमपि भक्ष्यं स्याद्देशधर्मेण वै मुने ॥ १५४ ॥ अथ(र्थ)शब्दस्तु रवि भागे जन्यान्ते राजवर्जिते(?) । वाजं देयं प्रयत्नेन कथि(र्थि)भ्यो वज्रमिश्रितम्॥१५५॥ त्रिमुहूर्तस्तु प्रातः स्यात्तावानेव तु संगवः । मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्तथैव च ॥ १५६ ॥ सायं तु त्रिमुहूर्तः स्यात्पञ्चधा काल उच्यते । अतोऽपराह्णः पूर्वेषां भोज्यकाल उदाहृतः ॥ १५७ ॥ आरम्भं कुतपं(पे) कुर्याद्रौहिणं तु न लङ्घयेत् । एतत्पञ्चमुहूर्तान्तः श्राद्धकाल उदाहृतः ॥ १५८ ॥ मुहूर्तास्तत्र विज्ञेया दश पञ्च च सर्वदा । तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥ १५९ ॥ विवृद्धा यत्र पुरतः कुतपस्पर्शिनी तिथिः । श्राद्धे सांवत्सराङ्के च निर्णयोऽयं कृतः सदा ॥१६०॥ आषाढ्याः पञ्चमे पक्षे यान्यहानि तु षोडश । क्रतुभिस्तानि तुल्यानि तेषु दत्तं महाफलम् ॥ १६१ ॥ चतुर्दश्यां समारम्भः पौर्णमासादि पार्वणः । प्रातरन्तमजस्रं स्यादस्यान्तः पार्वणो विधिः ॥ १६२ ॥ ब्राह्मान्मुहूर्तादारभ्य कुर्यान्मासार्धयामतः । श्राद्धं महालयं नाम तत्तु तीर्थवदाचरेत् ॥ १६३ ॥ पक्षेऽपरे च भरणी महती सा प्रकीर्तिता । तस्यां श्राद्धं प्रकुर्वीत गयाश्राद्धसमं फलम् ॥ १६४ ॥ नन्दायां भार्गवदिने मघा(घा)सु च युगादिषु । पिण्डपातं प्रकुर्वीत ज्येष्ठपुत्रो विनश्यति ॥ १६५ ॥ पौर्णमास्यादिसंयोगे योऽधिकुर्यान्महालयम् । पिण्डदाननिषिद्धेऽपि न निषिद्धं कदाचन ॥ १६६ ॥ महालये त्रयोदश्यां भवेद्यदि पितुर्दिनम् । पिण्डदानं विप्रभोज्यं श्राद्धं तत्स्याद्गयासमम् ॥ १६७ ॥ पक्षश्राद्धं वा पञ्चमीप्रभृती(ति) स्यान्महालये । पितुः पितामहस्याप्य(पि?) प्रपितामहमृद्दिने ॥ १६८ ॥ कालो ह्यनन्तरूपस्तु कालो वै परमेश्वरः । तस्मात्काले प्रसन्नेन कर्तव्यं कर्म निश्चितम् ॥ १६९ ॥ गर्भस्थोऽपि [च] दौहित्रो अश्वयुक्प्रतिपद्दिने । कुर्यान्मातामहश्राद्धं पितरौ यदि जीवतः ॥१७०॥ आश्वप्रतिपदि श्राद्धं नान्दीश्राद्धवदिष्यते(?) । नात्यंसपाकशुद्धिः(?) स्यादा मध्याह्नाद्विशिष्यते ॥ १७१ ॥ सूतकादिनिमित्तेन द्रव्याभावादिभेदतः । स्थितं महालयं कुर्याद्यावद्वृश्चिकदर्शनम् ॥ १७२ ॥ कन्यागते सवितारि पितरो यान्ति वै गुरु(गृह)म् । तिष्ठन्त्याकाङ्क्षिणस्तावद्यावद्वृश्चिकदर्शनम् ॥ १७३ ॥ कन्दमूलफलैः

र्षाऽपि कर्तव्यं पितृतर्पणम् । अन्यथा दारुणं शापं दत्त्वा यान्ति बुभुक्षिताः ॥१७४॥ एकोद्दिष्टं तु मध्याह्ने दिवसस्य विधीयते । आद्ये मुहूर्ते वा(या)मस्य पिण्डदानं च भोजनम् ॥ १७५ ॥ पितृक्षयाहे संप्राप्ते यदि कश्चिन्महालयः । तदा क्षयाहः कर्तव्योऽपरेऽहनि महालयम्(यः) ॥ १७६ ॥ पूर्वाह्णे कानि(मि)कं श्राद्धं कुर्यान्नान्दीमुखं तथा । माध्याह्निकं यदा कुर्यान्नित्यश्राद्धं तदा भवेत् ॥ १७७॥ द्वौ दे(दै)वे च त्रयः पित्र्य एकैकमुभयत्र वा । मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ १७८ ॥ इष्टिश्राद्धे क्रतुदक्षौ काम्ये च ध्वनिरो(धुरिलो)चनौ। पुरूरवार्द्रवसंज्ञौ [तु] पार्वणे समुदाहृतौ ॥ १७९ ॥ सापिण्डे कालकामा(मौ)तौ वृद्धौ सत्यवसू स्मृतौ । यज्ञे च बहवः सन्ति श्राद्धे श्राद्धे पृथक्पृथक् ॥ १८० ॥ पितरश्च पितामहास्तथा च प्रपितामहाः । एवं पार्वणसंज्ञा च तथा मातामहेष्वपि ॥ १८१ ॥ एषां पत्न्यः क्रमाज्ज्ञास्तिस्त्रस्तिस्त्रश्च पार्वणे । उक्तानि चत्वार्येतानि पार्वणानि न पञ्चमम् ॥ १८२ ॥ वृद्धौ द्वादशदैवत्यान्न चैवान्वष्टकासु च (?) । षड्दर्शे त्रीणि यज्ञे च एक एव क्षयेऽहनि ॥१८३॥ पार्वणं च क्षयाहे स्याद्वृद्धौ स्यान्नवदैतम् । दर्शे षड्दैवतं श्राद्धं काम्ये त्रैपौरुषं भवेत् ॥ १८४ ॥ वसुरुद्रादित्या अमी इज्यन्ते सहमेलने । चतुर्थस्यानिवृत्तिः स्यादाद्यमेतो भवेदिति ॥ १८५ ॥ श्राद्धं स्त्रीपुंसयोः कार्यमेकोद्दिष्टमसंततेः । अतः संततिमन्तोऽमी इज्यन्ते बहुभिः सह ॥ १८६ ॥ आब्रह्मस्तम्बपर्यन्तं पूर्वजाः सन्ति ये कुले । तृप्ता भवन्ति ते सर्वे पुत्रहस्तेन नान्यथा ॥ १८७ ॥ अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च । येन केनाप्युपायेन पुत्रमुत्पादयेत्सुधीः ॥ १८८ ॥ सैकोद्दिष्टं दैवहीनं यतः पुत्रो न विद्यते । आयान्ति पुत्रिणः पूर्वे देवर्षिपितृवेष्टिताः ॥ १८९ ॥ दर्शे द्वे पार्वणे कार्ये मातुर्मातामहस्य च । क्षयाहे च पितुर्मातुः पार्णवं पार्वणं कृतम् ॥ १९० ॥ अम्बष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् । पित्रादौ मातृमध्यस्थं ततो मातामहान्तिकम् ॥ १९१ ॥ अन्वष्टक्ये पितृभ्यश्च ततस्त्रीभ्यश्च दैवतम् । ताभ्यस्त्वदैवतं वृद्धौ तेभ्यश्चापि सदैवतः (?) ॥ १९२ ॥ मातरः प्रथमं पूज्याः पितरश्च ततः परम् । मातामहश्च तदनु वृद्धिश्राद्धे त्वयं क्रमः ॥ १९३ ॥ पार्वणानि मयोक्तानि विपरीतानि तानि ते । अथर्वणास्तर्पयन्ति तद्वेदोक्तमतं यथा ॥ १९४ ॥ अतिथिं श्राद्धरक्षार्थमते( न्ते ) विष्णुस्वरूपिणम् । निवेशये वि( द्वि )ष्णुसमं ब्राह्मणं वेदपारगम् ॥ १९५ ॥ कव्यवाहादयो येऽमी विद्यन्ते ये च पूर्वजाः । सर्वेषामेव वर्णानां श्राद्धे तृप्यन्ति देवताः ॥ १९६ ॥ साक्षाद्विष्णुर्धर्मराजः श्राद्धदेवश्च कथ्यते । विश्वे देवाः पितृतिथिः सर्वं विष्णुरिति स्मृतम् ॥ १९७ ॥ पूर्वजास्तुष्टिमायान्ति दाता भोक्ता न संशयः ॥१९८॥

इति प्रजापतिस्मृतिः समाप्ता ।



ॐ तत्सद्ब्रह्मणे नमः ।

# बृहद्यमस्मृतिः ।

(तत्र प्रथमोऽध्याय. ।)

अथातो यमधर्मस्य प्रायश्चित्तं व्याख्यास्यामः । चतुर्णामपि वर्णानां प्रायश्चित्तं प्रकल्पयेत् ॥ १ ॥ ब्राह्मणस्तु शुना दष्टो जम्बूकेन वृकेण वा । उदिते ग्रहनक्षत्रे दृष्ट्वा सद्यः शुचिर्भवेत् ॥ २ ॥ जलाग्निबन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः । विषप्रपन्नगात्राश्च शस्त्राघातहताश्च ये ॥ ३ ॥ नवैते प्रत्यवासिताः सर्वधर्मबहिष्कृताः । चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन च ॥ ४ ॥ उभयावसिताः पापा ये श्यामशवलाच्युताः । इन्दुद्वयेन शुध्यन्ति दत्त्वा धेनुं तथा वृषम् ॥ ५ ॥ गोब्राह्मणहतं दग्धं मृतमुद्बन्धनेन तु । पाशं छित्त्वा ततस्तस्य तप्तकृच्छ्रद्वयं चरेत् ॥ ६ ॥ कृमिभिर्ब्रह्मसंयुक्तं मक्षिकैश्चोपघातितम् । कृच्छ्रार्धं संप्रकुर्वीत शक्त्या दद्यात्तु दक्षिणाम् ॥ ७ ॥ चाण्डालभाण्डसंस्पृष्टं पीत्वा भूमिगतं जलम् । गोमूत्रयावकाहारः षड्रात्रेण विशुध्यति ॥ ८ ॥ चाण्डालघटभाण्डस्थं यस्तोयं पिबति द्विजः । तत्क्षणात्क्षिपते यस्तु प्राजापत्येन शुध्यति ॥ ९ ॥ यदि न क्षिपते तोयं शरीरे यस्य जीर्यति । प्राजापत्यं न दातव्यं कृच्छ्रं सांतपनादिकम् ॥ १० ॥ चरेत्सांतपनं विप्रः प्राजापत्यं तु क्षत्रियः । तदर्धं तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥ ११ ॥ चाण्डालान्नं भक्षयित्वा तद्वत्सलिलमेव च । मासं कृच्छ्रं चरेद्विप्रश्चान्द्रायणमथापि वा ॥ १२ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतम् ॥ १३ ॥ चाण्डालमूर्तिका ये च ये च संकीर्णयोनयः । तेषां दत्त्वा च भुक्त्वा च तप्तकृच्छ्रं समाचरेत् ॥ १४ ॥ चाण्डालिकासु नारीषु द्विजो मैथुनकारकः । कृत्वाऽघमर्षणं पक्षं शुध्यते स पयोव्रतात् ॥ १५ ॥

इति श्रीयाम्ये धर्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

( अथ द्वितीयोऽध्याय । )

नटां [ टीं ] शैलूपिकां चैव रजकीं वेणुजीविनीम् । गत्वा चान्द्रायणं कुर्यात्तथा चर्मोपजीविनीम् ॥ १ ॥ कापालिकान्नभोक्तॄणां तन्नयागामिनां तथा । अज्ञानात्कृच्छ्रमुद्दिष्टं ज्ञात्वा चैव व्रतद्वयम् ॥ २ ॥

---

१ क. ग. °ना धर्मशास्त्रं प्र° । २ ख. °पतनप्राप्ता श° । ३ ख. ये श्यामशवलच्यु° । ४ क ग. मृतं तद्व° । ५ क. ग. पापं छि° । ६ ख. ग. पिबते । ७ ख. °थ । नारीं शैलूपिकां चै° । ८ ख. तन्नारीगा° ।

सुरा[1]याः संप्रपानेन गोमांसभक्षणे कृते। तप्तकृच्छ्रं चरेद्द्वि[2]जो मौञ्जीहोमेन शुध्यति ॥ ३ ॥ * गोक्षत्रियं तथा वैश्यं शूद्रं चाप्यनुलोमजम्। ज्ञात्वा विशेषेण ततश्चरेच्चान्द्रायणं व्रतम् ॥ ४ ॥ कुक्कुटाण्डकमात्रं तु ग्रासं च परिकल्पयेत्। अन्यथाभावदोषेण नवमेऽति च शुध्यहि ॥ ५ ॥ एकैकं वर्धयेद्ग्रासं शुक्ले कृष्णे च ह्रासयेत्। अमा[3]यां तु न भुञ्जीत एष चान्द्रायणो विधिः ॥ ६ ॥ प्रायश्चित्त[4]मुपक्रम्य कर्ता यदि विपद्यते। पूतस्तदहरेद्वा(वा)पि इह लोके परत्र च ॥ ७ ॥ यावदे[5]कः पृथग्भाव्यः प्रायश्चित्तं न सेवते। अप्रश[6]स्ता न ते स्पृश्यास्ते सर्वेऽपि विगर्हिताः ॥ ८ ॥ अभोज्यां[7]श्चाप्रतिग्राह्या असंप[8]ङ्क्त्या विवाहिकाः। पूयन्ते तु[9] व्रते चीर्णे सर्वे ते रिक्थभागिनः ॥ ९ ॥

इति श्रीयाम्ये धर्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

=====

( अथ तृतीयोऽध्यायः। )

---

ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च। प्रायश्चित्तं चरेद्भ्राता पिता वाऽन्योऽपि बान्धवः ॥ १ ॥ अतो बालतरस्यापि नापराधो न पातकम्। राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते ॥ २ ॥ अशीत्यधिकवर्षाणि बालो वाऽप्यूनषोडशः। प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च ॥ ३ ॥ पितृव्यभ्रातृभार्यां च भगिनीं मातुरेव च। श्वश्रूं पितृष्वसारं च तप्तकृच्छ्रं समाचरेत् ॥ ४ ॥ × राज्ञीमाचार्यशिष्यां वा उपाध्यायस्य योषितः। एता गत्वा स्त्रियो मोहात्षण्मासं कृच्छ्रमाचरेत् ॥ ५ ॥ द्वौ मासौ भक्ष्यभोज्यं च द्वौ मासौ यावकेन तु। द्वौ मासौ पञ्चगव्येन षण्मासं कृच्छ्रमाचरेत् ॥ ६ ॥ मातरं गुरुपत्नीं च स्वसारं दुहितां तथा। गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते ॥ ७ ॥ अस्तं गते यदा सूर्ये चाण्डालं[10]मृतुमतिस्त्रियः। संस्पृशेत्तु यदा कश्चित्प्रायश्चित्तं कथं भवेत् ॥ ८ ॥ जातरूप्यं सुवर्णं तु दिवाऽऽहृतं च यज्जलम्। तेन स्नात्वा च पीत्वा च गामालभ्य विशुध्यति ॥ ९ ॥

---

* एतदर्धस्थानेऽयं पाठः ख. पुस्तके—"यः क्षत्रियस्तथा वैश्यः शूद्रश्चाप्यनुलोमजः"। इति।
× न विद्यतेऽयं श्लोकः ख. ग पुस्तकयोः।

---

१ क. °राया मद्यपा°। ख °रान्यमद्यपा°। २ क. ग. °प्रो मुञ्जी°। ३ क. ग. °मावस्या न। ४ क. °त्त्व्यवस्थाया क°। ५ ख °देकोऽपृथग्द्रव्य प्रा°। ग. °देकपृथग्भागः प्रायश्चित्तेन सेव्यते। अ°। ६ क. °स्तास्तथा तस्य तेषा चैवेह ग°। ७ क. ग. °ज्याश्च प्र°। ८ ख. °पङ्क्त्या विवाहिनः। पू°। ९ क. ग. तु श्रुते चीर्णे सर्वे नरकभा°। १० ख. °लरजकस्त्रिय.।

दासनापितगोपालकुलमित्रार्धसीरिणः । एते शूद्रास्तु भोज्यान्ना यश्चाऽऽत्मानं निवेदयेत् ॥ १० ॥ असच्छूद्रेषु अन्नाद्यं ये भुञ्जन्त्यबुधा द्विजाः । प्रायश्चित्तं तथा प्राप्तं चरेच्चान्द्रायणव्रतम् ॥ ११ ॥ यः करोत्येकरात्रेण वृषलीसेवनं द्विजः । तद्भक्षणे जपेन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ १२ ॥ वृषलीं यस्तु गृह्णाति ब्राह्मणो मदमोहितः । सदा सूतकिता तस्य ब्रह्महत्या दिने दिने ॥ १३ ॥ वृषलीगमनं चैव मासमेकं निरन्तरम् । इह जन्मनि शूद्रत्वं पुनः श्वानो भविष्यति ॥ १४ ॥ वृषलीफेनपीतस्य निःश्वासोपगतस्य च । तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥ १५ ॥ अग्रे माहिषकं दृष्ट्वा मध्ये च वृषलीपतिम् । अन्ते वार्धुषिकं दृष्ट्वा निराशाः पितरो गताः॥१६॥ महिषीत्युच्यते भार्या सा चैव व्यभिचारिणी । तान्दोषान्क्षमते यस्तु स वै माहिषकः स्मृतः ॥ १७ ॥ पितुर्गेहे तु या कन्या पश्यत्यसंस्कृता रजः । भ्रूणहत्या पितुस्तस्य(स्याः) कन्या सा वृषली स्मृता ॥ १८ ॥ यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः। असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥ १९ ॥ प्राप्ते द्वादशमे वर्षे कन्यां यो न प्रयच्छति । मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥ २० ॥ अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ २१ ॥ माता चैव पिता चैव ज्येष्ठभ्राता तथैव च । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ २२ ॥ समर्घं धनमुत्सृज्य मह(हा)र्घे यः प्रयच्छाति । स वै वार्धुषिको ज्ञेयो ब्रह्मवादिषु गर्हितः ॥ २३ ॥ शुक्रक्षयकरा वन्ध्या त्याज्येति परिकीर्तिता । तस्यास्तु यो भवेद्भर्ता तं तु विद्यादजाविकम् ॥ २४ ॥ दूराच्छ्रान्तं भयग्रस्तं ब्राह्मणं गृहमागतम् । अनर्चयित्वा यो भुङ्क्ते तत्क्षणेऽसौ विधी(ही)यते ॥ २५ ॥ अजाविको माहिषश्च तथा च वृषलीपतिः । तृणाग्रेणापि संस्पृष्ट्वा सवासा जलमाविशेत् ॥ २६ ॥ यावदुष्णं भवेदन्नं यावद्भुञ्जन्ति वाग्यताः। पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥ २७ ॥ हविर्गुणा न वक्तव्याः पितरो यान्त्यतर्पिताः । पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः ॥ २८ ॥ यावतो ग्रसते ग्रासान्हव्यकव्येष्वमन्त्रितः । तावतो ग्रसते प्रेत्य दीप्ताग्ग्रासानयोमयान् ॥ २९ ॥ आसनेष्वासनं दद्यान्न तु हस्ते कदाचन । हस्तेष्वासनदाने च निराशाः पितरो गताः ॥३०॥ आसने पादमारूढो वस्त्रस्यार्धमधः कृतम् । मुखेन धमितं भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥ ३१ ॥ अङ्गुल्यां यः पवित्राणि कृत्वा गन्धान्समर्च(र्प)येत् । पितॄणां नोपतिष्ठेत राक्षसैर्विप्रलुप्यति ॥ ३२ ॥ = हसन्ग्रासं च यो भुङ्क्ते सशब्दं सेङ्गितं तथा । लेहितं वर्तितं चैव षडेते पङ्क्तिदूषकाः ॥ ३३ ॥

= एतद्वचनस्थानेऽयं पाठ क. ग. पुस्तकयो —" ग्रासाद्ग्रासं च यो भुङ्क्ते सशब्दो लिङ्गिते तथा । लेहितं वर्जनं शण्डे तेषा पङ्क्तिश्च दूषिता " ॥ इति ।

१ क. ग. °र्धशीरि° । २ ख तल्लक्षेण ज° । ३ ग. °नपतनान्नि श्वा° । ४ ख. °पहत° । ५ क. ख. न्ध्या त्यजेति । ६ क. ग. °राक्रान्तं पदग्र° । ७ क. °र्धकृत. शिर. । मु° । ग. °र्धवृत शिर. । मु° ।

श्वित्री कुष्ठी तथा शूली कुनखी श्यावदन्तकः । रोगी हीनातिरिक्ताङ्गः पिशुनो मत्सरी तथा ॥ ३४ ॥ दुर्भगो हि तथा षण्ढः पाखण्डी वेदनिन्दकः । हैतुकः शूद्रयाजी च अयाज्यानां च याजकः ॥ ३५ ॥ नित्यं प्रतिग्रहे लुब्धो याचको विषयात्मकः । श्यावदन्तोऽथ वैद्यश्च असदालापकस्तथा ॥ ३६ ॥ एते श्राद्धे च दाने च वर्जनीयाः प्रयत्नतः । तथा देवलकश्चैव भृतको वेदविक्रयी ॥ ३७ ॥ एते वर्ज्याः प्रयत्नेन एवमेव यमोऽब्रवीत् । निराशाः पितरस्तस्य भवन्ति ऋणभागिनः ॥ ३८ ॥ अथ चे[1]न्मत्र( न्त्र )विद्युक्तो वैष्णवो ज्ञानवान्हि सः । हव्यकव्ये नियोक्तव्य इति प्राह स्वयं यमः ॥ ३९ ॥ तस्मात्सर्वप्रयत्नेन श्राद्धे यज्ञे च कर्मणि । अदूष्यं चैव विप्रेन्द्रं योजनीयं(येत्तु) प्रयत्नतः ॥ ४० ॥ तथैव मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः । वर्जितं च यमः प्राह पङ्क्तिपावन एव सः ॥ ४१ ॥ निर्मत्सरः सदाचारः श्रोत्रियो ब्रह्मविद्बुधः । विद्याविनयसंपन्नः पात्रभूतो द्विजोत्तमः ॥ ४२ ॥ वेदान्तविज्ज्येष्ठसामा अलुब्धो वेदतत्परः । योजनीयः प्रयत्नेन दैवे पित्र्ये च कर्मणि । यद्दत्तं च हुतं तस्मै ह्यनन्तं नात्र संशयः ॥ ४३ ॥ उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः । उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥४४॥ उच्छिष्टभाजनं येन विप्रेण चान्नवर्जितम् । स्पृष्टं तेन प्रमादाच्च प्राजापत्यं समाचरेत् ॥ ४५ ॥ उच्छिष्टोच्छिष्टसंस्पृष्टो ब्राह्मणो ब्राह्मणेन हि । दै[3]शरुद्रीं जपेत्पश्चाद्गायत्र्या शोधनं परम् ॥ ४६ ॥ उच्छिष्टोच्छिष्टसंस्पृष्टः क्षत्रियो वैश्य एव च । प्रमादोच्छिष्टसंस्पृष्टः शूद्रेण तु यदा द्विजः ॥ ४७ ॥ उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति[4] । श्वानकुक्कुटमार्जाराः काको वा स्पृशते यदि ॥ ४८ ॥ उच्छिष्टं[5] तं द्विजं यस्तु अहोरात्रेण शुध्यति । पञ्चगव्येन शुद्धिः स्यादित्याह भगवान्यमः ॥ ४९ ॥ रजस्वलां स्पृशेद्यस्तु त्रिरात्रं तत्र कारयेत् । उपोष्य द्विजसंस्कारं पञ्चगव्येन शुध्यति ॥ ५० ॥ उदक्यादृष्टिपातेन श्रुतशब्देन चैव हि । स्नानं देवार्चनं दानं हवनं च प्रणश्यति ॥ ५१ ॥ रक्तव[6]स्त्रस्य विक्रेता लाक्षारजकमे(ए)व च । वेणुजीवनकैवर्ततक्षचर्मोपजीविनः ॥ ५२ ॥ एतेषां स्पर्शनात्पापं तथा चैव तु मोहितः । प्रतिग्रहाच्च विप्रो वै नरकं प्रति गच्छति ॥ ५३ ॥ उदक्याः स्पर्शने चैव ब्राह्मणो वै प्रमादतः । षड्रात्रोपोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥ ५४ ॥ सूतके वर्तमानेऽपि दासवर्गस्य[7] का क्रिया । स्वामितुल्यं भवेत्तस्य सूतकं तु प्रशस्यते ॥ ५५ ॥ × यन्न कारयते तत्तन्नान्यं प्रत्यब्रवीद्यमः । विवाहोत्सवयज्ञेषु कार्ये चैवमुपस्थिते ॥ ५६ ॥ रजः

× एतदर्धस्थानेऽयं पाठ क. पुस्तके—" यद्यन्न कारयेत्तत्तन्नान्यत्रेत्यब्रवीन्मम " इति । एतदर्धस्थानेऽयं—पाठो ग पुस्तके—" यथा तु कारयेत्तत्र निरोधं प्रब्रवीमि तत् " इति ।

१ क. ग. नेत्पात्र° । २ क. ग. °पर्के. । व° । ३ क. ग. °स्द्र ज° । ४ ख °ति । श्वेनकु° । ५ ख. °ष्टं यं द्विजं सोऽपि अ° । ६ क. ग. °स्वविचितारं ला° । ७ क. ग. °स्य ना कि° ।

पश्यति या नारी तस्य कालस्य का क्रिया। विपुले च जले स्नात्वा शुक्लवासास्त्वलंकृता ॥ ५७ ॥ आपोहिष्ठेत्यृगभिषिक्ताऽऽयं गौरिति वा ऋचः[1] ( चा ) । पूजान्ते होमयेत्पश्चाद्घृताहुत्या शताष्टकम् ॥ ५८ ॥ गायत्र्या व्याहृतिभिश्च[2] ततः कर्म समाचरेत् । यावद्द्विजा न चार्च्यन्ते अन्नदानहिरण्यकैः ॥ ५९ ॥ तावच्चीर्णव्रतस्यापि तत्पापं न प्रणश्यति ॥ ६० ॥

यद्देहकं काकवलाकचिल्लामेध्येन लिप्तं तु भवेत्कदाचित् ।
श्रोत्रे मुखे वा परिमस्तके वा ज्ञा (स्ना)नेन लेपोपहतस्य शुद्धिः॥६१॥

अभक्ष्याणामपेयानामलेह्यानां च भक्षणे । रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत् ॥ ६२ ॥ पद्मोदुम्बरबिल्वानां कुशाश्वत्थपलाशयोः । एतेषामुदकं पीत्वा पञ्चगव्येन शुध्यति ॥ ६३ ॥ स्त्रीणां रजस्वलानां च स्पर्शश्चैव भवेद्यदि । चतुर्णामपि वर्णानां प्रायश्चित्तं कथं भवेत् ॥ ६४ ॥ = स्पृष्ट्वा रजस्वलाऽन्योन्यं[4] सगोत्रा चान्यगोत्रका । कामादकामतो वाऽपि त्रिरात्राच्छुद्धिरिष्यते ॥ ६५ ॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा । अर्धकृच्छ्रं चरेत्पूर्वा पादकृच्छ्रं तथोत्तरा ॥ ६६ ॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यिनी तथा । पादहीनं चरेत्पूर्वा पादमेकं तथोत्तरा ॥ ६७ ॥ स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रिणी तथा । कृच्छ्रेण शुध्यते शूद्री ब्राह्मी[5] दानेन शुध्यति ॥ ६८ ॥ विप्रः स्पृष्टो निशायां तूदक्यया पतितेन वा । दिवाऽऽनीतेन तोयेन स्नापयेदग्निसंनिधौ ॥ ६९ ॥ दिवा चैवार्कसंस्पृष्टं रात्रौ नक्षत्रदर्शनात् । संध्ययोरुभयोर्वाऽपि पवित्रं सर्वदा जलम् ॥ ७० ॥

इति श्रीयाम्ये धर्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

=====

( अथ चतुर्थोऽध्याय । )

खातं[6] वापी तथा कूपपाषाणे शस्त्रघातिते । यदृच्छा तु घातिते चैव मृत्पिण्डान्येव साधयेत्(!) ॥ १ ॥ गोवधे चैव यत्पापं बलीवर्दस्य चैव हि । प्रायश्चित्तं भवेत्तत्र स्त्रिया वा पुरुषस्य वा ॥ २ ॥ खाते च पतिता या गौः कूपे वा चावटेऽपि वाँ[7] । आशा(शै)वालकुडे(ण्डे)वाऽपि शस्त्रघातेन चैव हि ॥ ३ ॥ यदृच्छा तु पतिता या गौर्वलीवर्दो मृतोऽपि वा । वत्सो वत्सतरो[8] वाऽपि प्रायश्चित्ती भवेन्नरः ॥ ४ ॥

= न विद्यत एतद्वचनं ख. पुस्तके ।

१ क. ग. ऋचम् । २ ग. °हृतीश्चै° । ३ क ग. °तिश्चैव त° । ४ क. °न्यं स्वगोत्रा चान्यभर्तृका । [illegible]° । ५ क. ख. ब्राह्मणी दानशु° । ६ क. ख. खातवा° । ७ क ख. वा । अशावालकुटे वाऽ° । ८ क. °तरौ वाऽ° ।

नारी वाऽपि कुमारो वा प्रायश्चित्ताद्विशुध्यति । पापी प्रख्यापयेत्पापं दत्त्वा धेनुं तथा वृषम् ॥ ५ ॥ प्रच्छन्नपापिनो ये स्युः कृतघ्ना दुष्टचारिणः । नरकेषु च पच्यन्ते यावदाभूतसंप्लवम् ॥ ६ ॥ तस्माच्च पापिना ग्राह्यं प्रायश्चित्तं यथा तथा । प्रमादाच्च हता येन कपिला वा तथेतरा ॥ ७ ॥ यथा ब्रह्मवधे पापं कपिलाया वधे तथा । बलीवर्देऽपि च तथा प्रायश्चित्तं समं स्मृतम् ॥ ८ ॥ रोधने बन्धने चैव मृत्पिण्डनवगोमये । उत्कृष्टेनापि गोहन्ता प्रायश्चित्तेन शुध्यति ॥ ९ ॥ मुष्ट्यां वा निहता या गौः शकटे[2] धा(वा)रिपङ्क्त्योः । गोवर्त[3]पतिता गावः श्वनद्यामुत्तरेऽपि वा ॥ १० ॥ एतत्ते कथितं सर्वं गवां च(वि)घातमुत्तमम् । यत्र यत्र म्रियेद्गौश्च प्रायश्चित्तं पृथक्पृथक् ॥ ११ ॥ वने[4] च पतिता या गौः पामरत्राट[5](स)शङ्किता । मृता चैव यदा सा गौः प्रायश्चित्ती भवे[6]च्च सः ॥ १२ ॥ प्रेषितः पुरुषो वाऽपि प्रायश्चित्तं च यत्स्मृतम् । आब्दिकं चैव शूद्रस्य वैश्यस्य द्विगुणं भवेत् ॥ १३ ॥ त्रिगुणं क्षत्रियस्यैव विप्रस्यैव चतुर्गुणम् । गोष्ठे दिवसनं कार्यं गोघ्नोऽहमिति वाचयेत् ॥१४॥ कष्टेन वर्तमानोऽपि कालेनैव शुचिर्भवेत् । गवां मध्ये वसेद्रात्रौ दिवा गा वै ह्यनुव्रजेत् ॥ १५ ॥ न स्त्रीणां वपनं कुर्यान्न च गोव्रजनं स्मृतम् । न च गोष्ठे वसेद्रात्रौ न कुर्याद्वैदिकीं श्रुतिम् ॥ १६ ॥ सर्वान्केशान्समुच्छ्रित्य च्छेदयेदङ्गुलद्वयम् । एष ए(वमे)व तु नारीणां शिरोमुण्डापनं स्मृतम् ॥ १७ ॥ सूतके मृतके चैव विधिं प्रब्रूहि नो यम । जातके वर्तमानेऽपि मृतकं च यदा भवेत् ॥ १८ ॥ को विधिः स विनिर्दिष्टः कथयस्व यथातथम् । एवमुक्तो हि भगवान्यमः प्राह यथातथम् ॥१९॥ जातके नैव मृतकं क्षयं याति न संशयः । पूर्वव्रतमनिर्दिष्टं मया च सूतकं भवेत् ॥ २० ॥ सूतकेन न लिप्येत इति प्राह स्वयं यमः । सूतकेन न लिप्येत व्रतं संपूर्णतां व्रजेत् ॥ २१ ॥ श्राद्धं दानं तपो यज्ञो देवताराधनं तथा । ब्रह्महा च सुरापश्च स्वर्णस्तेयी गुरुद्रुहः ॥ २२ ॥ संसर्गी पञ्चमो ज्ञेयस्तत्समो नात्र संशयः । एतेषु द्वादशाब्दं च प्रायश्चित्तं विधीयते ॥ २३ ॥ तथा पातकिनां चैव षडब्दं चैव संस्मृतम् । उपपातकिनां चैव त्रिपञ्चाब्दं विधीयते ॥ २४ ॥ प्राजापत्यैस्त्रिभिः कृच्छ्रं कृच्छ्रं वै द्वादशाब्दिकम् । एकभक्तं तथा नक्तमुपवासमथापि वा ॥ २५ ॥ एतद्दिनचतुष्केण पादकृच्छ्रश्च जायते । त्रिपादकृच्छ्रो विज्ञेयः पापक्षयकरः स्मृतः ॥ २६ ॥ धर्मशास्त्रानुसारेण प्रायश्चित्तं मनीषिभिः । दातव्यं पापमुक्त्यर्थं प्राणिनां पापकारिणाम् ॥२७॥ अनुतापाद्य(पो य)दा पुंसां (सो) भवेद्वै पापिनः किल । प्रायश्चित्तं तदा देयमित्याह भगवान्यमः ॥२८॥

---

१ क. °ष्ट्या याऽपि हृ° । २ ग °टेधरि° । ३ ख. °र्तयति या गावोऽश्वनद्यामु° । ४ ख °ने निप° । ५ ग. गौ. परत्रट(माटन)° । ६ क. °वेन सः । ७ क ग °दिकीं श्रुतिः । म° । ८ ख. °मुद्गृह्य च्छे° । ९ ख. °धा याजनि° । १० क. ख °च्छ्रस्य जा° ।

अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः। प्रायश्चित्ती भवेत्पूतस्तत्पापं पर्षदं व्रजेत् ॥ २९ ॥ तस्माच्छास्त्रानुसारेण प्रायश्चित्तं विधीयते । अष्टशाल्यां मृता ये च ये च स्त्रीसूतके मृताः ॥ ३० ॥ दंष्ट्राभिर्भक्षिता ये च ये च आत्महनो जनाः । अष्टशाल्यां मृतो विप्रः प्रायश्चित्तं तु बन्धुभिः ॥ ३१ ॥ कार्यं तु और्ध्वदिकं चैव तथा स्त्रीणां च दापयेत् । शुद्ध्यर्थं नान्यथा भाव्यमित्याह भगवान्यमः ॥ ३२ ॥ दुर्मृत्युमरणं प्राप्ता येऽप्यधोगतिमागताः । तेषां शुद्ध्यर्थमेवात्र द्विःत्र्यब्दं हि विशिष्यते ॥ ३३ ॥ ब्राह्मणक्षत्रियविशां शूद्राणां चान्त्यजातिनाम् । तारतम्येन दातव्यमिति प्राह स्वयं यमः ॥ ३४ ॥ पतितानां च विप्राणां तथा स्त्रीणां विगर्हितम् । कथं शुद्धिर्भवेत्तासां तेषां चैव विशेषतः ॥ ३५ ॥ व्यभिचाराद्दतौ शुद्धिः स्त्रीणां चैव न संशयः । गर्भे जाते परित्यागो नान्यथा मम भाषितम् ॥ ३६ ॥ दुष्टस्त्रीदर्शनेनैव पितरो यान्त्यधोगतिम् । घृतं योन्यां क्षिपेद्घोरं परपुंसगता हि या ॥ ३७ ॥ हवनं च प्रयत्नेन गायत्र्या चायुतत्रयम् । ब्राह्मणान्भोजयेत्पश्चाच्छतमष्टोत्तरेण हि ॥ ३८ ॥ विधवा चैव या नारी पुंसोपगतसेविनी । त्याज्या सा बन्धुभिश्चैव नान्यथा यमभाषितम् ॥ ३९ ॥ पतितस्य च विप्रस्य अनुतापरतस्य च । पापाच्चैव निवृत्तस्य प्रायश्चित्ती भवेत्तदा ॥ ४० ॥ तारतम्येन दातव्यं प्रायश्चित्तं यथाविधि । सकामो हि यदा विप्रः पापाचारपरो भवेत् ॥ ४१ ॥ दृष्ट्वा ( दिष्ट्या ) निवृत्तपापौघः प्रायश्चित्ती तदाऽर्हति । तथा क्षत्रियवैश्यौ वा शूद्रो वाऽपि यथाक्रमात् ॥ ४२ ॥ विधवागमने पापं सकृच्चैव तु यद्भवेत् । असकृच्च यदा ज्ञात्वा प्रायश्चित्तं प्रवर्तते ॥ ४३ ॥ असकृद्गमनाच्चैव चरेच्चान्द्रायणद्वयम् । सकृद्गमने यत्पापं प्राजापत्यद्वयेन हि ॥ ४४ ॥ पुनर्भूर्विकृता येन कृता विप्रेण चैव हि । विना शाखाप्रभेदेन पुनर्भूर्भण्यते हि सा ॥ ४५ ॥ सवर्णश्च सवर्णायामभिषिक्तो यदा भवेत् । ब्राह्मणः कामलुब्धोऽपि श्राद्धे यज्ञे च गर्हितः ॥ ४६ ॥ क्षत्रियो ब्राह्मणीसक्तः क्षत्रिण्यां विश एव वा । वैश्यायां गमने शूद्रः पतिताया भवान्यथा ॥ ४७ ॥ प्रातिलोम्ये महत्पापं प्रवदन्ति मनीषिणः । प्रायश्चित्तं चाऽऽनुलोम्ये न भवत्येव चान्यथा ॥ ४८ ॥ मानसं वाचिकं चैव कायिकं पातकं स्मृतम् । तस्मात्पापाद्विशुद्ध्यर्थं प्रायश्चित्तं दिने दिने ॥ ४९ ॥ प्रातः संध्यां सनक्षत्रामुपास्यामे( सीतै )व यत्नतः । मध्याह्ने च तथा रौद्रीं सायं चैव तु वैष्णवीम् ॥ ५० ॥

१ क. °ष्टशल्या । २ ख. ये चापि सू° । ३ क °ष्टशल्या । ४ क। ख. त्र्याब्दिकं । ५ क. ख द्घोरा प° । ६ ख. °पापेभ्यः । प्रा° । ७ क. °मनय° । ग. °मनात्तु य° । ८ क. ख. °नर्भुवि कृ° । ९ ख. °वर्णा च स° । १० ग. भवन्य° । ११ ख. °त्तं तुलोमेन । १२ क. °व त्रिविधं चैव संस्मृ° ।

त्रिविधं पापशुद्ध्यर्थं संध्योपासनमेव च । संध्याहीनो हि यो विप्रः स्नानहीनस्तथैव च ॥ ५१ ॥ स्नानहीनो मलाशी स्यात्संध्याहीनो हि भ्रूणहा । नैशं पा( नश्येत्पा )पं हि[1] यां ध्यात्वा उ( तुरु )पासनपरो हि सः ॥ ५२ ॥ ब्रह्मलोकं व्रजत्येव नान्यथा यमभाषितम् । विद्यातपोभ्यां संयुक्तः शान्तः शुचिरलम्पटः ॥ ५३ ॥ अलुब्धाह्लादनिष्पापा भूदेवा नात्र संशयः । पात्रीभूताश्च विज्ञेया विप्रास्ते नात्र संशयः ॥ ५४ ॥ तेभ्यो दत्तमनन्तं हि इत्याह भगवान्यमः । कुकर्मस्थास्तु ये विप्रा लोलुपा वेदवर्जिताः ॥ ५५ ॥ संध्याहीना व्रतभ्रष्टाः पिशुना विषयात्मकाः । तेभ्यो दत्तं निष्फलं स्यान्नात्र कार्या विचारणा ॥ ५६ ॥ * प्रतिग्रहे संकुचिता यदान्यातैयविधृता । भूमिदर्शनात्पापमोचकाकृतत्रेताद्वापरे कलौ नौववीरोपितः ॥ ५७ ॥ राजप्रतिग्रहात्सर्वं ब्रह्मवर्चसमेव च । नश्यतीति न संदेह इत्याह भगवान्यमः ॥ ५८ ॥ राज्ञां प्रतिग्रहस्त्याज्यो लोकत्रयजिगीषुभिः । राज्ञः प्रतिग्रहाच्चैव ब्राह्मण्य हि विलुप्यते ॥ ५९ ॥ गावो दूरप्रचारेण हिरण्यं लोभलिप्सया । स्त्री विनश्यति गर्वे ( र्भे ) ण ब्राह्मणो राजसेवया ॥ ६० ॥ सेवकाश्चापि विप्राणां राज्ञां सुकृतनामभिः । कुम्भीपाकेषु पच्यन्ते यावदाभूतसंप्लवम् ॥ ६१ ॥ असेव्यासेविनो विप्रा अयाज्यानां च याजकाः । अपाङ्क्ता( ङ्क्त्या )स्ते च विज्ञेयाः सर्वधर्मबहिष्कृताः ॥ ६२ ॥

इति श्रीयाम्ये धर्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

=====

( अथ पञ्चमोऽध्याय. । )

---

अतः परं प्रवक्ष्यामि शृणुध्वं मुनिपुंगवाः । सर्वेषामन्त्यजातीनां वर्णादीनां यथाक्रमम् ॥ १ ॥ स्त्रीसंपर्कादिकं सर्वं जातमन्त्यजसंज्ञकम् । योनिसंकरजं सर्वं वर्णतश्चापि सर्वशः ॥ २ ॥ विप्रक्षत्रियविट्शूद्रा वर्णिजात्येष्वनुक्रमात् । एते ब्राह्मणकुत्साः स्युस्तस्माद्ब्राह्मण( ण्य )मुत्तमम् ॥ ३ ॥ वेदाचाररतो विप्रो वेदवेदाङ्गपारगः । तैरप्यनुष्ठितो धर्म उक्तश्चैव विशेषतः ॥ ४ ॥ कार्ये चैव विशेषेण त्रिभिर्वर्णैरतन्द्रितः । बलाद्दासीकृता ये च म्लेच्छचाण्डालदस्युभिः ॥ ५ ॥

---

* इत आरभ्य उपित इत्यन्त पाठोऽसगत. ।

---

१ क हि गो ज्ञात्वा । २ क ख. शान्ताशुनिरलम्पया । अ° । ३ ख °ब्धा [ ब्धो ] रसाहृनि° । ४ ग. °ब्रह्मपते° । ५ ग °लौनोयवरो° । ६ ख. °कृतामपि । कु° । ७ ग °जाना घ य° । ८ ग. सर्वग°। ९ ग चानिन° । १० क °त्यगा भूणरा स्तु° । ११ ख °णमुक्त्या स्तु° । १२ ग, °न्द्रितै. । ब°।

अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् । प्रायश्चित्तं च दातव्यं तारतम्येन वा द्विजैः ॥ ६ ॥ श्राद्धकाले यदा जाता पत्नी यस्य रजस्वला । प्रसूता वा न कार्यं च दैविकं पैतृकं तथा ॥ ७ ॥ ब्राह्मणा मन्त्रिताश्चैव क्षणिता वा प्रयत्नतः । उद्दिश्य पितृपाकं च कार्यं पैतृकमेव तत् ॥ ८ ॥ आशौचं न भवत्येव नात्र कार्या विचारणा । प्रस्थाने वा पिता तस्य पञ्चत्वं च गतो भवेत् ॥ ९ ॥ श्राद्धादिकं तु पुत्रेण अज्ञातेन कृतं यदा । कन्याप्रदानसमये श्रुतं च पि(तत्रान्पि) तरं मृतम् ॥ १० ॥ कन्यादानं च तत्कार्यं वचनाद्भवते(ति) क्षमः । पितुः पात्रादिकं कर्म पश्चात्सर्वं यथाविधि ॥ ११ ॥ अज्ञानाच्च कृतं सर्वं दैविकं पैतृकं च यत् । जातके सू(मृ)तके वाऽपि तत्सर्वं सफलं भवेत् ॥ १२ ॥ (*व्यासेनोक्तस्मृतौ स्वकीये अज्ञानात्पितरि मृते यदा ज्ञातुसदैवकार्यं पितृकमेव वा ) ॥ १३ ॥ अनेके यस्य ये पुत्राः संसृष्टा हि भवन्ति च । ज्येष्ठेन हि कृतं सर्वं सफलं पैतृकं भवेत् ॥ १४ ॥ वैदिकं च तथा सर्वं भवत्येव न संशयः । पृथक्पिण्डं पृथक्श्राद्धं वैश्वदेवादिकं च यत् ॥ १५ ॥ भ्रातरश्च पृथक्कुर्युर्नाविभक्ताः कदाचन । अपुत्रस्य च पुत्राः स्युः कर्तारः सांपरायणाः ॥ १६ ॥ सफलं जायते सर्वमिति शातातपोऽब्रवीत् । न च दत्तो अ(ऽप्य)हीनोऽतिस्नेहेन च तथाऽपरः ॥ १७ ॥ बलाद्गृहीतो वद्धश्च बन्धुभिर्दत्त एव च । भ्रातुः पुत्रो मित्रपुत्रः शिष्यश्चैव तथौरसः ॥ १८ ॥ अपुत्रस्य च विज्ञेया दायादा नात्र संशयः । नवैते पुत्रवत्पाल्याः परलोकप्रदा ह्यमी ॥ १९ ॥ औरसेन समा ज्ञेया वचसोद्दालकस्य च । इदानीं भागनिर्णयमृषिः शातातपोऽब्रवीत् ॥ २० ॥ ज्येष्ठेन वा कनिष्ठेन विभागस्य विनिर्णयः । समभागप्रदाता च अपुत्रेभ्यो न संशयः ॥ २१ ॥ समभागो ग्रहीतव्यः पुत्रर्मत्या सदैव हि । पितृभ्यो भ्रातृपुत्रेभ्यो दायादेभ्यो यथाक्रमात् ॥ २२ ॥ अधिकस्य च भागौ द्वावितरेभ्यः समासतः । आधौ प्रतिग्रहे क्रान्ते पूर्वा तु बलवत्तरा ॥ २३ ॥ सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया । समविद्योत्तरं चैव प्रत्यवस्कन्दनं तथा ॥ २४ ॥ पूर्वे न्यासत्रिविधिश्चैव उत्तरः स्याच्चतुर्विधः । साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ॥ २५ ॥ पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः । असाक्षिव्यवहारेषु दिव्यं देयं यथाविधि = ॥ २६ ॥

इति श्रीयाम्ये धर्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

समाप्तेयं बृहद्यमस्मृतिः ।

---

* धनुश्चिह्नान्तर्गतमधिकं सकलादर्शपुस्तकेषु असंगतं च । = समाप्ति संदिग्धा ।

१ क. °नाभरवेक्षमा । पि° । २ ग °द्भरवेक्षमा । पि° । ३ ग कर्म । ४ ख ग °नोक्त स्मृ° । ५ ग ज्ञातुं स° । ६ क. वा । ऐक्ययचानयेत्पुत्रा । ख. वा ऐकायच्चानेपु° । ७ क सनचगो° । ८ क. ख °मन्वाख° । ९ क अजीगस्य । ख. भजीक° । १० ख °न्ते तत्पूर्वबलवत्तर । स° । ११ क ख °र्वा तु व° । १२ क. ग. °नाहेषु । १३ ख ग. न्यायवि° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# बृहस्पतिस्मृतिः ।

*इष्ट्वा क्रतुशतं राजा समाप्तवरदक्षिणम् । भगवन्तं गुरुश्रेष्ठं पर्यपृच्छद्बृहस्पतिम् ॥१॥ भगवन्केन दानेन सर्वतः सुखमेधते । यदक्षयमहार्थं[1] च तन्मे ब्रूहि महातप ॥ २ ॥ एवमिन्द्रेण पृष्टोऽसौ देववेदपुरोहितः । वाचस्पतिर्महाप्राज्ञो बृहस्पतिरुवाच ह + ॥ ३ ॥ सुवर्णदानं गोदानं भूमिदानं च वासव । एतत्प्रयच्छमानस्तु सर्वपापैः प्रमुच्यते×॥ ४ ॥ सुवर्णं रजतं वस्त्रं मणिरत्नं च वासव । सर्वमेव भवेद्दत्तं वसुधां यः प्रयच्छति ॥ ५ ॥ फालकृष्टां महीं दत्त्वा सबीजां सस्य[3]शालिनीम् । यावत्सूर्यकृता लोकास्तावत्स्वर्गे महीयते ॥ ६ ॥ यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्षि(र्शि)तः । अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥ ७ ॥ दशहस्तेन दण्डेन त्रिंशद्द[4]ण्डैर्निवर्तनम् । दश तान्येव विस्तारो गोचर्मैतन्महाफलम् ॥ ८ ॥ सवृषं गोसहस्रं तु यत्र तिष्ठत्यतन्द्रितम् । बालवत्साप्रसूतानां तद्गोचर्म इति स्मृतम् ॥ ९ ॥ विप्राय दद्याच्च गुणान्विताय तपोभियुक्ताय जितेन्द्रियाय । यावन्मही तिष्ठति सागरान्ता तावत्फलं तस्य भवेदनन्तम् ॥ १० ॥ यथा बीजानि रोहन्ति प्रकीर्णानि महीतले । एवं कामाः प्ररोहन्ति भूमिदानसमर्जिताः ॥ ११ ॥ यथाऽप्सु पतितः शक्र तैलबिन्दुः प्रसर्पति । एवं भूमि(मेः) कृतं दानं सस्ये सस्ये प्ररोहति ॥ १२ ॥ =अन्नदः सुखितो नित्यं वस्त्रदश्चैव रूपवान् । स नरः सर्वदो भूप यो ददाति वसुंधराम् ॥ १३ ॥ यथा गौर्भरते वत्सं क्षीरमुत्सृज्य क्षीरिणी । एवं दत्ता सहस्राक्ष भूमिर्भराति भूमिदम् ॥ १४ ॥

---

* एतद्वचनात्प्राक् च. पुस्तकेऽयं पाठः—"बृहस्पतिकृतं पुण्यं प्रवक्ष्यामि विशेषतः । यच्छ्रुत्वा तु नलो राजा सर्वपापैः प्रमुच्यते" इति । + इतः परं वचनद्वयमधिकं च पुस्तके—"स्वागतेनाग्नयः प्रीता आसनेन शतक्रतुः । विष्णुस्तु पादशौचेन अर्घ्यायेन प्रजापतिः । पादशौचं तथाऽभ्यङ्गं दीयमानं प्रतिश्रवाम् । ये ददति सहस्राणि नोपसर्पन्ति ते यमम्" इति । × इतः परं वचनद्वयमधिकं च. पुस्तके—"अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः । लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च महीं च दद्यात् । सर्वेषामेव दानानामेकजन्मानुगं फलम् । हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम्" इति । = एतद्वचनस्थानेऽयं पाठश्च पुस्तके—"इक्षुभिः संततां भूमिं व्रीहिभिर्यवशाद्वलैः । यो ददाति सहस्राक्ष न स प्रच्यवते दिवः" इति ।

---

१ ग. यद्दत्तं यन्महार्घं न । २ च °हातेजा बृ° । ३ क ख °स्यमालि° । ४ क. ख. ट. °द्दण्डानिव° । न °द्दण्डानुव° । ५ ग °यन्मप्र° । ६ ग °न सद्यस्तैल° । ७ ग °न्नदाः सुखिनो नि° ।

शङ्खं भद्रासनं छत्रं चरस्थावरवारणाः । भूमिदानस्य पुण्येन फलं स्वर्गः पुरंदर ॥ १५ ॥ आदित्यो वरुणो वह्निर्ब्रह्मा सोमो हुताशनः । शूलपाणिश्च भगवानभिनन्दति भूमिदम् ÷ ॥ १६ ॥ आस्फोटयन्ति पितरः प्रहर्षन्ति पितामहाः । भूमिदाता कुले जातः स नस्त्राता भविष्यति ॥ १७ ॥ त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती । तारयन्तीह दातारं जपवापनदोहनैः ॥ १८ ॥ प्रावृता वस्त्रदा यान्ति नग्ना यान्ति त्ववस्त्रदाः । तृप्ता यान्त्यन्नदातारः क्षुधिता यान्त्यनन्नदाः ॥ १९ ॥ काङ्क्षन्ति पितरः सर्वे नरकाद्भयभीरवः । गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ॥ २० ॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ २१ ॥ लोहितो यस्तु वर्णेन पुच्छाग्रे यस्तु पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलवृष उच्यते ॥ २२ ॥ नीलः पाण्डुरलाङ्गूलस्तृणमुद्धरते तु यः । षष्टिवर्षसहस्राणि पितरस्तेन तर्पिताः ॥ २३ ॥ यच्च शृङ्गगतं पङ्कं कूलात्तिष्ठति चोद्धृतम् । पितरस्तस्य चाश्नन्ति सोमलोक( कं )महाद्युतिम् ॥ २४ ॥ +पृथोर्यदोर्दिलीपस्य नृगस्य नहुषस्य च । अन्येषां च नरेन्द्राणां पुनरन्या भविष्यति ॥ २५ ॥ बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः । यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ २६ ॥ यस्तु ब्रह्मघ्नः स्त्रीघ्नो वा यस्तु वै पितृघातकः । गवां शतसहस्राणां हन्ता भवति दुष्कृती ॥ २७ ॥ स्वदत्तां परदत्तां वा यो हरेत्तु वसुंधराम् । श्वविष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते ॥ २८ ॥ आक्षेप्ता चानुमन्ता च तमेव नरकं व्रजेत् । भूमिदो भूमिहर्ता च नापरं पुण्यपापयोः ॥ ऊर्ध्वाधो वाऽवतिष्ठेत यावदाभूतसंप्लवम् ॥ २९ ॥ अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः । लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च महीं च दद्यात् ॥ ३० ॥ षडशीतिसहस्राणां योजनानां वसुंधरा । स्वतो दत्ता तु सर्वत्र सर्वकामप्रदायिनी ॥ ३१ ॥ भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति । उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ(णौ) ॥ ३२ ॥ सर्वेषामेव दानानामेकजन्मानुगं फलम् । हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥ ३३ ॥ यो न हिंस्याद्विनिन्द्यात्मा भूतग्रामं चतुर्विधम् । तस्य देहाद्वियुक्तस्य भयं नास्ति कदाचन ॥ ३४ ॥ अन्यायेन हृता भूमिर्यैर्नरैरपहारिता । हरन्तो हारयन्तश्च हन्युस्ते

---

÷ इत परमधिकं च पुस्तके—' सौवर्णा यत्र प्रासादा· सोद्धा(पस्का) राश्च कामदा । गन्धर्वाप्सरसो यत्र तत्र तिष्ठति भूमिद· " इति । + " सगरस्य दिलीपस्य ययातेर्नहुषस्य च " इति पाठश्च पुस्तके ।

---

१ च °त्रं गजाश्वनरवाहनम् । भू° । २ च °स्य चिह्नानि फ° । ३ च. °तरो नर्तयन्ति । ४ क. घ. छ. प्रवलान्ति । ५ ग °रं सर्वोत्पापादसंशयम् । प्रा° । ६ क ख. ग. °राम् । स्व° । ७ ख ग. घ. °दहं ह्यात्मा ।

सप्तमं कुलम् ॥३५॥हरते हारयेद्यस्तु मन्दबुद्धिस्तमोवृतः । स बद्धो वारुणैः पाशैस्ति-
र्यग्योनिषु जायते ॥ ३६ ॥ असुभिः पतितैस्तेषां दानानामवकीर्तनम् । ब्राह्मणस्य
हृते क्षेत्रे हन्ति त्रिपुरुषं कुलम् ॥ ३७ ॥ वापीकूपसहस्रेण अश्वमेधशतेन च । गवां
कोटिप्रदानेन भूमिहर्ता न शुध्यति ॥ ३८ ॥ गामेकां स्वर्णमेकं वा भूमेरप्यर्धमङ्गु-
लम् । हरन्नरकमायाति यावदाभूतसंप्लवम् ॥ ३९ ॥ हुतं दत्तं तपोऽधीतं यत्किंचि-
द्धर्मसंचितम् । अर्धाङ्गुलस्य सीमाया हरणेन प्रणश्यति ॥ ४० ॥ गोवीथीं ग्राम-
रथ्यां च श्मशानं गोपितं तथा । संपीड्य नरकं याति यावदाभूतसंप्लवम् ॥ ४१ ॥
ऊषरे निर्जले स्थाने प्रास्तं सस्यं विवर्जयेत् । जलाधारश्च कर्तव्यो व्यासस्य वचनं
यथा ॥ ४४ ॥ पञ्च कन्यानृते हन्ति दश हन्ति गवानृते । शतमश्वा-
नृते हन्ति सहस्रं पुरुषानृते ॥ ४३ ॥ हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः ॥ ४४ ॥ ब्रह्मस्वे मा रतिं कुर्यात्प्राणैः
कण्ठगतैरपि । अनौषधमभैषज्यं विषमेतद्धलाहलम् ॥ ४५ ॥ न विषं विषमित्याहु-
र्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ ४६ ॥ लोहचूर्णा-
श्मचूर्णं च विषं च जरयेन्नरः । ब्रह्मस्वं त्रिषु लोकेषु कः पुमाञ्जरयिष्यति ॥ ४७ ॥
– मन्युप्रहरणा विप्रा राजानः शस्त्रपाणयः । शस्त्रमेकाकिनं हन्ति विप्रमन्युः कुलं-
त्रयम् ॥ ४८ ॥ मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः । चक्रात्तीव्रतरो मन्युरतस्मा-
द्विप्रं न कोपयेत् ॥ ४९ ॥ अग्निदग्धाः प्ररोहन्ति सूर्यदग्धास्तथैव च । मन्युदग्धस्य
विप्राणामङ्कुरो न प्ररोहति ॥ ५० ॥ अग्निर्दहति तेजसा सूर्यो दहति रश्मिभिः ।
राजा दहति दण्डेन विप्रो दहति मन्युना ॥ ५१ ॥ ब्रह्मस्वेन तु यत्सौख्यं देवस्वेन
तु या रतिः । तद्धनं कुलनाशाय भवत्यात्मविनाशनम् ॥ ५२ ॥ ब्रह्मस्वं ब्रह्महत्या
च दरिद्रस्य च यद्धनम् । गुरुमित्रहिरण्यं च स्वर्गस्थमपि पीडयेत् ॥ ५३ ॥ ब्रह्म-
स्वेन तु यच्छिद्रं तच्छिद्रं न प्ररोहति । प्रच्छादयति तच्छिद्रमन्यत्र तु विसर्पति
॥ ५४ ॥ ब्रह्मस्वेन तु पुष्टानि साधनानि बलानि च । संग्रामे तानि लीयन्ते
सिकतासु यथोदकम् ॥ ५५ ॥ श्रोत्रियाय कुलीनाय दरिद्राय च वासव ।
संतुष्टाय विनीताय सर्वभूतहिताय च ॥ ५६ ॥ वेदाभ्यासस्तपो ज्ञानमि-
न्द्रियाणां च संयमः । ईदृशाय सुरश्रेष्ठ यद्दत्तं हि तदक्षयम् ॥ ५७ ॥ आमपात्रे
यथा न्यस्तं क्षीरं दधि घृतं मधु । विनश्येत्पात्रदौर्बल्यात्तच्च पात्रं विनश्यति ॥५८॥

– न विद्यत एतद्वचनं क पुस्तके ।

१ ग अश्रुभि । २ ग. °मपकी° । ३ ग. °म् । स्न्वय° । ४ क घ ऊषरे । ५ क ख घ. °रथ्य क° । ६ म. कुर्या. प्राणै । ७ ग. °लक्षयम् । ८ म °पो दान° ।

एवं गां च हिरण्यं च वस्त्रमन्नं महीं तिलान् । अविद्वान्प्रतिगृह्णाति भस्मी भवति काष्ठवत् ॥ ५९ ॥ यस्य चैव गृहे मूर्खो दूरे चापि बहुश्रुतः । बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥ ६० ॥ कूलं तारयते धीरः सप्त सप्त च वासव ॥ ६१ ॥ यस्तडागं नवं कुर्यात्पुराणं वाऽपि खानयेत् । स सर्वं कुलमुद्धृत्य स्वर्गे लोके महीयते ॥ ६२ ॥ वापीकूपतडागानि उद्यानोपवनानि च । पुनःसंस्कारकर्ता च लभते मौलिकं फलम् ॥ ६३ ॥ निदाघकाले पानीयं यस्य तिष्ठति वासव । स दुर्गविषमं कृत्स्नं न कदाचिदवाप्नुयात् ॥ ६४ ॥ एकाहं तु स्थितं तोयं पृथिव्यां राजसत्तम । कुलानि तारयेत्तस्य सप्त सप्त पराण्यपि ॥ ६५ ॥ दीपालोकप्रदानेन वपुष्मान्स भवेन्नरः । प्रोक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति ॥ ६६ ॥ कृत्वाऽपि पापकर्माणि यो दद्यादन्नमर्थिने । ब्राह्मणाय विशेषेण न स पापेन लिप्यते ॥ ६७ ॥ भूमिर्गावस्तथा दाराः प्रसह्य ह्रियते यदा । न चाऽऽवेदयते यस्तु तमाहुर्ब्रह्मघातकम् ॥६८॥ निवेदितस्तु राजा वै ब्राह्मणैर्मन्युपीडितैः । न निवारयते यस्तु तमाहुर्ब्रह्मघातकम् ॥ ६९ ॥ उपस्थिते विवाहे च यज्ञे दाने च वासव । मोहाच्चरति विघ्नं यः स मृतो जायते कृमिः ॥ ७० ॥ धनं फलति दानेन जीवितं जीवरक्षणात् । रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते ॥ ७१ ॥ फलमूलाशनात्पूज्यं(ज्यां) स्वर्गः सत्येन लभ्यते । प्रायोपवेशनाद्राज्यं सर्वत्र सुखमश्नुते ॥ ७२ ॥ गवाढ्यः शक्र दीक्षायाः स्वर्गगामी तृणाशनः । स्त्रियस्त्रिषवणस्नायी वायुं पीत्वा क्रतुं लभेत् ॥ ७३ ॥ नित्यस्नायी भवेदर्कः संध्ये द्वे च जपन्द्विजः । नवं साधयते राज्यं नाकपृष्ठमनाशके ॥ ७४ ॥ अग्निप्रवेशे नियतं ब्रह्मलोके महीयते । रसानां प्रतिसंहारे पशून्पुत्रांश्च विन्दति॥७५॥ नाके चिरं स वसते उपवासी च यो भवेत् । सततं चैकशायी यः स लभेदीप्सितां गतिम् ॥ ७६ ॥ वीरासनं वीरशय्यां वीरस्थानमुपाश्रितः । अक्षय्यास्तस्य लोकाः स्युः सर्वकामगमास्तथा ॥ ७७ ॥ उपवासं च दीक्षां च अभिषेकं च वासव । कृत्वा द्वादश वर्षाणि वीरस्थानाद्विशिष्यते ॥ ७८ ॥ अधीत्य सर्ववेदान्वै सद्यो दुःखात्प्रमुच्यते । पावनं चरते धर्मं स्वर्गलोके महीयते ॥ ७९ ॥ बृहस्पतिमतं पुण्यं ये पठन्ति द्विजातयः । चत्वारि तेषां वर्धन्ते आयुर्विद्या यशो बलम् ॥ ८० ॥

इति बृहस्पतिप्रणीतं धर्मशास्त्रं संपूर्णम् ॥

समाप्तेयं बृहस्पतिस्मृतिः ।

१ ग. °डाकं न° । २ घ. मौक्तिकं । ३ क. °म प्रशुष्मा° । ४ ग. ङ स्वर्ग ५ ग ङ म तत्साध° । ६ ख. रसना । ७ ङ. रमति । ८ क. स्यु स्वर्गकामाग° । ९ ख ङ. °कामाग° । १० घ. °गतास्त° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# यमस्मृतिः ।

---

श्रुतिस्मृत्युदितं धर्मं वर्णानामनुपूर्वशः । प्राब्रवीदृषिभिः पृष्टो मुनीनामग्रणीर्यमः ॥ १ ॥ यो भुञ्जानोऽशुचिर्वाऽपि चण्डालं पतितं स्पृशेत् । क्रोधादज्ञानतो वाऽपि तस्य वक्ष्यामि निष्कृतिम् ॥ २ ॥ षड्रात्रं वा त्रिरात्रं वा यथासंख्यं समाचरेत् । स्नात्वा त्रिषवणं विप्रः पञ्चगव्येन शुध्यति ॥ ३ ॥ भुञ्जानस्य तु विप्रस्य कदाचित्स्रवते गुदम् । उच्छिष्टत्वेऽशुचित्वे च तस्य शौचं विनिर्दिशेत् ॥ ४ ॥ पूर्वं कृत्वा द्विजः शौचं पश्चादप उपस्पृशेत् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ५ ॥ निगिरन्यदि मेहेत भुक्त्वा वा मेहने कृते । अहोरात्रोषितो भूत्वा जुहुयात्सर्पिषाऽऽहुतीः ॥ ६ ॥ यदा भोजनकाले स्यादशुचिर्ब्राह्मणः क्वचित् । भूमौ निधाय तद्ग्रासं स्नात्वा शुद्धिमवाप्नुयात् ॥ ७ ॥ भक्षयित्वा तु तद्ग्रासमुपवासेन शुध्यति । अशित्वा चैव तत्सर्वं त्रिरात्रेणैव शुध्यति ॥ ८ ॥ अश्नतश्चेद्विरेकः स्यादस्वस्थस्त्रिशतं जपेत् । स्वस्थस्त्रीणि सहस्राणि गायत्र्याः शोधनं परम् ॥ ९ ॥ चण्डालैः श्वपचैः स्पृष्टो विण्मूत्रे तु कृते द्विजः । त्रिरात्रं तु प्रकुर्वीत भुक्त्वोच्छिष्टः षडाचरेत् ॥ १० ॥ उदक्यां सूतिकां वाऽपि संस्पृशेदन्त्यजो यदि । त्रिरात्रेण विशुद्धिः स्यादिति शातातपोऽब्रवीत् ॥ ११ ॥ रजस्वला तु संस्पृष्टा श्वमातङ्गादिवायसैः । निराहारा शुचिस्तिष्ठेत्कालस्नानेन शुध्यति ॥ १२ ॥ रजस्वले यदा नार्यावन्योन्यं स्पृशते(तः) क्वचित् । शुध्यतः पञ्चगव्येन ब्रह्मकूर्चेन चोपरि ॥ १३ ॥ उच्छिष्टेन च संस्पृष्टा कदाचित्स्त्री रजस्वला । कृच्छ्रेण शुद्धिमाप्नोति शूद्रा दानोपवासतः ॥ १४ ॥ अनुच्छिष्टेन संस्पृष्टे स्नानं येन विधीयते । तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥ १५ ॥ ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम् । अनृतौ तु स्त्रियं गत्वा शौचं मूत्रपुरीषवत् ॥ १६ ॥ उभावप्यशुची स्यातां दंपती शयनं गतौ । शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥ १७ ॥

---

१ ख. ग °रात्रमशुचिर्भवेत् । अ° । २ ग. भुक्तोच्छि° ।

भर्तुः शरीरशुश्रूषां दौरात्म्यादप्रकुर्वती । दण्ड्या द्वादशकं नारी वर्षं त्याज्या धनं विना ॥१८॥ त्यजन्तोऽपतितान्बन्धून्दण्ड्या उत्तमसाहसम् । पिता हि पतितः कामं न तु माता कदाचन ॥ १९ ॥ आत्मानं घातयेद्यस्तु रज्ज्वादिभिरुपक्रमैः । मृतोऽमेध्येन लेप्तव्यो जीवतो द्विशत दमः ॥ २० ॥ दण्ड्यास्तत्पुत्रमित्राणि प्रत्येकं पणिकं दमम् । प्रायश्चित्तं ततः कुर्युर्यथाशास्त्रप्रचोदितम् ॥ २१ ॥ जलाद्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः । विषप्रपतनप्रायशस्त्रघातहताश्च ये ॥ २२ ॥ नवैते प्रत्यवसिताः सर्वलोकबहिष्कृताः । चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन वा ॥ २३ ॥ उभयावसितः पापः श्यामाच्छबलकाच्च्युतः । चान्द्रायणाभ्यां शुध्येत दत्त्वा धेनुं तथा वृषम् ॥ २४ ॥ श्वशृगालप्लवङ्गाद्यैर्मानुषैश्च रतिं विना । दष्टः स्नात्वा शुचिः सद्यो दिवा संध्यासु रात्रिषु ॥ २५ ॥ अज्ञानाद्ब्राह्मणो भुक्त्वा चण्डालान्नं कदाचन । गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥२६॥ गोब्राह्मणगृहं दग्ध्वा मृतं चो(तश्चो)द्बन्धनादिना । पाशांश्छित्त्वा तथा तस्य कृच्छ्रमेकं चरेद्द्विजः ॥ २७ ॥ चण्डालपुक्कसानां च भुक्त्वा गत्वा च योषितम् । कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥ २८ ॥ कापालिकान्नभोक्तॄणां तन्नारीगामिनां(णां) तथा । कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥ २९ ॥ अगम्यागमने विप्रो मद्यगोमांसभक्षणे । तप्तकृच्छ्रपरिक्षिप्तो मौर्वी(ञ्जी)होमेन शुध्यति ॥ ३० ॥ महापातककर्तारश्चत्वारोऽप्यविशेषतः । अग्निं प्रविश्य शुध्यन्ति स्थित्वा वा महति क्रतौ ॥ ३१ ॥ रहस्यकरणेऽप्येवं मासमभ्यस्य पूरुषः । अघमर्षणसूक्तं वा शुध्येदन्तर्जले स्थितः ॥ ३२ ॥ रजकश्चर्मकारश्च नटो बुरुड एव च । कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥ ३३ ॥ भुक्त्वा चैषां स्त्रियो गत्वा पीत्वाऽपः प्रतिगृह्य च । कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥ ३४ ॥ मातरं गुरुपत्नीं च स्वसृदुहितरौ स्नुषाम् । गत्वैताः प्रविशेदग्निं नान्या शुद्धिर्विधीयते ॥ ३५ ॥ राज्ञीं(ज्ञीं) प्रव्राजितां धात्रीं तथा वर्णोत्तमामपि । कृच्छ्रद्वयं प्रकुर्वीत सगोत्रामभिगम्य च ॥ ३६ ॥ अन्यासु पितृगोत्रासु मातृगोत्रगतास्वपि । परदारेषु सर्वेषु कृच्छ्रं सांतपनं चरेत् । ॥ ३७ ॥ वेश्याभिगमने पापं व्यपोहन्ति द्विजातयः । पीत्वा सकृत्सुतप्तं च पञ्चरात्रं कुशोदकम् ॥ ३८ ॥ गुरुतल्पव्रतं केचित्केचिद्ब्रह्महणो व्रतम् । गोघ्नस्य केचिदिच्छन्ति केचिच्चैवावकीर्णिनः ॥ ३९ ॥ दण्डादूर्ध्वप्रहारेण यस्तु गां विनिपातयेत् । द्विगुणं गोव्रतं तस्य प्रायश्चित्तं विनिर्दिशेत् ॥ ४० ॥ अङ्गुष्ठमात्रस्थूलस्तु बाहुमात्रप्रमाणकः । सार्द्रश्च सपलाशश्च गोदण्डः

१ ख. °कं द्विशतं द° । २ ख ग पापश्या° । ३ क. दग्ध्वा । ४ क. °रोऽथ वि° । ५ ख. °र्तमद° । ६ क. स्वसृदुहि° । ७ क. दासीं । ८ क. °दूर्ध्वं प्र° ।

परिकीर्तितः ॥ ४१ ॥ गवां निपातने चैव गर्भोऽपि संपतेद्यदि[1] । एकैकशश्चरेत्कृच्छ्रं यथापूर्वं तथा पुनः ॥ ४२ ॥ पादमुत्पन्नमात्रे तु द्वौ पादौ गात्रसंभवे । पादोनं कृच्छ्रमाचष्टे हत्वा गर्भमचेतनम् ॥ ४३ ॥ अङ्गप्रत्यङ्गसंपूर्णे गर्भे रेतःसमन्विते । एकैकशश्चरेत्कृच्छ्रमेषा गोघ्नस्य निष्कृतिः ॥ ४४ ॥ बन्धने रोधने चैव पाषाणे वा गवां रुजा । संपद्यते चेन्मरणं निमित्ती नैव लिप्यते ॥ ४५ ॥ मूर्छितः पतितो वाऽपि दण्डेनाभिहतस्तथा । उत्थाय षट्पदं गच्छेत्सप्त पञ्च दशापि वा ॥ ४६ ॥ ग्रासं वा यदि गृह्णीयात्तोयं वाऽपि पिबेद्यदि । पूर्वव्याधिप्रनष्टानां प्रायश्चित्तं न विद्यते ॥४७॥ काष्ठलोष्टाश्मभिर्गावः शस्त्रैर्वा निहता यदि । प्रायश्चित्तं कथं तत्र शास्त्रे शास्त्रे निगद्यते ॥ ४८ ॥ काष्ठे सांतपनं कुर्यात्प्राजापत्यं तु लोष्ठके । तप्तकृच्छ्रं तु पाषाणे शस्त्रे चाप्यतिकृच्छ्रकम् ॥ ४९ ॥ औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु तु । दीयमाने विपत्तिः स्यात्प्रायश्चित्तं न विद्यते ॥ ५० ॥ तैलभैषज्यपाने[2] च भेषजानां च भक्षणे । निःशल्यकरणे चैव प्रायश्चित्तं न विद्यते ॥ ५१ ॥ वत्सानां कण्ठबन्धेन क्रियया भेषजेन तु । सायं संगोपनार्थं च न दोषो रोधबन्धयोः ॥ ५२ ॥ पादे चैवास्य रोमाणि द्विपादे श्मश्रु केवलम् । त्रिपादे तु शिखावर्जं मूले सर्वं समाचरेत् ॥ ५३ ॥ सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् । एवमेव हि नारीणां मुण्डमुण्डापनं स्मृतम् ॥ ५४ ॥ न स्त्रिया वपनं कार्यं न च वीरासनं तथा । न च गोष्ठे निवासं च ( सश्च ) न गच्छन्तीमनुव्रजेत् ॥ ५५ ॥ राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । अकृत्वा वपनं तेषां प्रायश्चित्तं विनिर्दिशेत् ॥ ५६ ॥ केशानां रक्षणार्थं च द्विगुणं व्रतमादिशेत् । द्विगुणे तु व्रते चीर्णे द्विगुणैव तु दक्षिणा ॥ ५७ ॥ द्विगुणं चेन्न दत्तं च केशांश्च परिरक्षयेत् । पापं न क्षीयते हन्तुर्दाता च नरकं व्रजेत् ॥ ५८ ॥ अश्रौतस्मार्तविहितं प्रायश्चित्तं वदन्ति ये । तान्धर्मविघ्नकर्तॄंश्च राजा दण्डेन पीडयेत् ॥ ५९ ॥ न चेत्तान्पीडयेद्राजा कथंचित्काममोहितः । तत्पापं शतधा भूत्वा तमेव परिसर्पति ॥ ६० ॥ प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् । विंशतिं गा वृषं चैव दद्यात्तेषां च दक्षिणाम् ॥ ६१ ॥ कृमिभिर्व्रणसंभूतैर्मक्षिकाभिश्च पातितैः । कृच्छ्रार्धं संप्रकुर्वीत शक्त्या दद्याच्च दक्षिणाम् ॥ ६२ ॥ प्रायश्चित्तं च कृत्वा वै भोजयित्वा द्विजोत्तमान् । सुवर्णमाषकं दद्यात्ततः शुद्धिर्विधीयते ॥ ६३ ॥ चण्डालश्वपचैः स्पृष्टे निशि स्नानं विधीयते । न वसेत्तत्र रात्रौ तु सद्यः स्नानेन शुध्यति ॥ ६४ ॥ अथ वसेद्यदा रात्रावज्ञानादविचक्षणः । तदा तस्य तु तत्पापं शतधा परिवर्तते ॥ ६५ ॥ उद्गच्छन्ति हि नक्षत्राण्युपरिष्टाच्च ये ग्रहाः । संस्पृष्टे रश्मिभिस्तेषामुदके स्नानमाचरेत् ॥ ६६ ॥ कुड्यान्तर्जलवल्मीकमूषिकोत्करवर्त्मसु । श्मशाने शौचशेषे च न ग्राह्याः सप्त मृत्तिकाः ॥ ६७ ॥

---

1 ख. ग. संभवेद्य° । २ क. ख °पजपा° ।

इष्टापूर्तं तु कर्तव्यं ब्राह्मणेन प्रयत्नतः । इष्टेन लभते स्वर्गं पूर्ते मोक्षं समश्नुते ॥ ६८ ॥ वित्तापेक्षं भवेदिष्टं तडागं पूर्तमुच्यते । आरामश्च विशेषेण देवद्रोण्यस्तथैव च ॥ ६९ ॥ वापीकूपतडागानि देवतायतनानि च । पतितान्युद्धरेद्यस्तु स पूर्तफलमश्नुते ॥ ७० ॥ शुक्लाया मूत्रं गृह्णीयात्कृष्णाया गोः शकृत्तथा । ताम्रायाश्च पयो ग्राह्यं श्वेताया दधि चोच्यते ॥ ७१ ॥ कपिलाया घृतं ग्राह्यं महापातकनाशनम् । सर्वतीर्थे नदीतोये कुशैर्द्रव्यं पृथक्पृथक् ॥ ७२ ॥ आहृत्य प्रणवेनैव ह्युत्थाप्य प्रणवेन च । प्रणवेन समालोड्य प्रणवेन तु संपिबेत् ॥ ७३ ॥ पालाशे मध्यमे पर्णे भाण्डे ताम्रमये तथा । पिबेत्पुष्करपर्णे वा ताम्रे वा मृन्मये शुभे ॥ ७४ ॥ सूतके तु समुत्पन्ने द्वितीये समुपस्थिते । द्वितीये नास्ति दोषस्तु प्रथमेनैव शुध्यति ॥ ७५ ॥ जातेन शुध्यते जातं मृतेन मृतकं तथा । गर्भसंस्रवणे मासे त्रीण्यहानि विनिर्दिशेत् ॥ ७६ ॥ रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति । रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥ ७७ ॥ स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे । स्वामिगोत्रेण कर्तव्यास्तस्याः पिण्डोदकं( क )क्रियाः ॥ ७८ ॥ द्वे पितुः पिण्डदानं( ने ) स्यात्पिण्डे पिण्डे द्विनामता । षण्णां देयास्त्रयः पिण्डा एवं दाता न मुह्यति ॥ ७९ ॥ स्वेन भर्त्रा सह श्राद्धं माता भुंक्त्वा सदैवतम् । पितामह्यपि स्वेनैव स्वेनैव प्रपितामही ॥ ८० ॥ वर्षे वर्षे तु कुर्वीत मातापित्रोस्तु सत्कृतिम् । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् ॥ ८१ ॥ नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धमथापरम् । पार्वणं चेति विज्ञेयं श्राद्धं पञ्चविधं बुधैः ॥ ८२ ॥ ग्रहोपरागे संक्रान्तौ पर्वोत्सवमहालये । निर्वपेत्त्रीन्नरः पिण्डानेकमेव मृतेऽहनि ॥ ८३ ॥ अनूढा न पृथक्कन्या पिण्डे गोत्रे च सूतके । पाणिग्रहणमन्त्राभ्यां स्वगोत्राद्भ्रश्यते ततः ॥ ८४ ॥ येन येन तु वर्णेन या कन्या परिणीयते । तत्समं सूतकं याति तथा पिण्डोदकेऽपि च ॥ ८५ ॥ विवाहे चैव संवृत्ते चतुर्थेऽहनि रात्रिषु । एकत्वं सा व्रजेद्भर्तुः पिण्डे गोत्रे च सूतके ॥ ८६ ॥ प्रथमेऽह्नि द्वितीये वा तृतीये वा चतुर्थके । अस्थिसंचयनं कार्यं बन्धुभिर्हितबुद्धिभिः ॥ ८७ ॥ चतुर्थे पञ्चमे चैव सप्तमे नवमे तथा । अस्थिसंचयनं प्रोक्तं वर्णानामनुपूर्वशः ॥ ८८ ॥ एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः । मुच्यते प्रेतलोकात्स स्वर्गलोके महीयते ॥ ८९ ॥ * गङ्गातोयेषु यस्यास्थि प्लवते शुभकर्मणः । न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथंचन ॥ ९० ॥

---

* एतद्वचनद्वयं न विद्यते क पुस्तके ।

---

१ ग. °था । द्विपितु । २ ग भुक्ता स° ।

यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥९१॥ नाभिमात्रे जले स्थित्वा हृदयेनानुचिन्तयेत् । आगच्छन्तु मे पितरो गृह्णन्त्वेताञ्जलाञ्जलीन् ॥९२॥ हस्तौ कृत्वा सुसंयुक्तौ पूरयित्वा जलेन च । गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥ ९३ ॥ आकाशे च क्षिपेद्वारि वारिस्थो दक्षिणामुखः । पितॄणां स्थानमाकाशं दक्षिणा दिक्तथैव च ॥ ९४ ॥ आपो देवगणाः प्रोक्ता आपः पितृगणास्तथा । तस्मादप्सु जलं देयं पितॄणां हितमिच्छता ॥ ९५ ॥ दिवा सूर्यांशुभिस्तप्तं रात्रौ नक्षत्रमारुतैः । संध्ययोरप्युभाभ्यां च पवित्रं सर्वदा जलम् ॥ ९६ ॥ स्वभावयुक्तमव्याप्तममेध्येन सदा शुचि । भाण्डस्थं धरणीस्थं वा पवित्रं सर्वदा जलम् ॥ ९७ ॥ देवतानां पितॄणां च जले दद्याज्जलाञ्जलीन् । असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलीन् ॥ ९८ ॥ श्राद्धे हवनकाले च दद्यादेकेन पाणिना । उभाभ्यां तर्पणे दद्यादिति धर्मो व्यवस्थितः ॥ ९९ ॥

इति यमप्रणीतं धर्मशास्त्रं समाप्तम् ॥

समाप्तेयं यमस्मृतिः ।



ॐ तत्सद्ब्रह्मणे नमः ।

# लघुविष्णुस्मृतिः ।

तत्र प्रथमोऽध्यायः ।

= विष्णुमेकाग्रमासीनं श्रुतिस्मृतिविदां वरम् । पप्रच्छुर्मुनयः सर्वे कलापग्रामवासिनः ॥ १ ॥ कृते युगे ह्यपक्षीणे लुप्तो धर्मः सनातनः । तेन चैश्वर्यमोहेन धर्मो न प्रतिमार्गितः ॥ २ ॥ त्रेतायुगेऽथ संप्राप्ते कर्तव्यश्चास्य संग्रहः । यथा संप्राप्यतेऽस्माभिस्तत्त्वतो वक्तुमर्हसि ॥ ३ ॥ वर्णाश्रमाणां यो धर्मो विशेषश्चैव यत्कृतः । भेदस्तथैव चैषां यस्तं नो ब्रूहि द्विजोत्तम ॥ ४ ॥ ऋषीणां समवेतानां त्वमेव परमो मतः धर्मस्येह समस्तस्य नान्यो वक्ताऽस्ति सुव्रत ॥ ५ ॥ श्रुत्वा धर्मं चरिष्यामो यथावत्परिभाषितम् । तस्माद्ब्रूहि द्विजश्रेष्ठ धर्मकामा इमे द्विजाः ॥ ६ ॥ इत्युक्तो मुनिभिस्तैस्तु विष्णुः प्रोवाच तांस्तदा । अनघाः श्रूयतां धर्मो वक्ष्यमाणो मया क्रमात् ॥ ७ ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव तथाऽपरः । एतेषां धर्मसारं यद्वक्ष्यमाणं निबोधत ॥ ८ ॥ ऋतौ ऋतौ तु संयोगाद्ब्राह्मणो जायते स्वयम् । तस्माद्ब्राह्मणसंस्कारं गर्भादौ तु प्रयोजयेत् ॥ ९ ॥ सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते । गर्भस्यैव तु संस्कारो गर्भे गर्भे प्रयोजयेत् ॥ १० ॥ जातकर्म तथा कुर्यात्पुत्रे जाते यथोदितम् । बहिर्निष्क्रमणं चैव तस्य कुर्याच्छिशोः शुभम् ॥ ११ ॥ षष्ठे मासे च संप्राप्ते अन्नप्राशनमाचरेत् । तृतीयेऽब्दे च संप्राप्ते केशकर्म च कारयेत् ॥ १२ ॥ गर्भाष्टमे तथा कर्म ब्राह्मणस्योपनायनम् । द्विजत्वे त्वथ संप्राप्ते सावित्र्यामधिकारभाक् ॥ १३ ॥ गर्भादेकादशे सेके कुर्यात्क्षत्रियवैश्ययोः । कारयेद्द्विजकर्माणि ब्राह्मणेन यथाक्रमम् ॥ १४ ॥ शूद्रश्चतुर्थो वर्णस्तु सर्वसंस्कारवर्जितः । उक्तस्तस्य तु संस्कारो द्विजेष्वात्मनिवेदनम् ॥ १५ ॥ यो यस्य विहितो दण्डो मेखलाजिनधारणम् । सूत्रं वस्त्रं च गृह्णीयाद्ब्रह्मचर्येण यन्त्रितः ॥ १६ ॥ ब्राह्मे मुहूर्ते चोत्थाय चोपस्पृश्य पयस्तथा । त्रिरायम्य ततः प्राणांस्तिष्ठेन्मौनी समाहितः ॥ १७ ॥ अब्दैवतैः पवित्रैस्तु कृत्वाऽऽत्मपरिमार्जनम् । सावित्रीं च जपंस्तिष्ठेदासूर्योदयनात्पुरा ॥ १८ ॥ अग्निकार्यं ततः कुर्यात्प्रातरेव व्रतं चरेत् । गुरवे तु ततः कुर्यात्पादयोरभिवादनम् ॥ १९ ॥

---

= " ऋषिमेकाग्रमासीनं विष्णुं मतिमता वरम् " इति पाठ ख छ पुस्तकयो ।

१ च. °विशारदम् । २ ह. °नः । कृते चै° । ३ छ. °न वै शीर्यमाणेन धर्मेण परमार्थत । ४ च. छ. °स्तत्त्वं नो व° । ५ ख. छ °मचित्ताना । ६ क परे । ए° । ७ ख छ. °तकं कर्म कु° । ८ ख. छ. °ते तु वैदिकम् । ९ ख. छ °णं कुर्यान्नामकर्म दशोर्ध्वत । प° । १० ख छ °नान्मुनि । अ° ।

समित्कुशांश्चोदकुम्भमाहृत्य गुरवे व्रती । प्राञ्जलिः सम्यगासीन उपस्थाय ततः सदा ॥ २० ॥ यं यं ग्रन्थमधीयीत तस्य तस्य व्रतं चरेत् । सावित्र्युपक्रमात्सर्वमावेदग्रहणोत्तरम् ॥ २१ ॥ द्विजातिषु चरेद्भैक्षं भिक्षाकाले समागते । निवेद्य गुरवेऽश्नीयात्संमतो गुरुणा व्रती ॥ २२ ॥ सायं संध्यामुपासीनो गायत्र्यष्टशतं जपेत् । द्विकालभोजनार्थं च तथैव पुनराहरेत् ॥ २३ ॥ वेदस्वीकरणे हृष्टो गुर्वधीनो गुरोर्हितः । निष्ठां तत्रैव यो गच्छेन्नैष्ठिकः स उदाहृतः ॥ २४ ॥ अनेन विधिना सम्यक्कृत्वा वेदमधीत्य च । गृहस्थधर्ममाकाङ्क्षन्गुरुगेहादुपागतः ॥ २५ ॥ अनेनैव विधानेन कुर्याद्दारपरिग्रहम् । कुले महति संभूतां सवर्णां लक्षणान्विताम् ॥ २६ ॥ परणीय तु षण्मासान्वत्सरं वा न संविशेत् । औदुम्बरायणो नाम ब्रह्मचारी गृहे गृहे ॥२७॥ऋतुकाले तु संप्राप्ते पुत्रार्थी संविशेत्तदा । जाते पुत्रे तथा कुर्यादग्न्याधेयं गृहे वसन् ॥ २८ ॥ पुत्रे जातेऽनृतौ गच्छन्संप्रदुष्येत्सदा गृही । चतुर्थे ब्रह्मचारी च गृहे तिष्ठन्नपि[६] स्मृतः ॥ २९ ॥

इति वैष्णवे धर्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

(अथ द्वितीयोऽध्यायः ।)

अतः परं प्रवक्ष्यामि गृहिणां धर्ममुत्तमम् । प्राजापत्यपदस्थानं सम्यक्कृत्यं निबोधत ॥ १ ॥ सर्वः कल्ये समुत्थाय कृतशौचः समाहितः । स्नात्वा संध्यामुपासीत सर्वकालमतन्द्रितः ॥ २ ॥ अज्ञानाद्यदि वा मोहाद्रात्रौ यद्दुरितं कृतम् । प्रातःस्नानेन तत्सर्वं शोधयन्ति द्विजोत्तमाः ॥ ३ ॥ प्रविश्याथाग्निहोत्रं तु हुत्वाऽग्निं विधिवत्ततः । शुचौ देशे समासीनः स्वाध्यायं शक्तितोऽभ्यसेत् ॥ ४ ॥ स्वाध्यायान्ते समुत्थाय स्नानं कृत्वा तु मन्त्रवित् । देवानृषीन्पितॄंश्चैव तर्पयेत्तिलवारिणा ॥ ५ ॥ मध्याह्ने त्वथ संप्राप्ते शिष्टं भुञ्जीत वाग्यतः । भुक्तोपविष्टो विश्रान्तो ब्रह्म किंचिद्विचारयेत् ॥ ६ ॥ इतिहासं प्रयुञ्जीत त्रिकालसमये गृही ॥ ७ ॥ काले चतुर्थे संप्राप्ते गृहे वा यदि वा बहिः । आसीनः पश्चिमां संध्यां गायत्रीं शक्तितो जपेत् ॥ ८ ॥ हुत्वा चाथाग्निहोत्रं तु कृत्वा चाग्निपरिक्रियाम् । बलिं च विधिवद्दत्त्वा भुञ्जीत विधिपूर्वकम् ॥ ९ ॥ दिवा वा यदि वा रात्रावतिथिस्त्वाव्रजेद्यदि । तृणभूवारिवाग्भिस्तु पूजयेत्तं यथाविधि ॥ १० ॥ कथाभिः प्रीतिमाहृत्य विद्यादीनि विचारयेत् । संनिवेश्याथ विप्रं तु संविशेत्तदनुज्ञया ॥ ११ ॥ यदि योगी तु संप्राप्तो भिक्षार्थी

१ क. °सीत उ° । २ छ °स्सर्वोऽप्यध्येतव्योऽञ्जसा तथा । द्वि° । ३ स. छ °माहितः । नि° । ४ ख. क. °स्नाभक्त्या वे° । ५ क °र्गोत्रामघे° । ६ ख, क, तिष्ठेत्र विस्मयेत् । इ° ।

समुपागतः । योगिनं पूजयेन्नित्यमन्यथा किल्विषी भवेत् ॥ १२ ॥ पुरे वा यदि वा ग्रामे योगी संनिहितो भवेत् । पूता नित्यं भवन्त्येवं सर्वे चैव निवासिनः ॥१३॥ तस्मात्सपूजयेन्नित्यं योगिनं गृहमागतम् । तस्मिन्प्रयुक्ता पूजा या साऽक्षयायोपकल्पते ॥ १४ ॥ गृहमेधिनां तु यत्प्रोक्तं स्वर्गसाधनमुत्तमम् । ब्राह्मे मुहूर्ते चोत्थाय तत्सर्वं सम्यगाचरेत् ॥ १५ ॥ * चतुष्प्रकारं भिद्यन्ते गृहिणो धर्मसाधकाः । वृत्तिभेदेन सततं ज्यायांस्तेषां परः परः ॥ १६ ॥ कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा । त्र्यैहिको वाऽपि भवेत्सद्यःप्रक्षालकोऽथ वा ॥ १७ ॥ श्रौतं स्मार्तं च यत्किंचिद्विधानं धर्मसाधनम् । गृहे तद्वसता कार्यमन्यथा दोषभाग्भवेत् ॥१८॥ एवं विप्रो गृहस्थस्तु शान्तः शुक्लाम्बरः शुचिः । × प्रजापतेः परं स्थानं संप्राप्नोति न संशयः ॥ १९ ॥

इति वैष्णवे धर्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

(अथ तृतीयोऽध्यायः ।)

गृहस्थो ब्रह्मचारी वा वनवासं यदाऽऽचरेत् । चीरवल्कलधारी स्यादकृष्टाशनो मुनिः ॥ १ ॥ गत्वा च विजनं स्थानं पञ्च यज्ञान्न हापयेत् । अग्निहोत्रं च जुहुयाद्वन्नीवारकादिभिः ॥ २ ॥ श्रावणेनाग्निमादाय ब्रह्मचारी वने स्थितः । पञ्चयज्ञविधानेन यज्ञं कुर्यादतन्द्रितः ॥ ३ ॥ संचितं तु यदारण्यं क्षुक्तयर्थं विधिवैद्धने । त्यजेदाश्वयुजे मासि वन्यमन्यत्समाहरेत् ॥ ४ ॥ आकाशशायी वर्षासु हेमन्ते च जलेशयः । ग्रीष्मे पञ्चाग्निमध्यस्थो भवेन्नित्यं वने वसन् ॥ ५ ॥ कृच्छ्रं चान्द्रायणं चैव तुलापुरुषमेव च । अतिकृच्छ्रं प्रकुर्वीत त्यक्त्वा कामाञ्शुचिस्ततः ॥ ६ ॥ त्रिसंध्यं स्नानमातिष्ठेत्सहिष्णुर्भूतजान्गुणान् । पूजयेदतिथींश्चैव ब्रह्मचारी वनं गतः ॥ ७ ॥ प्रतिग्रहं न गृह्णीयात्परेषां किंचिदात्मवान् । दाता चैव भवेन्नित्यं श्रद्दधानः प्रियंवदः ॥ ८ ॥ रात्रौ स्थण्डिलशायी स्यात्प्रपदैस्तु दिनं क्षिपेत् । वीरासनेन तिष्ठेद्वा क्लेशमात्मन्यचिन्तयन् ॥ ९ ॥ केशरोमनखश्मश्रु न च्छिन्द्यान्नापि कर्तयेत् ।

* एतदर्धस्थानेऽयं पाठश्छ पुस्तके—" चतुष्प्रकाराञ्शिक्षेत गृही च धर्मसाधनान् " इति । × एतदर्धस्थानेऽयं पाठश्छ. पुस्तके—"प्राजापत्यं परं स्थानं प्राप्नोति विजितेन्द्रिय " इति ।

१ ङ. ग. छ. चैतस्मिवा° २ क °क्ष्य्या या प्रकल्पयेत् । गृ° । ३ ख छ °याच्छयामनी° । ४ ख. छ संभृत्य श्रावणे मासि सु° । ५ ख. छ. °नद्गृही । त्यजेदाश्वयुजे मासि धान्य वन्यं समा° । ६ क °ने । ख सदा° । ७ छ. °प्रपथा मामं शुचि° । ८ ख. छ. वशं । ९ छ. °नेने प्रतिष्ठेत्क्लेशात्माऽऽत्मनि चिन्तयेत् । के°

त्यजञ्शरीरसौहार्दं वनवासरतः शुचिः ॥ १० ॥ चतुष्प्रकारं भिद्यन्ते मुनयः संशितव्रताः । अनुष्ठानविशेषेण श्रेयांस्तेषां परः परः ॥ ११ ॥ वार्षिकं वन्यमाहारमाहृत्य विधिपूर्वकम् । वनैरथर्धमर्ममातिष्ठन्नयेत्कालं जितेन्द्रियः ॥ १२ ॥ भूरिसंवार्षिकश्चायं वनस्थः सर्वकर्मकृत् । आदेहपतनं तिष्ठेत्काङ्क्षन्मोक्षं दृढव्रतः ॥ १३ ॥ षण्मासांस्तु ततश्चान्यः पञ्चयज्ञक्रियापरः । काले चतुर्थे भुञ्जानो देहं त्यजति धर्मतः ॥ १४ ॥ त्रिंशद्दिनार्थमाहृत्य वन्यान्नानि मुनिव्रतः । निर्वर्त्य सर्वकार्याणि स्याच्च षष्ठान्नभोजनः ॥ १५ ॥ दिनार्थमन्नमादाय पञ्चयज्ञक्रियारतः । सद्यःप्रक्षालको नाम चतुर्थः परिकीर्तितः ॥ १६ ॥ एवमेते हि वै मान्या मुनयः संशितव्रताः ॥ १७ ॥

इति वैष्णवे धर्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

---

( अथ चतुर्थोऽध्यायः । )

---

यथोत्तमानि स्थानानि प्राप्नुवन्ति दृढव्रताः । ब्रह्मचारी गृहस्थो वा वानप्रस्थो मुनिस्तथा । विरक्तः सर्वकामेषु पारिव्राज्यं समाचरेत् ॥ १ ॥ आत्मन्यग्नीन्समारोप्य दत्त्वा वाऽभयदक्षिणाम् । चतुर्थमाश्रमं गच्छेद्ब्राह्मणः प्रव्रजन्गृहात् ॥ २ ॥ आचार्येण समादिष्टं लिङ्गं यत्नात्समाश्रयेत् । शौचमाश्रयसंबद्धं यतिधर्मांश्च शिक्षयेत् ॥ ३ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यमफल्गुता । दया च सर्वभूतेषु नित्यमेतद्यतिश्चरेत् ॥ ४ ॥ ग्रामान्ते वृक्षमूले च नित्यकालनिकेतनः । पर्यटेत्कीटवद्भूमिं वर्षास्वेकत्र संविशेत् ॥ ५ ॥ वृद्धानामातुराणां च भीरूणां सङ्गवर्जिनाम् । ग्रामे वाऽपि पुरे वाऽपि वासो नैकत्र दुष्यति ॥ ६ ॥ कौपीनाच्छादनं वासः कन्थां सं(शी)तापहारिणीम् । पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहः(म्) ॥ ७ ॥ संभाषणं सह स्त्रीभिरालम्भप्रेक्षणे तथा । नृत्यं गानं सभासेवां परिवादांश्च वर्जयेत् ॥८॥ वानप्रस्थगृहस्थाभ्यां प्रीतिं यत्नेन वर्जयेत् । एकाकी विचरेन्नित्यं त्यक्त्वा सर्वपरिग्रहम् ॥ ९ ॥ याचितायाचिताभ्यां तु भिक्षया कल्पयेत्स्थितिम् । साधुकारं याचितं स्यात्प्राक्प्रणीतमयाचितम् ॥ १० ॥

---

१ ख. छ भिक्षान्ति । २ ख. श्रेयाञ्श्रेयास्तत. पर । वा° । ३ ख. °नस्थैर्मौनमा° । ४ छ. °धर्मे धा ति° । ५ छ भूमिजं वार्षिकं वाऽपि व° । ६ क. ग. घ °रिसवा° । ७ क. °र्मवित् । ८ छ. °तनात्तिष्ठेन्मृत्युं चैव न काङ्क्षयेत् । ९ ख. ङ. °यापर. । स° । १० ङ. च. °स्थो यतिस्त° । ११ क. °वर्तिना° । १२ छ. समाजं वा दिवा निद्रा विवर्जये° ।

चतुर्विधा भिक्षुकाः स्युः कुटीचकबहूदकौ । हंसः परमहंसश्च पश्चाद्यो यः स उत्तमः ॥ ११ ॥ एकदण्डी भवेद्वाऽपि त्रिदण्डी चापि वा भवेत् । त्यक्त्वा सर्वसुखास्वादं पुत्रैश्वर्यसुखं त्यजेत् ॥ १२ ॥ अपत्येषु वसन्नित्यं समत्वं यत्नतस्त्यजेत् । नान्यस्य गेहे भुञ्जीत भुञ्जानो दोषभाग्भवेत् ॥ १३ ॥ कामं क्रोधं च लोभं च तथेर्ष्यासत्यमेव च । कुटीचकस्त्यजेत्सर्वं पुत्रार्थं चैव सर्वतः ॥१४॥ भिक्षाटनादिकेऽशक्तौ यतिः पुत्रेषु संन्यसेत् । कुटीचक इति ज्ञेयः परिव्राट्त्यक्तबान्धवः ॥ १५ ॥ त्रिदण्डं कुण्डिकां चैव भिक्षाधारं तथैव च । सूत्रं तथैव गृह्णीयान्नित्यमेव बहूदकः ॥ १६ ॥ प्राणायामेऽप्यभिरतो गायत्रीं सततं जपेत् । विश्वरूपं हृदि ध्यायन्नयेत्कालं जितेन्द्रियः ॥ १७ ॥ ईषत्कृतकषायस्य लिङ्गमाश्रित्य तिष्ठतः । अन्नार्थं लिङ्गमुद्दिष्टं न मोक्षार्थमिति स्थितिः ॥ १८ ॥ त्यक्त्वा पुत्रादिकं सर्वं योगमार्गव्यवस्थितः । इन्द्रियाणि मनश्चैव कर्षन्हंसोऽभिधीयते ॥ १९ ॥ कृच्छ्रैश्चान्द्रायणैश्चैव तुलापुरुषसंज्ञकैः । अन्यैश्च शोषयेद्देहमाकाङ्क्षन्ब्रह्मणः पदम् ॥ २० ॥ यज्ञोपवीतं दण्डं च वस्त्रं जन्तुनिवारणम् । अयं परिग्रहो नान्यो हंसस्य श्रुतिवेदिनः ॥ २१ ॥ आध्यात्मिकं ब्रह्म जपन्प्राणायामांस्तथाऽऽचरन् । वियुक्तः सर्वसङ्गेभ्यो योगी नित्यं चरेन्महीम् ॥२२॥ आत्मनिष्ठः स्वयं युक्तस्त्यक्तसर्वपरिग्रहः । चतुर्थोऽयं महानेषां ध्यानभिक्षुरुदाहृतः ॥ २३ ॥ त्रिदण्डं कुण्डिकां चैव सूत्रं चाथ कपालिकाम् । जन्तूनां वारणं वस्त्रं सर्वं भिक्षुरिदं त्यजेत् ॥ २४ ॥ कौपीनाच्छादनार्थं च वासोर्धस्य परिग्रहम् । कुर्यात्परमहंसस्तु दण्डमेकं च धारयेत् ॥२५॥ आत्मन्येवाऽऽत्मना बुद्ध्या परित्यक्तशुभाशुभः । अव्यक्तलिङ्गो व्यक्तश्च चरेद्भिक्षुः समाहितः ॥ २६ ॥ प्राप्तपूजो न संतुष्येदलाभे त्यक्तमत्सरः । त्यक्ततृष्णः सदा विद्वान्मूकवत्पृथिवीं चरेत् ॥ २७ ॥ देहसंरक्षणार्थं तु भिक्षामीहेद्द्विजातिषु । पात्रमस्य भवेत्पाणिस्तेन नित्यं गृहानटेत् ॥ २८ ॥ अतैजसानि पात्राणि भिक्षार्थं कल्पयेन्मुनिः । सर्वेषामेव भिक्षूणां दार्वलाबुमयानि च ॥ २९ ॥ कांस्यपात्रे न भुञ्जीत आपद्यपि कथंचन । मलाशाः सर्व उच्यन्ते यतयः कांस्यभोजिनः ॥ ३० ॥ कांसिकस्य तु यत्पापं गृहस्थस्य तथैव च । * कांस्यभोजी यतिः सर्वं तयोः प्राप्नोति किल्बिषम् ॥ ३१ ॥ ब्रह्मचारी गृहस्थश्च

* एतदर्धस्थानेऽयं पाठ. ख, छ. पुस्तकयो –"कास्यपात्रेषु भुञ्जान प्राप्नुयात्किल्विषं सदा" इति ।

१ ख. छ °चरग° । २ छ. °श्च श्रेयश्चैषा यथोत्तरम् । ए° । ३ ख. छ. °दण्डो गुरवे चै° । ४ ख. छ. समाहित. । ५ छ. °पं स्मरेन्नित्यं तथा च विजि° । ६ ख. छ वासोभिक्षापरिग्रह । कु° । ७ ख छ. °भिक्षो स° । ८ ग. ङ. °र्थे क्लृप्तवान्मनुः । स° । ९ क. °भोजना । कां । १० ख. छ. कांस्यकस्यापि यत्पात्रं गृ° ।

वानप्रस्थो यतिस्तथा । उत्तमां वृत्तिमाश्रित्य पुनरावर्तयेद्यदि ॥ ३२ ॥ आरूढपतितो ज्ञेयः सर्वधर्मवहिष्कृतः । निन्द्यश्च सर्वदेवानां पितॄणां च तथोच्यते ॥ ३३ ॥ त्रिदण्ड लिङ्गमाश्रित्य जीवन्ति वहवो द्विजाः । न तेषामपवर्गोऽस्ति लिङ्गमात्रोपजीविनाम् ॥ ३४ ॥ त्यक्त्वा लोकांश्च वेदांश्च विषयाणीन्द्रियाणि च । आत्मन्येव स्थितो यस्तु प्राप्नोति परमं पदम् ॥ ३५ ॥

इति वैष्णवे धर्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

=====

(अथ पञ्चमोऽध्यायः ।)

---

राज्ञां तु पुण्यवृत्तानां त्रिवर्गपरि[१]काङ्क्षिणाम् । वक्ष्यमाणस्तु यो धर्मस्तत्त्वतस्तं निबोधत ॥ १ ॥ तेजः सत्यं धृतिर्दाक्ष्यं संग्रामेष्व[२]निवर्तिता । दानमीश्वरभावश्च क्षत्रधर्मः प्रकीर्तितः ॥ २ ॥ क्षत्रियस्य परो धर्मः प्रजानां परिपालनम् । तस्मात्सर्वप्रयत्नेन रक्षयेन्नृपतिः प्रजाः ॥ ३ ॥ त्रीणि कर्माणि कुर्वीत राजन्यस्तु प्रयत्नतः । दानमध्ययनं यज्ञं ततो (पो) योगनिषेवणम् ॥ ४ ॥ ब्राह्मणानां च संतुष्टिमाचरेत्सततं तथा । तेषु तुष्टेषु नियतं राज्यं कोशश्च वर्धते ॥ ५ ॥ वाणिज्यं कर्षणं चैव गवां च परिपालनम् । ब्राह्मणक्षत्रसेवा च वैश्यकर्म प्रकीर्तितम् ॥ ६ ॥ खलयज्ञं कृषीणां च गोयज्ञं चैव यत्नतः । कुर्याद्वैश्यश्च सततं गवां च शरणं तथा ॥ ७ ॥ ब्राह्मणक्षत्रवैश्यांश्च चरेन्नित्यममत्सरः । कुर्वंस्तु शूद्रः शुश्रूषां लोकाञ्जयति धर्मतः ॥ ८ ॥ पञ्चयज्ञविधानं तु शूद्रस्यापि विधीयते । तस्य प्रोक्तो नमस्कारः कुर्वन्नित्यं न हीयते ॥ ९ ॥ शूद्रोऽपि द्विविधो ज्ञेयः[३] श्राद्धी चैवेतरस्तथा । श्राद्धी भोज्यस्तयोरुक्तो ह्यभोज्यो हीतरः स्मृतः ॥ १० ॥ प्राणानर्थांस्तथा दारान्ब्राह्मणाय निवेदयेत्[४] । स[५] शूद्रजातिर्भोज्यः स्यादभोज्यः शेष उच्यते ॥ ११ ॥ कुर्याच्छूद्रस्तु शुश्रूषां ब्रह्मक्षत्रविशां क्रमात् । कुर्यादुत्तरयोर्वैश्यः क्षत्रियो ब्राह्मणस्य तु ॥ १२ ॥

---

१ ख. छ. °रिरक्षणम् । रक्षमा° । २ छ. °ष्वपलायनम् । दा° । ३ ख. छ. ज्ञेय आज्ञश्चैवेतरस्तथा । आज्ञो भोज्य. स विज्ञेयो भोज्यो ह्यनं त° । ४ ख. छ. °त् । न शूद्रो जातिभोज्य. । ५ क. सच्छूद्राज्ञाति° ।

आश्रमास्तु त्रयः प्रोक्ता वैश्यराजन्ययोस्तथा। पारिव्राज्याश्रमप्राप्तिर्ब्राह्मणस्यैव चोदिता ॥ १३ ॥ आश्रमाणामयं धर्मो मया प्रोक्तः सनातनः। यदत्राविदितं किंचित्तदन्येभ्यो[1] गमिष्यथ ॥ १४ ॥

इति श्रीवैष्णवे धर्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

समाप्तेयं लघुविष्णुस्मृतिः।

---

1 छ. °भ्यो विनिश्चयेत्।

ॐ तत्सद्ब्रह्मणे नमः ।

# लघुशङ्खस्मृतिः ।

+ इष्टापूर्तौ तु कर्तव्यौ ब्राह्मणेन विशेषतः । इष्टेन लभते स्वर्गं मोक्षं पूर्तेन विन्दति ॥ १ ॥ एकाहमपि कौन्तेय भूमिष्ठमुदकं कुरु । कुलानि तारयेत्सप्त यत्र गौर्वितृषा भवेत् ॥ २ ॥ भूमिदानेन ये लोका गोदानेन च कीर्तिताः । ताँल्लोकान्प्राप्नुयुर्मर्त्याः पादपानां प्ररोहणे ॥ ३ ॥ वापीकूपतडागानि देवतायतनानि च । पतितान्युद्धरेद्यस्तु स पूर्तफलमश्नुते ॥ ४ ॥ अग्निहोत्रं तपः सत्यं वेदानां चैव धारणम् । आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥ ५ ॥ इष्टापूतो ( र्तें ) द्विजातीनां सामान्यौ ( न्ये ) धर्मसाधने । अधिकारी भवेच्छूद्रः पूर्तधर्मे न वैदिके ॥ ६ ॥ यावदस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य च । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ७ ॥ देवतानां पितॄणां च जले दद्याज्जलाञ्जलिम् । असंस्कृतमृतानां च स्थले दद्याज्जलाञ्जलिम् ॥ ८ ॥ एकादशाहे प्रेतस्य यस्य चोत्सृज ( ज्य ) ते वृषः । मुच्यते प्रेतलोकाच्च स्वर्गलोकं स गच्छति ॥ ९ ॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत चाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ १० ॥ लोहितो यस्तु वर्णेन मुखे पुच्छे तु पाण्डुरः । श्वेतः खुरविषाणाभ्यां स वै नीलवृषः स्मृतः ॥ ११ ॥ नवश्राद्धं त्रिपक्षे च षण्मासे मासिकेऽब्दिके । पतन्ति पुरुषास्तस्य यो भुङ्क्तेऽनापदि द्विजः ॥ १२ ॥ यस्यैतानि न कुर्वीत एकोद्दिष्टानि षोडश । प्रेतता न (त्वान्न) विमुच्येत कृतैः श्राद्धशतैरपि ॥ १३ ॥ एकोद्दिष्टं परित्यज्य पार्वणं कुरुते द्विजः । अमूलं तद्विजानीयात्स मातृपितृघातकः ॥ १४ ॥ सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । प्रतिमासं यथा तस्य प्रतिसंवत्सरं तथा ॥ १५ ॥ सपिण्डीकरणादूर्ध्वं यत्र यत्रोपदीयते । तत्र तत्र त्रयं कुर्याद्वर्जयित्वा मृतेऽहनि ॥ १६ ॥ अमावास्यां क्षयो यस्य प्रेतपक्षे तथा यदि । सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः ॥ १७ ॥ त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते । प्राप्ते चैकादशादिने पार्वणं तु विधीयते ॥ १८ ॥ मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः । पितामहीसह (ह्यादिभि)स्तस्याः सपिण्डीकरणं स्मृतम् ॥ १९ ॥

---

+ लिखितस्मृतिश्लोकैः साम्यमस्या दृश्यते ।

---

१ ख. °कान्प्रप्रयु° । २ ख. °गारदे° ।

कर्तव्यं प्रत्युपे(तु प्रमी) तायाः सपिण्डीकरणं स्त्रियाः। मृताऽ(भर्त्राऽ)पि हि न कर्तव्यं चरुमन्त्राहुतिव्रतैः ॥ २० ॥ मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः । द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः ॥ २१ ॥ अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्ति-दूषणैः । अदोषं तं यमः प्राह पङ्क्तिपाव न एव सः ॥ २२ ॥ यानि यस्य पवित्राणि कुक्षौ तिष्ठन्ति भारत । तानि तस्यैव पूज्यानि न शरीराणि देहिनाम् ॥ २३ ॥ अग्नौकरणशेषं तु पितृपात्रे प्रदापयेत् । प्रतिपद्य पितॄणां च न दद्याद्वैश्वदेविके ॥ २४॥ मृन्मयेषु च पात्रेषु श्राद्धं भोजयते द्विजः । = अन्नदाताऽपहर्ता च भोक्ता च नरकं व्रजेत् ॥ २५ ॥ हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनादयः । दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते च किल्बिषम् ॥ २६ ॥ आयसेन तु पात्रेण यदन्नमुपदीयते । भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत् ॥ २७ ॥ श्राद्धं कृत्वेतरश्राद्धे यस्तु भुङ्क्तेऽतिविह्वलः । पतन्ति पितरस्तस्य तं मासं रेतपायिनः ॥ २८ ॥ पुनर्भोजन-मध्वानं भाराध्ययनमैथुनम् । दानं प्रतिग्रहो होमः श्राद्धं भुक्त्वाऽष्ट वर्जयेत् ॥ २९॥ व्याममात्रं समुत्सृज्य पिण्डांस्तत्र प्रदापयेत् । यत्र संस्पर्शनं वाऽपि प्राप्नुवन्ति न विन्दवः ॥ ३० ॥ अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा । तेभ्यश्चापि प्रक-र्तव्यमेकोद्दिष्टं न पार्वणम् ॥ ३१ ॥ मातुः श्राद्धं तु पूर्वस्मात्पितॄणां तदनन्तरम् । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥ ३२ ॥ दशकृत्वः पिबेच्चापः सावित्र्याः श्राद्धभुग्द्विजः । ततः संध्यामुपासीत शुध्यते तदनन्तरम् ॥ ३३ ॥ चान्द्रायणं नव-श्राद्धं पराको मासिकेन तु । पक्षत्रयेऽपि कृच्छ्रः स्यादेकाहं पुनराब्दिके । अत ऊर्ध्वं न दोषः स्याच्छङ्खस्य वचनं त (य) था ॥ ३४ ॥ सर्वविप्रहतानां च शृङ्गिदं-ष्ट्रिसरीसृपैः । आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत् ॥ ३५ ॥ उदकं पिण्ड-दानं च विप्रेभ्यो यच्च दीयते । नोपतिष्ठति तत्सर्वमन्तरिक्षे प्रलीयते ॥ ३६ ॥ नारायणबलिः कार्यो लोकग्रहभयान्नरैः। तथा तस्य भवेच्छ्रेयो नान्यथा वाऽब्रवीन्मनुः ॥३७॥ गोभूहिरण्यहरणे क्षेत्रापणगृहस्य च । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥३८॥उद्यताः सह धावन्त एककार्येष्ववस्थिताः। यद्येकोऽपि ÷ हनेत्तत्र सर्वे ते ब्रह्मघा-तकाः ॥ ३९ ॥ बहूनामेककार्येषु यद्येको मर्मघातकः । सर्वे तेशुद्धिमि( मृ )च्छन्ति स एको ब्रह्मघातकः ॥ ४० ॥ महापातकसंस्पर्शे स्नानमेव विधीयते । संस्पृष्टस्तु यदा भुङ्क्ते कृच्छ्रं सांतपनं चरेत् ॥ ४१ ॥ चाण्डालभाण्डसंस्पृष्टं वापीकूपगतं

= अन्नदाता पुरोधाश्चेति पाठः क्वचिदुपलभ्यतेऽन्यत्र । ÷ इदमार्षं ज्ञेयम् । हन्यादिति भाव्यम् ।

१ ख. °प्रत्याया. । २ क. °तकम् । स° ।

जलम् । गोमूत्रयावकाहारस्त्रिरात्रेण विशुध्यति ॥ ४२ ॥ चाण्डालघटमध्यस्थं यस्तोयं पिबति द्विजः । तत्क्षणात्क्षय(क्षिप)ते यस्तु प्राजापत्यं समाचरेत् ॥४३॥ यदि न क्षिपते तोयं शरीरे यस्य जीर्यति । प्राजापत्यं न दातव्यं कृच्छ्र(च्छ्रं)सांतपनं स्मृतम् ॥४४॥ चरेत्सांतपनं विप्रः प्राजापत्यं तु क्षत्रियः । तदर्धं तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥ ४५ ॥ यस्य चाण्डालि( ली )संयोगो भवेत्कश्चि( त्कचि )दकामतः । तस्य सांतपनं कृच्छ्रं स्मृतं शुद्ध्यर्थमात्मनः ॥ ४६ ॥ चाण्डालोदकसंस्पृष्टः स्नात्वा विप्रो विशुध्यति । [ *तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥ ४७ ॥ आजानु स्नानमात्रं स्यादानाभेश्च विशोधनम् । अत ऊर्ध्वं त्रिरात्रं स्याच्छरीरस्पर्शने मलम् ॥ ४८ ॥ रजस्वला तु संस्पृष्टा श्वानचाण्डालवायसैः । तावत्तिष्ठेन्निराहारः(रा) स्नात्वा कालेन शुध्यति ] ॥ ४९ ॥ अस्थिभङ्गं गवां कृत्वा चाण्डालस्य च च्छेदनम् । पातनं चैव शृङ्गस्य मासार्धं व्याप(याव)कं चरेत् ॥५०॥ यवसस्रावबोटव्यो यावद्दोहेत तद्गृहे(?) तद्वर्णां च सुगां दत्वा ततः पापात्प्रमुच्यते ॥५१॥ हले वा शकटे चैव दुर्बलं यो नियोजयेत् । प्रत्यवाये समुत्पन्ने ततः प्राप्नोति गोवधम् ॥ ५२ ॥ अतिवाह्यातिदोहाभ्यां नासिकाभेदने तथा । नदीपर्वतसंरोधे पादोनं व्रतमाचरेत् ॥ ५३ ॥ एकं च बहुभिः कैश्चिद्दैवाद्व्यापादितं क्वचित् । कृच्छ्रपादं तु हत्यायाश्चरेयुस्ते पृथक्पृथक् ॥ ५४ ॥ एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् । योक्त्रे च पादहीनं स्याच्चरेत्सर्वं निपातने ॥ ५५ ॥ रोमाणि प्रथमे पादे द्वितीये च( चा ) श्मघातनम् । तृतीयं(ये)तु शिखा धार्या सशिखं तु निपातने ॥ ५६ ॥ केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् । द्विगुणव्रते समादिष्टे द्विगुणे( णा )दक्षिणा भवेत् ॥ ५७ ॥ राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । अकृत्वा वपनं तेषां प्रायश्चित्तं न विद्यते ॥ ५८ ॥ अन्येषां नखकर्णानां बाहोर्निर्मोचने तथा । सायं संगोपनार्थाय न दुष्येद्रोधबन्धयोः ॥५९॥ यन्त्रिते गोचिकित्सायां मूढगर्भविमोचने । यत्ने कृते विपद्येत प्रायश्चित्तं न विद्यते ॥ ६० ॥ औषधं स्नेहमाहारं दत्तं गोब्राह्मणाय च । यदि काश्चि(काचि)द्विपत्तिः स्यात्प्रायश्चित्तं न विद्यते ॥ ६१ ॥ स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा ।

---

* एतच्चिह्नान्तर्गतं न विद्यते क. पुस्तके ।

---

१ क एकवद्‌ । २ क. 'जे इम' ।

कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति ॥ ६२ ॥ वालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति । सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम् ॥ ६३ ॥ आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता । त्रिरात्रं तु व्रतादेशा दशरात्रमतः परम् ॥६४॥*अहस्त्वदत्तकन्याया वालेषु च विशोधनम् । कुर्वन्नैवाशनो यात मातुलश्रोत्रिये यथा(?)॥ ६५ ॥ ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् । अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥ ६६ ॥ आममांसं घृतं क्षौद्रं स्नेहाश्च फलसंभवाः । म्लेच्छभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयः स्मृताः ॥ ६७ ॥ दिवा कपित्थच्छायासु रात्रौ दाधिशमीषु च । धात्रीफलेषु सप्तम्यामलक्ष्मीर्वसते सदा ॥ ६८ ॥ स(शू)र्पवातनखाग्रान्तकेशवन्ध[प]टोदकम् । मार्जनीरेणुसंस्पर्शो हन्ति पुण्यं दिवाकृतम् ॥ ६९ ॥ अर्धवासास्तु यः कुर्याज्जपहोमक्रिया द्विजः । तत्सर्वं राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥ ७० ॥ यत्र यत्र च संकीर्णं पश्यत्यात्मन्यसंशयम् । तत्र तत्र तिलैर्होमो गायत्र्यावर्तनं तथा॥७१॥

इति लघुशङ्खस्मृतिः ॥

समाप्तेयं लघुशङ्खस्मृतिः ।



* एतद्वचनं न विद्यते ख. पुस्तके ।

ॐ तत्सद्ब्रह्मणे नमः ।

# [लघु]शातातपस्मृतिः ।

शातातपस्य महर्षेर्धर्मशास्त्रं व्याख्यास्यामः ॥ १ ॥ ब्राह्मणं हत्वा तस्य शिरःकपालमादाय तीर्थान्तरं संचरेदात्मनः पापकीर्तनं कुर्वन्द्वादशाब्दैर्विशुध्यति ॥ २ ॥ अथाश्वमेधं पश्यति तद्दर्शनाच्छुद्धो भवति ॥ ३ ॥ सुरापस्य तप्तसुरापाने शुद्धिः स्यात् ॥ ४ ॥ ब्राह्मणसुवर्णहरणे राजसंनिधानात्सोमपानेन शुद्धिः स्यात् ॥ ५ ॥ गुरुदाराभिगामिनस्तप्तायसीपरिष्वञ्जनेनैव शुद्धिः ॥ ६ ॥ एषां यो येन संबध्यते तस्य तदेव प्रायश्चित्तं भवति ॥ ७ ॥ यावकीयं चतुर्थकालं संविशेत् ॥ ८ ॥ नकुलभोजने लशुनपलाण्डुगृञ्जनभक्षणे तप्तकृच्छ्रम् ॥ ९ ॥ उष्ट्रीखरीमानुषीक्षीरपाने पुनरुपनयनं कृच्छ्रं च ॥ १० ॥ शूद्रोच्छिष्टभोजने त्रिरात्रम् ॥ ११ ॥ सुराभाण्डोदकपाने छर्दनं घृतप्राशनमहोरात्रं च ॥ १२ ॥ अनुदकमूत्रपुरीषकरणे ष्व(श्व)काकस्पर्शने सचैलस्नानं महाव्याहृतिमाचरेत् ॥ १३ ॥ काकविष्ठोपघाते हव्यकव्याभिगमने तदेव व्रतम् ॥ १४ ॥ मृतवत्सायाः क्षीरप्राशने वृथामांसस्य भक्षणे प्राजापत्यम् ॥ १५ ॥ अग्नेरुत्सादने मांसस्यर्थे(स्पर्शे) काकश्वानमण्डूकमूषकदर्दुरनकुलादीन्हत्वा यानि चान्यानि भूतानि एषामनुक्तप्रायश्चित्तेषु वधं कृत्वा प्राजापत्यं समाचरेत् ॥ १६ ॥ अस्नाताशी अयाजी च विप्रकीर्णो भवेद्द्विजः । न तारयति दातारं नाऽऽत्मानन्त(नं स)परिग्रहम् ॥ १७ ॥ अस्नाताशी मलं भुङ्क्ते अयाजी पूयशोणितम् । अहू(हु)ताशी कृमिं भुङ्क्ते अदाता विषमश्नुते ॥ १८ ॥ पक्वं वा यदि वा चाऽऽमं यस्य नाश्नाति वै द्विजः । भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत् ॥ १९ ॥ अथोपपातकान्याहुः ॥ २० ॥ अग्न्युत्सादी कन्यादूषी स्त्रीघाती[वृषणाभिघाती] गोघ्नः शूद्रघाती कुमारघाती यामि(पति)नव्यवहारी ये तेषां प्रायश्चित्तानि॥२१॥ अग्न्युत्सादने कृच्छ्रम् ॥ २२ ॥ कन्यादूषणेऽर्धपादम् ॥ २३ ॥ स्त्रीघाती षण्मासान्कृच्छ्रेण ॥ २४ ॥ वृषणाभिघाते प्राजापत्यम् ॥ २५ ॥ गोघ्नस्त्रीन्मासा-

---

१ क. °ह्मणो ब्राह्मणं । २ ख. ग. °कदुर्दु° । ३ घ- °जः । नाता° ।

न्प्राजापत्यं कुर्याद्धोमतीं च जपेद्विद्याम् ॥२६॥ शूद्रवधे तप्तकृच्छ्रेण मासं वर्तयेत्॥२७॥ कुमारघाती पयोभक्षो मासं गोष्ठे वसेत् ॥ २८ ॥ पतितव्यवहारी तप्तकृच्छ्रेण शुध्यति ॥ २९ ॥ * आहस्त्यश्वदातारि वधे शूद्रवदकामकृते प्रायश्चित्तं समाचरेत् ॥ ३० ॥ प्राणायामास्त्रयस्तस्य व्र(घृ)तं प्राश्य विशुध्यति ॥ ३१ ॥ विवाहयेन्न सगोत्रां समानप्रवरां तथा । तस्याः[कथंचित्]संबन्धेऽ[प्य]तिकृच्छ्रं चरेद्द्विजः ॥ ३२ ॥ य उद्वहेत्सगोत्रां=दुहितरं चैव मातुलाम्(?) । पितृभिः सह तुल्यः स्यात्स तु चान्द्रायणं चरेत् ॥ ३३ ॥ नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् । नातिलोमिकां नालोमिकां न वाचाटां न पिङ्गलाम् ॥ ३४ ॥ नर्क्षवृक्षनदीनाम्नीं न च भीषणनामिकाम् ॥ ३५ ॥ यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत तां कन्यां पुत्रिकाधर्मशङ्कया ॥ ३६ ॥ असपिण्डा तु या मातुरसगोत्रा च या पितुः । सा विवाह्या द्विजातीनां दारकर्मणि मैथुने ॥ ३७ ॥ हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् । तादृशीमुद्वहेत्कन्यां स चैल(वं)सुखमृच्छति ॥ ३८ ॥ दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ ३९ ॥ परिवित्तिः परिवेत्ता यया च परिविद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥ ४० ॥ क्लीबे देशान्तरस्थे पतिते प्रव्रजिते तथा । दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ ४१ ॥ नाग्नयः परिविन्दन्ति वेदा न च तपो न च । न च श्राद्धं कनिष्ठस्य विरूपा या च कन्यका ॥ ४२ ॥ यस्मिंस्तु कुलशीलानि न दृश्येरन्कदाचन । न सत्याकरणं तत्र न च कन्यानृतं भवेत् ॥ ४३ ॥ उद्वाहिता च या कन्या न संप्राप्ता च मैथुनम् । भर्तारं पुनरभ्येति यथा कन्या तथैव सा॥४४॥ समुद्धृत्य तु तां कन्यां सा चेदक्षतयोनिका । कुलशीलवते दद्यादिति शातातपोऽब्रवीत् ॥ ४५ ॥ भृत्याध्यापनं प्र(प्रा)ध्ययनं प्रश्नपूर्वं प्रतिग्रहम् । दानाध्ययनवादार्थं षड्विधो वेदविक्रयः ॥ ४६ ॥ यत्ताद्विक्रयानिर्दिष्टं स्त्रीषु यच्चार्पितं धनम् । न देयं पितृदेवेभ्यो यच्च क्लीबादुपार्जितम् ॥ ४७ ॥ अनियोगेन यो दद्याद्ब्राह्मणाय प्रतिग्रहम् । स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् ॥ ४८ ॥ वेदाक्षराणि यावन्ति नियुक्तादनुकारणात् । तावता ब्रह्महत्यैव ब्रह्मविक्रयनिर्दिशेत् (?) ॥ ४९ ॥ वैश्वदेवेन ये भीता आतिथ्याच्च बहिष्कृताः । सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः ॥ ५० ॥ येषामध्ययनं नास्ति ये च केचिदनग्नयः । न कुलं श्रोत्रियं येषां

* इत आरभ्य विशुध्यतीत्यन्तग्रन्थो ग. पुस्तके न विद्यते । = तद्दुहितरमिति सकलपुस्तकपाठ ।

१ क. इ. °म् । तद्देयं । २ क. ग. °न्त्यन्त्यर्धा° । ३ क. °र्काः । व्यथा ।

सर्वे ते शूद्रधर्मिणः ॥ ५१ ॥ अकृत्वा वैश्वदेवं तु ये भुञ्जन्त्यत्यधार्मिकाः[3] । वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते ॥५२॥ प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव च । वैश्वदेवे तु संप्राप्तः सोऽतिथिः स्वर्गसंक्रमः ॥ ५३ ॥ नैकग्रामीणमतिथिं पूर्वसंगतिकं तथा । उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोऽपि वा ॥ ५४ ॥ अनिमित्तमनाहूतं देशकालमुपस्थितम् । अतिथिं तं विजानीयान्नातिथिः पूर्वसंगतः ॥ ५५ ॥ यावन्मात्राशनो वा स्याद्धुताशी स्नातको द्विजः । तस्यान्नस्य चतुर्भागं हन्तकारं विदुर्बुधाः ॥ ५६ ॥ ग्रासमात्रं भवेद्भिक्षा पुष्कलं तु चतुर्गुणम् । पुष्कलानि च चत्वारि हन्तकारो विधीयते ॥ ५७ ॥ आरूढो नैष्ठिकं धर्मं यस्तु व्यावर्तयेत्पुनः । चान्द्रायणं चरेन्मासमिति शातातपोऽब्रवीत् ॥ ५८ ॥ आरूढपतितोत्पन्नो ब्राह्मणो वृषलेन च । उभौ तावतिचाण्डालौ सगोत्रायां तु जायते ॥ ५९ ॥ यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ६० ॥ चाण्डाल्यां विशतो विप्राः परिव्राजकतापसाः । तैर्जातानि अपत्यानि चाण्डालैर्नरकं वसेत् ॥ ६१ ॥ स्पन्दिते बुद्धिजातीनां भिन्नभाजनभोजने । पञ्चगव्येन शुद्धिः स्यादिति शातातपोऽब्रवीत् ॥ ६२ ॥ अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् । तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥ ६३ ॥ ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् । उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत् ॥ ६४ ॥ पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥ ६५ ॥ उपनिक्षेपधर्मेण शूद्रान्नं पचति द्विजः । अभोज्यं तु भवेदन्नं स च विप्रः पुरोहितः ॥ ६६ ॥ शूद्रान्नं शूद्रसंकल्पः शूद्रेण सह वासनम् । शूद्राह्वा (ज्ज्ञा) नागमः कश्चिज्ज्वलन्तमपि पातयेत् ॥ ६७ ॥ शूद्रान्नोपहता विप्रा विह्वला रतिलालसाः । भ(धा)रिताः किं करिष्यन्ति निर्विषा इव पन्नगाः ॥ ६८ ॥ शूद्रादाहृत्य निर्वापं ये पचन्ति द्विजातयः । ते यान्ति नरकं घोरं ब्रह्मतेजोविवर्जिताः ॥६९॥ अग्निहोत्रफलं नित्यं वैश्वदेवतरोर्गतम् । सर्वं तु नश्यते चैव शूद्रान्नपचने कृते ॥ ७० ॥ हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनादयः । दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ॥ ७१ ॥ आयसेन तु पात्रेण यदन्नमुपनीयते । भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत् ॥ ७२ ॥ दन्तधावनमङ्गुल्या प्रत्यक्षलवणं च यत् । मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणैः ॥ ७३ ॥ मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः । तस्मात्सर्वप्रयत्नेन भक्षयेद्दन्तधावनम् ॥ ७४ ॥ पुष्पाणि क्षारवस्त्राणि गन्धमाल्यानुलेपनम् । उपवासे न शुध्यन्ति दन्तधावनमञ्जनम् ॥ ७५ ॥

---

१ क. ग. 'वपि चा°' । २ ख. ग. '°ञ्जनोद°' । ३ ख. ग. घ. '°तारो नरकं यान्ति' ।

अन्यतो वसते मूर्खो दूरेणापि बहुश्रुतः । बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥ ७६ ॥ ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते । ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ ७७ ॥ संनिकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् । भोजने चैव दाने च दहत्यासप्तमं कुलम् ॥ ७८ ॥ देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ७९ ॥ देवद्रव्यं द्विजप्रोक्तं ब्रह्मस्वं ब्राह्मणेन्द्रियम् । वियोन्यां क्रियते यच्च तेन नास्ति व्यतिक्रमः ॥ ८० ॥ मा दद्स्वेति यो ब्रूयाद्गोष्वग्निब्राह्मणेषु च । तिर्यग्योनिषु गत्वा वै चाण्डालेष्वभिजायते ॥ ८१ ॥ यत्तु वाचा प्रतिज्ञातं कर्मणा नो ( चो ) पपादितम् । त्राणं तद्धर्मसंयुक्तमिह लोके परत्र च ॥ ८२ ॥ वेदविद्याव्रतस्नाते श्रोत्रिये गृहमागते । मोह ( द ) न्त्योषधयः सर्वा यास्यामः परमां गतिम् ॥ ८३ ॥ नचा ( वा ) शौचे परिभ्रष्टे विप्रे वेदाविवर्जिते । दीयमानं रुदत्यन्नं किं मया दुष्कृत कृतम् ॥ ८४ ॥ मन्त्रपूतं तु यत्त्वन्नममन्त्राय च दीयते । हस्तं कृन्तति दातुस्तु भोक्तुर्जिह्वां निकृन्तति ॥८५॥ यावतो ग्रसते पिण्डान्हव्यकव्येष्वमन्त्रवित् । तावतो ग्रसते प्रेत्य दीप्तान्स्थूलानयोगुडान् ॥ ८६ ॥ मधुमांससुरासोमं लाक्षालवणमेव च । एतेषां विक्रयेणैव द्विजश्चान्द्रायणं चरेत् ॥ ८७ ॥ गवां श्वासोदकस्नाने महानद्याश्च संगमे । समुद्रदर्शने चैव शुना दष्टः शुचिर्भवेत् ॥ ८८ ॥ अव्रती सव्रती चापि शुना दष्टो द्विजोत्तमः । हिरण्योदकमिश्रं तु घृतं प्राश्य विशुध्यति ॥ ८९ ॥ यदा न दृश्यते सोमः प्रायश्चित्तं कथं भवेत् । यां दिशं व्रजते सोमस्तां दिशं त्ववलोकयेत् । सोममार्गेण सा पूता पञ्चगव्येन शुध्यति ॥ ९० ॥ ब्राह्मणब्रह्मेण ( णो ) द्वारे पूयशोणितसंभवे । कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥ ९१ ॥ गवां मूत्रपुरीषेण त्र्यहं स्नात्वा यथाक्रमम् । ततः क्षीरघृतं प्राश्य कृमिदष्टो विशुध्यति ॥ ९२ ॥ वृथान्नमधुमांसानि यस्तु नाश्नाति स व्रती । त्रीण्यहानि उपवसेदेकाहमुदके वसेत् ॥ ९३ ॥ रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात् । सन्ध्ययोरुभयोश्चैव न कुर्वीत कदाचन ॥९४॥ अकृत्वा मातुलायां तु यः श्राद्ध प्रविवेशयेत् । तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥ ९५ ॥ सदैवं भोजयेद्विप्राञ्श्राद्धमेव प्रवर्तते । अश्नन्ति चान्यथा धर्मे सदेवासुरराक्षसाः ॥ ९६ ॥ पूर्वं प्रा ( पा ) णिषु यद्दत्तं यच्चान्नमुपकल्पितम् । तेनैव सह भोक्तव्यं पृथक्श्राद्धं न विद्यते ॥ ९७ ॥ द्वौ दैवे पार्वणे विप्रः ( प्रौ ) प्राङ्मुखा उपवेशयेत् । त्रीन्पित्र्ये च उदङ्मुखान्पितॄणां तृप्तिहेतवे ॥ ९८ ॥ यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् । शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिकम् ॥ ९९ ॥ छन्दोगं भोजयेच्छ्राद्धे वैश्वदेवे तु बह्वृचम् । शान्तिकर्माणि चाध्वर्यु खरं ( र ) कर्मण्यथर्वणम् ॥ १०० ॥

---

१ क. ख. ङ. अश्नतो । २ क ख °स्नाने श्रो° । ३ क. ङ °व्येषु म° । ४ ख °ह्मरेषु प ५ घ. °रेषु प° । ६ ङ °दैव भो° । ७ ग. °र्युं छान्दो° । ८ ग. सर्वामा° ।

अतिथिरहिते[1] श्राद्धे ये भुञ्जन्त्यविचक्षणाः । वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते ॥ १०१ ॥ दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् । तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ॥ १०२ ॥ यावदुष्णं पिबेदन्नं यावदश्नन्ति वाग्यताः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥ १०३ ॥ हविर्गुणा न वक्तव्या न यावत्पितरोऽर्चिताः । पितृभिस्तर्पिते स्त ( त्व ) स्य वक्तव्यं शोभनं हविः ॥ १०४ ॥ परदारेषु जायेते द्वौ पुत्रौ कुण्डगोलकौ । पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः ॥ १०५ ॥ तौ जातौ ( येते ) परक्षेत्रे [2]प्रकृत्य ( त्या ) चेष्टते कृतिः । दत्तानि हव्यकव्यानि नाश्नन्ति सां ( स ) प्रदायिनः ॥ १०६ ॥ त्रीणि श्राद्धे पवित्राणि दौहित्रं कुतुपस्तिलाः । त्रीणि चात्र प्रशंसन्ति सत्यमक्रोधमार्जवम् ॥ १०७ ॥ दौहित्रं प्रोच्यते खड्गं ललाटे यस्य दृश्यते । तस्य खड्गस्य यत्पात्रं तद्दौहित्रमिति स्मृतम् ॥ १०८ ॥ दिवसस्याष्टमे भागे मन्दी भवति भास्करः । स कालः कुतुपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥ १०९ ॥ पवित्रकं करे कृत्वा गन्धैराणि पठे ( लेपये )- द्द्विजः ( जान् ) । पितृयज्ञस्य तच्छिद्रं निराशाः पितरो गताः ॥ ११० ॥ सव्यादंसात्परिभ्रष्टं नाभिदेशे धृताम्बरम् । एकवस्त्रं तु तं वि ( तद्वि ) द्याद्दैवे पित्र्ये च वर्जयेत् ॥ १११ ॥ हस्तौ प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः । स हि दैवं च पित्र्यं च आत्मानं चापि घातयेत् ॥ ११२ ॥ भो ( भा ) जनेषूपतिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥ ११३ ॥ गृहेषु तत्समा संध्या गोष्ठे दशगुणा स्मृता । नद्यां शतगुणा प्रोक्ता अनन्ता शिवसंनिधौ ॥ ११४ ॥ अनृतं मद्यगन्धं च दिवामैथुनमेव च । पुनाति मन्त्रतत्त्वं च तत्संध्योपासनाद्द्विजः ॥ ११५ ॥ गणान्नं गणिकान्नं च यच्चान्नं बहुयाचितम् । नारीप्रथमगर्भेषु भुक्त्वा चान्द्रायणं चरेत् ॥ ११६ ॥ पुनर्भूः परिवेत्ता च रेतोधाः कामचारिणी । आसां प्रथमगर्भेषु भुक्त्वा चान्द्रायणं चरेत् ॥ ११७ ॥ * कामचारिणीरतस्य परपाकरतस्य च । लोलुपस्य च यच्चान्नं भुक्त्वा चान्द्रायणं चरेत् ॥ ११८ ॥ पञ्चयज्ञाननुपासित्वा परान्नं यस्तु भुञ्जाति । सततं ब्राह्मणो विद्वान्परपाकरतः स्मृतः ॥ ११९ ॥ गृहमेधे प्रवर्तन्ते वेदशास्त्रबहिष्कृताः । ऋषिभिस्तत्र(स्ते तु) सर्वे वै श्वपचाः समुदाहृताः ॥ १२० ॥ अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि च । गायत्र्यष्टसहस्रेण शुध्यते (न्ते) प्रेतसूतके ॥ १२१ ॥ वैश्यस्य सूतके भुक्त्वा गायत्र्याः पञ्चभिः शुचिः । सूतके क्षत्रियस्यैतद्द्विशतो जप उच्यते ॥ १२२ ॥ सत्रिणां दीक्षितानां च यतीनां[3] ब्रह्मचारिणाम् । एतेषां सूतकं नास्ति कर्म कुर्वन्ति ऋत्विजः ॥ १२३ ॥

* एतद्वचनं न विद्यते घ. पुस्तके ।

१ ङ 'ते विद्या ये । २ क. ख. प्रत्य' । ३ क. ङ यतिना ।

यज्ञप्रकरणे चापि जायते स्वयमेव तु । अर्थी²(र्थो)पदापयेदन्नं भोज्यं³ तद्द्विजसत्तमैः ॥ १२४ ॥ चितिवृक्षश्चितियूपश्चण्डालो वेदविक्रयी । एतान्वै ब्राह्मणः स्पृष्ट्वा सचैलो जलमाविशेत् ॥ १२५ ॥ अग्न्यगारे गवां गोष्ठे देवतानां च संनिधौ । आहारे जपकाले च पादुकां च विवर्जयेत् ॥ १२६ ॥ शिरः प्रावृत्य कण्ठं वा अप्सु मुक्तशिखोऽपि वा । अकृत्वा पादशौचं तु आचान्तोऽप्यशुचिर्भवेत् ॥ १२७ ॥ खलक्षेत्रगतं धान्यं वापीकूपगतं जलम् । अभोज्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः ॥ १२८॥ अनाम्नातेषु[च] कथं कथं चिदिति चेद्वदेत् । यामाशिषं द्विजा ब्रूयुः स धर्म परमः स्मृतः ॥ १२९ ॥ यो वेष्टितशिरा भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः । सोपानत्कश्च यो भुङ्क्ते तद्वै रक्षांसि भुञ्जते ॥ १३० ॥ यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्मिणः । हर⁴न्ते रसमन्नस्य मण्डलेन विवर्जितम् ॥ १३१ ॥ ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशन एव च । मण्डलान्युपजीवन्ति तस्मात्कुर्वन्ति मण्डलम् ॥ १३२ ॥ ब्राह्मणस्य चतुष्कोणं त्रिकोणं क्षत्रियस्य च । वैश्यस्य मण्डलं प्रोक्तं शूद्रस्य प्रोक्षणं स्मृतम् ॥ १३३ ॥ दन्तलग्ने फले मूले भुक्तशेषानुलेपने । ताम्बूले चेक्षुखण्डे च नोच्छिष्टो भवति द्विजः ॥ १३४ ॥ न स्नानमाचरेद्भुक्त्वा नाऽऽतुरो न महानिशि । न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥ १३५ ॥ नोत्सङ्गे भाजनं कृत्वा भुञ्जीत स्नातको द्विजः । न च पाणितले कृत्वा शयने न च मां⁵(आ)सने ॥ १३६ ॥ अशुचिं स्पृशते यस्तु एक एव स दुष्यति । तं स्पृष्ट्वाऽन्यो न दुष्येत सर्वद्रव्येष्वयं विधिः ॥ १३७ ॥ बहूनामेकलग्नानां यद्येकोऽप्यशुचिर्भवेत् । अशौचं तस्य मात्रस्य नेतरेषां कदाचन ॥ १३८ ॥ नाश्नीयादेकवस्त्रेण न नग्नः स्नानमाचरेत् । न विण्मूत्रं पथि कुर्यान्न भस्मनि न गोमये ॥ १३९ ॥ भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा पुनः । शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥ १४० ॥ गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च । शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च ॥ १४१ ॥ अयने दानमादौ स्याद्विषुवे मध्यवर्तिनि । षडशीतिमुखेऽतीते समन्ताच्चन्द्रसूर्ययोः ॥ १४२ ॥ कुर्याद्ब्राह्मणि कर्माणि स्वभार्यापोषणं परम् । ऋतुकालाभिगामी च प्राप्नोति परमां गतिम् ॥ १४३ ॥ ऋतुमतीं तु यो भार्यां संनिधौ नोपगच्छति । तस्या रजसि षण्मासं पितरस्तस्य शेरते ॥ १४४ ॥ अयनादौ तदा दद्याद्द्रव्यमिष्टं गृहे वसन् । षडशीतिमुखे चैव विमुक्ते चन्द्रसूर्ययोः ॥१४५॥ अर्वाक्षोडश विज्ञेया नाड्यः पश्चाच्च षोडश । कालः पुण्योऽर्कसंक्रान्त्यां विद्वद्भिः परिकीर्तितः ॥१४६॥

---

१ घ. अर्थी सदा° । २ क. ग. °र्थो दा° । ३ ख. ग. भोज्ये । ४ क °रन्ति र° । ५ क. ग. °मासने ।

संक्रान्त्यां यानि दत्तानि च (नि) कव्यानि ब्राह्मणैः सह । तानि नित्यं ददात्यर्कः पुनर्जन्मानि जन्मनि ॥ १४७ ॥ अधिगम्य तु यज्ज्ञानं यच्च दानमुपार्जितम् । विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते ॥ १४८ ॥ प्रत्यक्षाणि च दत्तानि ज्ञानं च निरहंकृतम् । तपांसि च सुगुप्तानि तेषां फलमनन्तकम् ॥ १४९ ॥ शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये । विषुवे*शतसाहस्रमाका[शे]चैत्यनन्तकम् ॥ १५० ॥ अयनेषु च यद्दत्तं षडशीतिमुखे तथा । चन्द्रसूर्योपरागे च दत्तं भवति चाक्षयम् ॥ १५१ ॥ चन्द्रसूर्यग्रहे नाद्याद्दद्यात्तु प्रतिमुक्तयोः । अमुक्तयोरस्तगयोः स्नात्वा दृष्ट्वा परेऽहनि ॥ १५२ ॥ नष्टं देवलके दत्तमप्रतिष्ठं वार्धुषिके । सोमविक्रयिणे विष्ठाऽभि(दत्तं) जायते पूयशोणितम् ॥ १५३ ॥ यत्र (च) देवलके दत्तं ते (ने) ह ता (ना) मुत्र तद्भवेत् ॥ १५४ ॥ चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ॥ १५५ ॥ ब्रह्मकूर्चं प्रवक्ष्यामि सर्वपापप्रणाशनम् । अनादिष्टेषु सर्वेषु ब्रह्मकूर्चं विधीयते ॥ १५६ ॥ नदीप्रस्रवणे तीर्थे ह्रदे चान्तर्जलेऽपि वा । धौतवासा विशुद्धात्मा जपेच्चैव जितेन्द्रियः ॥ १५७ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । निर्दिष्टं पञ्चगव्यं च पवित्रं कायशोधनम् ॥ १५८ ॥ गोमूत्रैकपलं दद्यादर्धाङ्गुष्ठेन गोमयम् । क्षीरं सप्तपलं दद्यात्पलमेकं कुशोदकम् × ॥ १५९ ॥ गायत्र्याऽऽगृह्य गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ १६० ॥ तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् । ब्रह्मकूर्चं भवेदेवमापो हि ष्ठेति ऋग्जपेत् ॥ १६१ ॥ मध्यमेन पलाशेन पद्मपत्रेण वा पिबेत् । अथ वा ताम्रपात्रेण ब्रह्मपात्रेण वा द्विजः ॥ १६२ ॥ अग्नये स्वाहा । सोमाय स्वाहा । इरावती । इदं विष्णुः । मा नस्तोके । गायत्रीं च जुहुयात् ॥ १६३ ॥ प्रजापते न त्वदेतान्यन्य इत्यालोड्य प्रणवेन पिबेत् ॥ १६४ ॥ आहृत्य प्रणवेनैव उद्धृत्य प्रणवेन च । आलोड्य प्रणवेनैव पिबेच्च प्रणवेन च ॥ १६५ ॥ एतद्द्विजनिमित्तं हि सर्वपापप्रणाशनम् । मलं कोष्ठगतं सर्वं दहत्यग्निरिवेन्धनम् ॥ १६६ ॥ दुर्बलेऽनुग्रहः प्रोक्तस्तथा चैवानवृत्त-( थैव बालवृद्ध- )योः । अतोऽन्यथा भवेद्दोषस्तस्मान्माऽनुग्रहः स्मृतः ॥ १६७ ॥ स्नेहाद्वा यदि वा मोहाद्भयादज्ञानतोऽपि वा । कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति ॥ १६८ ॥ शरीरस्यात्यये कार्यः सदैव नियमो द्विजैः । महत्कार्योपचारे

* अत्राऽऽदर्शपुस्तकेषु एवमेव पाठो व्यासवचने त्वत्र शतसाहस्रं व्यतीपाते त्वनन्तकमिति पाठो दृश्यते । × अत्र दधिघृतयोः प्रमाणादर्शनादपूर्णं वचनमिदं भाति ।

१ ग. संक्रान्त्या । २ ग. °र्यते मू° ।

च न च स्वस्थैः कदाचन ॥ १६९ ॥ स्वस्थः सन्कु( स्थो न कु? )रुते मूढो व्रतनियमौ यो द्विजः । तद्वशात्ते तु कर्तारः पतन्ति नरकेषु वै ॥ १७० ॥ धर्मशास्त्रं समारूढो वेदखड्गधरो द्विजः । विद्वान्स्वयं तु यद्ब्रूयात्स धर्मः परमः स्मृतः ॥ १७१ ॥ अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः । प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः सह ॥ १७२ ॥ शातातपमिति ख्यातं धर्मशास्त्रोत्तमोत्तमम् । एतज्ज्ञात्वा द्विजः सम्यग्याति ब्रह्म सनातनम् ॥ १७३ ॥

इति श्रीशातातपमहर्षिप्रोक्तं धर्मशास्त्रं संपूर्णम् ॥

समाप्तेयं [ लघु ]शातातपस्मृतिः ।

ॐ तत्सद्ब्रह्मणे नमः ।

# लघुहारीतस्मृतिः ।

हारि(री)ते[1]नैवमाख्यातं लोकानां हितकाम्यया । प्रायश्चित्तं[2] चिकित्सार्थमेतत्प्राहुर्मनीषिणः ॥ १ ॥ श्वविष्ठां काकविष्ठां वा कङ्कगृध्रनरस्य च । अधोच्छिष्टं तु संस्पृश्य सचैलो जलमाविशेत् ॥ २ ॥ ऊर्ध्वोच्छिष्टं तु संस्पृश्य प्रायश्चित्तं विनिर्दिशेत् । उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ ३ ॥ रजस्वला तु या नारी श्वानं काकमथ स्पृशेत् । प्रायश्चित्तं कथं तस्या येन शुद्धिमवाप्नुयात् ॥ ४ ॥ अतिक्रान्ते त्रिरात्रे तु स्नानं कृत्वाऽऽर्द्रवाससा । त्रिरात्रं क्षपयेदूर्ध्वमेकरात्रमधः क्षिपेत् ॥ ५ ॥ नियमस्था व्रतस्था स्त्री रजः पश्येत्कथंचन । त्रिरात्रं[3] तु क्षिपेदूर्ध्वं व्रतशेषं समाचरेत् ॥६॥ उच्छिष्टस्तु द्विजातिश्च रजस्त्रीं यदि संस्पृशेत् । उपवासस्त्वधोच्छिष्ट ऊर्ध्वोच्छिष्टे त्र्यहं क्षिपेत् ॥७॥ विण्मूत्रं यस्तु गृह्णाति वाचा वा दायको भवेत् । ग्रहणे तप्तकृच्छ्रं स्यादेकाहश्चेतरे स्पृशेत् ॥ ८ ॥ यद्रजः श्लेष्मणः स्वेदो गात्राणां च मलानि च । प्रमादान्मुखसंस्पृष्टे पञ्चगव्येन शुध्यति ॥ ९ ॥ उच्छि[4]ष्टस्तु यदा स्पृष्टश्चण्डाला[5]द्यैः कथंचन । ऊर्ध्वोच्छिष्टं तु संस्पृश्य द्विजः सांतपनं चरेत् ॥ १० ॥ = अधोच्छिष्टो यदा स्यात्तु प्रायश्चित्तं भवेदिदम् । त्रिरात्रमुपवासेन पञ्चगव्येन शुध्यति ॥ ११ ॥ उच्छिष्टः संस्पृशेद्यस्तु नटं रजक[6]मेदकान् । अधोच्छिष्टो यदा स स्यादेकरात्रमभोजनम् ॥ १२ ॥ ऊर्ध्वोच्छिष्टो यदा तु स्यात्प्रायश्चित्तं भवेदिदम् । उपवासस्त्रिरात्रं स्याद्घृतं प्राश्य विशुध्यति ॥ १३ ॥ + अ[7]न्त्यजः पतितो वाऽपि निगूढो यत्र तिष्ठति । विज्ञाते तु ततः पश्चात्त्रिभिः कृच्छ्रैर्विशोधनम् ॥ १४ ॥ उद्धृतं दधिसंस्कारं जह्यात्स्पृष्टं च मृन्मयम् । कृच्छ्रं चान्द्रायणं कुर्यात्पावनीयं पुनर्द्विजः ॥ १५ ॥ चाण्डालस्य तु पानीयं ब्राह्मणश्च यदा पिबेत् । षड्रात्रमुपवासेन पञ्चगव्येन शुध्यति ॥ १६ ॥ रजस्वला तु संस्पृष्टा ग्रामसूकरकुक्कुटैः । स्नानं कृत्वा क्षिपेत्तावद्यावच्चन्द्रस्य दर्शनम् ॥ १७ ॥

---

= इत- प्रभृति मेदकानित्यन्तं न ख. पुस्तके । + इत आरभ्य पञ्चगव्येन शुध्यतीत्यन्तं न विद्यते घ. पुस्तके ।

---

१ घ. °तेन च व्याख्या° । २ घ. °त्तं विशुध्यर्थमेवमाहु° । ३ ख. °त्रं क्षपयेद्° । ४ ख ग. °च्छिष्टं तु यदा स्पर्शे चाण्डालाद्यैः क° । ५ क °लाद्यैः क° । ६ घ. °कर्मोचिका° । ७ क. अत्यन्त- ।

शिखां छिन्दन्ति ये केचिद्वैराग्याद्वैरतोऽपि वा[1] । पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ १८ ॥ मोहाच्छिन्दन्ति ये केचिद्द्विजातीनां शिखां नराः । चरेयुस्ते दुरात्मानः प्राजापत्यं विशुद्धये ॥ १९ ॥ स्त्रीशूद्रौ तु शिखां छित्त्वा क्रोधाद्वैराग्यतोऽपि वा । प्राजापत्यं प्रकुर्यातां निष्कृतिर्नान्यथा भवेत् ॥ २० ॥ विना यज्ञोपवीतेन द्विजातिर्यद्युपस्पृशेत् । *प्राजापत्यं प्रकुर्वीत निष्कृतिर्नान्यथा भवेत् ॥ २१ ॥ नोपस्पृष्टं भवेत्तेन उच्छिष्टस्तु स उच्यते ॥२२॥ विना यज्ञोपवीतेन भुङ्क्ते तु ब्राह्मणो यदि । स्नानं कृत्वा जपं[2] कुर्वन्नुपवासेन शुध्यति[3] ॥ २३ ॥ अगुरूच्छिष्टमश्नीयाद्ब्रह्मचारी कथंचन । स्नात्वा मौनोपवासेन पञ्चगव्येन शुध्यति ॥ २४ ॥ ब्रह्मचारी यदा भुङ्क्ते शूद्रान्नं ज्ञानदुर्बलः। पराकेण विशुद्धिः स्यान्निष्कृतिर्नान्यथा भवेत् ॥२५॥ उच्छिष्टं क्षत्रियविशोः शूद्रस्यापि कथंचन । ब्रह्मचारी यदाऽश्नीयात्तस्य शुद्धिः कथं भवेत् ॥ २६ ॥ उपवासं नरः कृत्वा द्वादशाहं पृथक्पृथक् । कृत्वा शुद्धिमवाप्नोति ब्रह्मचारी न संशयः ॥ २७ ॥ + औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च । दीयमाने विपत्तिः स्यात्पुण्यमेव न पातकम् ॥ २८ ॥ अस्थिभङ्गं गवां कृत्वा लाङ्गूलस्य च कर्तनम्[4] । पातनं शृङ्गकर्णानां मासार्धं यावकं पिबेत् ॥ २९ ॥ वोढव्यस्तु पशुस्तावद्यावद्रूढव्रणो[5] भवेत् । तद्रूपां दक्षिणां दत्त्वा ततः पापाद्विमुच्यते ॥ ३० ॥ यत्र यत्र[6] स्थितो गोघ्नः प्रायश्चित्तं प्रकल्पयेत् । दशरात्रमनाहारः पञ्चगव्येन शुध्यति॥३१॥ ब्राह्मणानां स्पृशेत्पादान्गां च दद्यात्पयस्विनीम् । प्रायश्चित्तमिदं तस्य मुच्यते नात्र संशयः ॥ ३२ ॥ अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च ॥ ३३ ॥ असमर्थस्य बालस्य माता वा यदि वा पिता । तमुद्दिश्य चरेत्कृच्छ्रं व्रतं तस्य न लुप्यते[7] ॥ ३४ ॥ गर्भस्थः पञ्चवर्षः स्यात्कामचारस्तु स स्मृतः । नं[8] भावयति तत्तस्मात्प्रायश्चित्तं न विद्यते॥३५॥ अकृत्वा पादशौचं तु तिष्ठन्मुक्तशिखोऽपि वा । विना यज्ञोपवीतेन आचान्तः पुनराचमेत् ॥ ३६ ॥ अन्ने भोजनसंपन्ने मक्षिकाकेशदूषिते । तदुद्धृत्य स्पृशेच्चापस्तच्चान्नं भस्मना स्पृशेत् ॥३७॥ हस्तेऽश्नन्ती मृन्मये वा निशि स्यात्क्षितिशायिनी । रजस्वला चतुर्थेऽह्नि स्नाता शुद्धिमवाप्नुयात् ॥ ३८ ॥ ताम्बूले कटु[10]केषां[9]य भुक्तस्नेहानुलेपने । मधुपर्के च सोमे

---

* एतदर्धं न विद्यते ख. ग. पुस्तकयो । + एतद्वचनं न क. पुस्तके ।

---

१ घ. °च्चित्केचिद्वैराग्यतो । २ क जपेत्सर्वमुप° । ३ क. ख. ग. °ति । स्वगु° । ४ क घ °र्तने। पातने शृ° । ५ ख. °वद्रूढ° । ६ ख ग. तत्र । ७ घ. विद्यते । ८ घ. न भवेत्पतितस्तस्मा° । ९ घ. °ङ्खाद्ये च भु° । १० क. ये नुक्त° । ख. °ये च भु° । ग. °ये मुक्त° ।

च नोच्छिष्टं मनुरब्रवीत् ॥ ३९ ॥ आहारे मैथुने चैव प्रस्रवे दन्तधावने। स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ॥ ४० ॥ स्नानं कृत्वा तु ये केचित्पुष्पं गृह्णन्ति वै द्विजाः। दे[१]वतास्तन्न गृह्णन्ति भस्मी भवति काष्ठवत् ॥ ४१ ॥ पृथक्[३]पानं पु[४]नःस्नानं सामिषं पयसा निशि। दन्तच्छेदनमुष्णं च समसक्तूपवर्जयेत् ॥ ४२ ॥ दधिसर्पिःपयःक्षौ[५]द्रभाण्डे दोषो न विद्यते। मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः ॥ ४३ ॥ आमिषस्य तु[७] यो भाण्डे पक्वमश्नाति मोहितः। कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्तयेत् ॥ ४४ ॥ वर्धितं द्विगुणं यत्स्यात्पुनस्तेनैव वर्तते। या मातुः[८] कुरुते वृद्धिर्न सा वृद्धिर्विधीयते ॥ ४५ ॥ मूले तु द्विगुणी भूते रिक्ते सिद्धे तथोदिते मूलतस्तु भवेद्वृद्धिश्चतुर्भागेण नान्यथा[१०] ॥ ४६ ॥ स्वादुको वित्तहीनः स्या[११]ल्लग्नको वि[१२]त्तवान्यदि। मूलं तस्य भवेद्देयं न वृद्धिर्दा(द्धिं दा)तुमर्हति ॥ ४७ ॥ द्विगुणं त्रिगुणं वाऽपि यः साधयति लग्नकम्। राजग्राह्यं च तद्द्रव्यं साधको दण्डमर्हति॥४८॥ उच्छिष्टमेव भोक्तव्यं *स्त्रीपशुर्वापिनस्तथा (?)। अनुच्छिष्टं तु यो भुङ्क्ते तं भोगं दापयेन्नृपः ॥ ४९ ॥ अनुच्छिष्टं तु यद्द्रव्यं दासक्षेत्रगृहादिकम्। स्वबलेनैव भुञ्जान श्चौरवद्दण्डमर्हति ॥ ५० ॥ अनड्वाहं च धेनुं च दासीदासं तथैव च। फलभुक्प्रत्यहं दद्याद्भोगं पणचतुष्टयम् ॥ ५१ ॥ एकाहमेव गोक्षीरं ब्रह्मस्वं ये तु भुञ्जते[१३]। पच्यन्ते ते पुरीषे तु जन्तवो द[१४]र्श तानि ते (?) ॥ ५२ ॥ हलं वाहयते यस्तु गां चैव पापकृन्नरः। रौरवे द्वादशाब्दानि पितृभिः सह पच्यते ॥ ५३ ॥ उ[१५]भ[य]मुखीं[१६] तु यो गा वै =ब्राह्मणायोपपादयेत्। उद्धरेत्तु स आत्मानं सप्त सप्त कुलानि वै ॥ ५४ ॥ कालं देशं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम्। उपपत्तिमवस्थां च ज्ञात्वा शौचं समाचरेत् ॥५५॥ व्रतोत्सवविवाहेषु तत्क्षणं सूतकं भवेत्। अम्बुपानं न कर्तव्यं कर्तव्यं स[१७]र्वकर्म वै ॥ ५६ ॥ सूतके मृतके चैवं दिवा रात्रौ तथैव च। न वर्धते तथा पापं क्षपणं सद्य उच्यते ॥ ॥ ५७ ॥ जातके मृतकं वा स्यान्मृतके सूतकं तथा। सूतके[१८] मृतके शुद्धिर्मृते शुद्धिस्तु सूतके ॥ ५८ ॥ × प्रथमं पतितस्त्रीणां दशरात्रेण शुध्यति। इतरेषु तु सर्वेषु प्राणत्यागेन शुध्यति ॥ ५९ ॥

---

* अत्राऽऽदर्शपुस्तकेषु एवमेव पाठः प्रदृश्यते। = वैशब्दोऽधिक.। × एतदर्धस्थानेऽयं पाठ. ख. ग पुस्तकयोः —"दहनादग्निहोतॄणा दशरात्रेण शुध्यति" इति।

---

१ ग नानदा। २ क देवास्तत्र न गृ°। ३ क. °यक्स्नानं पु°। ४ घ. पुनर्दानं। ५ क ख. क्षौद्रं भा.। ६ ग नाग्ज्वों। ७ क. तु यद्भाण्डं प°। घ तु यद्भाण्डे। ८ ख. मात्तु. कु°। घ. मानकु°। ९ ख ग. °ते। मृत्रा। भन्तु। १० ग °था। श्वादको। ११ क. ख. स्यान्नग्र°। १२ घ °त्तदो यदि। १३ घ. °ते। भुञ्जते न्यपुरीष तु। १४ घ °शर्नानि। १५ क. ख. ग. उभेनु°। १६ क. °वैमट्गलम्। तृ°। १७ ग. °प दृशर°। १८ ग. घ. °केन मृते शुद्धिर्°।

अन्यगोत्रोऽपसंवन्धः प्रेतस्याग्निं ददाति यः । पिण्डं चोदकदानं च स दशाहं समाचरेत् ॥ ६० ॥ परिणीता यदा कन्या मृतयोनिः कथं भवेत् । पितृगोत्रं परित्यज्य भर्तुः प्रविशते कुलम् ॥ ६१ ॥ विवाहादीनि कर्माणि[1] स्मरणात्पितृगोत्रतः । संवत्सरे व्यतीते तु तद्गोत्रं नीयते पुनः ॥ ६२ ॥ त्रिः परिक्रमणादग्नेर्हृदयालम्भनात्[2][3]तथा । स्वामिगोत्रेण कर्तव्या पिण्डदानोदकक्रिया ॥ ६३ ॥ पुत्रिका तु हरेद्वित्तमपुत्रा सर्वमर्हति । पत्नी दुहितरश्चैव पितरौ[4] भ्रातरस्तथा ॥ ६४ ॥ तत्सुतो गोत्रजो वन्धुः शिष्यः सब्रह्मचारिणः[5] ॥ ६५ ॥ भार्याऽव्यभिचारिणी यावद्यावच्च नियमे स्थिता । तावत्तस्या भवेद्द्रव्यमन्यथाऽस्या विलुप्यते ॥ ६६ ॥ विधवा यौवनस्था वा नारी भवति कर्कशा । आयुषः[6] क्षपणार्थं तु दातव्यं जीवनं सदा ॥ ६७ ॥ म्रियमाणोऽशनाभावात्पतितो भुवि तिष्ठति । ब्रूयाद्यः साधु जीवामि सर्वै[7]रङ्ग इति स्खलः ॥ ६८ ॥ उद्धृत्यं यत्रतत्रस्थं रत्नं संवर्धयेत्तु[9] यः । कार्षापणात्स( न्स ) पञ्चाशद्दत्त्वा मुच्येत दा[10]स्यतः[11] ॥ ६९ ॥ अष्टाङ्गुलानि[12] खनित्वा उद्धृत्य च मृदं ततः । एव च मृन्मय ग्राह्यममेध्यं त्वन्यथा भवेत् ॥ ७० ॥ अरण्ये वसुधा मेध्या ग्रामे मेध्या क्वचित्क्वचित् । सर्वत्र वसुधा मेध्या यत्र लोको न दृश्यते[13] ॥ ७१ ॥ अनूख( प )गामसिकतामनार्द्रां स्नेहवर्जिताम् । सकङ्करां[14] सवल्मीकां[15] दुर्दान्तजलगामिनीम्[16] ॥ ७२ ॥ अनातपामनुत्कीर्णां[17] तथा वै कृष्णवर्णिकाम् । परशौचावशिष्टां च त्यजेयुर्दश मृत्तिकाः ॥ ७३ ॥ उदकं च तृणं भस्म द्वारः पन्थास्तथैव च । एभिरन्तरितं कृत्वा पङ्क्तिदोषो न विद्यते ॥ ७४ ॥ पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् । दानं प्रतिग्रहो होमः श्राद्ध[18]भुगष्ट वर्जयेत् ॥ ७५ ॥ अध्वनीनो भवेदश्वः पुनर्भोक्ता[19] तु वायसः । कर्मकृज्जायते दासो[20] दरिद्रत्व प्रतिग्रहे ॥ ७६ ॥ होमं कृत्वा[21] तु रोगी स्यात्सूकरो मैथुनी भवेत् । पाठादायुः क्षयं याति दानं निष्फलतामियात् ॥ ७७ ॥ एकोद्दिष्टं तु योऽश्नीयाद्बन्धो लेपन[22]मेव च । विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्तयेत् ॥ ७८ ॥ एकोद्दिष्टं तु यच्छ्राद्धमदैवं तत्तु भोजयेत् । वामप्रदक्षिणं कृत्वा पिण्डमेकं तु निर्वपेत् ॥ ७९ ॥ शावाशौचे समुत्पन्ने सूत्याशौचं ततः पुनः । शावेन शुध्यते सूतिर्न सूतिः[23] शावशोधिनी ॥ ८० ॥ मरणं मरणेनैव सूतकं सूतकेन तु ।

---

१ ख. ग. °णि मर° । २ घ. °लम्वनानि च । ३ क °नादि च । स्वा° । ४ क ख °तरो भ्रा° । ५ क. ग. घ. °णः । अव्य° । ६ क. °युषक्षेप° । ७ ख. °सवैरन्वामिति । घ. सखेरट्क ङ° । ८ क घ. °त्यपतितं भर्तुरङ्गं सं° । ९ क. °येत्तथा । का° । १० क दास्मृत । ११ घ °त । खनित्वा व्यङ्गुलान्यष्टावुद्धृ° । १२ ख. °नि खानि° । १३ ख. ग. विद्यते । १४ ख सशर्करा । १५ ख. ग °ल्मीकामग्राग्रा मा । नुरब्रवीत् । अ° । १६ घ. दुर्धान्तर्जल° । १७ ख. ग. °र्णां स्वक्षरा कृ° । १८ ख ग श्राद्धे भुक्त्वाऽष्ट । १९ ख. ग. °नर्भुक्त्वा तु । २० ख. ग. दास प्रतिग्राही दरिद्रताम् । हो° । २१ घ °त्वाऽग्निरो° । २२ ख. °पश्च तिष्ठति । वि° । २३ क. ख. ग. सूत्या शुध्यते शव. । म° ।

उभयोरपि यत्पूर्वं तेनाशौचेन शुध्यति ॥ ८१ ॥ क्षत्रविट्शूद्रदायादा ये तु विप्रस्य बान्धवाः । तेषांक्शौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥ ८२ ॥ राजन्यवैश्यौ च तथा हीनयोनिषु बन्धुषु । स्वमाशौचं प्रकुर्यातां विशुद्ध्यर्थं न संशयः ॥ ८३ ॥ दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु । षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनयः ॥ ८४ ॥ सर्वेषामेव वर्णानां त्रिभागात्स्पर्शनं भवेत् । यथोक्तेनात्र शुद्धिः स्यात्सूतके मृतके तथा ॥८५॥ त्रिचतुष्पञ्चदशभिः स्पृश्या वर्णाः क्रमेण तु । भोज्यान्नो दशभिर्विप्रः शेषा शुद्धिर्यथोत्तरैः ॥ ८६ ॥ दशाहं दापयेत्पिण्डं प्रत्यहं नात्र संशयः । अग्नौ हुत्वा ततो विप्रान्भोजयेदपरेऽहनि ॥ ८७ ॥ विद्युताऽभिहतानां च राज्ञा सिंहेन वा पुनः । मृते ग्राहगृहीते वा एकरात्रमशौचकम् ॥ ८८ ॥ ब्राह्मणार्थे विपन्नानां दीनानां गोग्रहेषु च । एकरात्रमशौचं स्यादिति शातातपोऽब्रवीत् ॥ ८९ ॥ दुर्भिक्षे राष्ट्रसंपाते आगतायां तथाऽऽपदि । उपसर्गमृतानां च सद्यः शौचं विधीयते ॥९०॥ अहस्त्वदत्तकन्यासु प्रदत्तासु भवेत्त्र्यहम् । पक्षिणी संस्कृतस्त्रीषु स्वस्रादिषु विधीयते ॥ ९१ ॥ आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् । निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥ ९२ ॥ मातापित्रोस्तु यत्प्रोक्तं ब्रह्मचारी तु पुत्रकः । व्रतस्थोऽपि हि कुर्वीत पिण्डदानोदकक्रियाः ॥ ९३ ॥ भवेदशौचं नैतस्य न चाग्निस्तस्य लुप्यते । स्वाध्यायं च प्रकुर्वीत विधिवत्पूर्वचोदितम् ॥ ९४ ॥ एकादश्यां त्रिपक्षे च मासे संवत्सरे तथा । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् ॥ ९५ ॥ पितॄन्यजति यः पूर्वं देवांस्त्यक्त्वा तमोधिकः । पितरस्तस्य तच्छ्राद्धं वर्जयन्त्यशुचिं यथा ॥ ९६ ॥ माता पितामही चैव तथैव प्रपितामही । एतास्तिस्रः स्त्रियो योज्याः पितृवन्मातृकर्मणि ॥ ९७ ॥ ब्राह्मणाः कम्बला गावः सूर्योऽग्निरतिथिर्गुरुः । तिला दर्भाश्च कालश्च दशैते कुतपाः स्मृताः ॥ ९८ ॥ दिवसस्याष्टमे भागे मन्दी भवति भास्करः । स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥ ९९ ॥ श्राद्धं कृत्वा परश्राद्धे यो भुञ्जीत स दुर्बलः । पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः ॥ १०० ॥ यदेव दत्तं विप्रेभ्यः शृतं वा यदि वाऽशृतम् । तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् ॥ १०१ ॥ रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा । संध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते ॥ १०२ ॥

---

१ क घ. °प्रभावे वि° । २ घ. °जन्ये च तथा वैश्ये ही° । ३ ख. ग. °योनिषु । स° । घ. °भागं स्पर्श° । ५ ग. °पा द्वित्रि पञ्चत्त° । ६ ग ग. वन्दीना । ७ ख. ग. °गविपन्नाना स° । ८ क °ते । पञ्चदशं प्र° । ९ क °त पूर्वनद्विदेगकृत् । ए° । १० क. ख ग. °च्छाद्धे पि° । ११ घ. तथा वृद्धपि° । १२ ख. ग. °पो ऽस्य. पि° । १३ क घ. दत्त्वा । १४ ख. घ. °त सुद्द ।

सर्वस्वेनापि कर्तव्यमक्षय्यं राहुदर्शने । दानं यज्ञस्तपः श्राद्धं प्राहुर्धर्मविदो जनाः ॥ १०३ ॥ ऋतुयज्ञविवाहेषु संक्रान्तिग्रहणेषु च । सर्वदानं तदस्तीति सर्वत्रैव तदुच्यते ॥ १०४ ॥ वर्षे वर्षे तु कर्तव्या मातापित्रोस्तु सत्क्रिया । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् ॥ १०५ ॥ जनन्यां संस्थितायां तु सपिण्डीकरणान्तिकम् । पैतृकं तु भवेद्गोत्रमूर्ध्वं तु पितृपैतृकम् ॥ १०६ ॥ कृत्वा मातुः स(स्व)गोत्रेण पिण्डानिर्वपणं सुतः । कुर्यान्मातामहा(ही)नां च मातुलेन विधानवित् ॥ १०७॥ चतुर्थे पञ्चमे चैव नवमैकादशेऽहनि । यदन्नं दीयते जन्तोर्नवश्राद्धं तदुच्यते ॥ १०८॥ सप्तमात्परतो यस्तु नवमात्पूर्वतः स्थितः । उभयोरपि मध्यस्थः कुतपः प्रोच्यते बुधैः ॥ १०९ ॥ मध्याह्ने समये क्षीणे क्षीणशेषे दिवाकरे । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥ ११० ॥ पूर्वमर्धाङ्गुलच्छायामुहूर्तं रौहिणं स्मृतम् । तस्मात्सर्वप्रयत्नेन रौहिणं तु न लङ्घयेत् ॥ १११ ॥ रौहिणं लङ्घयेज्ज्ञानादज्ञानाद्वा विचक्षणः । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥ ११२ ॥ कौलोत्सवविभक्तेऽपि न कश्चित्प्रभुतां व्रजेत् । भाग एव हि कर्तव्यो न दानं न च विक्रयः ॥ ११३ ॥ अविभज्य सगोत्राणामासहस्राद्धनादपि । * यज्ञं क्षेत्रं च पत्रं च कृत्वाऽन्नमुदकं स्त्रियः ॥ ११४ ॥ ये जाता येऽपि चाजाता ये च गर्भे व्यवस्थिताः । वृत्तिं तेऽपि हि काङ्क्षन्ति वृत्तिदानं न सिध्यति ॥ ११५ ॥ पितृप्रसादाद्भुञ्जन्ते धनानि विविधानि च । स्थावरं न तु भुज्येत प्रसादे सति पैतृके ॥ ११६ ॥ स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् । असंभूय सुतान्सर्वान्न दानं न च विक्रयः ॥ ११७ ॥

इति हारीतप्रणीतं धर्मशास्त्रं समाप्तम् ॥

समाप्तेयं लघुहारीतस्मृतिः ।



* एतदर्धस्थानेऽयं पाठो घ पुस्तके—"प्राद्ये क्षेत्रे च पात्रे च भुत्वाऽन्नमुदकं स्त्रिय." इति ।

१ ख. ग श्राद्धमक्षय्यं राहुदर्शने । ऋतु° । २ क घ °ति न सर्वत्र त° । ३ ख. ग. °च्छ्राद्धे पि° । ४ क. घ. °न्नं जाय° । ५ ख. ग. °ति । एको विभक्तोऽविभक्तोऽपि । ६ क. °हस्तं धना° । ७ क. प्राद्यं । ८ क. कृताम्न° । ९ ख. वियते । १० ग. घ. यमार्जि° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# लघ्वाश्वलायनस्मृतिः ।

तत्र प्रथममाचारप्रकरणम् ।

आश्वलायनमाचार्यं नत्वाऽपृच्छन्मुनीश्वराः । द्विजधर्मान्वदास्माकं स्वर्गप्राप्तिकरान्मुने । इति तद्वचनं श्रुत्वा स धर्मान्मुनिरब्रवीत् ॥ १ ॥ = धर्मान्वः पुरतो वक्ष्ये ध्यात्वाऽहं भो मुनीश्वराः । लोकस्य च हितार्थाय ब्रह्ममार्गरतस्य च ॥२॥ स्नानं संध्या जपो होमः स्वाध्यायाभ्यसनं तथा । माध्याह्निकी क्रिया पञ्चयज्ञाद्यतिथिपूजनम् ॥३॥ दानशिष्टप्रतिग्राहौ पोष्यवर्गैः सहाशनम् । सत्कथाश्रवणं सायंसंध्याहोमादिकं च हि ॥४॥ शयनं च यथाकाले धर्मपत्न्या सह गृही । ब्रह्मचारी स्वधर्मस्थो गुरुसेवापरो वसेत् ॥५॥ यजनं याजनं चैव वेदस्याध्ययनं च हि । अध्यापनं तथा दानं प्रतिग्रहमि(इ)होच्यते ॥ ६ ॥ एतानि ब्राह्मणः कुर्यात्षट्कर्माणि दिने दिने । अतः प्रातः समुत्थाय चिन्तयेदात्मनो हितम् ॥ ७ ॥ निर्गुणं निरहंकारं नारायणमनामयम् । सगुणं च श्रिया युक्तं देवं देवीं सरस्वतीम् ॥ ८ ॥ यथाविधि ततः कुर्यादुत्सर्गं मलमूत्रयोः । ब्रह्मचारी गृहस्थश्च शौचमद्भिर्मृदाऽऽचरेत् ॥ ९ ॥ एका लिङ्गे करे तिस्रः करयोर्मृद्द्वयं गुदे । पञ्च वामे दश प्रोक्ताः करे सप्ताथ हस्तयोः ॥१०॥ एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः । वानप्रस्थस्य त्रिगुणं यतेश्चैव चतुर्गुणम् ॥११॥ स्वपादं पाणिना विप्रो वामेन क्षालयेत्सदा । शौचे दक्षिणपादं तु पश्चात्सव्यकरावुभौ ॥ १२ ॥ शौचं विना सदाऽन्यत्र सव्यं प्रक्षाल्य दक्षिणम् । एवमेवाऽऽत्मनः पादौ परस्याऽऽदौ तु दक्षिणम् ॥ १३ ॥ गण्डूषैः शोधयेदास्यमाच(चा)मेद्दन्तधावनम् । काष्ठैः पर्णैस्तृणैर्वाऽपि केचित्पर्णैः सदा तृणैः ॥ १४ ॥ नवमी द्वादशी नन्दा पर्व चार्कमुपोषणम् । श्राद्धाहं च परित्यज्य दन्तधावनमाचरेत् ॥ १५ ॥ आचम्याथ द्विजः स्नायान्नद्यां वा देवनिर्मिते । तीर्थे सरोवरे चैव कूपे वा द्विजनिर्मिते ॥ १६ ॥ निराप्लुत्य समाचम्य शिखाबन्धं समाचरेत् । प्राणानायम्य संकल्प्य त्रिवारं प्रजपेत्पुनः ॥ १७ ॥ आचम्य वारुणं जाप्यं जपेत्सूक्तं च मार्जनम् । कुर्यादापो हि सूक्तेन ऋतमित्यघमर्पणम् ॥ १८ ॥

---

= एतदर्धं न विद्यते क. पुस्तके ।

---

१ ख. दानं शिष्टप्रतिग्राहो पो॰ ।

मार्जयेदथ चाङ्गानि गायत्र्या चाभिमन्त्रितम् । मस्तके च मुखे बाह्वोर्हृदये पृष्ठदेशके ॥ १९ ॥ ब्रह्मादयश्च ये देवाः कृष्णद्वैपायनादयः । सोम इत्यादयः प्रोक्ताः पितरो जलतर्पणे ॥ २० ॥ यन्मया दूषितं तोयं शारीरमलसंभवम् । तस्य पापस्य शुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम् ॥ २१ ॥ स विप्रः स शुचिः स्नातो ह्यस्पर्शस्पर्शनं विना । कालत्रयेऽपि कर्मार्हः स्वाध्यायनिरतोऽपि च ॥ २२ ॥ अशक्तश्चेज्जलस्नाने मन्त्रस्नानं समाचरेत् । आपोहिष्ठादिभिर्मन्त्रैस्त्रिभिश्चानुक्रमणे तु ॥ २३ ॥ पच्छः पादशिरोहृत्सु शिरोहृत्पत्सु चार्धतः । हृत्पादमस्तकेष्वेवं प्रत्यृचा मार्जयेदथ ॥ २४ ॥ मस्तके मार्जनं कुर्यात्पादैः प्रणवसंयुतैः[1] । बाह्यशुद्धिरनेन स्यादन्तःशुद्धिरथोच्यते ॥ २५ ॥ प्रणवेन[2] पिबेत्तोयं गायत्र्या चाभिमन्त्रितम् । सद्यस्तेन भवेच्छुद्धः स्नातोऽपि हि सरित्सु च ॥ २६ ॥ समाहितमना भूत्वा ब्राह्मणः सर्वदाऽपि हि । स्मरेन्नारायणं शुद्धो धारयेदम्बरं शुचि ॥ २७ ॥ परिधाने सितं शस्तं वासः प्रावरणे तथा । पट्टकूलं तथा लाभे ब्राह्मणस्य विधीयते ॥ २८ ॥ आविकं त्रसरं चैव परिधाने परित्यजेत् । शस्तं प्रावरणे प्रोक्तं स्पर्शदोषो न हि द्वयोः ॥२९॥ भोजनं च मलोत्सर्गं कुर्वते त्रसरावृताः। प्रक्षाल्य त्रसरं शुद्धं दुकूलं च सदा शुचि॥३०॥प्राष्टस्य परिधायाथ प्राङासीनः समाचरेत्। कुशपाणिर्द्विराचान्तस्तीरे सलिलसंनिधौ॥३१॥ प्रणवेन द्विराचामेद्दक्षिणेन तु पाणिना । उभौ हस्तौ च गल्लौ द्वावोष्ठौ पाणिद्वयं स्पृशेत् ॥ ३२ ॥ × पादद्वयं शिरश्चाऽऽस्यं नासारन्ध्रे च चक्षुषि(षी) । श्रोत्रे नाभिं च हृद्देशं शिरश्चांसौ स्पृशेत्क्रमात् ॥ ३३ ॥ प्राणानायम्य संकल्प्य ततः संध्यामुपास्महे( सयेत् ) ॥ ३४ ॥ आप इत्यादिभिः पादैर्नवभिर्मार्जनं चरेत् । जलं यस्य क्षयायेति प्रक्षिपेत महीतले ॥ ३५ ॥ आपो जनयथानेन स्वशिरः परिषेचयेत् । सूर्यश्चेत्यनुवाकेन प्रातःकाले पिबेदपः ॥ ३६ ॥ आपः पुनन्तु मध्याह्ने सायमग्निश्च मन्त्रतः । आचम्याथ पुनश्चाप इत्येभिर्नवभिः क्रमात् ॥ ३७ ॥ ऋगन्ते[3] मार्जनं कुर्याद्विधिनाऽनेन बह्वृचः । ऋतं चेत्यभिमन्त्र्यापः समाघ्राय क्षिपेदधः ॥ ३८ ॥ ऋतं चेति त्र्यृचं वाऽपि जप्त्वा तदनवेक्षितः । समाचम्य ततस्तिष्ठेद्दिशश्चाभिमुखो रवेः ॥ ३९ ॥ जलमञ्जलिनाऽऽदाय गायत्र्या चाभिमन्त्रयेत् । दद्यादर्घ्यत्रयं तिष्ठंस्त्रिषु कालेषु बह्वृचः ॥४०॥ प्रातर्मध्याह्नयोरप्सु क्षिपेत्सायं महीतले । मध्याह्ने तु विशेषोऽयं प्रदद्याद्धंस इत्यृचा ॥४१॥ आकृष्णेन द्वितीयार्घ्यं गात्र्या च तृतीयकम् । उपातिष्ठन्समाचम्य तिष्ठेदभिमुखो रवेः ॥ ४२ ॥ उदु त्यं चित्रमित्येतज्जपेत्सूक्तद्वयं च

× नैतदर्धं क पुस्तके ।

१ ख °युत । वा° । २ ख. °वेनापि° । ३ क. अनेन ।

ॐ तत्सद्ब्रह्मणे नमः ।

# लघ्वाश्वलायनस्मृतिः ।

तत्र प्रथममाचारप्रकरणम् ।

आश्वलायनमाचार्यं नत्वाऽपृच्छन्मुनीश्वराः । द्विजधर्मान्वदास्माकं स्वर्गप्राप्तिकरान्मुने । इति तद्वचनं श्रुत्वा स धर्मान्मुनिरब्रवीत् ॥ १ ॥ = धर्मान्वः पुरतो वक्ष्ये ध्यात्वाऽहं भो मुनीश्वराः । लोकस्य च हितार्थाय ब्रह्ममार्गरतस्य च ॥२॥ स्नानं संध्या जपो होमः स्वाध्यायाभ्यसनं तथा । माध्याह्निकी क्रिया पञ्चयज्ञाद्यतिथिपूजनम् ॥३॥ दानशिष्टप्रतिग्राहौ पोष्यवर्गैः सहाशनम् । सत्कथाश्रवणं सायंसंध्याहोमादिकं च हि ॥४॥ शयनं च यथाकाले धर्मपत्न्या सह गृही । ब्रह्मचारी स्वधर्मस्थो गुरुसेवापरो वसेत् ॥५॥ यजनं याजनं चैव वेदस्याध्ययनं च हि । अध्यापनं तथा दानं प्रतिग्रहमि(इ)होच्यते ॥ ६ ॥ एतानि ब्राह्मणः कुर्यात्षट्कर्माणि दिने दिने । अतः प्रातः समुत्थाय चिन्तयेदात्मनो हितम् ॥ ७ ॥ निर्गुणं निरहंकारं नारायणमनामयम् । सगुणं च श्रिया युक्तं देवं देवीं सरस्वतीम् ॥ ८ ॥ यथाविधि ततः कुर्यादुत्सर्गं मलमूत्रयोः । ब्रह्मचारी गृहस्थश्च शौचमद्भिर्मृदाऽऽचरेत् ॥ ९ ॥ एका लिङ्गे करे तिस्रः करयोर्मृद्द्वयं गुदे । पञ्च वामे दश प्रोक्ताः करे सप्ताथ हस्तयोः ॥१०॥ एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः । वानप्रस्थस्य त्रिगुणं यतेश्चैव चतुर्गुणम् ॥११॥ स्वपादं पाणिना विप्रो वामेन क्षालयेत्सदा । शौचे दक्षिणपादं तु पश्चात्सव्यकरावुभौ ॥ १२ ॥ शौचं विना सदाऽन्यत्र सव्यं प्रक्षाल्य दक्षिणम् । एवमेवाऽऽत्मनः पादौ परस्याऽऽदौ तु दक्षिणम् ॥ १३ ॥ गण्डूषैः शोधयेदास्यमाच(चा)मेद्दन्तधावनम् । काष्ठैः पर्णैस्तृणैर्वाऽपि केचित्पर्णैः सदा तृणैः ॥ १४ ॥ नवमी द्वादशी नन्दा पर्व चार्कमुपोषणम् । श्राद्धाहं च परित्यज्य दन्तधावनमाचरेत् ॥ १५ ॥ आचम्याथ द्विजः स्नायान्नद्यां वा देवनिर्मिते । तीर्थे सरोवरे चैव कूपे वा द्विजनिर्मिते ॥ १६ ॥ त्रिराप्लुत्य समाचम्य शिखाबन्धं समाचरेत् । प्राणानायम्य संकल्प्य त्रिवारं मज्जयेत्पुनः ॥ १७ ॥ आचम्य वारुणं जाप्यं जपेत्सूक्तं च मार्जनम् । कुर्यादापो हि सूक्तेन ऋतमित्यघमर्षणम् ॥ १८ ॥

---

= एतदर्धं न विद्यते क. पुस्तके ।

---

१ ख. दानं शिष्टप्रतिग्राहो पो° ।

मार्जयेदथ चाङ्गानि गायत्र्या चाभिमन्त्रितम् । मस्तके च मुखे बाह्वोर्हृदये पृष्ठदेशके ॥ १९ ॥ ब्रह्मादयश्च ये देवाः कृष्णद्वैपायनादयः । सोम इत्यादयः प्रोक्ताः पितरो जलतर्पणे ॥ २० ॥ यन्मया दूषितं तोयं शारीरमलसंभवम् । तस्य पापस्य शुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम् ॥ २१ ॥ स विप्रः स शुचिः स्नातो ह्यस्पर्शस्पर्शनं विना । कालत्रयेऽपि कर्मार्हः स्वाध्यायनिरतोऽपि च ॥ २२ ॥ अशक्तश्चेज्जलस्नाने मन्त्रस्नानं समाचरेत् । आपोहिष्ठादिभिर्मन्त्रैस्त्रिभिश्चानुक्रमणे तु ॥ २३ ॥ पच्छः पादशिरोहृत्सु शिरोहृत्पत्सु चार्धतः । हृत्पादमस्तकेष्वेवं प्रत्यृचा मार्जयेदथ ॥ २४ ॥ मस्तके मार्जनं कुर्यात्पादैः प्रणवसंयुतैः[1] । बाह्यशुद्धिरनेन स्यादन्तःशुद्धिरथोच्यते ॥ २५ ॥ प्रणवेन[2] पिबेत्तोयं गायत्र्या चाभिमन्त्रितम् । सद्यस्तेन भवेच्छुद्धः स्नातोऽपि हि सरित्सु च ॥ २६ ॥ समाहितमना भूत्वा ब्राह्मणः सर्वदाऽपि हि । स्मरेन्नारायणं शुद्धो धारयेदम्बरं शुचि ॥ २७ ॥ परिधाने सितं शस्तं वासः प्रावरणे तथा । पट्टकूलं तथा लाभे ब्राह्मणस्य विधीयते ॥ २८ ॥ आविकं त्रसरं चैव परिधाने परित्यजेत् । शस्तं प्रावरणे प्रोक्तं स्पर्शदोषो न हि द्वयोः ॥२९॥ भोजनं च मलोत्सर्गं कुर्वते त्रसरावृताः । प्रक्षाल्य त्रसरं शुद्धं दुकूलं च सदा शुचि ॥३०॥ प्रावृत्य परिधायाथ प्राङासीनः समाचरेत् । कुशपाणिर्द्विराचान्तस्तीरे सलिलसंनिधौ[3] ॥३१॥ प्रणवेन द्विराचामेद्दक्षिणेन तु पाणिना । उभौ हस्तौ च गल्लौ द्वावोष्ठौ पाणिद्वयं स्पृशेत् ॥ ३२ ॥ × पादद्वयं शिरश्चाऽऽस्यं नासारन्ध्रे च चक्षुषि(षी) । श्रोत्रे नाभिं च हृद्देशं शिरश्चांसौ स्पृशेत्क्रमात् ॥ ३३ ॥ प्राणानायम्य संकल्प्य ततः संध्यामुपास्महे( सयेत् ) ॥ ३४ ॥ आप इत्यादिभिः पादैर्नवभिर्मार्जनं चरेत् । जलं यस्य क्षयायेति प्रक्षिपेत महीतले ॥ ३५ ॥ आपो जनयथानेन स्वशिरः परिषेचयेत् । सूर्यश्चेत्यनुवाकेन प्रातःकाले पिबेदपः ॥ ३६ ॥ आपः पुनन्तु मध्याह्ने सायमग्निश्च मन्त्रतः । आचम्याथ पुनश्चाप इत्येभिर्नवभिः क्रमात् ॥ ३७ ॥ ऋगन्ते मार्जनं कुर्याद्विधिनाऽनेन वह्वृचः । ऋतं चेत्यभिमन्त्र्यापः समाघ्राय क्षिपेदधः ॥ ३८ ॥ ऋतं चेति त्र्यृचं वाऽपि जप्त्वा तदनवेक्षितः । समाचम्य ततस्तिष्ठेद्दिशश्चाभिमुखो रवेः ॥ ३९ ॥ जलमञ्जलिनाऽऽदाय गायत्र्या चाभिमन्त्रयेत् । दद्यादर्घ्यत्रयं तिष्ठंस्त्रिषु कालेषु वह्वृचः ॥४०॥ प्रातर्मध्याह्नयोरप्सु क्षिपेत्सायं महीतले । मध्याह्ने तु विशेषोऽयं प्रदद्याद्धंस इत्यृचा ॥४१॥ आकृष्णेन द्वितीयार्घ्यं गात्र्या च तृतीयकम् । उपातिष्ठन्समाचम्य तिष्ठेदभिमुखो रवेः ॥ ४२ ॥ उदु त्यं चित्रमित्येतज्जपेत्सूक्तद्वयं च

× नैतदर्धं क पुस्तके ।

१ ख. °युत । वा° । २ ख °वेनापि° । ३ क. अनेन ।

हि । तुष्टस्तेन भवेत्सूर्यः स आत्मा जगतो हि वै ॥ ४३ ॥ तेनैव सूक्तजाप्येन हरे-र्र्चनकृद्भवेत् । आच(चा)मेदुपविश्याथ प्राणायामत्रयं चरेत् ॥ ४४ ॥ ध्यात्वा देवीं कुमारीं च तत्तत्कालानुरूपिणीम् । जपेत्प्रणवपूर्वाभिर्व्याहृतीभिः सहैव तु ॥ ४५ ॥ तिसृभिर्भूःप्रभृतिभिर्गायत्रीं ब्रह्मरूपिणीम् । ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ॥ ४६ ॥ कालत्रयेऽप्यशक्तश्चेदष्टाविंशतिमेव वा । ततः कुर्यादुपस्थानं जातवेदस इत्यृचा ॥ ४७ ॥ तच्छंयोरनुवाकेन शान्त्यर्थं जप ईरितः । प्रागादिं च दिशं नत्वा मन्त्रस्थाश्चैव देवताः॥४८॥स्तुत्वा नत्वा ततः संध्यां सा मां संध्याऽभिरक्षतु । ब्रह्माणं हरिमीशानं तत्तच्छक्ति क्रमेण तु॥४९॥ नत्वा स्वयमथाऽऽत्मानं(मुक)गोत्रोऽहमभिवाद-येत् । अग्नेरुद्धरणं कुर्यात्पूर्वमेवोदयाद्रवेः ॥५०॥ आदित्यमुदितं पश्येन्नत्वा होमान्तिकं व्रजेत् । आदित्येऽभ्युदिते चैव प्रातर्होमो विधीयते ॥ ५१ ॥ आहिताग्निस्तथैकाग्निः स्वस्वोक्तविधिना तथा । ध्यात्वा समिध्य चाभ्यर्च्य स्वस्थानस्थं हुताशनम् ॥५२॥ संस्कुर्यात्साग्निना हौम्यं पय आदि कुशेन च । मन्त्रेणानेन सूर्याय स्वाहेति जुहुया-दथ ॥ ५३ ॥ द्वितीयामाहुतिं तद्वत्प्रजापतिपदं स्मरेत् । स्वाहान्तां चाऽऽहुतिं हुत्वा तथेदं न ममोच्चरेत् । सर्वत्रैवाग्निहोमोऽयं विधिः सकृदुदाहृतः ॥ ५४ ॥ उक्त्वेदं परिषिञ्चामि तमग्निं परिषेचयेत् । जलेनैवाऽऽज्यहोमे तु यत्र चैतदुदीरितम् ॥५५॥ सूर्यो न इति सूक्तेन कुर्यात्प्रातरुपासनम् । उपासनं च सूर्यस्य प्रजापतिरतः परम् ॥५६॥अग्ने त्वं चाग्न आयूंषि सायमग्नेरुपासनम् । कुर्यात्तिष्ठन्नुपस्थानं पूर्ववच्च प्रजापतेः ॥५७॥ प्रातः सायं जपेन्मन्त्रमों च मे स्वर इत्यथ । अभिवाद्य जपेद्देवीं विभूतिं चैव धारयेत् ॥ ५८ ॥ विभूतिधारणे मा नस्तोकेऽयं मन्त्र उच्यते । बृहत्सामेति वा होमे नैत्यके च महामखे ॥ ५९ ॥ कर्मकाले तु सर्वत्र स्मरेद्विष्णुं हविर्भुजम् । तेन स्या-त्कर्म संपूर्णं तस्मै सर्वं निवेदयेत् ॥ ६० ॥ अग्निसंरक्षणे शक्तिर्यस्य चैव न वर्तते । तदाऽरण्यामजस्राग्निं स्थापयेद्विधिपूर्वकम् ॥ ६१ ॥ समित्प्रतपनेऽयं ते योनिर्मन्त्र उदीरितः । या ते अग्ने भवेन्मन्त्रः पाण्यारोपे स्मृतो बुधैः ॥६२॥ होमकालः प्रपद्येत पुनश्चैवं विधीयते । मन्त्रेणान्वाहिते वह्नावजस्राग्निं क्षिपेदथ ॥ ६३ ॥ उपस्थाना-दिकं चैव सर्वं पूर्ववदाचरेत् ॥ ६४ ॥ कालद्वये यदा होमं द्विजः कर्तुं न शक्यते । सायमाज्याहुतिं चैव जुहुयात्प्रातराहुतिम् ॥ ६५ ॥ सायंकाले समस्तं स्यादाज्या-हुतिचतुष्टयम् । हुत्वा कुर्यादुपस्थानं समस्येत्यग्निसूर्ययोः ॥ ६६ ॥

---

१ ख. °र्योमिलत्तु° । २ ख. °मा । ३ ख. °थैवाग्निः । ४ ख. हौम्यं । ५ ख. °हान्ते । चा° । ६ ख. उपस्थानं । ७ ख. °मस्तेत्य° ।

होमश्चेत्पुरतः काले प्राप्तः स्यात्काल उत्तरः । हुत्वा व्याहृतिभिश्चाऽऽज्यं कुर्याद्धोमद्वयं च हि ॥ ६७ ॥ [*विच्छिन्नवह्निसंधानमपराह्णे विधीयते । सायमौपासनं कुर्यादस्तादुपरि भास्वतः] ॥ ६८ ॥ नैव गच्छेद्विना भार्यां सीमामुल्लङ्घ्य योऽग्निमान् । यत्र तिष्ठति वै भार्या तत्र होमो विधीयते ॥ ६९ ॥ गत्वा भार्यां विना होमं सीमामुल्लङ्घ्य यो द्विजः । कुरुते तत्र चेन्मोहाद्धुतं तस्य वृथा भवेत् ॥७०॥ यथा जातोऽग्निमान्विप्रस्तन्निवासालये सदा । तस्या एवानुचारेण होमस्तत्र विधीयते ॥ ७१ ॥ धर्मानुचारिणी भार्या सवर्णा यत्र तिष्ठति । कुर्यात्तत्राग्निहोत्रादि प्रवदन्ति महर्षयः॥७२॥ ततश्चैवाभ्यसेद्वेदं शिष्यानध्यापयेदथ । पोष्यवर्गार्थमन्नादि याचयेत यथोचितम्॥७३॥ माता पिता गुरुर्भार्या पुत्रः शिष्यस्तथैव च । अभ्याश्रितोऽतिथिश्चैव पोष्यवर्ग इति स्मृतः ॥ ७४ ॥ मध्याह्ने च पुनः स्नायाद्धौतशुक्लाम्बरावृतः । श्रुत्युक्तविधिनाऽऽचम्य प्राङासीनः कुशासने ॥ ७५ ॥ गायत्र्याऽपश्चतसृणां पादे व्याहृतयः स्मृताः । सप्त मन्त्रशिरोमन्त्राः षड्भिराचमनं स्मृतम्(१) ॥ ७६ ॥ गायत्र्याश्च पिबेत्पादैरापो हि नवभिः स्पृशेत् । व्याहृतिभिः शिरोमन्त्रैरङ्गानि ब्रह्मयज्ञके ॥ ७७ ॥ पाणिगण्डूषकावोष्ठौ पाणिपादौ शिरो मुखम् । + नासाविलेऽक्षिणी श्रोत्रे नाभिहृन्मस्तकेंऽसकौ ॥ ७८ ॥ आद्यन्तौ प्रणवौ मन्त्रौ पुरतः पृष्ठतो ह्युभौ । ब्रह्मको मध्यतो मन्त्रो गायत्र्या शिरसः स्मृतः ॥ ७९ ॥ कम्बले वाऽजिने पीठे कुशासनविनासने । न कुर्यादुपविष्टो वै ब्रह्मयज्ञं द्विजार्चनम् ॥ ८० ॥ न कुर्यात्तर्पणं श्राद्धं धृत्वा भालेऽनुलेपनम् । कदाचित्कुरुते मोहान्नरकं प्रतिपद्यते ॥ ८१ ॥ दक्षिणं चोपविश्योरुं वामगुल्फोपरि न्यसेत् । वामोरौ दक्षिणं गुल्फं तच्चोपस्थमुदीरितम् ॥ ८२ ॥ प्राणानायम्य संकल्प्य कुशपाणिधरः करम् । कृत्वा तु सव्यमुत्तानं न्यसेदुपरि दक्षिणम् ॥८३॥ सव्यस्य पाणेरङ्गुष्ठप्रदेशिन्योस्तु मध्यतः । दक्षिणस्याङ्गुलीर्न्यस्य चतस्रोऽङ्गुष्ठवर्जिताः ॥ ८४ ॥ तथा सव्यकराङ्गुष्ठं दक्षिणाङ्गुष्ठवेष्टितम् । संबद्धमेवं कुर्वीत न्यसेद्दक्षिणसक्थिनि ॥ ८५॥ प्रागग्रे द्वे पवित्रे तु धृत्वाऽन्तःसंपुटौ करौ । संन्यसेद्दक्षिणे जानौ ब्रह्मयज्ञं समाचरेत् ॥ ८६ ॥ ॐपूर्वा व्याहृतीस्तिस्रः स्वरतः सकृदुच्चरेत् । गायत्रीमुच्चरेत्सम्यक्पादमर्धमृचं क्रमात् ॥ ८७ ॥ ऋषिदैवतच्छन्दांसि प्रणवं ब्रह्मयज्ञके । मन्त्रादौ नोच्चरेच्छ्राद्धे यागकालेऽपि नैव हि ॥ ८८ ॥ अग्निमीळ इषे त्वादि वेदांश्चैव स्वशक्तितः । अध्यायमनुवाकं वा पठेत्सूक्तमृचं च वा ॥ ८९ ॥ उपवीतं

* एतच्चिह्नान्तर्गतं वचनं न विद्यते क. पुस्तके । + अत्र संधिरार्ष ।

१ ख. °त्र्या च पिबेदापो(चाप) आपो हीन° । २ क पाणी ग° । ३ स. °पके चौष्ठौ । ४ क. °लेपु ले° ।

यथा यस्मिन्धत्ते कर्मणि वैदिके। ब्रह्मचारी गृहस्थश्च तद्वद्वासोऽपि धारयेत् ॥ ९० ॥ सव्यांसे च स्थिते सूत्रे तत्सव्यं चाथ दक्षिणे। अपसव्यं भवेत्कण्ठे लम्बे सूत्रे निवीतकम् ॥ ९१ ॥ न्यग्जानु दक्षिणं कृत्वा देवान्संतर्पयेदृषीन्। तद्वज्जानुद्वयं चाथ जानूर्ध्वं दक्षिणं पितॄन् ॥ ९२ ॥ सव्येन तर्पयेद्देवानृषींश्चैव निवीतिना। पितॄंश्चैवापसव्येन विधिरेष उदाहृतः ॥९३॥ तर्पयेद्विधिनाऽनेन देवांश्चैवाङ्गुलाग्रतः। ऋषींश्च वामभागेन पितॄन्दक्षिणभागतः ॥ ९४ ॥ एकैकं चाथ द्वौ द्वौ वै त्रींस्त्रीनेकैकमञ्जलीन्। अर्हन्त्येते क्रमाश्चै(च्चै)व देवर्षिपितरस्त्रयः ॥ ९५ ॥ प्रत्यञ्जलि समुच्चार्य मन्त्रं दद्यादथाञ्जलिम्। देवर्षिपितृनामानि प्रोक्ता मन्त्रा महर्षिभिः ॥ ९६ ॥ पित्रादयस्त्रयश्चाऽऽदौ तिस्रो मात्रादयस्ततः। सापत्नजननी मातामहादयस्त्रयस्तथा ॥ ९७ ॥ मातामह्यादयस्तिस्रः स्त्रीसुतभ्रातरस्तथा। पितृव्यो मातुलश्चैव दुहिता भगिनी तथा ॥ ९८ ॥ दौहित्रो भागिनेयश्च पितुर्मातुश्च वै स्वसा। श्वशुरो गुरवश्चैव मित्रं चैवेति केचन ॥ ९९ ॥ पुत्रादयः सपत्नीकाः स्त्रियश्चैवाह(थ) केवलाः। तर्पणेऽभिहितास्तीर्थे गयायां च महालये ॥ १०० ॥ उक्त्वा पित्रादिसंवन्धं नामगोत्रे स्वधानमः। बह्वृचस्तु क्रमेणैव तर्पयामीति तर्पयेत् ॥ १०१ ॥ संवन्धं नामगोत्रं च स्वधामुच्चारयेत्ततः। श्राद्धेऽपि विधिरेष स्यादाश्वलायनशाखिनाम् ॥ १०२ ॥ सव्यहस्तानुलग्नेन दक्षिणेन तु पाणिना। कुर्याद्बह्वृच एवं तु देवर्षिपितृतर्पणम् ॥१०३॥ बह्वृचस्तर्पणं कुर्याज्जले वाऽप्यथ बर्हिषि। तर्पयेद्देवतादींश्च बर्हिष्येव तु याजुषः ॥ १०४ ॥ स्मृत्युक्तविधिनाऽऽचम्य ब्रह्मयज्ञं समाचरेत्। संतर्प्य देवतादींश्च बह्वृचस्तत आचमेत् ॥ १०५ ॥ मध्याह्ने ब्रह्मयज्ञो वै नानुबन्धवशाद्भवेत्। प्रातरौपासनादूर्ध्वं कुर्यादस्तमयावधि ॥ १०६ ॥ नैत्यकं तर्पणं कुर्याद्ब्रह्मयज्ञपुरःसरम्। तच्चैव देवतादीनां यदा वा स्नानपूर्वकम् ॥ १०७ ॥ स्नानं वारुणिकं चैव क्वचित्कर्तुं न शक्यते। तत्राऽऽदौ ब्रह्मयज्ञार्थं मन्त्रस्नानं विधीयते ॥ १०८ ॥ पुण्यकालनिमित्तं यत्तर्पणं क्रियते यदि। पितॄणां केवलं तद्धि प्रवदन्ति महर्षयः ॥१०९॥ निमित्तं चोपरागादे रात्रावपि तथैव च। तीर्थान्तरेऽपि तद्वत्स्यादेकाहेऽप्यसकृद्भवेत् ॥ ११० ॥ नैत्यकं तर्पणं कुर्यादहन्येव तु बह्वृचः। तर्पणं च तथा सौरं नैव रात्रौ कदाचन ॥ १११ ॥ श्राद्धाङ्गं तर्पण यामे प्रथमे मधुवद्भवेत्। पयो नीरं च रुधिरं क्रमा[1]द्यामेषु च त्रिषु ॥ ११२ ॥ न कुर्याद्ब्रह्मयज्ञं च श्राद्धात्पूर्वं मृतेऽहनि। पित्रोः श्राद्धं विधायाथ वैश्वदेवं च तर्पणम् ॥ ११३ ॥ ब्रह्मयज्ञं च वै कुर्यात्संध्यां मध्यंदिनस्य च। उपस्थानं च सूर्यस्य पूर्वोक्तमिह तद्भवेत् ॥ ११४ ॥

१ स "णे विहि"।

कृत्वाऽऽदौ तर्पणं संध्यां कुर्याद्बह्वृच एव हि। आवर्तने परे संध्यां कृत्वा कुर्याच्च तर्पणम्॥ ११५॥ शुद्ध्यर्थं चाऽऽत्मनोऽन्नस्य वैश्वदेवं समाचरेत्। सिद्धान्नेन च गृह्याग्नावन्यस्मिन्ननलेऽपि च॥ ११६॥ एकपाकाशिनः पुत्राः संसृष्टा भ्रातरोऽपि च। वैश्वदेवं न ते कुर्युरेकं कुर्यात्पितैव हि॥११७॥ वैश्वदेवं क्वचित्कर्तुं न शक्नोति पितैव हि। पितुरेवाऽऽज्ञया कुर्यात्पुत्रो भ्राता परोऽपि हि॥ ११८॥ एकान्नाशिषु पुत्रेषु भ्रातृष्वेकत्र सत्सु च। तत्रैको वैश्वदेवः स्याद्बह्वृचानामयं विधिः॥ ११९॥ पुत्रः स्वार्जितमेकाशी स्याच्चेत्पितरि जीवति। वैश्वदेवं पृथक्कुर्याद्यत्र कुत्रापि वा वसन्॥ १२०॥ वैश्वदेवं द्विजः कुर्यात्सदा कालद्वयेऽपि च। आरम्भो वैश्वदेवस्य दिवा चैव विधीयते॥ १२१॥ अलंकृत्यानलं चान्नमधिश्रित्यानले चरेत्। सिद्धमादाय सूर्याय घृताक्तं जुहुयाद्धविः॥ १२२॥ प्रजापतय इत्युक्त्वा सोमायेत्यादितः क्रमात्। हुत्वा दशाऽऽहुतीः सायंकाले चाग्नय आदितः॥ १२३॥ परिषिच्यानलं चैव जुहुयाद्व्याहृतीरथ। एताभ्यो देवताभ्योऽग्नेः पृथग्दद्याद्बलीन्भुवि॥ १२४॥ प्राक्संस्थानन्तरालं स्यादद्भ्य इत्यादितः क्रमात्। एता देयास्तथैव स्युः सूत्रोक्ता देवता इह॥ १२५॥ प्रागादिष्वाहुती द्वे द्वे इन्द्रायेत्यादितः क्रमात्। प्राक्संस्थे वाऽप्युदक्संस्थे चतुर्दिक्षु यथाक्रमम्॥ १२६॥ अग्रभागेऽन्तरालस्य दक्षिणे मूल उत्तरे। दिग्देवताहुतीनां च सममायतनं स्मृतम्॥ १२७॥ ब्रह्मादयोऽन्तरालस्य मध्ये शिष्टाश्च देवताः। प्राक्संस्थाश्चापि वै ताः स्यू रक्षोभ्य इति चोत्तरे॥ १२८॥ स्वधा पितृभ्य इत्यन्नं दद्यान्मन्त्रेण भूतले। दक्षिणे चापसव्यं च पितृभ्योऽथ स्वधा नमः॥ १२९॥ वैवस्वतकुलोत्पन्नौ महावीरौ सुरोत्तमौ। शुनौ द्वौ शा(श्या)मशबलौ पितृभागार्थिनौ सदा॥ १३०॥ ताभ्यां चापि बलिं दद्याद्याम्ये चोदक्पृथक्पृथक्। सव्येनानेन मन्त्रेण शा(श्या)माय शबलाय च॥ १३१॥ हविश्च जुहुयादग्नावुद्देशत्यागपूर्वकम्। स्वाहान्ते चैव सर्वत्र होमकर्मणि चात्र तु॥ १३२॥ स्वाहा स्याद्भूतयज्ञेऽपि पितृयज्ञे स्वधा स्मृता। यज्ञे मानुषके चैव हन्तकारो विधीयते॥ १३३॥ अतो मनुष्ययज्ञार्थं दद्याद्विप्राय वाऽनले। सनकादिभ्य इत्युक्त्वा हन्तकारेण वै हविः॥ १३४॥ कृत्वा मनुष्ययज्ञान्तमुपस्थायों च मे स्वरः। हविर्भुजं नमस्कृत्य गोत्रनामपुरःसरम्॥ १३५॥ जप्त्वा चैव तु गायत्रीं धारयेद्धोमभस्म च। स्मृत्वा यज्ञपतिं देवं हुतं तस्मै निवेदयेत्॥ १३६॥ एवं चापि दिवा कृत्वा सायं चापि तथैव हि। दिवाचारिभ्य इत्यत्र नक्तंचारिभ्य इष्यते॥ १३७॥ उक्तं कर्म यथाकाले यदि कर्तुं न शक्यते। अकाले वाऽपि तत्कुर्यादुल्लङ्घ्य वाऽपकृष्य च॥ १३८॥ वैश्वदेवे तथा ब्रह्मयज्ञे सेव(प) विधिः

स्मृतः। संध्ययोरुभयोश्चैव वाऽपकर्षणमिष्यते ॥ १३९ ॥ देवादिपितृयज्ञान्तं सायं चापि यथाक्रमम्। भूतेभ्योऽपि बलिं रात्रौ दद्यात्पात्रेण वै भुवि ॥ १४० ॥ द्वारादिदेवताभ्योऽन्नं दद्यात्पितामहादितः। हुतशेषं च भूतेभ्यो ये भूता इति मन्त्रतः ॥ १४१ ॥ प्रक्षाल्य पाणिपादं च समाचम्य यथाविधि। शान्ता पृथिवीति मन्त्रेण गृहं संप्रोक्षयेज्जलैः ॥ १४२ ॥ कुर्यात्पञ्च महायज्ञान्नित्यशः सूतकं विना। अध्यान्ता सूतके संध्या स्नानं स्यादपि किंचन ॥ १४३ ॥ वैश्वदेवं पुरा कृत्वा नित्ये चाभ्युदये तथा। स्वाभीष्टदेवतादिभ्यो नैवेद्यं विनिवेदयेत् ॥ १४४ ॥ अकृत्वा देवयज्ञं च नैवेद्यं यो निवेदयेत्। तदन्नं नैव गृह्णन्ति देवताश्चापि सर्वथा ॥ १४५ ॥ पादप्रक्षालनं कुर्याद्विप्राणां देवरूपिणाम्। स्वयं चापि समाचम्य विप्रांस्तानुपवेशयेत् ॥ १४६ ॥ मधुपर्कं विना रात्रौ द्विजपादाभिषेचनम्। न कुर्यात्पूजयेद्विप्रान्गन्धपुष्पाक्षतादिभिः ॥ १४७ ॥ ततो विप्रान्समभ्यर्च्य यथाविभवसारतः। दद्याद( देयम )न्नं यथाशक्ति भिक्षाऽतिथिभ्य एव च ॥ १४८ ॥ अन्नमामं च वै भिक्षां दद्यादहरहर्द्विजः। स सर्वैव( वि )[1]द्धुतः पाकादन्नाद्य( द )पि च यद्भवेत् ॥ १४९ ॥ नित्यं ददाति यः साधुरन्नं वेदविदो मुखे। मुक्तः स्याद्दुरितात्पापाद्ब्रह्मसायुज्यमश्नुते ॥ १५० ॥ परान्नत्यागिनामेव दद्यादामं विशेषतः। अन्नाद्दशगुणं पुण्यं लभेद्दाता न संशयः ॥ १५१ ॥ भिक्षां ददाति विप्राय यतये ब्रह्मचारिणे। स सर्वांल्लँभते कामांस्ततो याति परां गतिम् ॥ १५२ ॥ दत्तं नैव पुनर्दद्यादपक्कं पक्कमेव वा। पुनश्च दीयते मोहान्नरकं प्रतिपद्यते ॥ १५३ ॥ पोष्यवर्गसमोपेतो भुञ्जीयात्सह बन्धुभिः। भोजने परिविष्टान्नं गायत्र्या चाभिमन्त्रयेत् ॥ १५४ ॥ सत्यं त्वर्तेन मन्त्रेण जलेन परिषेचयेत्। ततो बलित्रयं कुर्यान्मन्त्रेणापः पिबेदथ ॥ १५५ ॥ यमायाथ च चित्राय भूतेभ्यो नम उच्चरेत्। दत्त्वाऽमृतोपस्तरणमसीत्युक्त्वा पिबेदपः ॥ १५६ ॥ गृह्णीयादाहुतीः पञ्च सपवित्रेण पाणिना। त्यक्त्वा पवित्रमश्नीयाद्धृत्वा तत्पुनराचमेत् ॥ १५७ ॥ पुत्रवान्पितृमांश्चैव भुक्त्वा श्राद्धीयभोजनम्। न कुर्याद्भोजने मौनं पञ्च प्राणाहुतीर्विना ॥ १५८ ॥ पङ्क्तिभेदेन यो भुङ्क्ते ग्रासमात्रमपि द्विजः। अघं स केवलं भुङ्क्ते हतश्रीर्जायते ध्रुवम् ॥ १५९ ॥ उत्तराचमनं पीत्वा मुखं प्रक्षालयेच्छुचिः। भुञ्जीतेभ्यस्ततो दद्यात्ताम्बूलं मुखशुद्धये ॥ १६० ॥ भुक्त्वा चैव स्वयं विप्रः कुर्यात्ताम्बूलचर्वणम्। ततो नयेदहःशेषं श्रुत्यादिश्रवणादिभिः ॥ १६१ ॥ स्पृशेदुच्छिष्टमुच्छिष्टः श्वानं शूद्रमथापि च। उपोष्य रजनीमेकां पञ्चगव्यं पिबेच्छुचिः ॥ १६२ ॥ श्वानं शूद्रं तथोच्छिष्टमनुच्छिष्टो न संस्पृशेत्। मोहाद्विप्रः स्पृशेद्यस्तु स्नानं तस्य विधीयते ॥ १६३ ॥ उच्छिष्टस्पर्शने स्नायाद्ब्राह्मणो विधिवर्जितम्। ब्रह्मविद्भोजनोच्छिष्टपात्रचालं[2] विनैव तु ॥ १६४ ॥ विप्रश्चैव स्वयं

---

[1] ख °र्वैवहुतः। [2] ख. °विद्भावनोच्छिष्टं पात्रचालं व्यपोहतु।

कुर्याद्द्विजभुक्तपात्रचालनम् । प्रक्षाल्य पाणिपादं च द्विराचान्तः शुचिर्भवेत् ॥१६५॥ पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथ वा सुतः । असंस्कृतो न च स्त्री च न चान्यश्चालयेत्क्वचित् ॥ १६६ ॥ परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते । कदाचित्स्यादापदि तु नैव नित्यं कदाचन ॥ १६७ ॥ उच्छिष्टस्पर्शने चैव भुञ्जानश्च भवेद्यदि । पात्रस्थं चापि वाऽश्नीयादन्नं पात्रस्थितं च यत् ॥ १६८ ॥ गायत्र्या संस्कृतं चान्नं न त्यजेदभिमन्त्रितम् । गृहीतं चेत्पुनश्चाद्याद्गायत्रीं च शतं जपेत् ॥ १६९ ॥ अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंचितम् । अस्नेहा अपि गोधूमा यवगोरसविक्रियाः ॥ १७० ॥ अपूपसक्तवो धानास्तक्रं दधि घृतं मधु । एतत्पण्येषु भोक्तव्यं भाण्डलेपो न चेद्भवेत् ॥ १७१ ॥ अन्नाक्तभाजनस्थानि दूष्यन्ते तानि चैव हि । शुद्धभाण्डस्थितानीह ग्राह्याण्याहुर्मनीषिणः ॥ १७२ ॥ ग्राह्यं क्षा(क्षी) रविकारं स्यात्सर्वं चैवेक्षुसंभवम् । तैलक्षीराज्यपक्वं च जलसंमिश्रितं न हि ॥ १७३ ॥ परान्नं नैव भुञ्जीयात्स्वकीयं चान्यपाचितम् । संस्काररहितं चैव नाश्नीयाद्ब्राह्मणः क्वचित् ॥ १७४ ॥ ब्राह्मणो नैव भुञ्जीयाद्दुहित्रन्नं कदाचन । अज्ञानाद्यदि भुञ्जीत रौरवं नरकं व्रजेत् ॥ १७५ ॥ पत्नी स्नुषा स्वयं पुत्रः शिष्योऽथ वा गुरुः सुतः । आचार्यो वा पचेदन्नं भुञ्जीयात्तन्न दुष्यति ॥ १७६ ॥ शाकपाकादिकं निन्द्यं योऽन्नमद्यात्स्वकीयकम् । क्वचिच्छिष्टान्नमश्नीयाद्वत्सराभ्यन्तरे द्विजः ॥ १७७ ॥ यद्येकत्र पचेदाममात्मनश्चापरस्य च । यस्तदन्नं द्विजो भुङ्क्ते प्राजापत्येन शुध्यति ॥ १७८ न चैकत्र पचेदामं बहूनामथ वा द्वयोः । निषेधोऽयं परेषां तु पुत्रादीनां न हि कचित् ॥ १७९ ॥ एवं भुक्त्वा द्विजश्चैव श्रुत्वा श्राद्धस्य वै कथाम् । श्रुतिस्मृतिपुराणोक्तमितिहासं पुरातनम् ॥ १८० ॥ घटिकैकाऽवशिष्टा स्याद्रवेरस्तमितस्य च । प्रक्षाल्य पाणिपादं च द्विराचान्तः शुचिर्भवेत् ॥ १८१ ॥ प्राङासीनः समाचम्य प्राणायामपुरःसरम् । पूर्वोक्तविधिना चैव सायंसंध्यां समाचरेत् ॥ १८२ ॥ आदित्येऽस्तमिते यावत्तारकादर्शनं न हि । सायंहोमं तदा कुर्यान्नो चेत्स्युर्नव नाडिकाः ॥१८३॥ वैश्वदेवं पुनः सायं कुर्याद्यज्ञत्रयं च हि । देवं भूतं तथा पै(पि)त्र्यं भुक्त्वा स्वाध्यायमभ्यसेत् ॥ १८४ ॥ ततः स्वपेद्यथाकामं न कदाचिदुदक्शिराः । एतावन्नैत्यकं कर्म प्रवदन्ति मनीषिणः ॥ १८५ ॥ अनेन विधिना यस्तु नैत्यकं कुरुते द्विजः । स याति परमं स्थानं पुनरावृत्तिदुर्लभम् ॥ १८६ ॥ प्रत्यहं कर्मको(णो) योगः

---

१ ख. °पि नाश्नी° । २ ख. °क्शिर. । ए° ।

स्वाध्यायाभ्यसनं तथा । मनःस्वस्थतया योगः स एवाऽऽत्मप्रकाशकः *॥ १८७ ॥ त्यक्त्वेन्द्रियसुखं लोके यस्तिष्ठेद्यत्र कुत्रचित् । स एव योगी मुक्तः स्यात्सर्वसङ्गविवर्जितः ॥ १८८ ॥ यः कश्चिन्मानवो लोके वाराणस्यां त्यजेद्वपुः । स चाप्येको भवेन्मुक्तो नान्यथा मनुयो विदुः ॥ १८९ ॥

इत्याश्वलायनधर्मशास्त्रे ब्रह्ममार्गाचाराध्यायः (रप्रकरणम्) ॥ १ ॥

( अथ स्थालीपाकप्रकरणम् २ )

स्थालीपाकस्य चाऽऽरम्भः पौर्णमास्यां विधीयते । अग्निमान्प्रतिपद्येव प्रातरौपासनं चरेत् ॥ १ ॥ प्रातरौपासनं हुत्वा ततोऽन्वाधानमाचरेत् । स्थालीपाकं करिष्येऽहं होमः श्वः प्रातरेव हि ॥ २ ॥ सद्यस्कालो भवेद्यद्वा कुर्याद्यत्र द्वयं न हि । अन्वाधानं ततः कुर्यात्स्थालीपाकं तथैव हि ॥ ३ ॥ प्राणानायम्य संकल्प्य विधाय स्थण्डिलं शुचिः । हस्तमात्रं चतुष्कोणं गोमयेन विलिप्य च ॥ ४ ॥ तण्डुलान्प्रकिरेद्रेखामुदक्संस्थां लिखेदथ । प्राक्संस्थे पार्श्वयोर्मध्ये तिस्रश्चैवोदगायताः ॥ ५ ॥ निदध्याच्छकलं तत्र प्रोक्ष्य प्राग्रं निरस्य च । संप्रोक्ष्य पुनरद्भिश्च तथा चानलमानयेत् ॥ ६ ॥ एहीत्यग्निं समादाय स्थापयेद्भूर्भुवःस्वरोम् । अग्निनाऽग्निस्ततो जुष्टः प्रनूनं तिस्र एव च ॥ ७ ॥ ध्यानं चत्वारि शृङ्गेति कुर्यादग्नेर्यथाविधि । विज्योतिषेत्यनेनैव मन्त्रेणाग्निं समिन्धयेत् ॥ ८ ॥ ध्यात्वा रूपं ततो वह्नेर्दर्शयेदेष हीत्यथ । धृत्वा तु समिधौ चाग्निमग्नीषोमौ च देवते ॥ ९ ॥ प्रधानदेवते चोक्त्वा तथा चैवाङ्गदेवताः । क्रमेण चरुणाऽऽज्येन सद्यो यक्ष्य इति क्षिपेत् ॥ १० ॥ पर्यूहनं ततः कुर्याज्जलेन परि[1]षेचयेत् । अनादेशे तु सर्वत्र दक्षिणः पाणिरुच्यते ॥ ११ ॥ पाणिना सोदकेनाग्नेः समन्तात्परिमार्जनम् । अनुलेपमुदक्संस्थं कुर्यादीशानकोणतः ॥ १२ ॥ पर्युक्षणेऽप्युदक्संस्थं पाणिनेशानकोणतः । पुनरावर्तयेत्प्रत्यगीशानान्तं हविर्भुजम् ॥ १३ ॥ प्रसारयेदुदक्संस्थान्पूर्वपश्चिमयोः कुशान् । दक्षिणोत्तरतश्चैव प्राक्संस्थान्पूर्वतः क्रमात् ॥ १४ ॥ मुष्टिमात्रैः कुशैरग्नैः समन्ताद्धोमकर्मसु । परिस्तृणीयात्प्रागग्रैश्चतुर्दिक्षु यथाक्रमम् ॥ १५ ॥ विन्यसेत्कुशमूलानां कुशाग्रानुपरि क्रमात् । दक्षिणोत्तरयोश्चैव चतुष्कोणेषु चैव हि ॥ १६ ॥

* इत. परं ख. पुस्तकेऽधिकमेतत्—"प्रत्यहं कर्मयोगेण स्वाध्यायाभ्यसन तप । मनःस्वास्थ्यं तयोर्योग· स एवाऽऽत्मप्रकाशक· " इति ।

1 ख. °क्संस्थं पा° ।

आस्तीर्याग्नेरुदग्दर्भान्प्रागग्रान्रत्निसंमितान् । द्वंद्वमासादयेन्न्युब्जं यज्ञपात्राणि तत्र तु ॥१७॥ स्थाली च प्रोक्षणी दर्वी स्रुवः पूर्णाज्यभाजने । इध्मं चैव तथा बर्हि चरुहोमे विधीयते ॥१८॥ चौलोपनयनोद्वाहे पुनराधान एव च । प्रोक्षणीं स्रुवपूर्णाज्यमिध्मा-बर्हिस्स्रुवाज्यके ॥१९॥ अष्टाङ्गुलमितस्थालीं प्रोक्षणीं च षडङ्गुलाम् । चमसं चाऽऽज्य-पात्रं च षडङ्गुलमिति स्मृतम् ॥२०॥ स्रुक्स्रुवौ हस्तमात्रौ तु स्यातां तौ यज्ञकर्मणि । द्विप्रादेशो भवेदिध्मो बर्हिः प्रादेशसंमितः ॥२१॥ आदायाऽऽदौ कुशांस्त्रींस्त्रीन्मूलैर्मूलानि वेष्टयेत् । सव्यावृत्तान्कुशान्कुर्यादधस्तात्तान्नयेदुदक् ॥२२॥ वामस्थानितरांस्तद्वत्कुर्या-द्रज्जुं त्रिसंधिताम् । उपविष्टां नयेत्तद्वत्तृतीयावर्तनं च हि ॥ २३ ॥ रज्ज्वेध्मं सकृ-दावेष्ट्य रज्जुमूलं तथैव च । वेष्टितायाश्च पूर्वाया रज्ज्वग्रं च नयेदधः ॥ २४ ॥ रज्जुग्रन्थिमधः कृत्वा प्रागग्रान्साध(द)येदथ । रयाच्चेत्ताम्रमयी स्थाली होमे कांस्य-मयी पि वा ॥ तथा स्युः प्रोक्षणादीनि यथालाभानि वाऽपि वा ॥ २५ ॥ दण्डप्रा-(मा)त्रयुतौ शरतौ स्रुक्स्रुवौ यागदारुजौ । तदभावेऽथ वाऽश्वत्थपर्णकौ वाऽप्युदुम्बरौ ॥ २६ ॥ प्रोक्षणं न्यक्पवित्राभ्यां प्रोक्षयेत्सलिलं ततः । कृत्वोत्तानं पवित्रे ते निधा-यापः प्रपूजयेत् ॥ २७ ॥ सोदकाभ्यां पवित्राभ्यां त्रिः समुत्पूय चैव हि । कुर्या-देकैकमुत्तानं द्वंद्वं च प्रोक्षयेत्पुनः ॥ २८ ॥ विस्रस्येध्मं तथा बर्हिर्निदध्याच्चमसे च ते । पवित्रे पूरयेद्वारि गन्धपुष्पाणि च क्षिपेत् ॥ २९ ॥ निरस्य नैर्ऋतान्दर्भान्नि-रस्त इति मन्त्रतः । कर्ताऽऽचरेदिमं मन्त्रमुक्त्वा विष्टः कुशासने ॥ ३० ॥ ब्रह्माणं वरयेदस्मिन्कर्मणि त्वं भवेरिति । ब्रूयाद्ब्रह्माऽहमस्मीति ततः कर्ता तमर्चयेत् ॥३१॥ धृत्वा पूर्णं करे सव्ये पिधायोपरि दक्षिणम् । ब्रह्मन्नित्युच्चरन्मन्त्रं नीत्वा तन्नासि-काग्रतः ॥ ३२ ॥ निदध्यादुदगग्रे तन्मन्त्रेणों प्रणयेति च । कुशैराच्छादितं कुर्यात्पू-र्णपात्रं तदुच्यते ॥ ३३ ॥ शूर्पं पश्चान्निधायाग्नेः पवित्रे स्थापयेच्च ते । निर्वपेच्चतुरो मुष्टींस्तानेव प्रोक्षयेदथ ॥ ३४ ॥ तण्डुलानवहंस्त्रीस्त्रीन्कृत्वा तांस्त्रिः फलीकृतान् । त्रिः प्रक्षाल्य पचेदग्नेरुदक्चैवाऽऽज्यभाजने ॥ ३५ ॥ सपवित्रे निषिच्याऽऽज्यं ततोऽङ्गारानपोह्य च । तत्राऽऽज्यभाजनं स्थाप्य संस्कुर्यादुल्मुकेन च ॥ ३६ ॥ निक्षिपेत्कुशयोरग्नेः पर्यग्निकरणं ततः । त्रिः कुर्याज्ज्वलता तेन तत्प्राक्परिहरेदथ ॥ ३७ ॥ कर्षन्निवोदगुद्वास्य भाजनं घृतपूरितम् । कुशाग्रे निक्षिपेदग्नौ स्कन्दायेत्युच्च-रन्नथ ॥ ३८ ॥ धृत्वा तूत्तानपाणिभ्या पवित्रे चोदगग्रके । सवितुष्ट्वेति मन्त्रेण सकृ-त्तूष्णीं द्विरिष्यते ॥ ३९ ॥ उत्पूयाऽऽज्यं पवित्रे ते प्रोक्ष्याग्नौ प्रहरेदथ । प्रत्यगासा-

१ ख. °येत्पश्च य° । २ ख. °णं च पवि° । ३ क. °र्ऋतान्द° । ४ ख. °त । कुतोत्तत्तादि° ।

दयेदग्नेर्बर्हिस्तत्राऽऽज्यभाजनम् ॥ ४० ॥ प्रताप्य सकुशौ दर्वीस्रुवौ दर्वीं निधाय च। सव्येन स्रुवमादाय कुशानितरपाणिना ॥ ४१ ॥ स्रुवस्य बिलमारभ्य यावदग्रं भवेदथ। अग्रतो बिल्पृष्ठं तु तदारभ्य भवेद्बिलम् ॥४२॥ निमृजेत्त्रिस्त्रिरेकं तु कुशाग्रैः सव्यवच्च हि। कुशमूलैश्च वै दण्डं कुशैः प्रोक्ष्य प्रतापयेत् ॥ ४३ ॥ आसादयेत्स्रुवं चाऽऽदौ बर्हिष्युत्तरतो घृतात्। संस्कुर्यात्पूर्ववद्दर्वीं निदध्यादुत्तरे स्रुवात् ॥ ४४ ॥ संमार्जितान्कुशान्प्रोक्ष्य प्रहरेदनले च तान्। सम्यगाज्यं निरीक्ष्याथ चरुं पक्वमवेक्षयेत् ॥ ४५ ॥ अभिघार्य स्रुवेणाऽऽज्यं चरुमुद्वासयेदुदक्। हविर्भुगात्मनोश्चैव मध्यतश्चरुमानयेत् ॥ ४६ ॥ निदध्यात्तां चरोः स्थालीं बर्हिष्याज्यं च दक्षिणे। अभिघार्य चरुं चान्यत्पात्रं स्यादुत्तरे चरोः ॥ ४७ ॥ देवतायै हविः स्थाप्य तत्र तद्विभजेत्क्रमात्। अमुष्यै चेदमित्युक्त्वा यथालिङ्गं यथाक्रतु ॥ ४८ ॥ विश्वानीत्यष्टभिः पादैः पूर्व(र्वा)तो दिक्षु चाष्टसु। अर्चयेद्गन्धपुष्पाद्यैरग्निं स्तुयादृ(दृ)चाऽन्त्यया ॥४९॥ अलंकृत्याभिघार्येध्ममादायायं त इत्यथ। हुत्वेध्मं जुहुयादाज्यं तूष्णीं वायव्यकोणतः ॥५०॥ ततश्चाऽऽग्नेयपर्यन्तं प्रजापतिमिदं स्मरेत्। स्वाहेत्युक्त्वाऽथ निर्ऋतिमारभ्येशानकोणतः ॥ ५१ ॥ गृह्यवद्भिरिमौ मन्त्रावाघाराविति भाषितौ। होमे चैव तु सर्वत्र विधिरेष उदाहृतः ॥ ५२ ॥ अग्निश्चैव तथा सोमश्चक्षुषी जातवेदसः। भवेदुत्तरमाग्नेयं सौम्यं चैवाक्षि दक्षिणम् ॥ ५३ ॥ सक्तुलाजान्नहोमे तु जुहुयादेव चक्षुषी। अनुप्रवचनीये च वर्जयेदाज्यहोमके ॥ ५४ ॥ अभिघार्य स्रुवेणेदमाग्नेयं मध्यतो हविः। दर्वीं च हविरादाय विधिना स्थापयेदिह ॥ ५५ ॥ तर्जनीमध्यमाङ्गुष्ठपर्वमात्रं च वै सुचि। तत्पुरस्तात्तथाऽऽदाय निदध्यात्तत्तथैव हि ॥ ५६ ॥ पात्रस्थं चापि दर्वीस्थं पुनरप्यभिघारयेत्। पञ्चावत्ती तु पश्चार्धादादाय च हविस्तथा ॥५७॥ जुहुयादग्नये स्वाहा दर्व्या मध्ये तु नेत्रयोः। आदाय चाग्नीषोमाभ्यामुत्तरस्थं च पूर्ववत् ॥ ५८ ॥ मन्त्रमुच्चार्य सर्वत्र स्वाहान्ते जुहुयाद्धविः। समुच्चार्य चतुर्थ्यन्तं नामेदं न ममेति च ॥ ५९ ॥ द्वयोश्चापि हविःशेषं द्वयोश्चापि अवद्य च। दर्व्यां सकृदवद्याच्च द्विस्ततो वाऽभिघारयेत् ॥ ६० ॥ यदस्येत्यनया हुत्वा प्रागुदक्तु हविर्भुजः। रुद्राय जुहुयाद्रज्जुं विस्रंस्याच्चेध्मबन्धिनीम् ॥ ६१ ॥ स्रुक्स्रुवाज्याहुतेः शेषं विश्वेभ्यो जुहुयादथ। सर्वत्र जुहुयाद्धोमे प्रायश्चित्ताहुतीरथ ॥ ६२ ॥ अयाश्चाग्न इदं विष्णुश्चतस्रो व्याहृतीश्च हि। ब्रह्माऽपि जुहुयादेताः प्रायश्चित्ताहुतीरिमाः ॥ ६३ ॥ अनाज्ञातमिति द्वाभ्यां ज्ञाताज्ञातनिवृत्तये। सर्वत्रापि हि चैवं स्याद्विधिरेष उदाहृतः ॥ ६४ ॥ यत्पाकत्रेति मन्त्रेण न्यूनाधिकनिवृत्तये। मन्त्रतन्त्राधिकन्यूनविपर्याश्च(स)विक्रमणः ॥ ६५ ॥

---

१ ख. °र्बर्हिस्त°। २ ख. स्रुक्पात्रे विनि°। ३ ख. °स्स्रुचं चा°। ४ ख. °व पश्चादग्नेस्तमा°।

स्वरवर्णादिलोपोत्थपापनिर्हरणाय च । × यद्व इत्यनेनात्रैकामाहुतिं जुहुयादथ॥६६॥ सम्यक्पूर्णफलप्राप्त्यै होमस्येह कृतस्य च । कर्तैव जुहुयादाज्यं व्याहृतीभिश्चतसृभिः ॥ ६७ ॥ स्थाल्यादीनि च पात्राणि नीत्वा तूष्णीं निधाय च । चमसं पुरतः कृत्वा निधायाथ च बर्हिषि ॥ ६८ ॥ पूर्णमसीत्यनेनैव तत्पूर्णमभिमन्त्रयेत् । दिशः प्रागायतो दर्भैः प्राच्यां मन्त्रेण मार्जयेत् ॥ ६९ ॥ आपो अस्मानिदमापः सुमित्र्या न इति त्रिभिः । शिरसि स्वस्य पत्न्याश्च मार्जयेद्द्विष्म इत्यधः ॥ ७० ॥ स्वस्य वामेऽञ्जलौ पत्न्या आसीनाया निषिञ्चयेत् । माऽहं प्रजामनेनैव चमसस्थं जलं च हि ॥ ७१ ॥ जलेन तेन वै होता प्रोक्षयेच्छिरसी तयोः । तत्रस्थानक्षतांश्चैव क्षिपेत्प्रणवमुच्चरेत् ॥ ७२ ॥ परिस्तरणदर्भांश्च विसृजेदुत्तरे हि तान् । ओं च प्र इत्यनेनाग्निं नत्वा पूर्ववदुच्चरेत् ॥ ७३ ॥ पर्यू(यु)क्ष्य परिषिच्याथ गन्धपुष्पाक्षतांश्च हि । धूपं दीपं च नैवेद्यं दद्यात्ताम्बूलदक्षिणाः ॥ ७४ ॥ तिष्ठन्नग्नेरुपस्थानं कुर्यादों च प्र इत्यथ । अभिवाद्य जपेद्देवीं कृतं कर्म निवेदयेत् ॥ ७५ ॥ शुभाशुभक्रियार्थं च दत्तं विप्राय यद्धनम् । तत्सर्वं जगदीशस्य प्रीतये निश्चितं भवेत् ॥ ७६ ॥ हुतशेषं हविश्चाऽऽज्यं होत्रे दद्याच्च दक्षिणाम् । सुवर्णं च यथाशक्ति होमसाद्गुण्यहेतवे ॥ ७७ ॥ होमान्ते ब्रह्मणे दद्याद्यज्ञपात्राणि चैव हि । होमे चैव तु सर्वत्र प्रवदन्ति मनीषिणः ॥७८॥ दर्शके पूर्ववत्सर्वं विशेषस्त्वथ कथ्यते । अग्नीषोमपदस्थान इन्द्राग्नी (ग्नि)-पदमुच्चरेत् ॥ ७९ ॥ पालाशखादिराश्वत्थशम्युदुम्बरजास्तथा । समिधः खादिराः शस्ता होमकर्मसु चैव हि ॥ ८० ॥

इत्याश्वलायनधर्मशास्त्रे स्थलीपाकप्रकरणम् ॥ २ ॥

(अथ गर्भाधानप्रकरणम् ३)

गर्भाधानं द्विजः कुर्यादृतौ प्रथम एव हि । चतुर्थदिवसादूर्ध्वं पुत्रार्थी दिवसे समे ॥१॥ चरं दारुणभं पौष्णं दस्राग्नी च द्विदैवतम् । श्राद्धाहं चैव रिक्तां च हित्वाऽन्यस्मिन्निधीयते ॥ २ ॥ नान्दीश्राद्धं पतिः कुर्यात्स्वस्तिवाचनपूर्वकम् । उपलेपादिकं कृत्वा प्रातरौपासनादितः ॥ ३ ॥ प्रजापतेश्चरोरेकां हुत्वा चाऽऽज्याहुतीरथ । विष्णुर्योनिं नेजमेष षडेका च प्रजापतेः ॥४॥ आसीनायाः शिरः स्पृष्ट्वा प्राङ्मुख्याः पाणिना

× इत आरभ्य कृतस्य चेत्यन्तग्रन्थो न विद्यते ख. पुस्तके ।

१ ख. घ । कृतेन जु° । २ ज. स्वयं । ३ ख. °शखदि° । ४ ग पितु° । ५ ख. °दुसुन्व पा° ।

सनान्तिके गत्वा जपेदग्नेतमित्यृचम् ॥ ८२ ॥ पिण्डं तं प्राशयेत्पत्नीं पुत्रार्थी मध्यमं हि चेत्। आधत्तेति च मन्त्रेण धत्ते गर्भं कुमारकम् ॥ ८३ ॥ नो चेदतिप्रणीतेऽग्नावप्सु वा तान्क्षिपेदथ । पिण्डप्राशनपक्षे तु विशेषः कथ्यतेऽधुना ॥ ८४ ॥ तावन्न प्राशयेत्पिण्डं न हि श्राद्धविसर्जनम् । पिण्डप्रक्षेपणं चाग्नावप्सु चापि तथैव हि ॥ ८५ ॥ पिण्डदानं च वै श्राद्धे यत्र कुत्रापि वा भवेत्। गयायां च कृतं मत्वा ह्यात्मनेति निवेदयेत्॥८६॥ प्रक्षालितकरान्विप्रानाचान्तानुपवेशयेत् । जलदर्भाक्षतान्दत्त्वा तथैव पैतृके तिलान् ॥ ८७ ॥ तत्पाणिष्वक्षतान्दत्त्वा ततो विप्राशिषो भवेत् । स्वस्तीत्युक्त्वा मया दत्तं श्राद्धमक्षय्यमस्त्विति ॥ ८८ ॥ दक्षिणां च ततो दद्याद्यथाविभवसारतः । दाक्षिणारहितं यच्च तच्छ्राद्धं निष्फलं भवेत् ॥८९॥ चालयित्वा तु पात्राणि स्वस्तीत्युक्त्वाऽक्षतांस्तिलान् । तत्तत्स्थाने क्षिपेदेषु प्रकिरेदन्नमप्यथ ॥ ९० ॥ असंस्कृतेति वै पित्र्ये दैवे चासोमपा इति । दक्षिणां च ततो दत्त्वा पितृसंतुष्टिहेतवे ॥ ९१ ॥ विसृजेत्पितृपात्रस्थं पिण्डानां पुरतो जलम् । स्वधोच्यतामनेनैव ततः पिण्डान्समुच्चरेत् ॥९२॥ वाजे वाजेऽथ मन्त्रेण कुर्याच्छ्राद्धविसर्जनम् । सव्यमंसं पितॄणां च देवानां दक्षिणं स्पृशेत् ॥ ९३ ॥ पठेदुच्चैरिमं मन्त्रमामा वाजस्य चैव हि । प्रदक्षिणत्रयं कुर्वन्भुक्तितः पितृसेवितान् ॥ ९४ ॥ जलमर्चनपात्रस्थान्विसृजेदक्षतादिकान् । पुरतस्तेन पुत्राः स्युर्याति ब्रह्मपदं च हि ॥ ९५ ॥ ब्रह्मत्वं च प्रयातेभ्यो गृह्णीयादाशिषः शुभाः । भवत्प्रसादतो भूयाद्धनधान्यादिकं मम ॥ ९६ ॥ दातारो नोऽभिवर्धन्तां वेदाः संततिरेव नः । श्रद्धा च नो मा व्यगमद्बहु धे( दे )यं च नोऽस्त्विति ॥ ९७ ॥ अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ ९८ ॥ ततो विप्रास्तथैवेति प्रतिवचनमादरात् । नःपदं निर्दिशेयुस्ते ब्राह्मणाश्चैव नःपदे ॥ ९९ ॥ स्वादुषं सद इत्युक्त्वा मन्त्रानुच्चैः पठेदथ । दक्षिणाभिमुखस्तिष्ठेद्विप्राणां पुरतश्च हि ॥ १०० ॥ इहैवेति पठेन्मन्त्रं भुक्तवद्भिर्द्विजैः सह । संतुष्टा आशिषो दद्युर्भुक्तिमुक्तिप्रदाः शुभाः ॥ १०१ ॥ आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः ॥ १०२ ॥ तेभ्यश्चैवाऽऽशिषो लब्ध्वा नमस्कुर्याद्द्विजांस्तथा । अभ्यर्च्याऽऽज्य द्विजानां च पादान्प्रक्षाल्येत्क्रमात् ॥ १०३ ॥ अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात् । अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥ १०४ ॥

---

१ ख. °त्पत्नीं प्रा° । २ ग. °पि भागेन ग° । ३ ख. °त्मनि निवे° । ४ ग. °त्वा यया° । ५ ख. °ष्पन्न° । ६ ख. °ष्णानिवृ° । ७ ग. °दक्षिणादि° ।

ताम्बूलं च ततो दद्याद्यथाविभवसारतः । कृताञ्जलिपुटो भूत्वा प्रार्थयेत्ताननेन च*
॥ १०५ ॥ पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः । तत्क्लेशजातं चित्तात्तु विस्मृत्य
क्षन्तुमर्हथ ॥ १०६ ॥ वसिष्ठसदृशा यूयं सूर्यपर्वसमा तिथिः । आसनादि नमस्कारो
भवेत्सत्कार एव हि ॥१०७॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं
संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ १०८ ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं
द्विजोत्तमाः । श्राद्धं भवति संपूर्णं प्रसादाद्भवतां मम ॥१०९॥ अनेन पितृयज्ञेन प्रीयतां
भगवानिह । मया भक्त्या कृतं सर्वं तत्सद्ब्रह्मार्पणं भवेत् ॥ ११० ॥ वसिष्ठासस्ततो
देवा वसिष्ठश्च जपेदिमाँ । पितृस्तुतिकरां गाथामिदं पितृभ्य एव च ॥ १११ ॥
मन्त्राञ्शृण्वत( न्त ) इत्येतान्संतुष्टाः पितरो गृहे । दत्त्वाऽभीष्टफलं कर्तुं( र्तुः )
प्रयान्तीदमनुत्तमम् ॥ ११२ ॥ अनेन विधिना चैव यः श्राद्धं कुरुते द्विजः ।
भुक्त्वेह सकलान्कामान्सोऽपि सायुज्यमाप्नुयात् ॥ ११३ ॥

इत्याश्वलायनधर्मशास्त्रे श्राद्धप्रकरणम् ॥ २३ ॥

( अथ श्राद्धोपयोगिप्रकरणम् २४ )

पितृयज्ञमकृत्वा तु पित्रोरेकाब्दिकं यदि । यज्ञान्यः कुरुते पञ्च स याति नरकं ध्रुवम्
॥ १ ॥ कुरुते ब्रह्मयज्ञं च श्राद्धात्पूर्वं मृतेऽहनि । निराशाः पितरस्तस्य श्राद्धान्नं
न लभन्ति ते ॥ २ ॥ तर्पणं कुरुते पित्रोः श्राद्धात्पूर्वं मृतेऽहनि । निराशाः पितर-
स्तस्य स च गच्छेदधोगतिम् ॥ ३ ॥ कुर्यात्पञ्च महायज्ञान्निवृत्ते श्राद्धकर्मणि ।
पित्रोराब्दिक एवाऽऽहुराचार्याः शौनकादयः ॥ ४ ॥ अनग्निको यदा ज्येष्ठः कनिष्ठः
साग्निको यदि । अग्नौकरणहोमं तु ज्येष्ठः कुर्यात्कथंचन ॥ ५ ॥ कनिष्ठस्य च गृह्या-
ग्नावग्नौकरणहोमकम् । तदाज्ञयाऽग्रजः कुर्यादिति केचिद्वदन्ति हि ॥ ६ ॥ संसृष्टा
भ्रातरो यत्र श्राद्धे स्युर्यदि चैव हि । तत्रायं मुनिभिः प्रोक्तो विधिर्नैवान्यथा भवेत्
॥ ७ ॥ बह्वृचो ब्रह्मचारी वा तथैवानग्निकोऽपि वा । अग्नौकरणहोमाख्यं कुर्या-
न्नैव पितुः परे ॥ ८ ॥

*इत उत्तरमेतदर्धं ख पुस्तके—" ततो विप्रास्तथैवेति प्रतिवचनमादरात् " इति ।

१ ख भवेत्सत्का° ।

पञ्चे( ञ्च ) वा स्युर्द्विजाः शस्ता द्वौ च पित्रोर्मृतेऽहनि । द्वौ दैवेऽथ त्रयः पित्र्य एकैको वोभयत्र तु ॥९॥ चत्वारश्चेद्द्विजाः श्राद्धे दैवे चैको भवेत्तदा । त्रयः पित्र्ये भवन्त्येके वदन्त्येव हि संकटे ॥ १० ॥ अथ वाऽपि त्रयो वाऽपि एकः स्यात्पितृपु त्रिपु । द्वौ दैवे चैव तु स्यातां विप्रावेके वदन्ति हि ॥ ११ ॥ द्वितीयाऽऽवाहने षष्ठी संकल्पे चाऽऽसने क्षणे । चतुर्थ्याच्छादने चान्ने शेषाः संबुद्धयः स्मृताः ॥ १२ ॥ अन्नदाने विशेषः स्यात्संबुद्धिः प्रथमाऽथ वा । अन्ते( न्ये ) चैव चतुर्थी तु वदन्त्येके महर्षयः ॥ १३ ॥ देवानामासनं दद्याद्दक्षिणे चाऽऽविकं कुशान् । कृत्वा द्विगुणभुग्नांस्तान्पितॄणां वाम एव हि ॥ १४ ॥ विप्रान्निमन्त्रयेच्छ्राद्धे बह्वृचान्वेदपारगान् । तदभावे तु चैवान्यशाखिनो वाऽपि चैव हि ॥ १५ ॥ मन्त्रैश्चैव स्वशाखोक्तैः कर्म कुर्याद्यथाविधि । अन्यथा कर्महानिः स्याद्बह्वृचानामयं विधिः ॥ १६ ॥ कर्मणां याजुषादीनां स्वस्वशाखा न विद्यते । ऋक्शाखाविहितं कर्म समानं सर्वशाखिनाम् ॥ १७ बह्वृचानां तु यत्कर्म यदि स्यादन्यशाखया । पुनश्चैवापि तत्कर्म कुर्याद्बह्वृचशाखया ॥ १८ ॥ हित्वा स्वस्य द्विजो वेदं यस्त्वधीते परस्य तु । शाखारण्डः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥ १९ ॥ रोगादिरहितो विप्रो धर्मज्ञो वेदपारगः । भुञ्जीयादमलं श्राद्धे साग्निकः पुत्रवानपि ॥ २० ॥ पितृमानेव भुञ्जीयाच्छ्राद्धमिन्दुक्षये द्विजः । तृप्ताः स्युः पितरस्तेन दाता स्वर्गमवाप्नुयात् ॥ २१॥ श्राद्धकर्ता न भुञ्जीयात्परश्राद्धे विधुक्षये । भुङ्क्ते चेत्पितरो यान्ति दाता भोक्ताऽप्यधोगतिम् ॥ २२ ॥ दर्शेष्टि(ष्ट)काव्यतीपातो(ता) वैधृतिश्च महालयः । युगाश्च मनवः श्राद्धकालाः संक्रान्तयस्तथा ॥ २३ ॥ गजच्छायोपरागश्च षष्ठी या कपिला तथा । अर्धोदयादयश्चैव श्राद्धकालाः स्मृता बुधैः ॥ २४ ॥ संभूते च नवे धान्ये श्रोत्रिये गृहमागते । आचार्याः केचिदिच्छन्ति श्राद्धं तीर्थे च सर्वदा ॥ २५ ॥ श्राद्धकालेषु सर्वेषु कुर्याच्छ्राद्धं च शक्तितः । विशेषतो मृताहे तु पित्रोश्चैव विधीयते ॥ २६ ॥ मोहान्न कुरुते श्राद्धं मातापित्रोर्मृतेऽहनि । निराशाः पितरो यान्ति दुर्गतिं चापि वै सुतः ॥ २७ ॥ अज्ञानाद्वा प्रमादाद्वा यो मृताहमतिक्रमेत् । स याति नरकं घोरं यावदाभूतसंप्लवम् ॥ २८ ॥ अतिक्रमं(मो) मृताहस्य दोषः स्यात्सूतकं विना । न कुर्याच्छ्राद्धमार्शौचे प्रवदन्ति महर्षयः ॥ २९ ॥ आचरेद्विधिव-

च्छ्राद्धं मातापित्रोर्मृतेऽहनि। पितरस्तेन तृप्यन्ति गच्छन्ति पदमुत्तमम्॥३०॥सदाचार-परो विप्रः कृपालुः श्राद्धकृत्तथा। आत्मनिष्ठोऽर्थलोकेषु तारयेत्तरति स्वयम्॥३१॥*

इत्याश्वलायनधर्मशास्त्रे श्राद्धोपयोगिप्रकरणम् ॥ २४ ॥

---

समाप्तेयं लघ्वाश्वलायनस्मृतिः ।

---

* इत उत्तरं कानिचिद्वचनानि ख. पुस्तक उपलभ्यन्ते—“ श्राद्धभुग्द्विजपङ्क्तौ च यो भुङ्क्ते श्राद्धकृद्द्विज'। स याति नरकं घोरं पितरो यान्त्यधोगतिम्। निर्वर्त्य विधिवच्छ्राद्धं दर्शादिषु युगादिषु। इष्टैः सह द्विजो भुङ्क्ते स याति परमा गतिम्। ब्राह्मण कुरुते कर्म श्रुतिस्मृत्युपपादितम्। स तरेत्तारयत्यन्यान्प्रवदन्ति महर्षयः। न कुर्यात्कर्मणो लोपं न न्यूनं नैत्यकस्य च। उपर(द्र)त्रं विना विप्र कर्मकृत्स्यात्सुरमती। कर्म कर्तुमशक्तश्चेद्यथा लोके तु वैदिकम्। कुर्याद्धर्मान्पुराणोक्तानसमर्थोऽपि वैदिके। अननयस्तु ये विप्रास्तेषां श्रेयोऽभिधीयते। व्रतोपवासनियमैर्नानादानैस्तथा नृप ” इति।

ॐ तत्सद्ब्रह्मणे नमः ।

# लिखितस्मृतिः ।

इष्टापूर्ते तु कर्तव्ये ब्राह्मणेन प्रयत्नतः । इष्टेन लभते स्वर्गं पूर्ते[1] मोक्षमवाप्नुयात् ॥ १ ॥ एकाहमपि कर्तव्यं भूमिष्ठमुदकं शुभम् । कुलानि तारयेत्सप्त यत्र गौर्वितृषी(षा) भवेत् ॥ २ ॥ भूमिदानेन ये लोका गोदानेन च कीर्तिताः । ताँल्लोकान्प्राप्नुयान्मर्त्यः पादपानां प्ररोपणे ॥ ३ ॥ वापीकूपतडागानि देवतायतनानि च । पतितान्युद्धरेद्यस्तु स पूर्तफलमश्नुते ॥ ४ ॥ अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम् । आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥ ५ ॥ इष्टापूर्ते द्विजातीनां सामान्यो धर्म उच्यते । अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके ॥ ६ ॥ यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ७ ॥ देवतानां पितॄणां च जले दद्याज्जलाञ्जलीन्[2] । असंस्कृतमृतानां च स्थले दद्याज्जलाञ्जलिम् ॥८॥ एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः । मुच्यते प्रेतलोकात्तु पितृलोकं स गच्छति ॥९॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ १० ॥ वाराणस्यां प्रविष्टस्तु कदाचिन्निष्क्रमेद्यदि । हसन्ति तस्य भूतानि अन्योन्यं करताडनैः ॥ ११ ॥ गयाशिरे तु यत्किंचिन्नाम्ना[3] पिण्डं तु निर्वपेत् । नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥ १२ ॥ आत्मनो वा परस्यापि गयाकूपे यतस्ततः । यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥ १३ ॥ लोहितो यस्तु वर्णेन शङ्खवर्णखुरः[4] स्मृतः । लाङ्गूलशिरसोश्चैव[5] स वै नीलवृषः[6] स्मृतः ॥ १४ ॥ नवश्राद्धं त्रिपक्षं[7] च द्वादशैव[8] तु मासिकम् । षण्मासौ(से)[9] चाऽऽब्दिकं चैव श्राद्धान्येतानि षोडश ॥ १५ ॥ यस्यैतानि न कुर्वीत एकोद्दिष्टानि षोडश । पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ १६ ॥ सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं द्विजः । मातापित्रोः पृथक्कुर्यादेकोद्दिष्टं मृतेऽहनि ॥ १७ ॥ वर्षे वर्षे तु कर्तव्यं मातापित्रोस्तु संततम् । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् ॥ १८ ॥ संक्रान्तावुपरागे च सर्वोत्सवमहालये[10] । निर्वाप्यास्तु[11] त्रयः पिण्डा एकतस्तु क्षयेऽहनि ॥ १९ ॥ एकोद्दिष्टं परित्यज्य पार्वणं कुरुते द्विजः । अकृतं तद्विजानीयात्स मातृ-

---

१ क °र्तेन मोक्षमाप्नु° । २ ख ग. °ञ्जलिम् । अ° । ३ ख. ग °याक्षेत्रे य° । ४ ख. ग. °खुरस्तथा । ला° । ५ ख. °रसश्चै° । ६ क. °वृषस्तु सः । न° । ७ क. ख. ग. त्रिपक्षे । ८ ख. ग. °दशस्त्वेव मा° । ९ क. घ. °ण्मासश्चाऽऽब्दि° । १० ख. ग. पर्वण्यपि म° । ११ क. निर्वपेत्तत्र यः पिण्डानेक° ।

( ता )पितृघातकः ॥ २० ॥ अमावास्या( यां तु ) क्षयो यस्य प्रेतपक्षेऽथ वा यदि। सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः ॥ २१ ॥ त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते । अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥ २२ ॥ यस्य संवत्स रादर्वाक्सपिण्डीकरणं स्मृतम् । * प्रत्यहं तत्सोदकुम्भं दद्यात्संवत्सरं द्विजः पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः ॥ २३ ॥ × पितामह्याऽपि तत्तास्मिन्सत्येवं तु क्षयेऽहनि । तस्यां सत्यां प्रकर्तव्यं तस्याः श्वश्रेति निश्चितम् ॥ २४ ॥ विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु । एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ॥ २५ ॥ स्वगोत्राद्भ्रश्यते नारी उद्वाहात्सप्तमे पदे । भर्तृगोत्रेण कर्तव्यं ( व्या ) दानं पिण्डोदकाक्रियाः[1] ॥ २६ ॥ द्विमातुः पिण्डदानं[2] तु पिण्डे पिण्डे द्विनामतः । षण्णां देयास्त्रयः पिण्डा एवं दाता न मुह्यति ॥ २७ ॥ अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः । अदूष्यं[3] तं यमः प्राह पङ्क्तिपावन एव सः ॥ २८ ॥ अग्नौकरणशेषं तु[ =विश्वेदेवादि हूयते । अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्॥२९॥ यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते ॥ ३० ॥ अजस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे । रजते च सुवर्णे च नित्यं वसति पावकः ॥ ३१ ॥ ] यत्र यत्र प्रदातव्यं श्राद्धं कुर्वीत पार्वणम् । तत्र मातामहानां च कर्तव्यमुभयं[4] सदा ॥ ३२ ॥ अपुत्रा ये स्मृताः केचित्पुरुषा वा स्त्रियोऽपि वा । एभ्य एव प्रदातव्यमेकोद्दिष्टं न पार्वणम् ॥ ३३ ॥ यस्मिन्राशिगते सूर्ये विपत्तिः स्याद्विजन्मनः । तस्मिन्नहनि कर्तव्यं दानं पिण्डोदकाक्रिया ॥ ३४ ॥ वर्षवृद्ध्यभिषेकादि कर्तव्यमधिके[5] न तु । अधिमासे तु पूर्वं स्याच्छ्राद्धं संवत्सरादपि ॥ ३५ ॥ स एवं[6] हेयोद्दिष्टस्य[7] येन केन तु कर्मणा । अभिघातान्तरं कार्यं तत्रैवाहः कृतं भवेत्(?) ॥ ३६ ॥ शालाग्नौ पच्यते[8] ह्यन्नं लौकिके[9] वाथ संशयः । यस्मिन्नेव पचेदन्नं तस्मिन्होमो विधीयते ॥ ३७ ॥

---

* एतदर्धं न क घ पुस्तकयो. । × एतद्वचनस्थानेऽयं पाठ क घ. पुस्तकयो.—"पितृमह्यादि परस्तेनैव प्रपितामही " इति । = धनुश्चिह्नान्तर्गतग्रन्थस्थाने ख ग पुस्तकयोरयं पाठ —" पितृपात्रे प्रदापयेत् । प्रतिपाद्ये पितॄणा च न दद्याद्वैश्वदेविके । अनग्निको यदा विप्र श्राद्धं करोति पार्वणम् " इति ।

---

१ ख. ग. °क्रिया । द्वि° । २ क °नं स्यात्पिण्डेऽपि° । घ. °नं चेत्पिण्डेऽपि° । ३ ख ग. °अदोष । ४ ख. ग °व्यमभ° । ५ क. °व्यमपि तद्दिने । अ° । ६ घ. एवाहोरादिष्ट° । ७ क °वहोरादिष्ट° । ८ ख. पचते । ९ ख. °के नापि नित्यश. । य° ।

वैदिके लौकिके वाऽपि नित्यं हुत्वा ह्यतन्द्रितः । वैदिके स्वर्गमाप्नोति लौकिके हन्ति किल्बिषम् ॥ ३८ ॥ अग्नौ व्याहृतिभिः पूर्वं हुत्वा मन्त्रैस्तु शाकलैः । संविभागं तु भूतेभ्यस्ततोऽश्नीयादनग्निमान् ॥ ३९ ॥ उच्छेषणं तु नोत्तिष्ठेद्यावद्विप्रविसर्जनम् । ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥ ४० ॥ दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः । नैते निर्माल्यतां यान्ति नियोक्तव्याः पुनः पुनः ॥ ४१ ॥ पानमाचमनं कुर्यात्कुशपाणिः सदा द्विजः । भुक्त्वाऽप्युच्छिष्टतां याति एष एव विधिः स्मृतः ॥ ४२ ॥ पान आचमने चैव तर्पणे दैविके सदा । कुशहस्तो न दुष्येत यथा पाणिस्तथा कुशः ॥ ४३ ॥ वामपाणौ कुशं कृत्वा दक्षिणेन उपस्पृशेत् । आच(चा)मन्ति च ये मूढा रुधिरेणाऽऽचमन्ति ते ॥ ४४ ॥ नीवीमध्येषु ये दर्भा ब्रह्मसूत्रेषु ये कृताः । पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः ॥ ४५ ॥ पिण्डे कृतास्तु ये दर्भा यैः कृतं पितृतर्पणम् । मूत्रोच्छिष्टपुरीषं च तेषां त्यागो विधीयते ॥ ४६ ॥ दैवपूर्वं तु यच्छ्राद्धमदैवं चापि यद्भवेत् । ब्रह्मचारी भवेत्तत्र कुर्याच्छ्राद्धं तु पैतृकम् ॥ ४७ ॥ मातुः श्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥ ४८ ॥ क्रतुर्दक्षो वसुः सत्यः कालकामौ धुरिलोचनौ । पुरूरवांर्द्रवाश्चैव विश्वे देवाः प्रकीर्तिताः ॥ ४९ ॥ आगच्छन्तु महाभागा विश्वे देवा महाबलाः । ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥ ५० ॥ इष्टिश्राद्धे क्रतुर्दक्षो वसुः सत्यश्च वैदिके । कालः कामोऽग्निकार्येषु काम्येषु धुरिलोचनौ ॥ ५१ ॥ पुरूरवांर्द्रवश्चैव पार्वणेषु नियोजयेत् ॥ ५२ ॥ यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥ ५३ ॥ अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥ ५४ ॥ मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः । द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः ॥ ५५ ॥ मृन्मयेषु च पात्रेषु श्राद्धे यो भोजयेत्पितॄन् । अन्नदाता पुरोधाश्च भोक्ता च नरकं व्रजेत् ॥ ५६ ॥

---

१ घ. नोद्दिष्टेद्या° । २ ख. ग. °क्त्वा नोच्छि° । ३ घ. वैदिके । ४ ख. ग. कुशान्कृत्वा । ५ ख. ग. °त् । विनाचमपन्तिये । ६ घ °धिरानाच° । ७ क. स्थिताः । ८ क °रीषे च । ९ क. कामकालौ । १० क. °वाद्रवश्चै° । ख. ग. °वामाद्रवा° । ११ क. कामकालोऽग्नि° । १२ ख. °षु अध्वरे धु° । १३ ख. ग. °वामाद्रवाश्च पा° । १४ ग. °काकर्मे ।

अलाभे मृन्मयं दद्यादनुज्ञातस्तु तैर्द्विजैः । घृतेन प्रोक्षणं[1] कुर्यान्मृदः पात्रं पवित्रकम् ॥ ५७ ॥ श्राद्धं कृत्वा परश्राद्धे यस्तु भुञ्जीत विह्वलः । पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः ॥ ५८ ॥ श्राद्धं दत्त्वा च भुक्त्वा च अध्वानं योऽधिगच्छति । भवन्ति पितरस्तस्य तन्मासं पांसुभोजनाः ॥ ५९ ॥ पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् । दानं प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेत् ॥ ६० ॥ अध्वगामी भवेदश्वः पुनर्भोक्ता च वायसः । कर्मकृज्जायते दासः स्त्रीसङ्गेन च सूकरः ॥ ६१ ॥ दशकृत्वः पिबेदा( चा )पः सावित्र्या चाभिमन्त्रिताः । ततः संध्यामुपासीत शुध्येत तदनन्तरम् ॥ ६२ ॥ आर्द्रवासास्तु यत्कुर्याद्बहिर्जानु च यत्कृतम्[4] । तत्सर्वं निष्फलं कुर्याज्जपहोमप्रतिग्रहम् ॥ ६३ ॥ चान्द्रायणं नवश्राद्धे पराको मासिके तथा । पक्षत्रये तु कृच्छ्रं स्यात्षण्मासे कृच्छ्रमेव च ॥ ६४ ॥ ऊनाब्दिके त्रिरात्रं स्यादेकाहः[5] पुनराब्दिके । शावे मासस्तु भुक्त्वा वा पादकृच्छ्रो विधीयते ॥ ६५ ॥ सर्पविप्रहतानां च शृङ्गिदंष्ट्रिसरीसृपैः । आत्मनस्त्यागिना चैव श्राद्धमेषां न कारयेत् ॥ ६६ ॥ गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् । तं[6] स्पर्शयन्ति ये विप्रा गोजाश्वाश्च भवन्ति ते ॥ ६७ ॥ अग्निदाता तथा चान्ये पाशच्छेदकराश्च ये । तप्तकृच्छ्रेण शुध्यन्ति मनुराह प्रजापतिः ॥ ६८ ॥ त्र्यहमुष्णं पिबेदा( चा )पस्त्र्यहमुष्णं पयः पिबेत् । त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् ॥ ६९ ॥ गोभूहिरण्यहरणे स्त्रीणां क्षेत्रगृहस्य च । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥ ७० ॥ उद्यताः सह धावन्ते सर्वे ये शस्त्रपाणयः । यद्येकोऽपि हनेत्तत्र सर्वे ते ब्रह्मघातकाः ॥ ७१ ॥ बहूनां शस्त्रघातानां यद्येको मर्मघातकः । सर्वे ते शुद्धिमे( मृ )च्छन्ति स एको ब्रह्मघातकः ॥ ७२ ॥ पतितान्नं यदा भुङ्क्ते भुङ्क्ते चण्डालवेश्मनि । स मासार्धं चरेद्वारि मासं कामकृतेन तु ॥ ७३ ॥ यो येन पतितेनैव संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्तत्तत्स( त्संस )र्गविशुद्धये ॥ ७४ ॥ ब्रह्महा( ह )पातकिस्पर्शे स्नानं येन विधीयते । तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥ ७५ ॥ ब्रह्महा च सुरापायी तथैव गुरुतल्पगः । महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ॥ ७६ ॥ स्नेहाद्वा यदि वा[10] लोभाद्भयादज्ञानतोऽपि वा । कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति ॥ ७७ ॥ उच्छिष्टोच्छिष्टसंस्पृष्टो ब्राह्मणस्तु कदाचन । तत्क्षणात्कुरुते स्नानमा[11]चमनेन शुचिर्भवेत् ॥ ७८ ॥

---

१ ख. ग °ण कार्यं मृ° । २ क. घ. °ध्वना च भ° । ३ क घ °नभुक्तेन वा° । ४ ख ग. घ. °म् । सर्वं तन्निष्फ° । ५ ध. ङ. °काहं पु° । ६ ख. ग. तं स्पृशन्ति च ये । ७ ख. ग °न्ते यद्येको वर्मघातकः । ८ ख ग °व स्पर्शे स्नानं विधी° । ९ क. घ. °त्संयोगी च । १० क. वा मोहाद्भ° । ११ क. °माचामेन विशुध्यति । कु° ।

कुब्जवामनष(प)ण्डेषु गद्गदेषु जडेषु च। जात्यन्धे बधिरे मूके न दोषः परिवेदने ॥ ७९ ॥ क्लीबे देशान्तरस्थे पतिते प्रव्रजितेऽपि वा। योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥ ८० ॥ पूरणे कूपवापीनां वृक्षच्छेदनपातने। विक्रीणीते अपि ह्यश्वं गोवध तस्य निर्दिशेत् ॥ ८१ ॥ पादेऽङ्गरोमवपनं द्विपादे श्मश्रु केवलम्। तृतीये तु शिखावर्जं शिखाछेदश्चतुर्थके ॥ ८२ ॥ चण्डालोदकसंस्पर्शे स्नानं येन विधीयते। तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥ ८३ ॥ चण्डालघटभाण्डस्थं यत्तोयं पिबते द्विजः। तत्क्षणात्क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥ ८४ ॥ यदि न क्षिपते तोयं शरीरे तस्य जीर्यति। प्राजापत्यं न दातव्यं कृच्छ्रं सांतपनं चरेत् ॥ ८५ ॥ चरेत्सांतपनं विप्रः प्राजापत्यं तु क्षत्रियः। तदर्धं तु चरेद्वैश्यः पादं शूद्रे तु दापयेत् ॥ ८६ ॥ रजस्वला यदा स्पृष्टा श्वानसूकरवायसैः। उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ ८७ ॥ आजानुतः स्नानमात्रमानाभेस्तु विशेषतः। अत ऊर्ध्वं त्रिरात्रं स्योन्मदिरास्पर्शने मतम् ॥ ८८ ॥ बालश्चैव दशाहे तु पञ्चत्वं यदि गच्छति। सद्य एव विशुध्येत नाशौचं नोदकक्रिया ॥ ८९ ॥ शावसूतक उत्पन्ने सूतकं तु यदा भवेत्। शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी ॥ ९० ॥ षष्ठेन शुध्येतैकाहं पञ्चमे त्व(त्र्य)हमेव तु। चतुर्थे सप्तरात्रं स्यात्त्रिपुरुषं दशमेऽहनि ॥ ९१ ॥ मरणारब्धमाशौचं संयोगो यस्य नाग्निभिः। आदाहात्तस्य विज्ञेयं यस्य वैतानिको विधिः ॥ ९२ ॥ आममासं घृतं क्षौद्रं स्नेहाश्च फलसंभवाः। अन्त्यभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयः स्मृताः ॥ ९३ ॥ मार्जनीरजमेप(पा)ण्ड स्नानस्नघटोदकम्। नवाम्भसि तथा चैव हन्ति पुण्यं दिवाकृतम् ॥ ९४ ॥ दिवा कपित्थच्छायायां रात्रौ दधिशमीषु च। धात्रीफलेषु सर्वत्र अलक्ष्मीर्वसते सदा ॥ ९५ ॥ यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः। तत्र तत्र तिलैर्होमो गायत्र्यष्टशतं जपेत् ॥ ९६ ॥

इति लिखितर्षिप्रोक्तं धर्मशास्त्रं समाप्तम् ॥

समाप्तेयं लिखितस्मृतिः।

१ ख. ग °णीत गजं चाश्वं। २ क. °र्जं चतुर्थे तु शिखा छिदेत्। च°। ख ग. °र्जं चतुर्थे तु शिखावप.। च°। ३ ख ग °दि नोत्क्षिप्यते। ४ ख ग °ति। अजानत.। ५ ख. ग. °स्यात्तदीयस्य°। ६ ख. मत.। ७ क. शुध्यत्येका°। ८ ख °मेष्वहमे°। ९ ख. ग °रुपे द°। १० क. °नि। अदाहारभ्यमा°। ११ ग. °जसा सक्ते स्ना°। १२ क °मेपाण्डास्ना°। १३ ख. ग. °दके। न°। १४ ख. ग. °धिषु सक्तुषु। धा°। १५ ङ. सप्तम्यामल°।

ॐ तत्सद्ब्रह्मणे नमः ।

# वसिष्ठस्मृतिः ।

( तत्र प्रथमोऽध्यायः । )

अथातः पुरुषनिःश्रेयसार्थे[1] धर्मजिज्ञासा[2] ॥ १ ॥ ज्ञात्वा चानुतिष्ठन्धार्मिकः प्रश-स्यतमो भवति लोके, प्रेत्य[3] च[4] स्वर्गं लोकं समश्नुते ॥ २ ॥ श्रुतिस्मृतिविहितो धर्मः ॥ ३ ॥ तदलाभे शिष्टाचारः प्रमाणम्[5] ॥ ४ ॥ शिष्टः पुनरकामात्मा ॥ ५ ॥ अगृह्य-माणकारणो धर्मः ॥ ६ ॥ आर्यावर्तः प्रागादर्शात्[6]प्रत्यक्कालकवनादुदक्पारियात्राद्द-क्षिणेन हिमवत उत्तरेण च विन्ध्यस्य[7] ॥ ७ ॥ तस्मिन्देशे ये धर्मा ये चाऽऽचारास्ते सर्वत्र[8] प्रत्येतव्याः ॥ ८ ॥ न[9] त्वन्ये प्रतिलोमकल्प[10]धर्माणः[11] ॥ ९ ॥ एतदार्यावर्तमि-त्याचक्षते ॥ १० ॥ गङ्गायमुनयोरन्तरे[12]ऽप्येके ॥ ११ ॥ यावद्वा कृष्णमृगो विचरति तावद्ब्रह्म[13]वर्चस[14]मित्यन्ये ॥ १२ ॥ अथापि भाल्लविनो[15] निदाने[16] गाथामुदाहरन्ति ॥ १३ ॥ पश्चात्सिन्धु[17]र्विहरिणी सूर्यस्योदयनं पुरः[18] । यावत्कृष्णोऽभिधावति तावद्वै ब्रह्मवर्चसम्[19] ॥ १४ ॥ त्रैविद्यवृद्धा यं ब्रूयुधर्मं धर्मविदो जनाः[20] । पवने पावने चैव स धर्मो नात्र संशय इति ॥ १५ ॥ देशधर्मजातिधर्मकुलधर्मा[21]ञ्श्रुत्यभावादब्रवीन्मनुः ॥ १६ ॥ सूर्याभ्युदितः सूर्याभिनिर्मुक्तः कुनखी श्यावदन्तः[22] परिवित्तिः परिवेत्ताऽग्रेदिधिषूप-तिर्वीरहा ब्रह्मोज्झ[23] इत्येनस्विनः ॥ १७ ॥ पञ्च महापातकान्याचक्षते ॥ १८ ॥ गुरुतल्पं सुरापानं भ्रूणहत्या ब्राह्मणसुवर्णापहरणं पतितसंयोग[24]श्च[25] ॥ १९ ॥ ब्राह्मेण वा यौनेन वा ॥ २० ॥ अथाप्युदाहरन्ति ॥ २१ ॥ संवत्सरेण पतति पतितेन सहाऽऽचरन् । याजनाध्यापना[26]द्यौना[27]न्न तु गानासना[शना]दिति ॥ २२ ॥

१ घ. ङ छ. °सार्थेध° । २ ङ. छ °ज्ञासा ज्ञा° । ३ ग. °त्यवावि° । ४ ख. घ. ङ. छ. °च वि° । ५ ख. ग. घ. ङ. °म् दक्षि° । ६ क °दर्शनात्प्रत्यक्कालचना° । ७ ख. ग. °स्य ये ध° । घ ङ. °स्य च ये धु° । ८ ख, ग ङ. छ सर्वे प्र° । ९ ख घ छ नह्यन्ये । १० च °कवर्माणाम् । ग°। ११ ग. °धर्मा°। ए° । १२ ख. ग. घ ङ °न्तराप्ये° । १३ क °ब्रह्मावर्तमि° । १४ ख ग घ. ङ. छ. °मिति । अ° । १५ क. °विभोनि° । १६ घ. ङ °नो गा° । १७ च °विधारणी । १८ ख पुन । ग पुरा । छ. भुव. । १९ क. °ब्रह्म. । त्रै° । २० क. °नाः । यजने पावने चै° । २१ ङ °र्मानभा° । २२ ग °दण्ड । परिवि° । २३ ख. ब्रह्मघ्न इत्येत एन° । ग. ब्रह्मघ्न इत्येत एन° । २४ ख ग. घ ङ °संप्रयो° । २५ क, ख. °योगं च मा° । २६ क. °नादानान्न । २७ ख. ग. °नादन्नपानासदपि । घ. ङ छ. °नात् ।

+ योऽग्नीनपविध्येद्गुरुं च यः प्रतिजघ्नुयान्नास्तिको नास्तिकवृत्तिः सोमं च विक्रीणीयादित्युपपातकानि ॥ २३ ॥ तिस्रो ब्राह्मणस्य भार्या वर्णानुपूर्व्येण,[1] द्वे राजन्यस्य, एकैका वैश्यशूद्रयोः ॥ २४ ॥ शूद्रामप्येके,[2] मन्त्रवर्जं तद्वत् ॥ २५ ॥ तथा न कुर्यात् ॥ २६ ॥ अतो हि ध्रुवः कुलापकर्षः[3] प्रेत्य चास्वर्गः ॥ २७ ॥ षड्विवाहाः ॥ २८ ॥ ब्राह्मो दैव आर्षो गान्धर्वः क्षात्रो मानुषश्चेति ॥ २९ ॥ इच्छत उदकपूर्वं यां दद्यात्स ब्राह्मः ॥ ३० ॥ यज्ञतन्त्रे वितत ऋत्विजे कर्म कुर्वते कन्यां दद्यादलंकृत्य यं[4] दैवमित्याचक्षते ॥ ३१ ॥ गोमिथुनेन चाऽऽर्षः ॥ ३२ ॥ सकामां काममानः सदृशीं यो[5] निमु(रु)ह्यात्स गान्धर्वः ॥ ३३ ॥ यां बलेन सहसा प्रमथ्य हरन्ति स क्षात्रः ॥ ३४ ॥ पणित्वा[6] धनक्रीतां स मानुषः ॥ ३५ ॥ तस्माद्दुहितृमतेऽधिरथं शतं देयमितीह क्रयो विज्ञायते ॥ ३६ ॥ या पत्युः क्रीता सत्यथान्यैश्चरतीति[7] ह चातुर्मास्येषु ॥ ३७ ॥ अथाप्युदाहरन्ति—॥ ३८ ॥ विद्या[8] प्रनष्टा पुनरभ्युपैति[9] जाति[10]प्रणाशे त्विह सर्वनाशः। कुलापदेशेन हयोऽपि पूज्यस्तस्मात्कुलीनां स्त्रियमुद्वहन्ति। इति ॥ ३९ ॥ त्रयो वर्णा ब्राह्मणस्य वशे[11] वर्तेरन्[12] ॥ ४० ॥ तेषां ब्राह्मणो धर्मान्[13]प्रब्रूयात्[14] ॥ ४१ ॥ तं राजा चानु[15]शिष्यात् ॥ ४२ ॥ राजा तु धर्मेणानुशासत्[16]षष्ठं षष्ठं धनस्य हरेत् ॥ ४३ ॥ अन्यत्र ब्राह्मणात् ॥ ४४ ॥ इष्टापूर्तस्य तु षष्ठमंशं[17] भजतीति ह ब्राह्मणो वेदमाढ्यं[18] करोति, ब्राह्मण आपद उद्धरति तस्माद्ब्राह्मणो[19]ऽनाद्यः ॥ ४५ ॥ सोमोऽस्य राजा भवतीति ह प्रेत्य चाऽऽभ्युदयिकमिति ह विज्ञायते[20] ॥ ४६ ॥

इति वासिष्ठे धर्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

(अथ द्वितीयोऽध्यायः।)

चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः ॥ १ ॥ त्रयो वर्णा द्विजातयो ब्राह्मणक्षत्रियवैश्याः ॥ २ ॥ तेषां मातुरग्रे[21]ऽधिजननं द्वितीयं मौञ्जीबन्धने[22][23] ॥ ३ ॥

+ इत आरभ्य चातुर्मास्येष्वित्यन्तग्रन्थो न विद्यते ख. ग. घ. ङ छ. पुस्तकेषु।

१ च. °पूर्वेण। २ क. °प्येकमन्त्रवर्ज तद्व तथा। ३ क. °कर्षाः प्रे°। ४ क तं। ५ क यो न मुच्यात्स। ६ क पाणित्वा। ७ क. °तीह चातुर्मास्ये। अ°। ८ ग. °द्या विनाशे पु°। ९ ग. °तिज्ञाति°। १० च. °तिकुलप्र°। ११ च निर्देशेन। १२ च °न्। त्रा°। १३ ख. घ. ङ छ. °र्मान्यद्ब्रूया°। १४ क. ग तत्। १५ ख ग °नुतिष्ठेत्। १६ च. °ष्ठं ध°। १७ क. °शं हरति भ°। १८ च. °माढ्यं क°। १९ क. °णो राय सो°। २० च. °ते ह विज्ञायत इति। वा°। २१ च. °ग्रे विज°। २२ ग. °न्धनम्। त°। २३ च, °ने। अत्रा°।

तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ ४ ॥ वेदप्रदानात्पितेत्याचार्यमा- चक्षते ॥ ५ ॥ अथाप्युदाहरन्ति ॥ ६ ॥ द्वय[1]मु वै ह [2]पुरुष[3]स्य रेतो ब्राह्मणस्योर्ध्वं नाभे[4]रर्वाचीनम[5]न्य[6]द्यद्यदूर्ध्वं नाभेस्तेनास्यानौरसी प्रजा जायते ॥ ७ ॥ [7]यदुपनयति जनन्यां जनयति यत्साधू करो[8]ति ॥ ८ ॥ [9]अथ यदर्वाचीनं नाभेस्तेनेहास्यौरसी प्रजा जाय[10]ते ॥ ९ ॥ तस्माच्छ्रोत्रियमनूचानम[11]प्रजोऽसीति न वदन्तीति ॥ १० ॥ हारीतोऽप्युदाहरति ॥ ११ ॥ [12]न [13]ह्यस्य विद्यते कर्म किंचिदामौञ्जिबन्धनात् । वृत्त्या शूद्रस[14]मो ज्ञेयो यावद्वेदे न जायत इति ॥ १२ ॥ अन्य[15]त्रोदककर्मस्वधापितृसंयुक्तेभ्यः ॥ १३ ॥ विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिस्तेऽहमस्मि । असूयका- यानृजवेऽ[16]यताय न मां ब्रूया वीर्यवती तथा स्याम् ॥ १४ ॥ * यमेव [17]विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् । यस्तेन द्रुह्येत्कतमच्च नाह तस्मै[18] मां ब्रूया[19]निधिपाय ब्रह्मन् ॥ १५ ॥ य [20]आतृणत्त्यवितथेन कर्मणा बहुदुःखं [21]कुर्वन्नमृतं संप्र- यच्छन् । तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्च ना[22]हं ॥ १६ ॥ अध्यापिता ये गुरुं नाऽऽद्रियन्ते विप्रा वाचा मनसा कर्मणा वा । यथैव ते न गुरोर्भोजनी- यास्तथैव तान्न भुनक्ति श्रुतं तत् ॥ १७ ॥ दहत्यग्निर्यथा कक्षं ब्रह्म[23]पृष्टमनादृतम् । न ब्रह्म तस्मै प्रब्रूया[24]च्छक्यं मानमकुर्वत इति ॥ १८ ॥ षट्कर्माणि ब्राह्मण[25]स्य ॥ १९ ॥ स्वाध्यायाध्ययनमध्यापनं [26]यजनं याजनं दानं प्रतिग्रहश्चेति ॥ २० ॥ त्रीणि राजन्यस्य ॥ २१ ॥

---

* इत आरभ्य ब्रह्मन्नित्यन्तग्रन्थ श्रुतं तदित्यस्मात्परं विद्यते ख. ग. घ ङ. छ. पुस्तकेषु ।

---

१ ख. ग. घ. ङ. छ. °यमिह वै पु° । २ च. °मुह वै पु° । ३ ख. घ. ङ. छ. °स्य यतो । ४ क. °रन्यदर्वा° । च. °रधस्तादवाचीनमन्यत्तद्यदूर्ध्वं नाभेस्तेन हैतत्प्रजाजा° । ५ ख. ग. घ. °मन्येत तद्य° । ६ ङ. छ. °न्यते तद्य° । ७ च यद्ब्राह्मणानुपनयति, यदध्यापयति, यद्याजयति यत्साधु क° । ८ क. ग. °ति । यत्साधुक° । ९ क अथान्यद° । १० ग. °ते जनन्या जनयति । त° । ११ ख.. ग छ. °मपूज्योऽसीति न वदन्तीति हारीता । अथाप्युदाहरन्ति । न° । घ ङ. °मपूज्योऽसीति न वदन्तीति हारीताः । अथा- दिरुदाहरन्ति । न° । १२ ग न त्वस्य । १३ च ह्यस्मिन्विद्य° । १४ च °मो ह्यपे या । १५ क. °न्यदे- वोद° । १६ ख ग. °वेऽव्रताय । १७ ग °विद्याच्छुचि । १८ क घ. ङ °स्मै मा ब्रू° । १९ ग. ट. °यान्निधि° । २० क. ख आतृणेत्यवि° । २१ ख ग कुर्वस्त्वमृ° । २२ ख ग. °हम् । आ° । २३ ख. ग. °ह्मत्वब्दम° । घ. ङ छ. °ह्मचष्टम° । २४ ख. ग. घ. ङ. छ. °च्छक्यमानमकृन्तत । २५ ख. ग. घ. ङ. छ. °स्य । अध्य° । २६ च यज्ञो ।

अध्ययनं यजनं[1] दानं च शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत् ॥ २२ ॥ एता-न्येव[2] त्रीणि वैश्यस्य, कृषिर्वाणिज्यं पाशुपाल्यं कुसीदं च[3] ॥ २३ ॥ एतेषां परि-चर्या[4] शूद्रस्य[5] ॥ २४ ॥ अनियता वृत्तिः[6] ॥ २५ ॥ अनियतकेशवेशाः[7] सर्वेषां[8] मुक्त-शिखावर्जम् ॥ २६ ॥ अजीवन्तः स्वधर्मेणानन्तरां[9] पापीयसीं[10] वृत्तिमातिष्ठेरन् ॥२७॥ न तु कदाचिज्ज्यायसीम्[11] ॥ २८ ॥ वैश्यजीविकामास्थाय पण्येन जीवतोऽश्मलवण मणि[12]शाणकौशेयक्षौमाजिनानि च तान्तवं[13] रक्तं सर्वं च कृतान्नं पुष्पफलमूलानि च गन्धरसा उदकं चौषधीनां रसः सोमश्च शस्त्रं च क्षीरं च सविकारमयस्त्रपु जतु सीसं च ॥ २९ ॥ अथाप्युदाहरन्ति ॥ ३० ॥ सद्यः पतति मांसेन लाक्षया लवणेन च । त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् । इति ॥ ३१ ॥ ग्राम्यपशूनामेकशफाः केशिनश्च सर्वे चाऽऽरण्याः पशवो वयांसि दंष्ट्रिणश्च ॥ ३२ ॥ धान्यानां तिलानाहुः ॥ ३३ ॥ अथाप्युदाहरन्ति ॥ ३४ ॥ भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः । कृमिभूतः स विष्ठायां पितृभिः सह मज्जति । इति ॥ ३५ ॥ कामं वा स्वयं कृष्यो-त्पाद्य तिलान्विक्रीणीरन् ॥ ३६ ॥ * तस्मात्साण्डाभ्यां[14] सनस्योताभ्यां प्राक्प्रातरा[15]-शा[16]त्कर्षी स्यात् ॥ ३७ ॥ निदाघेऽपः[17] प्रयच्छेत्[18] ॥ ३८ ॥ नातिपीडयेल्लाङ्गलं[19] पवी-रवत्सुशेवं सोमपित्सरु तदुद्वपति गामविं[20] चाजानश्वानश्वतरखरोष्ट्रांश्च प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहनमिति ॥ ३९ ॥ लाङ्गलं पवीरवद्वीरवत्[21]सुमनुष्यवदनडुद्वत्[22]सु-शेवं कल्याणनासिकं कल्याणी ह्यस्य । नासिका नासिकयोद्वपति दूरेऽपविध्यति, सोमपित्सरु सोमो ह्यस्य प्राप्नोति, सत्सरु तदुद्वति, गां चाविं चाजानश्वानश्वतरख-रोष्ट्रांश्च प्रफर्व्यं च पीवरीं दर्शनीयां कल्याणीं च प्रथमयुवतीम् ॥ ४० ॥ कथं हि लाङ्गलमुद्वपेदन्यत्र धान्यविक्रयात् ॥ ४१ ॥

---

* इत आरभ्य लाङ्गलमुद्वपेदित्यन्तग्रन्थो न विद्यते ग. पुस्तके ।

---

१ च यज्ञो । २ च. °व वै° । ३ च. ते । ४ च °स्य नि° । ५ क च. °ता च वृ° । ६ क. च. °त्तिः । नि° । ७ च. °वेषाः सर्वे या मुक्तकेशा शि° । ८ क. °वें चामुक्तकेश (शा )शि° । ९ ख °णान्यतरा । ग. °णान्यतरामपा° । १० च. यवीयसीम् । ११ ग °चित्पापीय° । १२ ख. ग. °मपण्यं पाषाणकौपक्षौ° । छ. °मपाप्यपाषाणक्षौ° । १३ ख. घ. ङ. छ. °न्तवस्य र° । १४ क. °स्याभाण्डारयामनं स्फोतास्यां प्रा° । °स्मादाभ्या मन° । च. °स्मात्सण्डाभ्यामनस्यूता° । छ. °स्मात्साहभ्या । १५ क. °राशौ केशी स्या° । १६ ख. छ °शाकेशीस्या° । १७ क. ख. घ. ङ. छ. °ये य. प्रयच्छेत ना° । १८ च. °त् । लाङ्गलं पवी° । १९ ख, घ. ङ. छ, °डनलाङ्ग° । २० च, °विं प्रफ° । २१ क. °वन्सनु° । २२ क. °द्वन्मुखेकल्याण° ।

रसा रसैर्महतो हीनतो वा निमातव्या न त्वेव लवणं रसैः ॥ ४२ ॥ तिलतण्डुलपक्वान्नं विद्या मनुष्याश्च विहिताः परिवर्तकेन ॥ ४३ ॥ ब्राह्मणराजन्यौ वार्धुषान्नं नाद्याताम् ॥ ४४ ॥ अथाप्युदाहरन्ति ॥ ४५ ॥ समर्घं धान्यमुद्धृत्य महार्घं यः प्रयच्छति। स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥ ब्रह्महत्यां च वृद्धिं च तुलया समतोलयत्। अतिष्ठद्भ्रूणहा कोट्यां वार्धुषिः समकम्पत। इति ॥ ४६ ॥ कामं वा परिलुप्तकृत्याय पापीयसे दद्याताम् ॥ ४७ ॥ द्विगुणं हिरण्यं त्रिगुणं धान्यम् ॥ ४८ ॥ धान्येनैव रसा व्याख्याताः ॥ ४९ ॥ पुष्पमूलफलानि च ॥ ५० ॥ तुलाधृतमष्टगुणम् ॥ ५१ ॥ अथाप्युदाहरन्ति * ॥५२॥ राजानुमतभावेन द्रव्यवृद्धिं विनाशयेत् ॥५३॥ पुना राजाऽभिषेकेण द्रव्यवृद्धिं च वर्जयेत्। द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं स्मृतम् ॥ ५४ ॥ मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः। वसिष्ठवचनप्रोक्तां वृद्धिं वार्धुषिके शृणु। पञ्च माषास्तु विंशत्या एवं धर्मो न हीयते। इति ॥ ५५ ॥

इति वासिष्ठे धर्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

=====

(अथ तृतीयोऽध्यायः।)

---

अश्रोत्रिया अननुवाक्या अनग्नयो वा शूद्रसधर्माणो भवन्ति + ॥ १ ॥ मानवं चात्र श्लोकमुदाहरन्ति ॥ २ ॥ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ ३ ॥ नानृग्ब्राह्मणो भवति न वणिङ्न कुशीलवः। न शूद्रप्रेषणं कुर्वन्न स्तेनो न चिकित्सकः ॥ ४ ॥ अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः। तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदो हि सः ॥ ५ ॥ चत्वारोऽपि त्रयो वाऽपि यद्ब्रूयुर्वेदपारगाः। स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥६॥ अव्रतानाममन्त्राणां

---

* च. पुस्तके ग्रन्थव्यत्यासो वर्तते। + इत उत्तरं 'नानृग्ब्राह्मणो भवति' इत्यधिकं क. ग. घ. छ. पुस्तकेषु।

---

१ ख. ग. घ. ङ छ. रसैः समतो हान°। २ क. मा। ३ ख. ग. ङ. छ. °धान्मनु°। ४ क. घ. °र्धुषी न दद्या°। °र्धुषान्नं नाद्°। ५ च °समर्थं धनमु°। छ समार्घं। ६ ख. घ. ङ. छ °तं। वार्धुषिं-न्तारं तु°। ग. °तः वृद्धिं च भ्रूणहत्या च तु°। ७ ख घ. ङ. छ °र्धुषिनं व्यक°। ग. °र्धुषिर्न्यकपपात इ इ°। ८ क. °प्रश्चाल्पायु पा°। ९ ग घ ध °धात्। द्वि°। १० च °जातुमृत°। क °आनमृत°। ११ क. विभा गये°। १२ क °व्यमूलं तु वर्धते। द्वि°। च °व्यमूलं च वर्धते। व°। १३ ख. घ ङ. थान°। ग. °यानुवाका अ°। १४ ख. घ ङ. छ. कुशीदल°। ग. कुशीदजीवि। १५ च °पि यं ब्रूयु°।

जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं[1] न विद्यते ॥ ७ ॥ यद्वदन्ति[2] तमोमूढा मूर्खा धर्ममतन्द्रियम् । तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति[3] ॥ ८ ॥ श्रोत्रियायैव देयानि हव्यकव्यानि नित्यश. । अश्रोत्रियाय दत्तं[4] हि पितॄन्नैति न देवताः ॥ ९ ॥ यस्य चैव गृहे मूर्खो दूरे चैव बहुश्रुतः । बहुश्रुताय दातव्यं नास्ति मूर्खे[5] व्यतिक्रमः ॥ १० ॥ ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते । ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ ११ ॥ यत्र काष्ठमयो हस्ती यश्च चर्ममयो मृगः । यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥ १२ ॥ विद्वद्भोज्यान्यविद्वांसो येषु राष्ट्रेषु भुञ्जते[7] । तान्यनावृष्टिमृच्छन्ति महद्वा जायते भयम् । इति ॥ १३ ॥ अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेदधिगन्त्रे षष्ठमंशं प्रदाय ॥ १४ ॥ ब्राह्मणश्चेदधिगच्छेत्षट्कर्मसु वर्तमानो न राजा हरेत् ॥ १५ ॥ आततायिनं हत्वा नात्र प्राणच्छेत्तुः किंचित्किल्बिषमाहुः ॥ १६ ॥ षड्विधा ह्याततायिनः ॥ १७ ॥ अथाप्युदाहरन्ति ॥ १८ ॥ अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः ॥ १९ ॥ आततायिनमायान्तमपि वेदान्तपारगम् । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ २० ॥ स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् । न तेन भ्रूणहा स स्यान्मन्युस्तं मृत्युमृच्छति ॥ २१ ॥ त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्ण[8]वांश्चतुर्मेधा वाजसनेयी षडङ्गविद्ब्रह्मदेयानुसंतानश्छन्दोगो ज्येष्ठसामगो मन्त्रब्राह्मणविद्यः स्वधर्मानधीते यस्य दशपुरुषं मातृपितृवंशः श्रोत्रियो विज्ञायते विद्वांसः स्नातकाश्चैते पङ्क्तिपावना भवन्ति ॥ २२ ॥ चातुर्विद्यं[9] विकल्पी च अङ्गविद्धर्मपाठकः । आश्रमस्थास्त्रयो मुख्याः परिषत्स्याद्दशावरा[10] ॥ २३ ॥ उपनीय तु यः कृत्स्नं[11] वेदमध्यापयेत्स आचार्यः ॥ २४ ॥ यस्त्वेकदेशं स उपाध्यायो यश्च वेदाङ्गानि ॥ २५ ॥ आत्मत्राणे वर्णसंकरे[12] वा ब्राह्मणवैश्यौ शस्त्रमाददीयाताम् ॥ २६ ॥ क्षत्रियस्य तु तन्नित्यमेव रक्षणाधिकारात्[13] ॥ २७ ॥ प्राग्वोदग्वाऽऽसीनः प्रक्षाल्य पादौ पाणी चाऽऽमणिबन्धनात् ॥ २८ ॥ अङ्गुष्ठमूलस्योत्तरतो रेखा ब्राह्मं तीर्थं तेन त्रिराचामेदशब्दवद्भिः (दोषावद्भिः) परिमृज्यात् ॥ २९ ॥ खान्यद्भिः संस्पृशेत् ॥ ३० ॥

---

१ ख. घ. ड. छ. पर्षत्त्वं नैव वि° । २ ख. घ. ड. छ. °दन्त्यन्यथा भूत्वा मूर्खा धर्ममतद्विद. । त° ३ ख. ग. घ. ड. °द्वक्तृष्वनुग° । ४ ख. ग. घ ड दत्तानि तृप्तिं नाऽऽयान्ति दे° । ५ ख झ ड छ. मूर्खे । ६ ख. ग. घ. ड. °ज्यानि मानानि मूर्खा रा° । ७ ख. घ. ड छ °ते । तदन्नं नाशमायाति महच्चापि भयं भवेत् । अ° । ८ च. °र्णश्चतुर्मे° । ९ ख. घ. ड. °विंद्य वि° । ग. °विंद्योवि° । १० च. पर्षद्देशा दशा° । ११ ख. घ. ड. छ. शिष्यं । १२ ग. °संस्कारे । च. संवर्गे ब्रा° । १३ क. °रणा° ।

मूर्धन्यपो निनयेत् ॥ ३१ ॥ सव्ये च पाणौ, व्रजंस्तिष्ठञ्शयानः प्रणतो वा नाऽऽचामेत् ॥ ३२ ॥ हृदयंगमाभिरद्भिरबुद्बुदाभिरफेनाभिर्ब्राह्मणः कण्ठगाभिः क्षत्रियः शुचिः ॥ ३३ ॥ वैश्योऽद्भिः प्राशिताभिस्तु[1] स्त्रीशूद्रं[2] स्पृष्टाभिरेव च[3] ॥ ३४ ॥ पुत्र[4]दारादयोऽपि गोस्तर्पणाः स्युः ॥ ३५ ॥ न वर्णगन्धरसदुष्टाभिर्याश्च स्युरशुभागमाः ॥ ३६ ॥ न मुख्या विप्रुष उच्छिष्टं कुर्वन्त्यनङ्गश्लिष्टाः[5] ॥ ३७ ॥ सुप्त्वा भुक्त्वा पीत्वा[6] क्षुत्वा रुदित्वा स्नात्वा चाऽऽचान्तः पुनराचामेत् ॥३८॥ वासश्च परिधायौष्ठौ च संस्पृश्य यत्राऽलोमकौ न श्मश्रुगतो लेपः ॥ ३९ ॥ दन्तवद्दन्तसक्तेषु यच्चा[प्य]न्तर्मुखे भवेत् । आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः ॥४०॥ परानथाऽऽचामयतः पादौ या विप्रुषो गताः । * भूम्यास्तास्तु[7] समाः प्रोक्तास्ताभिर्नोच्छिष्टभाग्भवेत् ॥४१॥ ÷ प्रचरन्नभ्यवहार्येषूच्छिष्टं यदि संस्पृशेत् । भूमौ निक्षिप्य[8] तद्द्रव्यमाचान्तः प्रचरेत्पुनः ॥४२॥ यद्यन्मीमांस्यं स्यात्तत्तदद्भिः संस्पृशेत्[9] ॥४३॥ श्वहताश्च मृगा वन्याः पातितं च खगैः फलम् । बालैरनुपरिक्रान्तं[10] स्त्रीभिराचरितं च यत् ॥४४॥ प्रसारितं च यत्पण्यं ये दोषाः स्त्रीमुखेषु च । मशकैर्मक्षिकाभिश्च निलीयोनो(यैवो)पहन्यते[12] ॥४५॥ क्षितिस्थाश्चैव या आपो गवां[13] तृप्तिकराश्च याः । परिसंख्याय तान्सर्वाञ्शुचीनाह प्रजापतिः । इति ॥४६॥ लेपगन्धापकर्षणे[14] शौचममेध्यलिप्तस्याद्भिर्मृदा च ॥४७॥ तैजसमृन्मयदारवतान्तवानां भस्मपरिमार्जनप्रदाहतक्षणनिर्णेजनानि ॥ ४८ ॥ तैजसवदुपलमणीनां मणिवच्छङ्खशुक्तीनां दारुवदस्थ्नां रज्जुविदलचर्मणां चैलवच्छौचम् ॥४९॥ गोवालैः फलमयाना[16] गौरसर्षपकल्केन क्षौमजानाम् ॥ ५० ॥ भूम्यास्तु संमार्जनप्रोक्षणोपलेपनोल्लेखनैर्यथास्थानं[17] दोषविशेषात्प्रायत्यमुपैति ॥ ५१ ॥ अथाप्युदाहरन्ति ॥ ५२ ॥ खननाद्दहना-

---

* एतदर्धस्थानेऽयं पाठश्च. पुस्तके—" ताभिर्नोच्छिष्टतां यान्ति भूम्यास्तास्तु समाः स्मृताः " इति ।
÷ चरन्नभ्यवहारेष्विति पाठश्च. पुस्तके ।

---

१ घ. °ताभिः । स्त्री° । २ ख. ग. घ. ङ. °शूद्रौ स्पृ° । ३ क. च प्रदरादपियोग्योस्तर्पणास्यु° । घ. च प्रदरादपि या गोस्तर्पणसमर्थाः स्युः । ४ ख. ग. °त्रद्वारापियागास्तर्पणानि स्युः । ५ च °ङ्गस्पृष्टा° । ६ ख. ग. घ. °त्वा स्ना° । ७ घ. ङ. छ. °म्यातास्तास° । ८ ख समा ज्ञेयास्ता° । ९ च. निधाय । १० ङ. °त् । शुनाऽऽहता मृ° । ११ ख ग °पविद्धान्त. स्त्री° । १२ क. °लीनिर्नोप° । ग लीनोनोप° । च °लीनैर्नोप° । १३ ख. ग छ. °वा प्रीतिक° । १४ क °न्धानुक° । १५ ख ग घ ङ. °र्षणं शौ° । १६ ख. ग. °लवमसानां । १७ ख. ग. घ. °स्थाने दो° ।

द्वर्षाद्गोभिराक्रमणादपि । चतुर्भिः शुध्यते भूमिः पञ्चमाच्चोपलेपनात् । इति ॥५३॥ रजसा शुध्यते नारी नदी वेगेन शुध्यति । भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ॥५४॥ मद्यैर्मूत्रैः पुरीषैर्वा श्लेष्मपूयाश्रुशोणितैः । संस्पृष्टं नैव शुध्येत पुनः पाकेन मृन्मयम् ॥ ५५ ॥ अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति । विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥ ५६ ॥ अद्भिरेव काञ्चनं पूयते, तथा राजतम् ॥५७॥ अङ्गुलिकनिष्ठिकामूले दैवं तीर्थम् ॥ ५८ ॥ अङ्गुल्यग्रे मानुषम् ॥ ५९ ॥ पाणिमध्य आग्नेयम् ॥ ६० ॥ प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यम् ॥ ६१ ॥ रोचत इति सायं प्रातरैशीन्य(न)भिपूजयेत् ॥ ६२ ॥ स्वदितमिति पित्र्येषु ॥ ६३ ॥ संपन्नमित्याभ्युदयिकेषु ॥ ६४ ॥

इति वासिष्ठे धर्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

(अथ चतुर्थोऽध्यायः ।)

प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च ॥ १ ॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत, इति निगमो भवति॥२॥ गायत्र्या छन्दसा ब्राह्मणमसृजत्त्रिष्टुभा राजन्यं, जगत्या वैश्यं, न केनचिच्छन्दसा शूद्रमित्यसंस्कार्यो विज्ञायते ॥ ३ ॥ सर्वेषां सत्यमक्रोधो दानमहिंसा प्रजननं च ॥ ४ ॥ पितृदेवतातिथिपूजायां पशुं हिंस्यात् ॥ ५ ॥ मधुपर्के च यज्ञे च पितृदैवतकर्मणि । अत्रैव च पशुं हिंस्यान्नान्यथेत्यब्रवीन्मनुः ॥ ६ ॥ नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् । न प्राणिवधः स्वर्ग्यस्तस्माद्यागे वधोऽवधः ॥ ७ ॥ अथापि ब्राह्मणाय वा राजन्याय वाऽभ्यागताय वा महोक्षं वा महाजं वा पचेदेवमस्याऽऽतिथ्यं कुर्वन्तीति ॥८॥ उदकक्रियामशौचं च द्विवर्षात्प्रभृति मृत उभयं कुर्यात् ॥९॥

---

१ च. °स्यं पुन पाकेन मृन्मयम् । म° । २ ख घ. ङ. छ. °पाकान्महीमथ° । ३ घ. ङ. छ. पूयेत् । त° । ४ ख. ग रोचन्त इ° । ५ ख. ग. घ ङ. च. छ. °रशनान्य° । ६ च. °केष्वाभ्युदायिकेष्विति । इ° । ७ ख. ग. घ. ङ. °ते । त्रिष्वेव निवास स्यात्सर्वे° । ८ च °जायामप्येव पशुं हिंस्यादिति मानवम् । म° । ९ क. घ. ङ. छ °होक्षाणं वा म° । १० क. वा यजेद° । ११ च. °मस्मा आति° । १२ क. च. °ति । द°

दन्तजननादित्येके ॥१०॥ शरीरमग्निना संयोज्यानवे[1]क्ष्यमाणा अपो[2]ऽभ्यवयन्ति[3]॥११॥ स[4]व्येतराभ्यां पाणिभ्यामुदकक्रियां कुर्व[5]न्ति ॥ १२ ॥ अयुग्मा दक्षिणामुखाः ॥१३॥ पितृणां वा एषा दिक्, या दक्षिणा ॥ १४ ॥ गृहान्व्रजित्वा[6] प्रस्तारे त्र्यहमनश्नन्त आसीरन् ॥१५॥ अशक्तौ क्रीतोत्पन्नेन वर्तेरन्दशाहं शावमाशौचं सपिण्डेषु विधीयते[7] ॥१६॥ मरणात्प्रभृति दिवसगणना सपिण्डता तु सप्तपुरुषं विज्ञायते[8]॥१७॥ अप्रत्तानां स्त्रीणां त्रिपुरुषं[9] त्रिदिनं विज्ञायते ॥ १८ ॥ प्रत्तानामितरे कुर्वीरंस्तांश्च(?) तेषां जननेऽप्येवमेवं[10] तिपुणां शुद्धिमिच्छतां मातापित्रो[11]र्बीजनिमित्तत्वात् ॥ १९ ॥ अथाप्युदाहरन्ति ॥ २० ॥ नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छति। रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते, इति ॥ २१ ॥ *तच्चेदन्तः पुनरापतेच्छेषेण शुध्येरन् ॥ २२ ॥ रात्रिशेषे द्वाभ्यां, प्रभाते तिसृभिर्ब्राह्मणो दशरात्रेण पञ्चदशरात्रेण भू[12]मिपो विंशतिरात्रेण वैश्यः शूद्रो मासेन शुध्यति ॥ २३ ॥ अत्राप्युदाहरन्ति ॥ २४ ॥ आशौचे यस्तु शूद्रस्य सूतके वाऽपि भुक्तवान्। स गच्छेन्नरकं घोरं तिर्य[13]ग्योनिषु जायते। इति ॥ २५ ॥ [14]अनिर्दशाहे पक्वा[15]न्नं नियोगाद्यस्तु भुक्तवान्। कृमिर्भूत्वा स देहान्ते[16] तद्वि[17]ष्ठामुपजीवति ॥ २६ ॥ द्वादश मासान्द्वादशार्धमासान्वाऽनश्नन्संहितां[18]मधीयानः पूतो भवतीति विज्ञायते ॥ २७ ॥ ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमाशौचं सद्यः शौचमिति गौतमः ॥ २८ ॥ देशान्तरस्थे प्रेत ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रमाशौचम् ॥२९ ॥ आहिताग्निश्चेत्प्रवसन्म्रियेत पुनः संस्कारं कृत्वा शववच्छौचमिति गौतमः ॥ ३० ॥ यूपचितिश्मशानरजस्वलासूतिकाशु[19]चीनुपस्पृश्य सशिरा अभ्युपेयादप इति[20] ॥ ३१ ॥

इति वासिष्ठे धर्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

=====

* इत आरभ्य तिसृभिरित्यन्तग्रन्थ. ख. ग. घ. ङ. छ. पुस्तकेषु न विद्यते।

१ ख. ग. घ. च. छ. °वेक्षमा°। २ क °पो नय°। ३ ख. ग. ङ. छ °न्ति। ततस्तत्रस्था एव। सं°। ४ क. सव्योक्षरा°। ख. ग. ङ. छ. सव्योत्तरा°। ५ च कुर्वीरन्नयु°। ६ क °त्वाऽध· प्रस्तारे। ख. ग. घ. ङ. छ. °त्वा स्वस्ता°। ७ च. °ते। सपिण्डत्वं साप्त°। ८ च. °ते। प्रत्ताना। ९ क. च. °षं वि°। १० च. °वं स्यान्निपु°। ११ क. च. °त्रोर्वा तन्निमित्तत्वान्मातुरित्येके। अ°। १२ च राजन्य·। १३ च. °ग्योन्यां च. जा°। १४ क. अन्तर्दशाहे परराात्रे नि°। १५ च परशवे नियोगाद्भुक्तवान्द्विज·। कृ°। १६ च. °न्ते तां विष्ठा समुपाश्नुत इति। १७ क. तद्दिष्ठामु°। १८ क. च. °ताध्ययनम°। १९ च. °शुचींश्च स्पृष्ट्वा सशिरस्कोऽभ्यु°। २० च. इत्यप इति।

अथ पञ्चमोऽध्यायः ।

अस्वतन्त्रा स्त्री पुरुषप्रधाना ॥ १ ॥ अनग्निका[1]ऽनुदक्या वा अनृतमिति[2] विज्ञायते ॥ २ ॥ अथाप्युदाहरन्ति ॥ ३ ॥ पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रश्च[3] स्थाविरे[4] भावे न स्त्री स्वातन्त्र्यमर्हति ॥ ४ ॥ तस्या भर्तुरभिचार उक्तः[5] प्रायश्चित्त[6]रहस्येषु ॥ ५ ॥ मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥ ६ ॥ त्रिरात्रं रजस्वलाऽशुचिर्भवति, सा नाञ्ज्यान्नाभ्यञ्ज्यान्नाप्सु स्नायात्, अधः शयीत, दिवा न स्वप्यात्, नाग्निं स्पृशेत्, न रज्जुं सृजेत्, न दन्तान्धावयेत्, न मांसमश्नीयात्, न ग्रहान्निरीक्षेत, न हसेन्न किंचिदाचरेत्[7], अखर्वेण पात्रेण पिबेत्, अञ्जलिना वा पिबेत्, लोहितायसेन वा ॥ ७ ॥ विज्ञायते हीन्द्रस्त्रिशीर्षाणं त्वाष्ट्रं हत्वा पाप्मगृहीतो महत्तमाधर्मसंबद्धोऽहमित्येवमात्मानममन्यत, तं सर्वाणि भूतान्यभ्याक्रोशन्, भ्रूणहन्भ्रूणहन्भ्रूणहन्निति[8], स स्त्रिय उपाधावत्, अस्यै मे ब्रह्महत्यायै[9] तृतीयं भागं प्रतिगृह्णीतेति[10] गत्वैवमुवाच, ता अब्रुवन्, किं नोऽभूदिति[11], सोऽब्रवीद्वरं वृणीध्वमिति, ता अब्रुवन्नृतौ प्रजां विन्दामहा इति, कामया विजनितोः[12] संभवाम इति, *तथेति ताः प्रतिजगृहुस्तृतीयं भ्रूणहत्यायाः ॥ ८ ॥ सैषा भ्रूणहत्या मासि मास्याविर्भवति ॥ ९ ॥ तस्माद्रजस्वलान्नं[13] नाश्नीयात्[14] ॥ १० ॥ अतश्च भ्रूणहत्याया एवैषा[15] रूपं प्रतिमुच्याऽऽस्ते[16] कञ्चुकमिव ॥ ११ ॥ तदाहुर्ब्रह्मवादिनः ॥ १२ ॥ अञ्जनाभ्यञ्जनमेवास्या न प्रतिग्राह्यम् । तद्धि स्त्रिया अन्नमिति ॥ १३ ॥ तस्मात्तस्यां[17] तत्र[18] न च मन्यन्ते ॥ १४ ॥ आचारायाश्च योषित[19] इति सेयमुपयाति ॥ १५ ॥

---

*इत उत्तरमधिकं "यथेच्छयाऽऽप्रसवकालात्पुरुषेण सह मैथुनभावेन संभवाम इति एषोऽस्माकं वरस्तथेन्द्रेणोक्तास्ताः प्रतिजगृहुरिति" ख. ग. घ. ङ. पुस्तकेषु ।

---

१ ख. ग. °ग्निरतु° । घ. ङ. छ. °ग्निनमतु° । २ च. अमृत° । ३ क. ख. ग. पुत्राश्च । ४ क. ख. घ. ङ. च. स्थविरे । ५ क. उक्तप्रा° । च. उक्तं प्रायश्चित्तं र° । ६ घ. छ. °श्चित्तं र° । ७ च. °त् । नधावेदख° । ख. ग. घ. छ. °त् । न खर्वेण पिबेन्नाञ्जलिना वा न लो° । ८ ख. ग. °प्मना गृहीतोऽमन्यत इति । तं । ९ च. भ्रूणहत्यायै । १० क. च. °ति ता अ° । ११ च. भूयादि° । १२ ख. ग. विजानीमोऽलं भ° । १३ क. च. °लाया अन्नं । १४ क. च. °त । भ्रू° । १५ ख. ग °वैतद्रूपं । १६ क. च. °स्ते त° । १७ च. °त्तस्यै च तत्र च वीभत्सन्ते मेयमुपागादिति । उ° । छ. °त्तस्य तत्र न वा भत्संन्ते । १८ क. त्र च वीभत्स्यन्ते मेध उपागादिति । उद° । १९ छ. योऽधिक...मेधमु° ।

उदक्यास्त्वासते येषां ये च केचिदनग्नयः । कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रधर्मिण इति ॥ १६ ॥

इति वासिष्ठे धर्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः ।

---

आचारः परमो धर्मः सर्वेषामिति निश्चयः । हीनाचारपरीतात्मा प्रेत्य चेह विनश्यति ॥ १ ॥ नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणाः । हीनाचारमितो भ्रष्टं तारयन्ति कथंचन ॥ २ ॥ आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः । छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः ॥ ३ ॥ * आचारहीनस्य तु ब्राह्मणस्य वेदाः षडङ्गास्त्वखिलाः सयज्ञाः । कां प्रीतिमुत्पादयितुं समर्था अन्धस्य दारा इव दर्शनीयाः ॥ ४ ॥ नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम् । द्वे(अ)क्षरे सम्यगधीयमाने पुनाति तद्ब्रह्म यथावदिष्टम् ॥ ५ ॥ दुराचारो हि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ ६ ॥ आचारात्फलते धर्ममाचारात्फलते धनम् । आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम् ॥ ७ ॥ सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः । श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ ८ ॥ आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदा तु कार्याः । वाग्बुद्धिकार्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्ये ॥ ९ ॥ उभे मूत्रपुरीषे तु दिवा कुर्यादुदङ्मुखः । रात्रौ कुर्याद्दक्षिणास्य एवं ह्यायुर्न हीयते ॥ १० ॥

---

* इत आरभ्य यथावदिष्टमित्यन्तग्रन्थो न विद्यते घ. ङ. छ. पुस्तकेषु ।

---

१ ख. ग. तेषां । २ ख. ग. घ. ङ. °यः । गृहस्थाः श्रोत्रिया ये° । ३ च. °ति । सर्वे ते शूद्रधर्मिण इति । इति प° । ४ क. °रः प्रथमो । ५ ग °चाराश्रितं भ्र° । ६ ख. ग. सपक्षाः । ७ ख. ग. °म् । तमा॰ क्षरे । ८ क. °था इपद्वा. । दु° । ज. °था इपेव्दाः । दु° । ९ ख. घ. °चारः । फल° । १० क. °पि समुदा° । ११ ख. ग. घ. छ. °द्धिवीर्या° । १२ क. °त्रौ दक्षिणामुखः कुर्यादेवं । च °त्रौ तु दक्षिणा कुर्यादेवं । १३ क. रिष्यते । ग. रिच्यते । च. रिष्याति ।

प्रत्यग्निं प्रति सूर्यं च प्रति गां प्रति च द्विजम् । प्रति सोमोदकं संध्यां प्रज्ञा नश्यति मेहतः ॥११॥ न नद्यां मेहनं कार्यं न भस्मनि न गोमये । न वा कृष्टे[3] न मार्गे च नोप्ते क्षेत्रे न शाड्वले॥१२॥ छायायामन्धकारे वा रात्रावहनि वा द्विजः । यथासुखमुखः कुर्यात्प्राणवाधाभयेषु च ॥१३॥ उद्धृताभिरद्भिः कार्यं कुर्यात्स्नानमनुद्धृताभिरपि ॥१४॥ आहरेन्मृत्तिकां विप्रः कुलात्ससिकतां[6] तथा । अन्तर्जले देवगृहे वल्मीके मूषकस्थले कृतशौचावशिष्टा च न ग्राह्याः पञ्च मृत्तिकाः ॥ १५ ॥ एका लिङ्गे करे तिस्र उभाभ्यां द्वे तु मृत्तिके । पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ॥ १६ ॥ एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः । वानप्रस्थस्य त्रिगुणं यतीनां च चतुर्गुणम् ॥ १७ ॥ अष्टौ ग्रासा मुनेर्भक्तं वानप्रस्थस्य षोडश । द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥ १८ ॥ अनड्वान्ब्रह्मचारी च आहिताग्निश्च ते त्रयः । भुञ्जाना एव सिध्यन्ति नैषां सिद्धिरनश्नताम्[12] + ॥ १९ ॥ योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम् । विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्[13] ॥ २० ॥ ये शान्तदान्ताः श्रुतिपूर्णकर्णा जितेन्द्रियाः प्राणिवधान्निवृत्ताः । प्रतिग्रहे संकुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ २१ ॥ नास्तिकः पिशुनश्चैव कृतघ्नो दीर्घरोषकः । चत्वारः कर्मचाण्डाला जन्मतश्चापि पञ्चमः ॥ २२ ॥ दीर्घवैरमसूया च असत्यं ब्रह्मदूषणम् । पैशुन्यं निर्दयत्वं च जानीयाच्छूद्रलक्षणम् ॥ २३ ॥ किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम् । पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥ २४ ॥ शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः । जुह्वन्वाऽपि जपन्वाऽपि गतिमूर्ध्वां न विन्दति ॥ २५ ॥ शूद्रान्नेनोदरस्थेन[15] यः कश्चिन्म्रियते द्विजः । स भवेत्सूकरो ग्राम्यस्तस्य वा जायते कुले ॥ २६ ॥ शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति । यस्यान्नं तस्य ते पुत्रा न च

---

+ इत उत्तरमेतद्वचनमधिकं ख. ग. पुस्तकयोः—"तपोदानोपहारेषु व्रतेषु नियमेषु च । इज्याध्ययनधर्मेषु यो नाऽऽसक्तः स निष्क्रियः" इति ।

---

१ घ. छ. चैव । २ च. °नं कुर्यान्न पथि न च भस्मनि । न गोमये न कृष्टे नोप्ते न शाड्वलोपजीव्यच्छायासु । छा° । ३ क. °ष्टे नोप्ते न शाड्वलोपजीव्यच्छायासु । छा° । ४ ख. ग. घ. छ. °वाधभ° । ५ ग. °र्योत्स्नान° । ६ क. ख. छ. °कतात° । च °कतां तु या । अ° । ७ क. ख. ग. मूपिक° । ८ च. उभयोर्मृद्द्वयं स्मृतम् । प° । ९ च. पञ्च पादे द° । १० घ. छ. मुनेर्भुक्तं । ११ च. अश्नन्त । १ च. °म् । व्रतेषु नियमेषु चेज्याध्ययनधर्मेषु । यो° । १३ ख. ग. °म् । सर्वत्र दा° । १४ ख. ग. छ. असूयकः । १५ च. °न यदि कश्चिन्मृतो द्वि° ।

स्वर्गार्हको[1] भवेत् ॥ २७ ॥ स्वाध्यायोत्थं[2] योनिमन्तं प्रशान्तं वैतानस्थं[3] पापभीरुं बहुज्ञम्। स्त्रीषु[4] क्षान्तं धार्मिकं गोशरण्यं व्रतैः क्षान्तं[5] तादृशं पात्रमाहुः ॥ २८ ॥ आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु । विनश्येत्पात्रदौर्बल्यात्तच्च[6] पात्रं रसाश्च ते ॥ २९ ॥ एवं गां च हिरण्यं च वस्त्रमश्वं महीं तिलान्। अविद्वान्प्रतिगृह्णानो भस्मी भवति दारुवत् ॥ ३० ॥ नाङ्गनखवादनं[7] कुर्यान्नखैश्च भोजनादौ ॥ ३१ ॥ न चापोऽञ्जलिना पिबेत् ॥ ३२ ॥ न पादेर्न[8] पाणिना वा जलमभिहन्यान्न जलेन जलम् ॥ ३३ ॥ नेष्टकाभिः फलानि पातयेत् ॥ ३४ ॥ न फलेन फलं न कल्को[9] न कुहको भवेत् ॥ ३५ ॥ न म्लेच्छभाषां शिक्षेत् ॥ ३६ ॥ अथाप्युदाहरति॥३७॥ न पाणिपादचपलो न नेत्रचपलो भवेत्। नं[10] चाङ्गचपलो विप्र इति शिष्टस्य गोचरः ॥३८॥ पारम्पर्यागतो येषां वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ ३९ ॥ यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् *। न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मण इति ॥ ४० ॥

इति वासिष्ठे धर्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

अथ सप्तमोऽध्यायः ।

चत्वार आश्रमा ब्रह्मचारी( रि )गृहस्थवानप्रस्थपरिव्राजकाः ॥ १ ॥ तेषां वेदमधीत्य वेदौ वा वेदान्वाऽविशीर्णब्रह्मचर्यो[11] यमिच्छेत्तमावसेत् ॥ २ ॥ ब्रह्मचार्याचार्यं[12] परिचरेत् ॥ ३ ॥ आ शरीरविमोक्षात्[13][14] ॥ ४ ॥ आचार्ये[15] प्रमीतेऽग्निं परिचरेत् ॥ ५ ॥ विज्ञायते हि तवाग्निराचार्य इति ॥ ६ ॥ संयतवाक्चतुर्थषष्ठाष्टमकालभोजी भैक्षमाचरेत् ॥ ७ ॥ गुर्वधीनो जटी( टि )लः शिखाजटो वा गुरुं गच्छन्तमनुगच्छेत्[16] ॥ ८ ॥ आसीनं[17] च तिष्ठञ्शयानं चाऽऽसीन उपासीत[18] ॥ ९ ॥ आहूताध्यायी सर्वं[19]

* एतदनन्तरं सकलादर्शपुस्तकेषु "न वृत्त न च हुमृतम्" इति वाक्यमधिकम्।

१ च °र्गारुहो भ° । २ क ख °ध्यायाढ्यं योनिमित्र प्र° । ३ ख ग. चैतन्यस्थ । ४ ख. ग. स्त्रीशुश्रूषां धा° । ५ क स्नातं । च छ क्लान्तं । ६ च °ल्यान्न च पा° । ७ ख. घ छ. नाङ्गं नवरं वादित्रं कुर्यान्न चा° । ८ ख ग °न न पाणिना वा राजानम° । ९ ख ग नल्कपुटको । १० च न च वागङ्गचपल इ° । ११ क र्योऽध्याय° । ख ग घ छ °र्योऽपनिक्षेप्तुमा° । १२ क च. °ब्रह्मचर्या° । १३ घ. विक्षेपात् । आ° । १४ च मोक्षणात् । आ° । १५ च °र्ये च प्रेतेऽग्निं । १६ च. °गच्छन्नासीनं चैतिष्ठन्श° । १७ ख. ग घ. °नं चानुतिष्ठेत गया° । १८ ग घ छ. उपवसेत् । १९ ख. ग. घ. सर्वमेद्य नि° ।

त्वमं निवेद्य तदनुज्ञया भुञ्जीत ॥ १० ॥ खट्वाशयनदन्तप्रक्षालनाञ्जनाभ्यञ्जनोपानच्छत्रवर्जी तिष्ठेदहनि रात्रावासीत ॥ ११ ॥ त्रिःकृत्वोऽभ्युपेयादपोऽभ्युपेयादप इति ॥ १२ ॥

इति वासिष्ठे धर्मशास्त्रे सप्तमोऽध्यायः ॥ ७ ॥

अथाष्टमोऽध्यायः ।

गृहस्थो विनीतक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वाऽसमानार्षामस्पृष्टमैथुनां यवीयसीं सदृशीं भार्यां विन्देत ॥ १ ॥ [न] पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः ॥२॥ वैवाह्यमग्निमिन्धीत ॥ ३ ॥ सायमागतमतिथिं नावरुन्ध्यात् ॥ ४ ॥ नास्यानश्नन्गृहे वसेत् ॥ ५ ॥ यस्य नाश्नाति वासार्थी ब्राह्मणो गृहमागतः । सुकृतं तस्य यत्किंचित्सर्वमादाय गच्छति ॥ ६ ॥ एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥७॥ नैकग्रामीणमतिथिं विप्रं सांगतिकं तथा । काले प्राप्ते अकाले वा नास्यानश्नन्गृहे वसेत् ॥ ८ ॥ श्रद्धाशीलोऽस्पृहयालुरलमग्न्याधेयाय नानाहिताग्निः स्यात् ॥ ९ ॥ अलं च सोमपानाय नासोमयाजी स्यात् ॥ १० ॥ युक्तः स्वाध्याये प्रजनने यज्ञे च ॥ ११ ॥ गृहेष्वभ्यागतं प्रत्युत्थानासनशयनवाक्सूनृतानसूयाभिर्मानयेत् ॥ १२ ॥ यथाशक्ति चान्नेन सर्वभूतानि ॥१३॥ गृहस्थ एव यजते गृहस्थस्तप्यते तपः । चतुर्णामाश्रमाणां तु गृहस्थस्तु विशिष्यते ॥ १४ ॥ यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम् ॥ १५ ॥ यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः । एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षवः ॥ १६ ॥ नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी पतितान्नवर्जी । ऋतौ च गच्छन्विधिवच्च जुह्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात् । इति ॥ १७ ॥

इति वासिष्ठे धर्मशास्त्रेऽष्टमोऽध्यायः ॥ ८ ॥

---

१ च. °न्तधानप्र° । २ ख. ग. °नाभ्यञ्जनव° । ३ क. °त । त्रिरह्नोऽभ्युपेयादपो° । च °त । त्रिराह्नेऽभ्युपेयादप इत्यप इ° । ४ च. नार्षेयाम° । ५ च. °थुनामवरवय° । ६ ख ग °मिन्ध्यात् । सा° । ७ च. ना । ८ ख. हि तिथिर्यस्मा° । ग. स्थितिर्यस्मा° । ९ च. °ण अतिथिर्विप्र· साङ्गतिकस्तथा । १० च. सोमाय नासोमयाजी यु° । ११ च. °भिर्महवे° । १२ च. सर्वाणि भू· । १३ ग. च भिक्षुकाः । १४ ख ग. च. °काद्ब्रह्मलोकादिति ।

## अथ नवमोऽध्यायः।

वानप्रस्थो जटिलश्चीराजिनवासा ग्रामं च न प्रविशेत् ॥ १ ॥ न फालकृष्टमधितिष्ठेत् ॥ २ ॥ अकृष्टं मूलफलं संचिन्वीत, ऊर्ध्वरेताः क्षमाशयः ॥ ३ ॥ मूलफलभैक्षेणाऽऽश्रमागतमतिथिमभ्यर्चयेत् ॥ ४ ॥ दद्यादेव न प्रतिगृह्णीयात् ॥ ५ ॥ त्रिषवणमुदकमुपस्पृशेत् ॥ ६ ॥ श्रावणकेनाग्निमाधायाऽऽहिताग्निः स्याद्वृक्षमूलिकः ॥७॥ ऊर्ध्वं षड्भ्यो मासेभ्योऽनग्निरनिकेतः ॥ ८ ॥ दद्याद्देवपितृमनुष्येभ्यः स गच्छेत्स्वर्गमानन्त्यमानन्त्यम् ॥ ९ ॥

इति वासिष्ठे धर्मशास्त्रे नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः।

परिव्राजकः सर्वभूताभयदक्षिणां दत्त्वा प्रतिष्ठेत ॥ १ ॥ अथाप्युदाहरन्ति ॥ २ ॥ अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः। तस्यापि सर्वभूतेभ्यो न भयं जातु विद्यते ॥ ३ ॥ अभयं सर्वभूतेभ्यो दत्त्वा यस्तु निवर्तते। हन्ति जातानजातांश्च द्रव्याणि प्रतिगृह्य च ॥ ४ ॥ संन्यसेत्सर्वकर्माणि वेदमेकं न संन्यसेत्। वेदसंन्यसनाच्छूद्रस्तस्माद्वेदं न संन्यसेत् ॥ ५ ॥ एकाक्षरं परं ब्रह्म प्राणायामः परं तपः। उपवासात्पर भैक्षं दया दानाद्विशिष्यते ॥ ६ ॥ मुण्डोऽममोऽपरिग्रहः सप्तागाराण्यसंकल्पितानि चरेद्भैक्ष्यं[10] (क्षं) विधूमे सन्नमुसले ॥ ७ ॥ एकशाटीपरिवृतो[11]ऽजिनेन वा गोप्रलूनैस्तृणै[12]र्वेष्टितशरीरः स्थण्डिलशाय्यनित्यां वसतिं वसेत्, ग्रामान्ते देवगृहे शून्यागारे वृक्षमूले वा मनसा ज्ञानमधीयानः ॥ ८ ॥ अरण्यनित्यो न ग्राम्यपशूनां संदर्शने विहरेत्[13] ॥९॥ अथाप्युदाहरन्ति ॥ १० ॥ अरण्यनित्यस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य। अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य, इति ॥ ११ ॥ अव्यक्तलिङ्गो व्यक्ताचारः, अनुन्मत्त उन्मत्तवेषः ॥ १२ ॥ अथाप्युदाहरन्ति ॥ १३ ॥

---

१ च. °वासी ग्रा°। २ घ °दकोपस्पर्शी। श्रामण°। ३ छ. °वणिके°। ४ च. °मूलनिकेतन उ°। ५ ख. ग. घ. द्विज। ६ ग. यद्धुवि व°। ७ ख छ विवर्तते। ८ ख ग घ °श्च प्रतिगृह्णाति यस्य स। ९ ख. ग °ममत्वप°। १० च °रेद्भिक्षाम्। वि°। ११ च °रिहितो°। १२ च °र्णरचस्तृत°। १३ च. विचरेत्।

न शब्दशास्त्राभिरतस्य मोक्षो न चापि लोकग्रहणे रतस्य । न भोजनाच्छादनतत्परस्य न चापि रम्यावसथप्रियस्य ॥ १४ ॥ न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया । अनुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥ १५ ॥ अलाभे न विषादी स्याल्लाभश्चैनं न हर्षयेत् । प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥ १६ ॥ न कुड्यां नोदके सङ्गो न चैले न त्रिपुष्करे । नागारे नाऽऽसने नान्ने यस्य वै मोक्षवित्तमः । इति ॥ १७ ॥ ब्राह्मणकुले वा यल्लभेत तद्भुञ्जीत, सायं प्रातर्मधुमांसपरिवर्जम् ॥ १८ ॥ यतीन्साधून्वा गृहस्थान्सायं प्रातश्च तृप्येत् ॥ १९ ॥ ग्रामे वा वसेत् ॥ २० ॥ अजिह्मोऽशरणोऽसंकुसुको न चेन्द्रियसंयोगं कुर्वीत केनचित् ॥ २१ ॥ उपेक्षकः सर्वभूतानां हिंसानुग्रहपरिहारेण ॥ २२ ॥ पैशुन्यमत्सराभिमानाहंकाराश्रद्धानार्जवात्मस्तवपरगर्हादम्भलोभमोहक्रोधासूयाविवर्जनं सर्वाश्रमिणां धर्म इष्टः ॥ २३ ॥ यज्ञोपवीत्युदककमण्डलुहस्तः शुचिर्ब्राह्मणो वृषलान्नवर्जी न हीयते ब्रह्मलोकाद्ब्रह्मलोकादिति ॥ २४ ॥

इति वासिष्ठे धर्मशास्त्रे दशमोऽध्यायः ॥ १० ॥

---

अथैकादशोऽध्यायः ।

---

षडर्घ्या भवन्ति, ऋत्विग्विवाह्यराजा(ज)पितृव्यस्नातकमातुलाश्च ॥ १ ॥ वैश्वदेवस्य सिद्धस्य सायं प्रातर्गृह्याग्नौ जुहुयात् ॥ २ ॥ गृहदेवताभ्यो बलिं हरेत् ॥ ३ ॥ श्रोत्रियायाऽऽगताय भागं दत्त्वा ब्रह्मचारिणे वाऽनन्तरं पितृभ्यो दद्यात् ॥ ४ ॥ ततोऽतिथिं भोजयेत्, श्रेयांसं श्रेयांसमानुपूर्व्येण, स्वगृह्याणां कुमारबालवृद्धतरुणप्रभूतींस्ततोऽपरान्गृह्यान् ॥ ५ ॥ श्वचण्डालपतितवायसेभ्यो भूमौ निर्वपेत् ॥ ६ ॥

---

१ घ. °या । नानु° । २ ग. °ल्लाभे चैव न । घ °ल्लाभे नैव च ह° । ३ च. °द्विवर्जितः । ४ घ. ङ. °न्ने यः स वै । ५ च. °वित्त स इ° । ६ च. °ले यावल्ल° । ७ ख. °ससर्पि.प° । ग. ससर्पिर्वर्जे° । ८ च. °म् । म च तृ° । ९ क. °हस्यः प्रासेन च तृ° । ख °हस्थः प्रीतेन च.तृ° १० क. °ह्मोऽशठोऽशरणोऽशुको । च. ह्मोऽ[illegible]ऽशरणोऽवसंकुतुको । ११ क. ख. °कात् । ॥ २४ ॥ १२ ख. ग. षट्कर्मा । गृह° । १३ च. °डर्घाहा । १४ ख. ग. °यान्नं द° । घ. °याग्रभा° । १५ ख. ग. °त् । स्वेष्टायास° । १६ क. °मार्या बा° । ग. °मारी या° । १७ क °प्रदासास्ततो° । च. प्रजातास्ततो° ।

शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यात् ॥ ७ ॥ शेषं दंपती भुञ्जीयाताम् ॥ ८ ॥ सर्वोपयोगेन पुनः पाकः ॥ ९ ॥ यदि निरुप्ते वैश्वदेवेऽतिथिरागच्छेद्विशेषेणास्मा अन्नं कारयेत् ॥ १० ॥ विज्ञायते हि ॥ ११ ॥ वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहं तस्मादप आनयन्त्यन्नं वर्षाभ्यस्तां हि शान्ति जना विदुरिति ॥ १२ ॥ तं भोजयित्वोपासीताऽऽसीमान्तमनुव्रजेत् , अ(आऽ)नुज्ञानाद्वा ॥ १३ ॥ अपरपक्ष ऊर्ध्वं चतुर्थ्याः पितृभ्यो दद्यात्पूर्वेद्युर्ब्राह्मणान्संनिपात्य यतीन्गृहस्थान्साधून्वा परिणतवयसोऽविकर्मस्थाञ्श्रोत्रियानशिष्यानन्तेवासी(सि)नः शिष्यानपि गुणवतो भोजयेत् ॥ १४ ॥ विलग्नशुक्लक्लीबान्धश्यावदन्तकुष्ठिकुनखिवर्जम् ॥ १५ ॥ अथाप्युदहरन्ति ॥ १६ ॥ अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः । अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः ॥ १७ ॥ श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात् । श्चोतन्ते हि सुधाधारास्ताः पिबन्त्यकृतोदकाः ॥ १८ ॥ उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः । क्षीरधारास्ततो यान्ति अक्षय्याः पङ्क्तिभागिनः ॥ १९ ॥ प्राक्संस्कारप्रमीतानां स्ववंश्यानामिति श्रुतिः । भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे ॥२०॥ उच्छेषणं भूमिगतं विकिरं लेपनोदकम् । अन्नं प्रेतेषु विसृजेदप्रजानामनायुषाम् ॥२१॥ उभयोः शाखयोर्मुक्तं पितृभ्योऽन्नं निवेदितम् । तदन्तरं प्रतीक्षन्ते ह्यसुरा दुष्टचेतसः ॥ २२ ॥ तस्मादशून्यहस्तेन कुर्यादन्नमुपागतम् । भो(भा)जनं वा समालभ्य तिष्ठतोच्छेषणे उभे ॥ २३ ॥ द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा । भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥ २४ ॥ सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम् । पञ्चैतान्विस्तरो हन्ति तस्मात्तं परिवर्जयेत् ॥ २५ ॥ अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् । श्रुतशीलोपसंपन्नं सर्वालक्षणवर्जितम् ॥ २६ ॥ यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् । अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥ २७ ॥ देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत् । प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे ॥ २८ ॥ यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः । तावद्धि पितरोऽश्नन्ति यावन्नोक्ता हविर्गुणाः ॥२९॥

१ ख. ग. शूद्रेभ्य उच्छिष्टं वा । २ ख ग. °षं यती भुञ्जीत । स° । ३ ख. ग विजायतेऽहि वै° । ४ क. °ते वै° । ५ ग. °ज्ञाताद्वा° । ६ क. त् । द्विर्नभग्नु° । च. °त् । नग्न° । ७ ख. ग. °क्लविगूधिश्या° । ८ ख. ग. त् । खे पत्तन्ति हि या धारा° । ९ ख. ग °च्छिष्टेन अपुष्टास्ते या° । १० क. °वन्नास्त° । ११ ख. ग. यान्त्यक्षयाः संचरभा° । १२ च. °स्कारात्प्रमी° । १३ ख. ग. °ना प्रवेशनमि° । १४ च. स्थिति । १५ क. उच्छेषोच्छे° । १६ ख. ग. °किरेलेपसोद° । १७ ख. अनुप्रे° । १८ च. °भयोर्हस्तयो. । १९ क. °योः पार्श्वयो° । २० क. °र्यादभ्रमु° । २१ ख. ग. °पदः ।प° । २२ ख. ग, °सर्वल° ।

हविर्गुणा न वक्तव्याः पितरो[1] यावदतर्पिताः । पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः ॥३०॥ नियुक्तस्तु यदा[2] श्राद्धे दैवे[3] वा मांसमुत्सृजेत् । यावन्ति पशुरोमाणि ताव-न्नरकमृच्छति ॥३१॥ त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः । त्रीणि चात्र प्रशं-सन्ति शौचमक्रोधमत्वराम् ॥ ३२ ॥ दिवसस्याष्टमे भागे मन्दी भवति भास्करः । स कालः कुतपो ज्ञेयः[4] पितृणां दत्तमक्षयम् ॥ ३३ ॥ श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं योऽधिगच्छति । भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः ॥ ३४ ॥ यस्ततो[5] जायते गर्भो दत्त्वा भुक्त्वा च पैतृकम् । न स विद्यां समाप्नोति क्षीणायुश्चैव जायते ॥३५॥ पिता पितामहश्चैव तथैव प्रपितामहः । उपासते सुतं जातं शकुन्ता इव पिप्पलम् ॥३६॥ मधुमांसैश्च शाकैश्च पयसा पायसेन वा[6] । एष नो दास्यति श्राद्धं वर्षासु च मघासु च ॥ ३७ ॥ संतानवर्धनं पुत्रमुद्यतं[7] पितृकर्मणि । देवब्राह्मणसंपन्नमभिनन्दन्ति पूर्वजाः ॥ ३८ ॥ तन्वन्ति[8] पितरस्तस्य सुकृष्टैरिव[9] कर्षकाः । यद्गयास्थो ददात्यन्नं पितर-स्तेन पुत्रिणः ॥ ३९ ॥ श्रावण्याग्रहायण्योश्चान्वष्टक्यां च पितृभ्यो दद्यात्, द्रव्य-देशब्राह्मणसंनिधाने वा[10] न कालनियमः ॥ ४० ॥ अवश्यं च ब्राह्मणोऽग्नीनादधीत, दर्शपूर्णमासाग्रयणेष्टिचातुर्मास्यपशुसोमैश्च यजेत[11] नैयमिकं ह्येतदृणसंस्तुतं[12] च ॥ ४१ ॥ विज्ञायते हि त्रिभिर्ऋणैर्ऋणवान्ब्राह्मणो जायत[13] इति ॥ ४२ ॥ यज्ञेन देवेभ्यः, प्रजया पितृभ्यो, ब्रह्मचर्येण ऋषिभ्य[14] इत्येष वाऽनृणो यज्वा यः पुत्री ब्रह्मचर्यवा-निति ॥ ४३ ॥ गर्भाष्टमेषु ब्राह्मणमुपनयीत, गर्भादेकादशेषु राजन्यं, गर्भाद्द्वादशेषु वैश्यम् ॥४४॥ पालाशो बैल्वो वा दण्डो ब्राह्मणस्य, नैयग्रोधः क्षत्रियस्य वा औदुम्बरो वा वैश्यस्य ॥ ४५ ॥ [ *केशसंमितो ब्राह्मणस्य, ललाटसंमितः क्षत्रियस्य, घ्राणसंमितो वैश्यस्य ॥ ४६ ॥ मौञ्जी ब्राह्मणस्य, धनुर्ज्या क्षत्रियस्य, शणतान्तवी वैश्यस्य ] ॥ ४७ ॥ कृष्णाजिनमुत्तरीयं ब्राह्मणस्य, रौरवं क्षत्रियस्य, गव्यं वै[15] ( व )स्ता-

---

* एतच्चिह्नान्तर्गतग्रन्थः क. ख. ग. पुस्तकेषु न विद्यते ।

---

१ ख. °रोऽभ्यवत° । ग. °रो भावत° । २ क. च. यतिः । ३ क. ग. °वेतं तु स° । ४ ख. ग. नाम । ५ क. यस्तु तस्य भवेद्गर्भो । ख. ग. यतस्ततो । ६ ख. ग. वा । अघनो । ७ क. पुत्रं भुञ्जन्तं पि° । ख. ग. पुत्रं तृप्यन्तं पि° । ८ ख. ग. नन्दति । ९ ख. ग सुवृष्टै° । १० ख. ग. च. वा का° । ११ क. यजेत् । १२ ख. ग. °संस्तृतं । १३ ख, ग, °यते । °य । १४ क °पिभ्यो दत्त्वैप° । १५ ख. ग. वस्त्राजि° ।

जिनं वा वैश्यस्य ॥ ४८ ॥ शुक्लमहतं वासो ब्राह्मणस्य, मांञ्जिष्ठं क्षत्रियस्य, हारिद्रं कौशेयं वैश्यस्य, सर्वेषां वा तान्तवमरक्तम् ॥ ४९ ॥ भवत्पूर्वां ब्राह्मणो भिक्षां याचेत, भवन्मध्यां राजन्यो, भवदन्त्यां वैश्यः ॥ ५० ॥ आ षोडशाद्ब्राह्मणस्य नातीतः कालः ॥ ५१ ॥ आ द्वाविंशात्क्षत्रियस्य ॥ ५२ ॥ आ चतुर्विंशाद्वैश्यस्य ॥ ५३ ॥ अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥ ५४ ॥ नैतानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्विवाहयेयुः ॥ ५५ ॥ पतितसावित्रीक उद्दालकव्रतं चरेत् ॥ ५६ ॥ द्वौ मासौ यावकेन वर्तयेत्, मासं पयसा, अर्धमासमामिक्षयाऽष्टरात्रं घृतेन, षड्रात्र-मयाचितेन, त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेत् ॥ ५७ ॥ अश्वमेधावभृथं गच्छेत् ॥ ५८ ॥ व्रात्यस्तोमेन वा यजेद्वा यजेदिति ॥ ५९ ॥

इति वासिष्ठे धर्मशास्त्र एकादशोऽध्यायः ॥ ११ ॥

अथ द्वादशोऽध्यायः ।

अथातः स्नातकव्रतानि ॥ १ ॥ स न कंचिद्याचेतान्यत्र राजान्तेवासिभ्यः ॥ २ ॥ क्षुधा परीतस्तु किंचिदेव याचेत, कृतमकृतं वा क्षेत्रं गामजाविकमन्ततो हिरण्यं धान्य-मन्नं वा, न तु स्नातकः क्षुधाऽवसीदेदित्युपदेशः ॥ ३ ॥ न मलिनवाससा सह संवसेत, न रजस्वलया, नायोग्यया, न कुलं कुलं स्यात् ॥ ४ ॥ वत्सन्तीं विततां नातिक्रामेत् ॥ ५ ॥ नोद्यन्तमादित्यं पश्येत् ॥ ६ नास्तमयन्तम् ॥ ७ ॥ नाप्सु मूत्रपुरीषे कुर्यात् ॥ ८ ॥ न निष्ठीवेत् ॥ ९ ॥ परिवेष्टितशिरा भूमिमयज्ञियैस्तृणैर-न्तर्धाय मूत्रपुरीषे कुर्यात् ॥ १० ॥ उदङ्मुखश्चाहनि, नक्तं दक्षिणामुखः । संध्या-मासीतोत्तरामुदाहरन्ति ॥ ११ ॥ स्नातकानां तु नित्यं स्यादन्तर्वासस्तथोत्तरम् । यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः ॥ १२ ॥ अप्सु पाणौ च काष्ठे च कथितं पावके शुचिः । तस्मादुदकपाणिभ्यां परिमृज्यात्कमण्डलुम् ॥ १३ ॥ पर्यग्निकरणं ह्येतन्मनुराह प्रजापतिः । कृत्वा चावश्यकर्माणि आचामेच्छौचवित्तमः । इति ॥ १४ ॥

१ च. °थं वा वै° । २ ख. ग °त् । ब्राह्मस्तो° । ३ क. ख. °जेत् ॥ ५९ ॥ ४ ख. ग. °न्यस्तं रा° । ५ ख. ग °विकं संततो । ६ ख. ग. न नग्ना स सहसा संविशेन्न रजस्वलायामयोग्याया न° । ७ क. कुलः स्यात् । वत्सन्ततिवि° । च कुल स्यात् । वत्सतन्त्रीं °वि । ८ ख. ग. पश्येन्नाऽऽदित्यं तपन्तं नास्तं त° । ९ च नास्तं य° । १० क °सीनोत्तरमु° । च °सीनोत्तरमथाप्युदाह° । ११ ख. ग. °वके शुचि । सू° । १२ ख. ग. °श्यकार्याणि । १३ ख. ग °त्त इ° ।

प्राङ्मुखोऽन्नानि भुञ्जीत ॥ १५ ॥ तूष्णीं साङ्गुष्ठं कृत्स्नग्रासं ग्रसेत् ॥ १६ न च मुखशब्दं कुर्यात् ॥ १७ ॥ ऋतुकालगामी स्यात्पर्ववर्जं स्वदारेषु ॥ १८ ॥ अतिथिमुपेयात् ॥ १९ ॥ अथाप्युदाहरन्ति ॥ २० ॥ यस्तु पाणिगृहीताया आस्ये कुर्वीत मैथुनम् । भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः ॥ २१ ॥ या स्यादनित्यचारेण रतिः साऽधर्मसंश्रिता ॥ २२ ॥ अपि च काठके विज्ञायते ॥ २३ ॥ अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयीरन्निति स्त्रीणामिन्द्रदत्तो वर इति ॥ २४ ॥ न वृक्षमारोहेत् ॥ २५ ॥ न कूपमवरोहेत् ॥ २६ ॥ नाग्निं मुखेनोपधमेत् ॥ २७ ॥ नाग्निं ब्राह्मणं चान्तरेण व्यपेयात् ॥ २८ ॥ नाग्न्योर्न ब्राह्मणयोर [ न ] नुज्ञाप्य वा, भार्यया सह नाश्नीयादवीर्यवदपत्यं भवतीति वाजसनेयके विज्ञायते ॥ २९ ॥ नेन्द्रधनुर्नाम्ना निर्दिशेत् ॥ ३० मणिधनुरिति ब्रूयात् ॥ ३१ ॥ पालाशमासनं पादुके दन्तधावनमिति वर्जयेत् ॥ ३२ ॥ नोत्सङ्गे भक्षयेन्न संध्या [ यां ] भुञ्जीत ॥३३॥ वैणवं दण्डं धारयेद्रुक्मकुण्डले च ॥ ३४ ॥ न बाहिर्मालां धारयेदन्यत्र रुक्ममय्याः ॥ ३५ ॥ सभाः समवायांश्च वर्जयेत् ॥ ३६ ॥ अथाप्युदाहरन्ति ॥ ३७ ॥ अप्रामाण्यं च वेदानामार्षाणां चैव कुत्सनम् । अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः । इति ॥ ३८ ॥ नाहूतो यज्ञं गच्छेत् ॥ ३९ ॥ यदि व्रजेत्प्रदक्षिणं पुनराव्रजेत् ॥ ४० ॥ अधिवृक्षसूर्यमध्वानं न प्रतिपद्येत ॥ ४१ ॥ नावं च सांशयिकीं नाधिरोहेत ( त् ) ॥ ४२ ॥ बाहुभ्यां न नदीं तरेत् ॥ ४३ ॥ उत्थायापररात्रमधीत्य न पुनः प्रति संविशेत् ॥ ४४ ॥ प्राजापत्ये मुहूर्ते ब्राह्मणः कांश्चिन्नियमाननुतिष्ठेदनुतिष्ठेदिति ॥ ४५ ॥

इति वासिष्ठे धर्मशास्त्रे द्वादशोऽध्यायः ॥ १२ ॥

अथ त्रयोदशोऽध्यायः ।

अथातः स्वाध्यायोपाकर्म श्रावण्यां पौर्णमास्यां प्रोष्ठपद्यां वाऽग्निमुपसमाधाय कृता-

१ ख. ग. कृशाग्रा° । २ क. °पु । त्रियमुपे° । ख ग. °पु वा तीर्थमुपे° । ३ ख. ग. °दनतिचा° । ४ ख. ग. °धर्म्यसं° । ५ ख. ग. च पावकोऽपि वि° । ६ ख. ग. अद्य श्वो वा वि° । ७ ख. ग. °ह दर्शयन्त इति । ८ ख. वरः । तन्न वृ° । न वरः । उन्नवृ° । ९ ख ग. °येदघ(ग)न्धो न भु° । च. येत् । नाऽऽसन्ध्यां भु° । १० च. °माल्यं धा° । ११ च. °श्च ना व° । १२ ख. ग. दर्शनम् । १३ ग. °ति । दानाहतो । १४ ख. नानाहतो । १५ ख. ग. °जेदपि° । १६ ख ग. °ण स्वनिय° । १७ ख. ग. °ध्यायश्चोपा° । १८ च. °धायाक्षतधाना जु° ।

धानो जुहोति देवेभ्य[1] ऋषिभ्यश्छन्दोभ्यश्चेति ॥१॥ ब्राह्मणान्स्वस्तिवाच्य दधि प्राश्य
[2]ततोऽध्यायानुपाकुर्वीरन् ॥ २ ॥ अर्धपञ्च[3]ममासानर्धषष्ठान्वाऽत ऊर्ध्वं शुक्लपक्षे[4]ष्वधी-
यीत, कामं तु वेदाङ्गानि ॥ ३ ॥ तस्यानध्यायाः ॥ ४ ॥ संध्यास्त[5]मिते[6] संध्यास्व-
न्तःशवदिवाकीर्त्येषु नगरेषु कामं गोमयपर्युषिते परिलिखिते वा श्मशानान्ते शयानस्य
श्राद्धिकस्य ॥ ५ ॥ मानवं चात्र श्लोकमुदाहरन्ति ॥ ६ ॥ फला[7]न्यपस्तिलान्भ[8]क्षा-
न्यच्चान्यच्छ्राद्धिकं भवेत् । प्रतिगृह्याप्यनध्यायः पाण्यास्या ब्राह्मणाः स्मृताः,
इति ॥ ७ ॥ धावतः पूतिग[9]न्धप्रभृ[10]तावीरिणे, वृक्षमारूढस्य नावि सेनायां च भुक्त्वा
चा[11]ऽऽर्द्रपाणेर्वाणशब्दे चतुर्दश्याममावास्यायामष्टम्यामष्टकासु प्रसारितपादोप[12]स्थ[13]कृ[14]तस्यो-
पाश्रितस्य च गुरुसमीपे[15] मैथुनव्यपेतायां वाससि[16] मैथुनव्यपेतेनानिर्णिक्तेन ग्रामान्ते
छर्दितस्य मूत्रितस्यो[17]च्चारितस्य ऋग्यजुषां च सा[18]मशब्दे वाऽजीर्णे निर्घाते[19] भूमिचलने
चन्द्रसूर्योपरागे दिङ्नादपर्वत[20]नादकम्पप्रपातेषूपलरुधिरपांशुवर्षेष्वाकालिकम् ॥ ८ ॥
उल्काविद्युत्स[21]मासे त्रिरात्रम् ॥ ९ ॥ उल्काविद्युत्सज्योतिषम् ॥ १० ॥ अपर्तावाका-
लिकमाचार्ये प्रेते त्रिरात्रमाचार्यपुत्रशिष्यभार्यास्वहोरात्रम् ॥ ११ ॥ [ *ऋत्विग्यो-
निसंबन्धेषु च गुरोः पादोपसंग्रहणं कार्यम् ॥ १२ ॥ ऋत्विक्श्वशुरपितृव्यमातुलानन-
वरवयसः प्रत्युत्थायाभिवदेत् ॥ १३ ॥ ये चैव पादग्राह्यास्तेषां भार्या गुरोश्च मातापि-
तरौ[22] यो विद्यादभिवन्दितुमहमयं भो इति ब्रूयाद्यश्च न विद्यात्प्रत्यभिवा[23]दमामन्त्रिते
स्वरोऽन्त्यः प्लवते संध्यक्षरमप्रगृह्यमायावभावं चाऽऽपद्यते यथा भो भाविति ॥१४॥
पतितः पिता परित्याज्यो माता तु पु[24]त्रे न पतति ॥ १५ ॥ अ[25]त्राप्युदाहरन्ति ॥ १६॥
उपाध्यायाद्दशाऽऽचार्य आचार्याणां शतं पिता । पितुर्दशशतं माता गौरवेणातिरिच्यते

* एतच्चिह्नान्तर्गतं न ख. च. पुस्तकयोः ।

१ ख. ग. °भ्यश्छ° । २ ख. ग. तत उपांशु कुर्वीत । अ° । ३ क. °ध्वमान्मासान्मासान° । घ. °ध्वम° । ४ क. °क्षेऽप्यधी° । ५ च. स्तनिते । ६ ख. ग. °ते स्युस्तत्र शवे दिवाकीर्त्ये न° । ७ ख. ग. च. °लान्यापास्ति° । ८ ख. ग. °न्भक्ष्यमथान्यच्छ्रा° । ९ ख. ग. °गन्धिप्रसतेरितत्र° । १० क. °भृतितृणत्र° । ११ क. चारीयाणशाणश° । ख. ग. चार्धघ्राणे वाण° । १२ ख. °पस्थेस्योपा° । १३ ग. °स्थस्योपा° । १४ च. कृतोपा° । १५ क. ख. ग. °पे मिथुनव्यपेता° । १६ क. ख. ग. °सामिथु° । १७ ख. ग. °स्योच्चरितस्य यजु° । १८ ख. ग सायंश° । १९ ख. ग. °घातभूमौ च न चन्द्रसूर्योपरागेषु दि° । २० च. °तप्र° । २१ ख. ग. °त्सज्योतिषमपर्त्वाकालिकं वा । आचार्ये । २२ च °रौ च. यो । २३ ख. ग. °वादं नाभिवदेत् । पति° । २४ क घ. पुत्रं । २५ ख. ग. अथाप्यु° ।

भार्या[1] पुत्राश्च शिष्याश्च संतुष्टाः पापकर्मभिः । परिभाष्य परित्याज्याः पतितो योऽन्यथा त्यजेत्[2] ॥ १८ ॥ ऋत्विगाचार्यावयाजकानध्यापकौ हेयावन्यत्र हानात्प[3]तति ॥ १९ ॥ पतितोत्पन्नः पतितो भवतीत्याहुरन्यत्र स्त्रियाः ॥ २० ॥ सा हि परगामिनी[4] तामरिक्थामुपेयात् ॥ २१ ॥ गुरोर्गुरौ संनिहिते गुरुवद्वृत्तिरिष्यते । गुरुवद्गुरुपुत्रस्य वर्तितव्यमिति श्रुतिः[5] ॥२२॥ शस्त्रं विषं सुरा चाप्रतिग्राह्याणि ब्राह्मणस्य ॥ २३ ॥ विद्या[6]वित्तवयःसंबन्ध[7]कर्म च मान्यम् ॥ २४ ॥ पूर्वः पूर्वो गरीयान्स्थविरबालातुरभार्[8]चक्रिस्त्रीचक्रीवतां पन्थाः समागमे परस्मै[9] देयः ॥२५॥ राजकस्नातकयोः समागमे राज्ञा स्नातकाय देयः ॥२६॥ सर्वैरेवं[10] च वध्वा ऊह्यमानायै ॥२७॥ तृणभूम्यग्न्युदकवाक्सूनृतनासूयाः सतां[11] गृहे नोच्छिद्यन्ते कदाचन कदाचनेति ॥ २८ ॥

इति वासिष्ठे धर्मशास्त्रे त्रयोदशोऽध्यायः ॥ १३ ॥

अथ चतुर्दशोऽध्यायः ।

अथातो भोज्याभोज्यं च वर्णयिष्यामः ॥ १ ॥ चिकित्सकमृगयुपुंश्चलीदण्डिकस्तेनाभिशस्तषण्ढपतितानामन्नमभोज्यम् ॥ २ ॥ कदर्य[12]दीक्षितवद्धातुरसोमविक्रयितक्षकरजक[13]शौण्डिकसूचक[14]वार्धुषिकचर्मावकृत्तानां, शूद्रस्य चोपस्त्रभृतश्चोपपत्ते(ते)र्यश्चोपपत्ति(तिं) मन्यते[15], यश्च गृहान्दहेत्[16], यश्च वधार्ह नोपहन्यात्[17]को भक्ष्यत इति ॥३॥ वाचाऽभिघुष्टं गणान्नं गणिकान्नं चेति ॥४॥ अथाप्युदाहरन्ति ॥५॥ नाश्नन्ति श्ववतो[18] देवा नाश्नन्ति वृषलीपतेः । भार्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे, इति ॥ ६ ॥ एधोदकयवसकुशलाजाभ्युद्यतयानावसथशफरीप्रियङ्गु[19]स्रग्गन्धमधुमांसानीत्येतेषां[20] प्रतिगृह्णीयात् ॥ ७ ॥ अथाप्युदाहरन्ति ॥ ८ ॥

---

१ क घ. भार्या । २ ख. ग. भवेत् । ३ ख. ग. °नात्तु पतितो नान्यत्र पतितो भ° । ४ ख. च. °रगमिता तद्भिन्नामक्षुण्णामु° । ५ ख. ग. °तिः । शास्त्रं वस्त्रं तथाऽन्नानि प्र° । ६ ख. ग. °विजयजः संबन्धः क° । ७ ख. °बन्धाः क° । ८ ख. ग. °कचक्रव° । ९ च. °स्मै परस्मै दे° । १० ख. ग. °व वोच्चतमाय तु । ११ ख. घ. सतगृ° । १२ ख. ग. °दर्यौक्षि° । १३ क. °तस्करर° । १४ क. °सूचिक° । १५ क ग चायज्ञोपपन्नोयश्चोपप° । १६ क. ग. गृहीततद्धेतुर्य° । १७ ख. ग. °न्यात्कौ बन्धमोक्षाविति चाभिक्रुश्येत, गणा° । १८ ख. ग. श्वपतेर्देवा । १९ ख ग °कसवःसकुशलाभ्यु° । २० च ग. °स्रगुस्तरजमधुमासानि नै ते° ।

गुर्वर्थं[1] दारमुज्जिहीर्षन्नर्चिष्यन्देवतातिथीन्। सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः, इति ॥ ९ ॥ न मृगयोरिषुचारिण परिवर्जमन्नम् ॥ १० ॥ विज्ञायते ह्यगस्त्यो वर्षसाहस्रिके सत्रे मृगयां चकार[2], तस्याऽऽसंस्तु रसमयाः पुरोडाशा मृगपक्षिणां प्रशस्तानाम् ॥ ११ ॥ अपि ह्यत्र प्राजापत्याञ्श्लोकानुदाहरन्ति ॥ १२ ॥ उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम्। भोज्यां प्रजापतिर्मेने अपि दुष्कृतकारिणः[3] ॥ १३ ॥ अश्रद्दधानस्य[4] भोक्तव्यं चोरस्यापि विशेषतः। न त्वेव[5] बहुयाज्यस्य यश्चोपनयते बहून् ॥ १४ ॥ न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च। न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥ १५ ॥ चिकित्सकस्य मृगयोः शल्यहर्तस्य[7] पापिनः[8]। प(षं)ण्डस्य कुलटायाश्च उद्यताऽपि न गृह्यते, इति ॥ १६ ॥ उच्छिष्टमगुरोरभोज्यं, स्वमुच्छिष्टोपहतं च ॥ १७ ॥ यदशनं केशकीटोपहतं च ॥ १८ ॥ कामं तु केशकीटानुद्धृत्याद्भिः प्रोक्ष्य भस्मनाऽवकीर्य वाचा[10] प्रशस्तमुपभुञ्जीत[11] ॥ १९ ॥ अपि ह्यत्र[12] प्राजापत्याञ्श्लोकानुदाहरन्ति ॥ २० ॥ त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्। अदृष्टमद्भिर्निर्णिक्तं यच्च[13] वाचा प्रशस्यते ॥ २१ ॥ देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च। काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विसर्जयेत्[14] ॥ २२ ॥ तस्मादन्नमपोद्धृत्य[15] शेषं संस्कारमर्हति। द्रवाणां प्लावनेनैव घनानां प्रोक्षणेन[16] तु[17]। मार्जारमुखसंस्पृष्टं शुचि एव हि तद्भवेत् ॥ २३ ॥ अन्नं पर्युषितं भावदुष्टं[18] सकृल्लेखं[19] पुनःसिद्धमामिमांसं[20] पक्वं च कामं तु दध्ना[21] घृतेन वाऽभिघारितमुपयुञ्जीत[22] ॥ २४ ॥ अपि ह्यत्र प्राजापत्याञ्श्लोकानुदाहरन्ति* ॥ २५ ॥ हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनानि च। दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ॥ २६ ॥ + प्रदद्यान्न तु हस्तेन

* इत. परमेतद्वचनमधिकं च. पुस्तके—"घृतं वा यदि वा तैलं विप्रो नाद्यान्नखच्यु(च्यु)तम्। यमस्तदशुचि प्राह तुल्यं गोमांसभक्षणैः" इति। + एतदर्धं न क. ख. ग. पुस्तकेषु।

१ क. ख. °र्वर्थदा°। २ च. चचार। ३ क. °णः। अश्रद्दधानमक्त°। ४ ख. ग °धानैर्न भो°। ५ क. त्वेवं व°। ६ ख. ग. °हुधा तस्य यावानपहता भवेत्। न। ७ क. च °हर्तुस्तु पा°। ८ ख. ग. पाशिनः। ९ क. ग यद्वसनके°। १० ख. ग °चा च प्र°। ११ क. च °पयुञ्जी°। १२ ख. ग. °ह्यत्रं प्रा°। १३ क. °च्च चान्नं प्र°। १४ क. विषर्जे°। १५ ख. ग. °स्मात्तदन्नमुद्धृ°। १६ ख. ग. °क्षरणेन। १७ ख. ग. तु। पाकेन शु°। १८ ख. ग. °ष्टं ह्लेः°। १९ क °ल्लेपं पु°। २० ख. °माममर्जीसप°। ग. °मामनृजीषप°। २१ ख ग. दध्याक्तृतेन चाभि°। २२ ख ग. °पभुञ्जीतापि ह्यत्रं प्रा°।

नाऽऽयासेन कदाचन, इति ॥ २७ ॥ लशुनपलाण्डु[1]केमुकगृञ्जनश्लेष्मातकवृक्षनिर्यासलोहि[2]तव्रश्चनश्वकाकावलीढशूद्रो[4]च्छिष्टभोजनेषु कृच्छ्रातिकृच्छ्रे इतरेऽ[3]प्यन्यत्र मधुमांसफलविकर्षे[5]ष्वग्राम्यपशव(शु)विषयः ॥ २८ ॥ संधिनीक्षीरमवत्साक्षीरं गोमहिष्यजा[6]नामनिर्दशाहानामन्तर्नाव्युदकमपूपधानाकरम्भसक्तुवटकतैलपायसशाकानि[8] शुक्तानि वर्जयेत्, अन्यांश्च क्षीरयवपिष्टविकारान् ॥२९॥ श्वाविच्छल्लकशशकच्छपगोधाः पञ्चनखानां[9] भक्ष्याः ॥ ३० ॥ अनुष्ट्रा पशूनामन्यतोदन्ताश्च मत्स्यानां वा[10] चेटगवयशिशुमारनक्रकुलीरा विकृतरूपाः ॥ ३१ ॥ सर्पशीर्षाश्च ॥ ३२ ॥ गौरगवयशरभाश्चानुदिष्टाः ॥ ३३ ॥ तथा धेन्वनडु[13]हौ मेध्यौ वाजसनेयके विज्ञायेते ॥ ३४ ॥ खड्गे तु विवदन्त्य(न्तेऽ)ग्राम्यसूकरे च ॥ ३५ ॥ शकुनानां च वि[14]षुवि[15]ष्किरजालपादाः[16] ॥ ३६ ॥ कलविङ्कप्लवहंसचक्रवाकभास[17]वायसपारावतकु[18]क्कुटसारङ्गपाण्डुकपोतक्रौञ्चक्रकरकङ्कगृध्रश्येनवकवलाकमद्गुटिट्टि[19]भमान्धालनक्तंचरदार्वाघाटचटकै[20]रैलातहारीतखञ्जरीटग्राम्यकुक्कुटशुकसा[21]रिकाकोकिलक्रव्यादो[22] ग्रामचारिणश्चाग्रामचारिणश्चेति ॥ ३७ ॥

इति वासिष्ठे धर्मशास्त्रे चतुर्दशोऽध्यायः ॥ १४ ॥

---

अथ पञ्चदशोऽध्यायः ।

---

शोणितशुक्रसंभवः पुरु[23]षो मातापितृनिमित्तकः ॥ १ ॥ तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः ॥ २ ॥ न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा ॥ ३ ॥ स हि संता-

---

१ क घ. °ण्डुकपातलगृ° । च. °ण्डुक्याकुगृ° । २ ख. ग. °हिताव्रश्चनाश्वश्वकाकाव° । ३ क. °तवा-स्यंनाश्व° । ४ क. °द्रोच्छेपेण भोजने चातिकृच्छ्र कृच्छ्र इतरेष्वान्य° । च °द्रोच्छेषणभोजनेष्वतिकृच्छ्रः । संधि° । ५ क. °पेश्व ग्रा° । ६ ख. ग. °जातरो[illegible]निर्द [illegible]हामनामन्त्यं ना° । ७ ख. ग. °कुचरक° । ८ ख. [illegible] निलशु° । ९ [illegible] । १० क ग [illegible]ाना प° । ११ क वा वेण्ग° । ख. ग. वाहेहग° । १२ [illegible] ग शलभा° । १३ च. °[illegible]तानपञ्चदन्ताश्च [illegible] धेन्वडुहौ । १४ क. विष्ठाचिविशूकर° । १५ ख. [illegible] । १६ च [illegible]पादक° । १७ ख [illegible] । १८ च. °कुररसा° । १९ ख. ग. °विभाटवा° [illegible] । २० [illegible] ग. °कवल° । २१ क. च. [illegible] । २२ च. °ष्याजो ग्रा° । २३ च. °पो भवति मा° ।

नाय पूर्वेषाम् ॥ ४ ॥ न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः ॥ ५ ॥ पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चाऽऽवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा दूरेबान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णीयात् ॥ ६ ॥ संदेहे चोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापयेत् ॥ ७ विज्ञायते ह्येकेन बहूंस्त्रायत इति ॥ ८ ॥ तस्मिंश्चेत्प्रतिगृहीत औरसः पुत्र उत्पद्येत, चतुर्थभागभागी स्याद्दत्तकः ॥ ९ ॥ यदि नाऽऽभ्युदयिकेषु युक्तः स्याद्वेदविप्लाविनः सव्येन पादेन प्रवृत्ताग्रान्दर्भांल्लोहितान्वोपस्तीर्य पूर्णपात्रमस्मै निनयेत् ॥ १० ॥ निनेतारं चास्य प्रकीर्णकेशा ज्ञातयोऽन्वालभेरन्नपसव्यं कृत्वा गृहेषु स्वैरमापद्येरन्नत ऊर्ध्वं ते नं धर्मयेयुस्तद्धर्माणस्तं धर्मयन्तः ॥ ११ ॥ पतितानां तु चरितव्रतानां प्रत्युद्धारः ॥ १२ ॥ अथाप्युदाहरन्ति ॥ १३ ॥ अग्रेऽभ्युद्धरतां गच्छेत्क्रीडन्निव हसन्निव । पश्चात्पातयतां गच्छेच्छोचन्निव रुदन्निव, इति ॥ १४ ॥ आचार्यमातृपितृहन्तारस्तत्प्रसादाद्वयाद्वा, एषां तेषां प्रत्यापत्तिः ॥ १५ ॥ पूर्णाब्दात्प्रवृत्ताद्वा काञ्चनं पात्रं माहेयं वा पूरयित्वाऽऽपोहिष्ठेति मन्त्रेणाद्भिरभिषिञ्चति ॥ १६ ॥ सर्व एवाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यातो व्याख्यात इति ॥ १७ ॥

इति वासिष्ठे धर्मशास्त्रे पञ्चदशोऽध्यायः ॥ १५ ॥

( अथ षोडशोऽध्यायः । )

अथ व्यवहाराः ॥ १ ॥ राजमन्त्री सदःकार्याणि कुर्यात् ॥ २ ॥ द्वयोर्विवदमानयोर्न पक्षान्तरं गच्छेत् ॥ ३ ॥ यथासनमपराधो ह्यन्ते नापराधः (?) ॥ ४ ॥ समः सर्वेषु भूतेषु यथासनमपराधो (?) ह्याद्यवर्णयोर्विद्यान्ततः ॥ ५ ॥ संपन्नं च रक्षयेद्राजबालधनान्यप्राप्तव्यवहाराणां प्राप्तकाले तु तद्यत् ॥ ६ ॥

---

१ च. नि व निवे° । २ क. घ. दूरवान्धवमसं° । ३ ख. ग. °व सं° । ४ ख. ग. बहु जाय° । ५ ख. ग. स्यात् । य° । ६ ख. ग. °के यु° । ७ च. °विप्लावक शूद्रयाजक उत्तमवर्णवर्गपतितास्तेषां पात्रनिनयनम् । अपात्रसंकरादक्तस्नं पात्रमादाय दासोऽसवर्णापुत्रो वा बन्धुरसदृशो वा गुणहीनः । ८ क °प्लवहीनः । ९ ख. ग. °कीर्य केशाञ्ज्ञात° । १० च. °र्ध्वं न तं धर्मये° । ११ च. ग °न सह धर्ममीयुस्तद्धर्माणस्तद्धर्मापन्नाः प° । १२ क. ग. अग्न्यभ्यु° । १३ ख. °दादपयाण्याद्वा । १४ ख. ग. °पा प्र° । १५ च. °त्तिः । पुण्यहरदात्प्रसृताद्वा । १६ क °र्णाब्दादशाब्दाप्रवृ° । १७ ख. ग. हिष्ठाभिरेव पड्भिर्ऋग्भिः सर्वत्र चाभिरिक्तस्य प्रत्युद्धारपु° । च. हिष्ठाभिरेनमाद्भि° । १८ क ख. व्यात. ॥ १७ ॥ १९ च.. राजाम° । २० क. सर्वकृत्येषु य° । २१ ख गृ. °विधानत. संपन्नतामाचरेत् । राजाबालानामप्राप्तव्य° । २२ ख. ग. तद्वत् । लि° ।

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् । धनस्वीकरणं पूर्वं धनी धनमवाप्नुयात्, इति ॥ ७ ॥ मार्ग[1]क्षेत्रयोर्विसर्गे तथा परिवर्तने[2]न तरुणगृहेष्वर्थान्तरेषु त्रिपादमात्रम् ॥ ८ गृहक्षेत्रविरोधे सामन्तप्रत्ययः ॥ ९ ॥ सामन्तविरोधे[3] लेख्यप्रत्ययः ॥ १० ॥ प्रत्यभिलेख्यविरोधे ग्रामनगरवृद्धश्रेणीप्रत्ययः ॥ ११ ॥ अथाप्युदाहरन्ति[4] ॥ १२ ॥ पैतृकं क्रीतमाधेयमन्वाधेयं प्रतिग्रहम् । यज्ञादुपगमो[5] वेणिस्तथा धूमशिखा[6]ऽग्रमी, इति ॥ १३ ॥ तत्र भु[7]क्तानुभुक्तदशवर्षम् ॥ १४ ॥ अन्यथाऽप्युदाहरन्ति ॥१५॥ आधिः[8] सीमा वालधनो निक्षेपोपनिधिः स्त्रियः । राजस्वं श्रोत्रियद्रव्यं न[9] संभोगेन हीयते ॥ १६ ॥ प्रहीणद्रव्याणि राजगामीनि भवन्ति ॥ १७ ॥ [*त[10]तोऽन्यथा राजा मन्त्रिभिः सह नागरैश्च कार्याणि कुर्या[11]त् ॥१८॥ वेधसो वा राजा श्रेयान्गृध्रपरिवारं स्यात् ॥ १९ ॥ गृध्रपरिवारं वा राजा श्रेयान् ॥ २० ॥ गृध्र] परिवारं स्यान्न गृध्रो गृध्रपरिवारं स्यात्परिवाराद्धि दोषाः प्रादुर्भवन्ति स्तेयहारविनाशनं तस्मात्पूर्वमेव परिवारं पृच्छेत् ॥ २१ ॥ अथ साक्षिणः ॥ २२ ॥ श्रोत्रियो रूपवाञ्शीलवान्पुण्यवान्सत्यवान्साक्षिणः [12]सर्वेषु सर्व एव वा ॥२३ ॥ स्त्रीणां तु साक्षिणः स्त्रियः कुर्याद्द्विजानां सदृशा द्विजाः । शूद्राणां सन्तः शूद्राश्च, अन्त्याना[13]मन्त्ययोनयः ॥ २४ ॥ अथाप्युदाहरन्ति ॥ २५ ॥ प्रतिभाव्यं वृथादानमाक्षिकं सौरिकं च यत् । दण्डशुल्कावशिष्टं च न पुत्रो दातुमर्हति, इति ॥२६॥ ब्रूहि साक्षिन्यथातत्त्वं लम्बन्ते पितरस्तव । तत्र वाक्यमुदी[14]क्षाणा उत्पतन्ति पतन्ति च ॥२७॥ नग्नो मुण्डः कपाली च भिक्षा[15]र्थी क्षुत्पिपासितः । अन्धः शत्रुकुले गच्छे[16]द्यः साक्ष्यमनृतं वदेत् ॥ २८ ॥ पञ्च कन्यानृते

---

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तके न विद्यते ।

---

१ च. क्षेत्रेभ्यो विसर्गस्तथा परिवर्तनं तरु° । २ ख. न । ऋणाग्रहेष्व° । ग. °न ऋणग्रहेप्व° । ३ ख. ग °वेऽपि ले° । ४ ख. ग. °न्ति—य एकं । ५ ख. ग °मो वोणैस्त° । ६ ख. ग. °खा ह्यमी इ । ७ ख. ग. भुक्ते दशवर्षमेवोदाह° । ८ ख. ग. सीमाधिकं चैव नि° । ९ ख. ग. न राजा दातुमर्हतीति । तच्च संभोगेन प्रहीतव्यम् । गृहिणां द्रव्या° । १० ख. ग. तया । ११ ख. ग. °र्यादसौ वा राजा श्रेयान् । वसुपरिवारः स्याद्गृध्रं परिवारं वा राजा श्रेयान् । गृध्रपरिवारः स्यान्न गृध्रो गृध्रपरिवारः स्यात् । परिवाराद्धि । १२ ख. ग. सर्व ए° । १३ ख ग °मन्त्या । अ° । १४ ख. ग. °दीर्यन्तमुत्प° । १५ ख. ग. °क्षार्थं क्षु° । १६ ख ग. °च्छेदस्तु साक्ष्यमनृ° ।

हन्ति दश हन्ति गवानृते । शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ २९ ॥ व्यवहारे मृते दारे प्रायश्चित्तं कुलस्त्रियाः । तेषां पूर्वपरिच्छेदाच्छिद्यन्तेऽत्रापवादिभिः ॥ ३० ॥ उद्वाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे । विप्रस्य चार्थे ह्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि ॥ ३१ ॥ स्वजनस्यार्थे यदि वाऽर्थहेतोः पक्षाश्रयेणैव वदन्ति कार्यम् । ते शब्दवंशस्य कुलस्य पूर्वान्स्वर्गस्थितांस्तानपि पातयन्ति, अपि पातयन्ति ॥ ३२ ॥

इति वासिष्ठे धर्मशास्त्रे षोडशोऽध्यायः ॥ १६ ॥

---

( अथ सप्तदशोऽध्यायः । )

---

ऋणमस्मिन्संनयति अमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ १ ॥ अनन्ताः पुत्रिणां लोका नापुत्रस्य लोकोऽस्तीति श्रूयते ॥ २ ॥ प्रजाः सन्त्वपुत्रिण इत्यभिशापः ॥ ३ ॥ प्रजाभिरग्ने अमृतत्वमश्यामित्यपि निगमो भवति ॥ ४ ॥ पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम् । इति ॥ ५ ॥ क्षेत्रिणः पुत्रो जनयितुः पुत्र इति विवदन्ते ॥ ६ ॥ तत्रोभयथाऽप्युदाहरन्ति ॥ ७ ॥ यद्यन्यो गोषु वृषभो वत्सानां जनयेच्छतम् । गोमिनामेव ते वत्सा मोघं स्यन्दितमार्षभम्, इति ॥ ८ ॥ अप्रमत्ता रक्षत तन्तुमेतं मा वः क्षेत्रे पर(रे)बीजानि वाप्सुः । न जनयितुः पुत्रो भवति स्वं(सं) पराये मोघं वेत्ता कुरुते तन्तुमेतमिति ॥ ९ ॥ बहूनामेकजातानामेकश्चेत्पुत्रवान्नरः । सर्वे ते तेन पुत्रेण पुत्रवन्त इति श्रुतिः ॥ १० ॥ बह्वीनामेकपत्नीनामेका पुत्रवती यदि । सर्वास्तास्तेन पुत्रेण पुत्रवत्य इति श्रुतिः ॥ ११ ॥ द्वादश इत्येव पुत्राः पुराणदृष्टाः ॥ १२ ॥ स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायां प्रथमः ।

---

१ ख. ग °श्चित्ते कुले स्त्रिय. । ते° । २ ख ग °दाच्छेद्यन्ते वाऽप° । ३ च. °नस्वार्थे । ४ ख. ग. °म् । वै शब्दवादं स्वकुलानुपू° । ५ ख. ग °यन्त्यपि । इ° । ६ क. च. °तें । अप्रजाः सन्त्वपु° । ७ ख. ग °त्यपि शा° । ८ ख. ग. वत्साञ्जनयते सुतान् । गो° । ९ ख. °घं स्पन्दनमोक्षणम् । इ° । १० ग. °स्यन्दनमोक्षणम् । इ° । ११ क °ति । स्वंपराणे मो° । च. °ति । मप° । १२ ख. ग. °रायो मोघं वेत्ता कुरुत तन्तु° । १३ क. वहूनामेकप° । १४ ख. ग. °ह्वीनां द्वादश त्वेव पु° ।

॥ १३ ॥ तदलाभे नियुक्तायां क्षेत्रजो द्वितीयः ॥ १४ ॥ तृतीयः पुत्रिका विज्ञायते ॥ १५ ॥ अभ्रातृका पुंसः पितॄनभ्येति प्रतीचीनं गच्छति पुत्रत्वम् ॥ १६ ॥ तत्र श्लोकः ॥ १७ ॥ अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥ १८ ॥ पौनर्भवश्चतुर्थः ॥ १९ ॥ या कौमारं भर्तारमुत्सृज्यान्यैः सह चरित्वा तस्यैव कुटुम्बमाश्रयति सा पुनर्भूर्भवति ॥ २० ॥ या च क्लीवं पतितमुन्मत्तं वा भर्तारमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवति ॥ २१ ॥ कानीनः पञ्चमः ॥ २२ ॥ या पितृगृहेऽसंस्कृता कामादुत्पादयेत्, मातामहस्य पुत्रो भवतीत्याहुः ॥ २३ ॥ अथाप्युदाहरन्ति ॥ २४ ॥ अप्रत्ता दुहिता यस्य पुत्रं विन्देत तुल्यतः। पुत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्, इति ॥ २५ ॥ गृहे च गूढोत्पन्नः षष्ठः ॥ २६ ॥ इत्येते दायादा बान्धवास्त्रातारो महतो भयादित्याहुः ॥ २७ ॥ अथादायादबन्धूनां सहोढ एव प्रथमो, या गर्भिणी संस्क्रियते तस्यां जातः सहोढः पुत्रो भवति ॥ २८ ॥ दत्तको द्वितीयो, यं मातापितरौ दद्याताम् ॥ २९ ॥ क्रीतस्तृतीयस्तच्छुनःशेपेन व्याख्यातम् ॥ ३० ॥ हरिश्चन्द्रो ह वै राजा सोऽजीगर्तस्य सौयवसेः पुत्रं चिक्राय ॥ ३१ ॥ स्वयमुपागतश्चतुर्थः, तच्छुनःशेपेन व्याख्यातम् ॥ ३२ ॥ शुनःशेपो वै यूपेन नियुक्तो देवतास्तुष्टाव, तस्येह देवताः पाशं विमुमुचुः, तमृत्विज ऊचुर्ममैवायं पुत्रोऽस्त्विति, तान्ह न संपेदे, ते संपादयामासुरेष एव यं कामयेत तस्य पुत्रोऽस्त्विति, तस्य ह विश्वामित्रो होताऽऽसीत्तस्य पुत्रत्वमियाय ॥ ३३ ॥ अपविद्धः पञ्चमो यं मातापितृभ्यामपास्तं प्रतिगृह्णीयात् ॥ ३४ ॥ शूद्रापुत्र एव षष्ठो भवतीत्याहुः ॥ ३५ ॥ इत्येतेऽदायादा बान्धवाः ॥ ३६ ॥ अथाप्युदाहरन्ति ॥ ३७ ॥ यस्य पूर्वेषां षण्णां न कश्चिद्दायादः स्यादेते तस्य दायं हरेरन्निति ॥ ३८ ॥ अथ भ्रातॄणां दायविभागः ॥ ३९ ॥ द्व्यंशं ज्येष्ठो हरेत्, गवाश्वस्य चानुदशमम् ॥ ४० ॥ अजावयो गृहं च कनिष्ठस्य

---

१ क. याञ्छति। २ ख. ग गृ॰। ३ ख ग. °थादायादास्तत्र स°। ४ ख. ग. °स्य सोपवसे. पुत्रं विक्र॰ स्वयं क्रीतवान्। स्व°। ५ ख. ग °शेफेन। ६ ख. ग शेफेन। ७ ख ग. °शेफो ह वै यूपे नि°। ८ क कामयते। ९ ख. ग. तस्येह। १० ख. ग. °पा वर्णाना न। ११ ख. ग तस्यापहरन्ति। स°। १२ च. °भागः। याश्चानपत्यास्तासामा पुत्रलाभात्। द्व्यं। १३ ख. ग. °नुसदशमजा°।

॥ ४१ ॥ कार्ष्णायसं गृहोपकरणानि च मध्यमस्य ॥ ४२ ॥ मातुः पारिणेयं स्त्रियो विभजेरन् ॥ ४३ ॥ यदि ब्राह्मणस्य ब्राह्मणीक्षत्रियावैश्यासु पुत्राः स्युस्त्र्यंशं ब्राह्मण्याः पुत्रो हरेद्द्व्यंशं राजन्यायाः पुत्रः सममितरे विभजेरन् ॥ ४४ ॥ येन चैषां स्वयमुत्पादितं स्याद्द्व्यंशमेव हरेत् ॥ ४५ ॥ अनंशास्त्वाश्रमान्तरगताः ॥ ४६ ॥ क्लीबोन्मत्तपतिताश्च ॥ ४७ ॥ भरणं क्लीबोन्मत्तानाम् ॥ ४८ ॥ प्रेतपत्नी षण्मासान्व्रतचारिण्यक्षारलवणं भुञ्जानाऽधः शयीतोर्ध्वं षड्भ्यो मासेभ्यः स्नात्वा श्राद्धं च पत्ये दत्त्वा विद्याकर्मगुरुयोनिसंबन्धान्संनिपात्य पिता भ्राता वा नियोगं कारयेत्तपसे ॥ ४९ ॥ न सोन्मत्तामवशां व्याधितां वा नियुञ्ज्यात् ॥ ५० ॥ ज्यायसीमपि षोडश वर्षाणि, न चेदामयावी स्यात् ॥ ५१ ॥ प्राजापत्ये मुहूर्ते पाणिग्राहवदुपचरेत् ॥ ५२ ॥ अन्यत्र संप्रहास्यवाक्पारुष्यदण्डपारुष्याच्च ॥ ५३ ॥ ग्रासाच्छादनस्नानानुलेपनेषु प्राग्गामिनी स्यात् ॥ ५४ ॥ अनियुक्तायामुत्पन्न उत्पादयितुः पुत्रो भवतीत्याहुः ॥ ५५ ॥ स्याच्चेन्नियोगिनो रिक्थम् ॥ ५६ ॥ लोभान्नास्ति नियोगः ॥ ५७ ॥ प्रायश्चित्तं वाऽप्युपादिश्य नियुञ्ज्यादित्येके ॥ ५८ ॥ कुमार्यृतुमती त्रीणि वर्षाण्युपासीतोर्ध्वं त्रिभ्यो वर्षेभ्यः पतिं विन्देत्तुल्यम् ॥ ५९ ॥ अथाप्युदाहरन्ति ॥ ६० ॥ पितुः प्रमादात्तु यदीह कन्या वयःप्रमाणं समतीत्य दीयते। सा हन्ति दातारमुदीक्षमाणा कालातिरिक्ता गुरुदक्षिणेव ॥ ६१ ॥ प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता। ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥ ६२ ॥ यावच्च कन्यामृतवः स्पृशन्ति तुल्यैः सकामामभियाच्यमानाम्। भ्रूणानि तावन्ति हतानि ताभ्यां मातापितृभ्यामिति धर्मवादः ॥ ६३ ॥ अद्भिर्वाचा च दत्तायां म्रियेताऽऽदौ वरो यदि। न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ॥ ६४ ॥ बलाच्चेत्प्रहृता कन्या मन्त्रैर्यदि न संस्कृता। अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ ६५ ॥ पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता। सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति, इति ॥ ६६ ॥ प्रोषितपत्नी पञ्च

---

१ ख. ग. कार्ष्ठं गां गां यवसं। २ ख. °रन्नन्येन। ३ घ वा विनि°। ४ क °येत। न। घ °येत्। प्र सोन्मादाम°। ५ ख. ग सेषोन्म°। ६ ख ग. °वर्षां न चेदामयाविनी स्या°। ७ ख. ग °णिग्रहणवदु° पचारोऽन्यत्र संस्थाप्य सां°। ८ ख. ग प्राग्यामि°। ९ ख. ग °गिनी इहालो°। च °गिनो। रिक्थलो°। १० ख. ग °पनि°। ११ ख ग. प्रदानात्तु यदा हि पूर्वं कन्या वयो ग स°। १२ ख ग °रमपीक्ष°। १३ ख. ग. °तायेव°। १४ ख. ग. सा। यावच्चेदाहृता। १५ च. °णिग्रहे।

वर्षाण्युपासीतोर्ध्वं पञ्चभ्यो वर्षेभ्यो भर्तृसकाशं गच्छेत् ॥६७॥ यदि धर्मार्थाभ्यां प्रवासं प्रत्यनुकामा न स्याद्यथा प्रेत एवं वर्तितव्यं स्यात् ॥ ६८ ॥ एवं ब्राह्मणी पञ्च प्रजाताऽप्रजाता चत्वारि, राजन्या प्रजाता पञ्चाप्रजाता त्रीणि, वैश्या प्रजाता चत्वार्यप्रजाता द्वे, शूद्रा प्रजाता त्रीण्यप्रजातैकम् ॥ ६९ ॥ अत ऊर्ध्वं समानोदकपिण्डजन्मर्षिगोत्राणां पूर्वः पूर्वो गरीयान् ॥ ७० ॥ न तु खलु कुलीने विद्यमाने परगामिनी स्यात् ॥ ७१ ॥ यस्य पूर्वेषां षण्णां न कश्चिद्दायादः स्यात्सपिण्डाः पुत्रस्थानीया वा तस्य धनं विभजेरन् ॥ ७२ ॥ तेषामलाभ आचार्यान्तेवासिनौ हरेयाताम् ॥ ७३ ॥ तयोरलाभे राजा हरेत् ॥७४॥ न तु ब्राह्मणस्य राजा हरेत् ॥७५॥ ब्रह्मस्वं तु विषं घोरम् ॥ ७६ ॥ न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्, इति ॥ ७७ ॥ त्रैविद्यसाधुभ्यः संप्रयच्छेत्संप्रयच्छेदिति ॥ ७८ ॥

इति वासिष्ठे धर्मशास्त्रे सप्तदशोऽध्यायः ॥ १७ ॥

---

( अथाष्टादशोऽध्यायः । )

---

शूद्रेण ब्राह्मण्यामुत्पन्नश्चण्डालो भवतीत्याहू राजन्यायां वैणो वैश्यायामन्त्यावसायी ॥ १ ॥ वैश्येन ब्राह्मण्यामुत्पन्नो रामको भवतीत्याहुः, राजन्यायां पुल्कसः ॥ २ ॥ राजन्येन ब्राह्मण्यामुत्पन्नः सूतो भवतीत्याहुः ॥ ३ ॥ अथाप्युदाहरन्ति ॥ ४ ॥ छन्नोत्पन्नास्तु ये केचित्प्रातिलोम्यगुणाश्रिताः । गुणाचारपरिभ्रंशात्कर्मभिस्तान्विजानीयुः, इति ॥५॥ एकान्तरद्व्यन्तरत्र्यन्तरानुजाता ब्राह्मणक्षत्रियवैश्यैरम्बष्ठोग्रनिषादा भवन्ति ॥६॥ शूद्रायां पारशवः पारयन्नेव जीवन्नेव शवो भवतीत्याहुः॥७॥ शव इति मृताख्या ॥ ८ ॥ एके वै तच्छ्मशानं ये शूद्रास्तस्माच्छूद्रसमीपे नाध्येतव्यम् ॥ ९ ॥ अथापि यमगीताञ्श्लोकानुदाहरन्ति ॥ १० ॥ श्मशानमेतत्प्रत्यक्षं ये शूद्राः पापचारिणः । तस्माच्छूद्रसमीपे तु नाध्येतव्यं कदाचन ॥ ११ ॥

---

१ ख. ग. °र्षा प्रवसेद्यद्यकामा यथा प्रेतस्यैवं च वर्ति° । २ ख ग. °वं पञ्च ब्राह्मणी प्रजाता चत्वारि राजन्या प्रजाता त्रीणि वैश्या प्रजाता द्वे शूद्रा प्रजाता अ° । ३ च. °मानार्थजन्मपिण्डोदकगो° । ४ ख. ग. °मि स्या° । ५ ख. ग. °था वैश्या° । ८ ख ग °न्ति छिन्नो° । ७ क च. °न्तराद्व्यन्तरात्र्यन्तरासु जा° । ८ क. च. °द्रायां पारसवः । पारशवन्ने° । ९ ख. ग. °ख्या । एतच्छावं यच्छूद्रस्त° ।

न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्। न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥ १२॥ यश्चास्योपदिशेद्धर्मं यश्चास्य व्रतमादिशेत्। सोऽसंवृतं तमो घोरं सह तेन प्रपद्यते, इति॥ १३॥ व्रणद्वारे कृमिर्यस्य संभवेत कदाचन। प्राजापत्येन शुध्येत हिरण्यं गौर्वासो दक्षिणा, इति॥ १४॥ नाग्निं चित्वा रामामुपेयात्॥१५॥ कृष्णवर्णा या रामा रमणायैव न धर्माय न धर्मायेति॥ १६॥

इति वासिष्ठे धर्मशास्त्रेऽष्टादशोऽध्यायः॥ १८॥

(अथैकोनविंशोऽध्यायः।)

स्वधर्मो राज्ञः पालनं भूतानां तस्यानुष्ठानात्सिद्धिः॥ १॥ भयकारुण्यहानं जरामर्यं(र्यं) वै तत्सत्रमाहुर्विद्वांस्तस्माद्गार्हस्थ्यानैयमिकेषु पुरोहितं दध्यात्॥ २॥ विज्ञायते॥ ३॥ ब्रह्मपुरोहितं राष्ट्रमृध्नोतीति॥४॥ उभयस्य पालनादसामर्थ्याच्च देशधर्मजातिकुलधर्मान्सर्वानेवैताननुप्रविश्य राजा चतुरो वर्णान्स्वधर्मे स्थापयेत्॥ ५॥ तेष्वपचरत्सु दण्डं धारयेत्॥ ६॥ दण्डस्तु देशकालधर्मवयोविद्यास्थानविशेषैर्हिंसाक्रोशयोः कल्प्य आगमाद्दृष्टान्ताच्च॥ ७॥ पुष्पफलोपगान्पादपान्न हिंस्यात्कर्षणकरणार्थं चोपहन्यात्॥ ८॥ गार्हस्थ्याङ्गानां च मानोन्माने रक्षिते स्याताम्॥ ९॥ अधिष्ठानान्ननीहारः स्वार्थानां, मानमूल्यमात्रं नैहारिकं स्यात्॥ १०॥ महामर्हयोः स्थानात्पथः स्यात्(?)॥११॥ संयाने दशवाहवाहिनी द्विगुणकारिणी स्यात्॥१२॥ प्रत्येकं प्रथास्यः पुमान्(?)॥ १३॥ पुंसां शतावराध्यं चाऽऽहवयेद्व्यर्थाः स्त्रियः स्युः॥ १४॥ करोष्ठीलामाषः शरमध्यापः पादः कार्षापणाः स्युर्निरुदकस्तरोमोक्योऽकरः श्रोत्रियो राजपुमाननाथप्रव्रजितबालवृद्धतरुणप्रजाताः प्राग्गामिकाः कुमार्यो मृतपत्न्यश्च॥ १५॥ बाहुभ्यामुत्तरञ्छतगुणं दद्यात्॥ १६॥ नदीकक्षव-

१ क. °त। सुसंवृत्तं त°। २ ख. ग. नाग्निचित्परासु°। ३ ख. ग. °र्णाय. सरमाया इव। ४ ख. ग. °कारणं ह्यापालनं वै एतत्सुत्रमा°। ५ ख ग. °हिते दद्याद्विज्ञायते ब्राह्मण. पुरोहितो राष्ट्रं दधातीति तस्य भयमपा°। ६ ख. ग. °तिधर्मकु°। ७ ख. ग. °ष्वधर्मपरेषु°। दण्डं तु दे°। ८ ख. ग धर्माधर्मव°। ९ ग. ग °षैर्दिशेत्। आ°। १० ख. ग. °माद्दष्टाभावात्। पु°। ११ च. °णकार°। १२ ख. ग. °र्हस्थ्ये गां च। १३ क. °नान्पानी°। ख. ग. °नाम्नो नीहारसार्थानामस्मात्रम्°। १४ ख. ग. °हस्थ स्यात्। संमानयेद्वाहवाहनीगाद्वि°। १५ क. स्थानमन्यथा स्या°। १६ क. °ने देश। १७ क च प्रपा. स्यु पुं°। १८ ख. ग. शतं वाराध्य वा तदेतद्व्यर्था°। १९ ख. ग. राष्ट्रौ मानाधारमध्यमा. पाद. कार्षापणस्य निरुकोऽन्तरो मानाक°। २० ख. °नभ°। २१ ख ग. °प्रदातप्राग्गामि°। २२ च. °र्यो भृत°। २३ ग. मृतापत्याश्च।

नदाहशैलोपभोगा निष्कराः स्युस्तदुपजीविनो वा दद्युः ॥ १७ ॥ प्रतिमासमुद्वाहकरं त्वागमयेद्राजनि च प्रेते दद्यात्प्रासङ्गिकम् ॥ १८ ॥ एतेन मातृष्वातिव्याख्याता ॥ १९ ॥ राजमहिष्याः पितृव्यमातुलान्राजा बिभृयात्तद्बन्धूंश्चान्यांश्च ॥ २० ॥ राजपत्न्यो ग्रासाच्छादनं लभेरन् ॥ २१ ॥ अनिच्छन्त्यो वा प्रव्रजेरन् ॥ २२ ॥ क्लीबोन्मत्तान्राजा बिभृयात्, तद्गामित्वाद्रिक्थस्य ॥ २३ ॥ शुल्के चापि मानवं श्लोकमुदाहरन्ति ॥ २४ ॥ न भिन्नकार्षापणमस्ति शुल्के न शिल्पवृत्तौ न शिशौ न दूते । न भैक्षलब्धे न हृतावशेषे न श्रोत्रिये प्रव्रजिते न यज्ञे, इति ॥२५॥ स्तेनोऽनुप्रवेशान्न दुष्यते शस्त्रधारी सहोढो व्रणसंपन्नो व्यपदिष्टस्त्वेकेषां दण्डयोत्सर्गे राजैकरात्रमुपवसेत्त्रिरात्रं पुरोहितः ॥ २६ ॥ कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा ॥ २७ ॥ अथाप्युदाहरन्ति ॥ २८ ॥ अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्याऽपचारिणी । गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥ २९ ॥ राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥३०॥ एचो राजानमृच्छति उत्सृजन्तं सकिल्बिषम् । तं चेद्घातयते राजा हन्ति धर्मेण दुष्कृतम्, इति ॥३१॥ राज्ञामात्ययिके कार्ये सद्यः शौचं विधीयते । तथाऽनात्ययिके नित्यं काल एवात्र कारणम्, इति ॥ ३२ ॥ यमगीतं चात्र श्लोकमुदाहरन्ति ॥ ३३ ॥ नात्र दोषोऽस्ति राज्ञां वै व्रती( ति )नां न च सत्रिणाम् । ऐन्द्रस्थानमुपासीना ब्रह्मभूता हि ते सदा, इति हि ते सदा, इति ॥ ३४ ॥

इति वासिष्ठे धर्मशास्त्र एकोनविंशोऽध्यायः ॥ १९ ॥



१ ख. ग °नशैलोपमाङ्गानि° । २ ख ग °करैस्त्वाग° । ३ ख. ग °तुलांशजापितृव्यास्नाजा । ४ ख. ग. °तद्गामित्वादंशस्य स्युस्तद्ब° । ५ ख. ग. °न्मत्ताशं धाऽपि । भा° । ६ ख. ग. न रिक्तका° । ७ ख. ग. शुल्कं । ८ क. ग धर्मे । ९ क. ग. °क्षवृत्तौ न हृ° । १० ख. ग. स्तेनाभिशस्तदुष्टशस्त्रधारिसहोढव्रणसंपन्नव्यपविष्टष्वेके° । ११ ख. ग. दण्डोत्स° । १२ ख. ग °त्रं वा । अ° । १३ ख. ग. चेन्न घातयेद्राजा राजधर्मेण दुष्यतीति । १४ क. च. राजामा° । १५ ख. ग. °था तान्यपि नित्यानि का° । १६ क. च. नाघदो° । १७ ख. ग. मन्त्रिणाम् । १८ क. °ति ॥ ३४ ॥

( अथ विंशोऽध्याय. । )

---

अनभिसंधिकृते प्रायश्चित्तमपराधे ॥१॥ अभिसंधिकृतेऽप्येके ॥ २ ॥ गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् । इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः, इति ॥३॥ तत्र च सूर्याभ्युदितः सन्नहास्तिष्ठेत् ॥ ४ ॥ सावित्रीं च जपेत् ॥ ५॥ एवं सूर्याभिनिर्मुक्तो रात्रावासीत ॥ ६ कुनखी श्यावदन्तस्तु कृच्छ्रं द्वादशरात्रं चरेत् ॥ ७ ॥ परिवित्तिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत, तां चैवोपयच्छेत् ॥ ८ ॥ अथ परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निर्वि( वि )शेत, तामेवोपयच्छेत् ॥ ९ ॥ अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत तां चैवोपयच्छेत् ॥ १० ॥ दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत् ( त ) ॥ ११ ॥ वीरहणं परस्ताद्वक्ष्यामः ॥ १२ ॥ ब्रह्मघ्नः कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्यात् ॥ १३ ॥ गुरुतल्पगः सवृषणं शिश्नमुत्कृत्याञ्जलावाधाय दक्षिणामुखो गच्छेत् ॥ १४ ॥ यत्रैव प्रतिहन्यात्तत्र तिष्ठेदाप्रलयम् ॥ १५ ॥ निष्कालको वा घृताभ्यक्तस्तप्तां सूर्मीं परिष्वजेन्मरणात्पूतो भवतीति विज्ञायते ॥ १६ ॥ आचार्यपुत्रशिष्यभार्यासु चैवम् ॥ १७ ॥ योनिषु च गुर्वीं सखीं गुरुसखीमपपात्रां पतितां च गत्वा कृच्छ्राब्दपादं चरेत् ॥ १८ ॥ एतदेव चाण्डालपतितान्नभोजनेषु, ततः पुनरुपनयनं, वपनादीनां तु निवृत्तिः ॥ १९ ॥ मानवं चात्र श्लोकमुदाहरन्ति ॥ २० ॥ वपनं मेखला दण्डो भैक्षचर्या व्रतानि च । एतानि तु निवर्तन्ते पुनःसंस्कारकर्मणि, इति ॥ २१ ॥ मत्या मद्यपाने त्वसुरायाः सुरायाश्चाज्ञाने कृच्छ्रातिकृच्छ्रौ घृतं प्राश्य पुनः संस्कारश्च ॥ २२ ॥ मूत्रशकृच्छुक्राभ्यवहारेषु चैवम् ॥ २३ ॥ मद्यभाण्डे स्थिता आ(अ)पो यदि कश्चिद्द्विजः पिबेत् पद्मोदुम्बरबिल्वपलाशानामुदकं पीत्वा त्रिरात्रेणैव शुध्यति ॥ २४ ॥ अभ्यासे तु सुराया अग्निवर्णां तां द्विजः पिबेन्मरणात्पूतो भवतीति ॥ २५ ॥ भ्रूणहनं वक्ष्यामो

---

१ ख. च. अथ । २ ख. ग. चरित्वा पुनर्निर्विशेत् । अथ दिधिषूपति. कृच्छ्रं । ३ ख. ग. °त्वा निर्विशेत् । चरणमहरहस्तद्ध° । ४ ख. ग. °पनीतो वे° । ५ क. च. °मुद्धृत्या° । ६ ख. ग. सूर्मिं । ७ ख. ग °णाम्मुक्तो भ° । ८ ख. ग. °सखीं च पति° । ९ ख. ग. °च्छ्राब्दं च° । १० ख. ग. च । निवर्तन्ते द्विजातीनां पु° । ११ ख. ग. मद्यपाने क्लीबन्यवहा° । १२ क. °याश्च ज्ञा° । १३ ख ग. °द्द्विजोऽर्थवित् ।

ब्राह्मणं हत्वा भ्रूणहा भवत्यविज्ञातं गर्भमविज्ञाता हि गर्भाः पुमांसो भवन्ति ॥२६॥ तस्मात्पुंस्कृत्याऽऽजुह्वतीति, भ्रूणहाऽग्निमुपसमाधाय जुहुयादेताः ॥ २७ ॥ लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वासय, इति प्रथमाम् ॥ २८ ॥ त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वासय, इति द्वितीयाम् ॥ २९ ॥ लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं वासय, इति तृतीयाम् ॥ ३० ॥ मांसं मृत्योर्जुहोमि मांसेन मृत्युं वासय, इति चतुर्थीम् ॥ ३१ ॥ स्नावानि मृत्योर्जुहोमि स्नावभिर्मृत्युं वासय, इति पञ्चमीम् ॥ ३२ ॥ मेदो मृत्योर्जुहोमि मेदसा मृत्युं वासय, इति षष्ठीम् ॥ ३३ ॥ अस्थीनि मृत्योर्जुहोमि अस्थिभिर्मृत्युं वासय, इति सप्तमीम् ॥ ३४ ॥ मज्जानं मृत्योर्जुहोमि मज्जा(ज्ज)भिर्मृत्युं वासय, इत्यष्टमीमिति ॥ ३५ ॥ राजार्थे ब्राह्मणार्थे वा सङ्ग्रामेऽभिमुखमात्मानं घातयेत्त्रिरजितो वाऽपराद्धः पूतो भवतीति ॥ ३६ ॥ विज्ञायते हि ॥ ३७ ॥ निरुक्तं ह्येनः कनीयो भवतीति ॥ ३८ ॥ तथाऽप्युदाहरन्ति ॥ ३९ ॥ पतितं पतितेत्युक्त्वा चौरं चौरेति वा पुनः। वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत्, इति ॥ ४० ॥ एवं राजन्यं हत्वाऽष्टौ वर्षाणि चरेत्, षड्वैश्यं, त्रीणि शूद्रं, ब्राह्मणीं चाऽऽत्रेयीं हत्वा सवनगतौ च राजन्यवैश्यौ ॥ ४१ ॥ आत्रेयीं वक्ष्यामो रजस्वलामृतुस्नातामात्रेयीमाहुः ॥४२ ॥ अत्र ह्येष्यदपत्यं भवतीति ॥ ४३॥ अनात्रेयीं राजन्यहिंसायां राजन्यां वैश्यहिंसायां वैश्यां शूद्रहिंसायां शूद्रां हत्वा संवत्सरम् ॥ ४४ ॥ ब्राह्मणसुवर्णहरणे प्रकीर्य केशान्राजानमभिधावेत्स्तेनोऽस्मि भोः शास्तु मां भवानिति। तस्मै राजौदुम्बरं शस्त्रं दद्यात्तेनाऽऽत्मानं प्रमापयेन्मरणात्पूतो भवतीतिविज्ञायते ॥ ४५ ॥ निष्कालको वा घृताक्तो गोमयाग्निना पादप्रभृत्यात्मानमभिदाहयेन्मरणात्पूतो भवतीति विज्ञायते ॥ ४६ ॥ अथाप्युदाहरन्ति ॥ ४७ ॥ पुराकालात्प्रमीतानां पापाद्विविधकर्मणाम्। पुनरापन्नदेहानामङ्गं भवति तच्छृणु॥४८॥ स्तेनः कुनखी भवति श्वित्री भवति ब्रह्महा। सुरापः श्यावदन्तस्तु दुश्चर्मा गुरुतल्पगः, इति ॥४९॥ पतितसंप्रयोगं च ब्राह्मेण वा यौनेन वा यास्तेभ्यः सकाशान्मात्रा उपलब्धास्तासां परित्यागस्तैश्च न संवसेदुदीचीं दिशं गत्वाऽनश्नन्संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते ॥ ५० ॥ तथाऽप्युदाहरन्ति ॥ ५१ ॥

---

१ ख. ग. °स्कृत्य जुहु° । २ क ख. ग. °यात्। लोमा° । ३ ख. ग. °रञ्जितो । ४ ख. ग. °वसा तुल्य° । ५ ख. ग. °थ्यादिदोष° । ६ ख. ग. अत्रेत्येषामपत्यं भवतीति चात्रेयी राजन्याहिं° । ७ ख. ग. °या वैश्यहिंसाया शूद्रं ह° । ८ ख. ग. °तानामानाकविधिक° ।

शरीरपरितापेन तपसाऽध्ययनेन च। मुच्यते पापकृत्पापाद्दानाच्चापि प्रमुच्यते, इति विज्ञायते विज्ञायत इति ॥ ५२ ॥

इति वासिष्ठे धर्मशास्त्रे विंशोऽध्यायः ॥ २० ॥

(अथैकविंशोऽध्यायः।)

शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् ॥ १ ॥ ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषा समभ्यज्य नग्नां कृष्णं खरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते ॥ २ ॥ वैश्यश्चेद्ब्राह्मणीमाधिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् ॥ ३ ॥ ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां गौरं खरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते ॥ ४ ॥ राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत्, ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषा समभ्यज्य नग्नां श्वेतं खरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते ॥ ५ ॥ एवं वैश्यो राजन्यायां शूद्रश्च राजन्यावैश्ययोः ॥ ६ ॥ मनसा भर्तुरतिचारे त्रिरात्रं यावकं क्षीरौदनं वा भुञ्जानाऽधः शयीतोर्ध्वं त्रिरात्रादप्सु निमग्नायाः सावित्र्यष्टशतेन शिरोभिर्जुहुयात्पूता भवतीति विज्ञायते ॥ ७ ॥ *वाक्संबन्ध एतदेव मासं चरित्वोर्ध्वं मासादप्सु निमग्नायाः सावित्र्याश्चतुर्भिरष्टशतैः शिरोभिर्जुयात्पूता भवतीति विज्ञायते ॥ ८ ॥ व्यवाये तु संवत्सरं घृतपटं धारयेत् ॥ ९ ॥ गोमयगर्ते कुशप्रस्तरे वा शयीतोर्ध्वं संवत्सरादप्सु निमग्नायाः सावित्र्यष्टशतेन शिरोभिर्जुहुयात्पूता भवतीति विज्ञायते ॥ १० ॥ व्यवाये तीर्थगमने धर्मेभ्यस्तु निवर्तते। चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ॥ ११ ॥ पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥ १२ ॥ या ब्राह्मणी सुरापी न तां देवाः पतिलोकं नयन्ति। इहैव सा चरति क्षीणपुण्याऽप्सु लुग्भवति शुक्तिका वा ॥ १३ ॥ ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण संगताः। अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः। प्रतिलोमं चरेयुस्ताः कृच्छ्रं चान्द्रायणोत्तरम् ॥ १४ ॥ पतिव्रतानां गृहमेधिनीनां

---

* अत्रैतदध्यायसमाप्तिः ख. ग. पुस्तकयोः। इत उत्तरग्रन्थः खः ग. पुस्तकयोर्न विद्यते।

---

१ ख. ग. °रपातनाच्चैव त°। २ क ख °यते इ°। ३ ख. ग. नग्नां गौरयमारो°। ४ ख. ग. क्षयाना त्रिरात्रमप्सु। ५ क. ख निम्नगायाः।

सत्यव्रतानां च शुचिव्रतानाम् । तासां तु लोकाः पतिभिः समाना गोमायुलोका व्यभिचारिणीनाम् ॥ १५ ॥ पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् । पतितार्ध-शरीरस्य निष्कृतिर्न विधीयते ॥ १६ ॥ ब्राह्मणश्चेदप्रेक्षापूर्वं ब्राह्मणदारानभिगच्छेद-निवृत्तधर्मकर्मणः कृच्छ्रो निवृत्तधर्मकर्मणोऽतिकृच्छ्रः ॥ १७ ॥ एवं राजन्यवैश्ययोः ॥ १८ ॥ गां चेद्धन्यात्तस्याश्चर्मणाऽऽर्द्रेण परिवेष्टितः षण्मासान्कृच्छ्र(च्छ्रं) तप्तकृच्छ्रं वा तिष्ठेत् ॥ १९ ॥ तयोर्विधिः ॥ २० ॥ त्र्यहं दिवा भुङ्क्ते नक्तमश्नाति वै त्र्यहम् । त्र्यहमयाचितव्रतस्त्र्यहं न भुङ्क्त इति कृच्छ्रः ॥ २१ ॥ त्र्यहमुष्णं पिबेदा-(च्चा) पस्त्र्यहमुष्णं पयः पिबेत् । त्र्यहमुष्णं घृतं पीत्वा वायुभक्षः परं त्र्यहम् ॥२२॥ इति तप्तकृच्छ्रः ॥२३॥ ऋषभवेहतौ च दद्यात् ॥२४॥ अथाप्युदाहरन्ति ॥२५॥ त्रय एव पुरा रोगा ईर्ष्या अनशनं जरा । पृषद्ध्रस्तनयं(?) हत्वा अष्टानवतिमाहरेत् ॥२६॥ इति श्वमार्जारनकुलसर्पदर्दुरमूषकान्हत्वा कृच्छ्रं द्वादशरात्रं चरेत्किंचिद्दद्यात् ॥ २७॥ अनस्थिमतां तु सत्त्वानां गोमात्रं राशिं हत्वा कृच्छ्रं द्वादशरात्रं चरेत्किंचिद्दद्यात् ॥ २८ ॥ अस्थिमतां त्वेकैकम् ॥ २९ ॥ योऽग्नीनपविध्येत्कृच्छ्रं द्वादशरात्रं चरित्वा पुनराधानं कारयेत् ॥ ३० ॥ गुरोश्चालीकनिर्बन्धः सचैलं स्नातो गुरुं प्रसादये-त्प्रसादात्पूतो भवतीति विज्ञायते ॥ ३१ ॥ नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा विरमेन्नास्तिक्यात् ॥ ३२ ॥ नास्तिकवृत्तिस्त्वतिकृच्छ्रम् ॥ ३३ ॥ एतेन सोम-विक्रयी व्याख्यातः ॥ ३४ ॥ वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महा-कक्षे (क्षं) वर्धयेत् ॥ ३५ ॥ भिक्षुकैर्वा(को वा)नप्रस्थैवद्वोभवृद्धिवर्जं स्वशास्त्र-संस्कारश्च स्वशास्त्रसंस्कारश्चेति ॥ ३६ ॥

इति वासिष्ठे धर्मशास्त्र एकविंशोऽध्यायः ॥ २१ ॥

---

(अथ द्वाविंशोऽध्यायः ।)

---

अथ खल्वयं पुरुषो मिथ्या व्याकरोत्ययाज्यं वा याजयति अप्रतिग्राह्यं वा प्रति-गृह्णाति अनन्नं वाऽश्नाति अनाचरणीयमेवाऽऽचरति तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते, न कुर्यादित्याहुर्न हि कर्म क्षीयत इति, कुर्यादित्येव तस्माच्छ्रुतिनिदर्शनात्त-

---

१ क. °र्घेदप्रेक्षा° । २ च. °मुष्णाः पि° ३ क °त्वा विरमेत् । नास्तिक्यात्पुनराधानं न का° । ४ च. °स्थवात्सामेवृद्धिवर्धनं स्व° । ५ क. ख. °रश्चे° । ६ क. °नश्नन्वाऽश्ना ।

रति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजत, इति ॥ १ ॥ वाचाऽभिशस्तो गोसवेनाग्निष्टुता यजेत ॥ २ ॥ तस्य निष्क्रयणानि जपस्तपो होम उपवासो दानमुपनिषदो वेदादयो वेदान्ताः सर्वच्छन्दःसंहिता मधून्यघमर्षणमथर्वशिरो रुद्राः पुरुषसूक्तं राजनि(न)रौहिणे सामनी कूष्माण्डानि पावमान्यः सावित्री चेति पावनानि ॥ ३ ॥ अथाप्युदाहरन्ति ॥ ४ ॥ वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च । सकृदृतौ प्रयुञ्जानः पुनाति दशपूरुषम्, इति ॥ ५ ॥ उपवासन्यायेन पयोव्रतता फलभक्षता प्रसृतयावको हिरण्यप्राशनं सोमपानमिति मेध्यानि ॥ ६ ॥ सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्या ह्रदास्तीर्थान्यृषिनिवासगोष्ठपरिष्कन्धा इति देशाः ॥ ७ ॥ संवत्सरो मासश्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहोऽहोरात्र इति कालाः ॥ ८ ॥ एतान्येवानादेशे विकल्पेन क्रियेरन्, एनःसु गुरुषु गुरूणि लघुषु लघूनि ॥ ९ ॥ कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तिः सर्वप्रायश्चित्तिरिति ॥ १० ॥

इति वासिष्ठे धर्मशास्त्रे द्वाविंशोऽध्यायः ॥ २२ ॥

=====

(अथ त्रयोविंशोऽध्याय. ।)

---

ब्रह्मचारी चेत्स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्दभं पशुमालभेत, नैर्ऋतं वा चरुं निर्वपेत्, तस्य जुहुयात्कामाय स्वाहा, कामकामाय स्वाहा, निर्ऋत्यै स्वाहा, रक्षोदेवताभ्यः स्वाहेति ॥ १ ॥ एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने व्रतान्तरेषु वा समावर्तनात्तिर्यग्योनिव्यवाये ॥ २ ॥ शुक्लमृषभं दद्यात् ॥ ३ ॥ गां गत्वा शूद्रावधेन दोषो व्याख्यातः ॥ ४ ॥ ब्रह्मचारिणः शवकर्मणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः ॥ ५ ॥ स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भेषजार्थं सर्वं प्राश्नीयात् ॥ ६ ॥ गुरुप्रयुक्तश्चेन्म्रियेत त्रीन्कृच्छ्रांश्चरेद्गुरुः ॥ ७ ॥ ब्रह्मचारी चेन्मांसमश्नीयादुच्छिष्टभोजनीयं कृच्छ्रं द्वादशरात्रं चरित्वा व्रतशेषं समापयेत् ॥ ८ ॥ श्राद्धसूतकभोजनेषु चैवम् ॥ ९ ॥ अकामतोपनतं मधु वाजसनेयके न दुष्यतीति विज्ञायते ॥ १० ॥ य आत्मत्यागयभिशस्तो भवति सपिण्डानां प्रेतकर्मच्छेदः॥११॥

---

१ क. °ति सप्तपौरु° । २ क °ण्या नद्यस्ती° । ३ च. °रात्रा इ° । ४ च नैर्ऋत्यं । ५ क. °शुक्लामृषभं दद्यात् । शुक्लालिङ्गं गां दत्त्वा शूद्रव° ।

काष्ठजललोष्टजलपाषाणशस्त्रविषरज्जुभिर्य आत्मानमवसादयति, स आत्महा भवति ॥ १२ ॥ अथाप्युदाहरन्ति ॥१३॥ य आत्मत्यागिनः कुर्यात्स्नेहात्प्रेतक्रियां द्विजः । स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतम्, इति ॥१४॥ चान्द्रायणं परस्ताद्वक्ष्यामः॥१५॥ आत्महननाध्यवसाये त्रिरात्रम् ॥ १६ ॥ जीवन्नात्मत्यागी कृच्छ्रं द्वादशरात्रं चरेत्, त्रिरात्रं ह्युपवसेन्नित्यं स्निग्धेन वाससा प्राणानात्मनि चाऽऽयम्य त्रिः पठेदघमर्षणमिति ॥ १७ ॥ अपि वैतेन कल्पेन गायत्रीं परिवर्तयेत् । अपि वाऽग्निमुपसमाधाय कूष्माण्डैर्जुहुयाद्घृतम् ॥ १८ ॥ यच्चान्यन्महापातकेभ्यः सर्वमेतेन पूयत इत्यथाप्याचामेत् ॥ १९ ॥ अग्निश्च मा मन्युश्चेति प्रातर्मनसा पापं ध्यात्वोंपूर्वाः सत्यान्ता व्याहृतीर्जपेदघमर्षणं वा पठेत् ॥ २० ॥ मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचमस्निग्धे त्वहोरात्रम् ॥ २१ ॥ शवानुगमने चैवम् ॥ २२ ॥ अधीयानानामन्तरागमने त्वहोरात्रमभोजनम्, त्रिरात्रमभोजनम्, त्रिरात्रमभिषेको विवासश्चान्योन्येन ॥ २३ ॥ श्वमार्जारनकुलशीघ्रगाणामहोरात्रम् ॥ २४ ॥ श्वकुक्कुटग्राम्यसूकरकङ्कगृध्रभासपारावतमानुषकाकोलूकमांसादने सप्तरात्रमुपवासो निष्पुरीषभावो घृतप्राशः पुनःसंस्कारश्च ॥ २५ ॥ ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम् । प्राणायामशतं कृत्वा घृतं प्राश्य ततः शुचिः, इति ॥ २६ ॥ कालोऽग्निर्मनसः शुद्धिरुदकाद्यवलोकनम् । अविज्ञानं च भूतानां षड्विधा शुद्धिरिष्यते, इति ॥ २७ ॥ श्वचाण्डालपतितोपस्पर्शने सचैलं स्नातः सद्यः पूतो भवतीति विज्ञायते ॥ २८ ॥ पतितचाण्डालशवबहने त्रिरात्रं वाग्यता अनश्नन्त आसीरन्, सहस्रपरमं वा तदभ्यसन्तः, पूता भवन्तीति विज्ञायते ॥ २९ ॥ एतेनैव गर्हिताध्यापकयाजका व्याख्याताः दक्षिणात्यागाच्च पूता भवन्तीति विज्ञायते ॥ ३० ॥ एतेनैवाभिशस्तो व्याख्यातः ॥ ३१ ॥ अथापरं भ्रूणहत्यायां द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत् ॥ ३२ ॥ ब्राह्मणमनृतेनाभिशं( श )स्य पतनीयेनोपपतनीयेन वा मासमब्भक्षः शुद्धवतीरावर्तयेत् ॥ ३३ ॥ अश्वमेधावभृथे वा गच्छेत् ॥ ३४ ॥ एतेनैव चाण्डालीव्यवायो व्याख्यातः ॥ ३५ ॥ अथापरः कृच्छ्रविधिः साधारणो व्यूढः ॥ ३६ ॥ अहः प्रातरहर्नक्तमहरेकमयाचितम् । अहः पराकं तत्रैकमेवं चतुरहौ परौ ॥ ३७ ॥

---

१ च. °नेऽह्नि° । २ च. °म्यशूक° । ३ क. °सवायसपा° । ४ क. °षकुलुकानां सा° । ५ च. °ण्डाला-रावश्रवणे त्रि° । ६ च °ख्यातो भ्रू° । ७ च. °भृथं वा । ८ क. अतः पराकतत्रैक° ।

अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः । बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुवाच ह ॥३८॥ अथ चान्द्रायणविधिः ॥ ३९ ॥ मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश । ग्रासापचयभोजी स्यात्पक्षशेषं समापयेत् ॥ ४० ॥ +एवं हि शुक्लपक्षादौ ग्रासमेकं तु भक्षयेत् । ग्रासोपचयभोजी स्यात्पक्षशेषं समापयेत् ॥ ४१ ॥ अत्रैव गायेत्सामानि अपि वा व्याहृतीर्जपेत् । एष चान्द्रायणो मासः पवित्रमृषिसंस्तुतः ॥ ४२ ॥ अनादिष्टेषु सर्वेषु प्रायश्चित्तं विधीयते विधीयत इति ॥ ४३ ॥

इति वासिष्ठे धर्मशास्त्रे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

( अथ चतुर्विंशोऽध्यायः । )

---

अथातिकृच्छ्रः—॥१॥ त्र्यहं प्रातस्तथा सायमयाचितं पराक इति कृच्छ्रः ॥ २ ॥ यावत्सकृदाददीत तावदश्नीयात्पूर्ववत्सोऽतिकृच्छ्रः ॥ ३ ॥ अब्भक्षः स कृच्छ्रातिकृच्छ्रः ॥ ४ ॥ कृच्छ्राणां व्रतरूपाणि—॥ ५ ॥ श्मश्रुकेशान्वापयेद्भ्रुवोऽक्षिलोमशिखावर्जं नखान्निकृत्यैकवासा अनिन्दितभोजी सकृद्भैक्षमनिन्दितं त्रिषवणमुदकोपस्पर्शी दण्डी कमण्डलुः स्त्रीशूद्रसंभाषणवर्जी स्थानासनशीलोऽहस्तिष्ठेद्रात्रावासीनेत्याह भगवान्वसिष्ठः ॥ ६ ॥ स तद्यदेतद्धर्मशास्त्रं नापुत्राय नाशिष्याय नासंवत्सरोषिताय दद्यात् ॥ ७ ॥ सहस्रं दक्षिणा ऋषभैकादश गुरुप्रसादो वा गुरुप्रसादो वेति ॥ ८ ॥

इति वासिष्ठे धर्मशास्त्रे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

( अथ पञ्चविंशोऽध्यायः । )

---

अविख्यापितदोषाणां पापानां महतां तथा । सर्वेषां चोपपापानां शुद्धिं वक्ष्याम्यशेषतः ॥ १ ॥ आहिताग्नेर्विनीतस्य वृद्धस्य विदुषोऽपि वा । रहस्योक्तं प्रायश्चित्तं पूर्वोक्तमितरे जनाः ॥ २ ॥ प्राणायामैः पवित्रैश्च दानैर्होमैर्जपैस्तथा । नित्ययुक्ताः प्रमुच्यन्ते पातकेभ्यो न संशयः ॥ ३ ॥ प्राणायामान्पवित्राणि व्याहृतीः प्रणवं तथा । पवित्रपाणिरासीनो ब्रह्म नैत्यकमभ्यसेत् ॥ ४ ॥आवर्तयेत्सदा युक्तः प्राणायामान्पुनः पुनः । आलोमाग्रान्नखाग्राच्च तपस्तप्यतु उत्तमम् ॥ ५ ॥ निरोधाज्जायते

---

+ एतद्वचनं न विद्यते क पुस्तके ।

---

१ ह एवं । २ क ख. °ते । इति वा° । ३ क. नखं निकृ° । ४ क °भोगी स° । ५ क °कृद्भैक्ष्यम° । ६ च °र्तयन्सदा ।

वायुर्वायोरग्निर्हि जायते । तापेनाऽऽपोऽथ जायन्ते ततोऽन्तः शुध्यते त्रिभिः ॥ ६ ॥ न तां तीव्रेण तपसा न स्वाध्यायैर्न चेज्यया । गतिं गन्तुं द्विजाः शक्ता योगात्संप्राप्नुवन्ति याम् ॥ ७ ॥ योगात्संप्राप्यते ज्ञानं योगो धर्मस्य लक्षणम् । योगः परं तपो नित्यं तस्माद्युक्तः सदा भवेत् ॥ ८ ॥ प्रणवे नित्ययुक्तः स्याद्व्याहृतीषु च सप्तसु । त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ॥ ९ ॥ प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः । वाङ्मयं प्रणवः सर्वं तस्मात्प्रणवमभ्यसेत् ॥ १० ॥ एकाक्षरं परं ब्रह्म पावनं परमं स्मृतम् । सर्वेषामेव पापानां संकरे समुपस्थिते ॥११॥ अभ्यासोदशसाहस्रः सावित्र्याः शोधनं महत् ॥ १२ ॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते स उच्यत इति ॥ १३ ॥

इति वासिष्ठे धर्मशास्त्रे पञ्चविंशोऽध्यायः ॥ २५ ॥

(अथ षड्विंशोऽध्यायः ।)

प्राणायामान्धारयेत्त्रीन्यो यथाविध्यतन्द्रितः । अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ॥ १ ॥ कर्मणा मनसा वाचा यदह्ना[१] कृतमैनसम् । आसीनः[२] पश्चिमां संध्यां प्राणायामैर्व्यपोहति ॥२॥ कर्मणा मनसा वाचा यद्रात्र्या कृतमैनसम्[३] । उत्तिष्ठन्पूर्वसंध्यां तु प्राणायामैर्व्यपोहति ॥३॥ *प्राणायामैर्य आत्मानं संयम्याऽऽस्ते पुनः पुनः । संदध्याच्चाधिकैर्वाऽपि द्विगुणैर्वा परं तु यः ॥४॥ सव्याहृतिकाः सप्रणवाः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥ ५ ॥ जप्त्वा कौत्समपेत्येतद्वासिष्ठं चेत्यृचं प्रति । साँवित्रं शुद्धवत्यश्च सुरापोऽपि विशुध्यति ॥ ६ ॥ सकृज्जप्त्वाऽस्यवामीयं शिवसंकल्पमेव च । सुवर्णमपहृत्यापि क्षणाद्भवति निर्मलः ॥७॥

* एतद्वचनं न विद्यते ख पुस्तके ।

१ क ख °ते । इति वा° । २ क °हात्कृतमानस° । आ° । ३ क. °नः प्रथमां । ४ क. °ह्नं तु क° । ५ क °त्समानस° । उ° । ६ क. °ह्नं तु । प्रा° । ७ च. साहित्रं ।

हविष्यन्तीयमभ्यस्य नतमंह इतीति च । सूक्तं च पौरुषं जप्त्वा मुच्यते गुरुतल्पगः ॥ ८ ॥ अपि वाऽप्सु निमज्जानस्त्रिर्जपेदघमर्षणम् । यथाऽश्वमेधावभृथस्तादृशं मनुरब्रवीत् ॥ ९ आरम्भयज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥ १० ॥ ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः । सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्[1] ॥ ११ ॥ जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न[2] वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ १२ ॥ जापिनां होमिनां चैव ध्यायिनां तीर्थवासिनाम् । न परिवसन्ति पापानि ये च[3] स्नाताः शिरोव्रतैः ॥ १३ ॥ यथाऽग्निर्वायुना धूतो हविषा चैव दीप्यते । एवं जप्यपरो नित्यं ब्राह्मणः संग्रहीष्यते ॥ १४ ॥ स्वाध्यायाध्यायिनां नित्यं नित्यं[4] च प्रयतात्मनाम् । जपतां जुह्वतां चैव विनिपातो न विद्यते ॥ १५ ॥ सहस्रपरमां देवीं शतमध्यां दशावराम् । शुद्धिकामः प्रयुञ्जीत सर्वपापेष्वपि स्थितः ॥ १६ ॥ क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः । धनेन वैश्यशूद्रौ तु जपैर्होमैर्द्विजोत्तमः[5] ॥ १७ ॥ यथाऽश्वा रथहीनाः स्यू रथो वाऽश्वैर्विना[6] यथा । एवं तपस्त्वविद्यस्य विद्या वाऽप्यतपस्विनः ॥ १८ ॥ यथाऽन्नं मधुसंयुक्तं मधु वाऽन्नेन संयुतम् । एवं तपश्च विद्या च संयुक्तं भेषजं महत् ॥ १९ ॥ विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपनैत्यकम् । सदाऽपि पापकर्माणमेनो न प्रतियुज्यत[7] एनो न प्रतियुज्यत इति ॥ २० ॥

इति वासिष्ठे धर्मशास्त्रे षड्विंशोऽध्यायः ॥ २६ ॥

---

( अथ सप्तविंशोऽध्याय । )

---

यद्यकार्यशतं[8] साग्रं कृतं वेदश्च धार्यते[9] । सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनम् ॥१॥ यथा[10] वातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् । तथा दहति वेदाग्निः कर्मजं दोषमात्मनः॥२॥ हत्वाऽपि स इमाँल्लोकान्भुञ्जानोऽपि यतस्ततः । ऋग्वेदं धारयन्विप्रो नैनः प्राप्नोति किंचन ॥ ३ ॥

---

१ ख ग. च. °मू । जाप्ये° । २ क. °दन्यत्र वा । ३ ख. ग. °वं जाप्य° । ४ क °त्यं नित्यं च । ५ क. जपहो° । ६ क. °श्वैर्यथा विना । ए° । ७ क ख. °ते इति वा° । ८ क °र्यकृते त्यागं कृ° । ९ क. °र्वै तु तस्य । १० च °था जातव° ।

न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् । अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत् ॥ ४ ॥ तपस्तप्यति योऽरण्ये मुनिर्मूलफलाशनः । ऋचमेकां च योऽधीते तच्च तानि च तत्सममम् ॥ ५ ॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥ ६॥ वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्रमः । नाशयत्याशु पापानि महापातकजान्यपि ॥ ७ ॥ वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । तद्धि कुर्वन्यथाशक्त्या प्राप्नोति परमां गतिम् ॥ ८ ॥ याजनाध्यापनाद्यौनात्तथैवासत्प्रतिग्रहात् । विप्रेषु न भवेद्दोषो ज्वलनार्कसमो हि सः ॥ ९ ॥ शङ्कास्थाने समुत्पन्ने अभोज्याभोज्यसंज्ञके । आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु ॥१०॥ अक्षारलवणां रूक्षां पिबेद्ब्राह्मीं सुवर्चलाम् । त्रिरात्रं शङ्खपुष्पं(ष्पीं) च ब्राह्मणः पयसा सह ॥ ११ ॥ पालाशबिल्वपत्राणि कुशान्पद्मानुदुम्बरान् । क्वाथयित्वा पिबेदापस्त्रिरात्रेणैव शुध्यति ॥ १२ ॥ गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् । एकरात्रोपवासश्च श्वपाकमपि शोधयेत् ॥ १३ ॥ गोमूत्रं गोमयं चैव क्षीरं दधि घृतं तथा । पञ्चरात्रं तदाहारः पञ्चगव्येन शुध्यति ॥ १४ ॥ यवान्विधिनोपयुञ्जानः प्रत्यक्षेणैव शुध्यति । विशुद्धभावे शुद्धाः स्युरशुद्धे तु सरागिणः ॥ १५ ॥ हविष्यान्प्रातराशांस्त्रीन्सायमाशांस्तथैव च । अयाचितं तथैव स्यादुपवासत्रयं भवेत् ॥ १६ ॥ अथ चेत्त्वरते कर्तुं दिवसं मारुताशनः । रात्रौ जलाशये व्युष्टः प्राजापत्येन तत्समम् ॥१७॥ सावित्र्यष्टसहस्रं तु जपं कृत्वोत्थिते रवौ । मुच्यते पातकैः सर्वैर्यदि नो ब्रह्महा भवेत् ॥ १८ ॥ यो वै स्तेनः सुरापो वा भ्रूणहा गुरुतल्पगः । धर्मशास्त्रमधीत्यैव मुच्यते सर्वपातकैः ॥१९॥ दुरितानां दुरिष्टानां पापानां महतां तथा । कृच्छ्रं चान्द्रायणं चैव सर्वपापप्रणाशनम् ॥ २० ॥ एकैकं वर्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् । अमावास्यां न भुञ्जीत एवं चान्द्रायणो विधिरेवं चान्द्रायणो विधिरिति ॥ २१ ॥

इति वासिष्ठे धर्मशास्त्रे सप्तविंशोऽध्यायः ॥ २७ ॥

---

( अथाष्टाविंशोऽध्यायः । )

---

न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा । नाऽऽपो मूत्रपुरीषेण नाग्निर्दहनकर्मणा ॥१॥

---

१ क. °नाद्दाना° । २ क. शुद्ध्यभा° । ३ क जले स्थिता व्यु° । ४ च. न । ५ क. 'यच्छुक्ले कृष्णे चैव तु ह्रा° । ६ क ख एष । ७ क ख °विधि. । इति वा° । ८ क ख. °हतिक° ।

स्वयं विप्रतिपन्ना वा यदि वा विप्रवासिता । बलात्कारोपभुक्ता वा चोरहस्तगताऽपि वा ॥ २ ॥ न त्याज्या दूषिता नारी नास्यास्त्यागो विधीयते । पुष्पकालमुपासीत ऋतुकालेन शुध्यति ॥ ३ ॥ स्त्रियः पवित्रमतुलं नैना दुष्यन्ति कर्हिचित् । मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥ ४ ॥ पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः । गच्छन्ति मानुषान्पश्चान्नैता दुष्यन्ति धर्मतः॥५॥तासां सोमोऽददद(दा)च्छौचं गन्धर्वः शिक्षितां गिरम् । अग्निश्च सर्वभक्षत्वं तस्मान्निष्कल्मषाः स्त्रियः ॥६॥ त्रीणि स्त्रियः(याः) पातकानि लोके धर्मविदो विदुः । भर्तुर्वधो भ्रूणहत्या स्वस्य गर्भस्य पातनम् ॥ ७ ॥ वत्सः प्रस्रवणे मेध्यः शकुनिः फलपातने । स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः ॥ ८ ॥ अजाश्वा मुखतो मेध्या गावो मेध्यास्तु पृष्ठतः । ब्राह्मणाः पादतो मेध्याः स्त्रियो मेध्यास्तु सर्वतः ॥ ९ ॥ सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम् । येषां जपैश्च होमैश्च पूयन्ते[1] नात्र संशयः ॥ १० ॥ अघमर्षणं देवकृतं[2] शुद्धवत्यरतरत्समाः । कूष्माण्डानि पावमान्यो दुर्गा सावित्रिरेव च(?) ॥ ११ ॥ अभीषङ्गाः[3] पदस्तोमाः[4] सामानि व्याहृतीस्तथा(?) । भारुण्डानि च सामानि गायत्रं रैवतं[5] तथा ॥ १२ ॥ पुरुषव्रतं न्यासं[6] च तथा देवव्रतानि च । अब्लिङ्गं[7] बार्हस्पत्यं च वाक्सूक्तं[8] मध्वृचस्तथा ॥ १३ ॥ शतरुद्रियमथर्वशिरस्त्रिसुपर्णं महाव्रतम् । गोसूक्तं चाश्वसूक्तं च शुद्धः शुद्धेति[9] सामनी ॥ १४ ॥ त्रीण्याज्यदोहानि रथंतरं च अग्नेर्व्रतं वामदेव्यं बृहच्च । एतानि जप्तानि पुनन्ति जन्तूञ्जातिस्मरत्वं लभते यदीच्छेत् ॥ १५ ॥ अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः । तासामनन्तं फलमश्नुवीत यः काञ्चनं गां च महीं च दद्यात् ॥ १६ ॥ उपरुन्धन्ति दातारं गौरश्वः कनकं क्षितिः । अश्रोत्रियस्य विप्रस्य हस्तं[10] दृष्ट्वा[11] निराकृतेः ॥१७॥ वैशाख्यां पौर्णमास्यां च ब्राह्मणान्सप्त पञ्च वा । तिलान्क्षौद्रेण संयुक्तान्कृष्णान्वा यदि वेतरान् ॥ १८ ॥ प्रीयतां धर्मराजेति यद्वा मनसि वर्तते । यावज्जीवकृतं पापं

---

१ क जायन्ते । २ क. °र्पणो देवकृतः शु° । ३ च. अतीष° । ४ क °षड्गायदस्तो° । ५ च. °स्तोभाः सा । ६ च °तं च भासं । ७ क अष्टलिङ्गं । ८ क °क्सूक्तमनृतस्त° । ९ च च शुद्धाशुद्धीये सा° । १० क. सामानि । ११ क. दत्वा ।

तत्क्षणादेव नश्यति ॥ १९ ॥ सुवर्णनाभं कृत्वा तु सखुरं कृष्णमार्गणम् । तिलैः प्रच्छाद्य यो दद्यात्तस्य पुण्यफलं शृणु ॥ २० ॥ ससुवर्णगुहा तेन सशैलवनकानना। चतुर्वक्त्रा भवेद्दत्ता पृथिवी नात्र संशयः ॥ २१ ॥ कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतमिति सर्वं तरति दुष्कृतमिति ॥ २२ ॥

इति वासिष्ठे धर्मशास्त्रेऽष्टाविंशोऽध्यायः ॥ २८ ॥

(अथैकोनत्रिंशोऽध्यायः ।)

दानेन सर्वकामानवाप्नोति ॥ १ ॥ चिरजीवित्वं ब्रह्मचारी रूपवान् ॥ २ ॥ अहिंस्युपपद्यते स्वर्गम् ॥ ३ ॥ अग्निप्रवेशाद्ब्रह्मलोकः ॥ ४ ॥ मौनात्सौभाग्यम् ॥ ५ ॥ नागाधिपतिरुदकवासात् ॥ ६ ॥ नीरुजः क्षीणकोशः ॥ ७ ॥ तोयदः सर्वकामसमृद्धः ॥ ८ ॥ अन्नप्रदाता सुचक्षुः ॥ ९ ॥ स्मृतिमान्मेधावी सर्वतोऽभयदाता ॥ १० ॥ गोप्रयुक्ते सर्वतीर्थोपस्पर्शनम् ॥ ११ ॥ शय्यासनदानादन्तःपुराधिपत्यम् ॥ १२ ॥ छत्रदानाद्गृहलाभः ॥ १३ ॥ गृहप्रदो नगरमाप्नोति ॥ १४ ॥ उपानत्प्रदाता यानमासादयति ॥ १५ ॥ अथाप्युदाहरन्ति— ॥ १६ ॥ यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्षि(र्शि)तः। अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥१७॥ विप्रायाऽऽचमनार्थं तु दद्यात्पूर्णं कमण्डलुम् । प्रेत्य तृप्तिं परां प्राप्य सोमपो जायते पुनः ॥ १८ ॥ अनडुहां सहस्राणां दानानां धुर्यवाहिनाम् । सुपात्रे विधिदत्तानां कन्यादानेन तत्समम् ॥ १९ ॥ त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती । आदिदानं हिरण्यानां विद्यादानं ततोऽधिकम् ॥ २० ॥ आत्यन्तिकफलप्रदं मोक्षसंसारमोचनम्। योगिनां संमतं विद्वानाचारमनुवर्तते ॥ २१ ॥ श्रद्दधानः शुचिर्दान्तो धारयेच्छृणुयादपि । विहाय सर्वपापानि नाकपृष्ठे महीयत इति नाकपृष्ठे महीयत इति ॥ २२ ॥

इति वासिष्ठे धर्मशास्त्र एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

१ च °र्गजम् । ति° । २ क. ख °मिति । इति वा° । ३ च सर्वान्कामा° । ४ क °वान्ह्युपप° । ५ च. °सान्निरु° । ६ क °रुजोऽक्षी° । ७ च °ताऽयनमासादयते । अ° । ८ च. °र्ती । अतिदानं हि दानाना । ९ च. °योऽनसूयुरिमं वि° । १० क ख. °यते ॥ २२ ॥

(अथ त्रिंशोऽध्यायः।)

धर्मं चरत माऽधर्मं सत्यं वदत नानृतम्। दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम् ॥ १ ॥ ब्राह्मणो भवत्यग्निरग्निर्वै ब्राह्मण इति श्रुतेः ॥ २ ॥ तच्च कथम् ॥३॥ तत्र सदो ब्राह्मणस्य शरीरं वेदिः संकल्पो यज्ञः पशुरात्मा रशना बुद्धिः सदो मुखमाहवनीयं नाभ्यामुदरोऽग्निर्गार्हपत्यः प्राणोऽध्वर्युरपानो होता व्यानो ब्रह्मा समान उद्गाताऽऽत्मेन्द्रियाणि यज्ञपात्राणि य एवं विद्वानिन्द्रियैरिन्द्रियार्थं जुहोतीति ॥ ४ ॥ अपि च काठके विज्ञायते ॥ ५ ॥ अथाप्युदाहरन्ति—॥ ६ ॥ पाति * त्राति च दातारमात्मानं चैव किल्बिषात्। वेदेन्धनसमृद्धेषु हुतं विप्रमुखाग्निषु ॥ ७ ॥ न स्कन्दते न व्यथते नैनमध्यापतेच्च[1] यत्। वरिष्ठमग्निहोत्राच्चु ब्राह्मणस्य मुखे हुतम् ॥ ८ ॥ ध्यानाग्निः सत्योपचयनं क्षान्त्या[2] पुष्टिश्रवं त्रिः पुरोडाशमहिंसा च संतोषो यूपः कृच्छ्रं भूतेभ्योऽभयदाक्षिण्यं[3] स्मृतिं कृत्वा क्रतुं[4] मानसं याति क्षयं बुधः ॥ ९ ॥ जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः। जीवनाशा धनाशा च जीर्यतोऽपि न जीर्यति ॥ १० ॥ यां[5] दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः। याऽसौ प्राणान्तिको व्याधिस्तां तृष्णां त्यजतः सुखमिति ॥ ११ ॥ नमोऽस्तु मित्रावरुणयोरुर्वश्यात्मजाय शतयातवे वसिष्ठाय वसिष्ठायेति ॥ १२ ॥

इति वासिष्ठे धर्मशास्त्रे त्रिंशोऽध्यायः ॥ ३० ॥

---

समाप्तेयं वसिष्ठस्मृतिः।

---

* आर्षत्वात्साधु।

१ क. 'तेश्च य' व'। २ च 'न्त्याहुति. स्रुवं ह्री पु'। ३ च 'क्षिण्यमिति कृ'। ४ न. क्रतुमा'। ५ क. या दुःखजा।

ॐ तत्सद्ब्रह्मणे नमः ।

# वृद्धशातातपस्मृतिः ।

वृद्धशातातपप्रोक्तं स्मृतितन्त्रविनिश्चयम् । संक्षेपेण प्रवक्ष्यामि यावदर्थोपलब्धये ॥१॥ नदीतीरेषु गोष्ठेषु पुण्येष्वायतनेषु च । तत्र गत्वा शुचौ देशे ब्रह्मकूर्चं समाचरेत् ॥ २ ॥ पालाशं पद्मपत्रं वा ताम्रं वाऽथ हिरण्मयम् । तत्र भुङ्क्ते व्रती नित्यं तत्पात्रं समुदाहृतम् ॥ ३ ॥ गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ ४ ॥ तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् । चतुर्दशीमुपोष्यैवं योऽमावस्यां समाचरेत् ॥ ५ ॥ गोमूत्रकं पलं दद्यादङ्गुष्ठार्धं तु गोमयम् । क्षीरं सप्तपलं दद्याद्दध्नस्त्रिपलमेव च ॥ ६ ॥ आज्यमेकपलं प्रोक्तं पलमेकं कुशोदकम् । एवं क्रमेण कर्तव्यं पञ्चगव्यं यथाविधि ॥ ७ ॥ सप्तपर्णाः शुभा दर्भा अच्छिन्नाग्राः समायताः । तैः समुद्धृतैर्होतव्य देवताभ्यो यथाविधि ॥ ८ ॥ अग्नये सोमायेति इरावतीदं विष्णुरिति । विष्णोर्नुकं सुमित्रियान सुजानातकस्तथा (?) ॥ ९॥ एतासां देवताहुतीनां हुतशेषं तु यः पिबेत् । आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ॥ १० ॥ उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु । एवं कुर्वन्ब्रह्मकूर्चं मासे मासे च वै द्विजः । सर्वपापविशुद्धात्मा जायते नात्र संशयः ॥११॥ यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम् । ब्रह्मकूर्चो दहेत्पापं प्रदीपा( प्ता )ग्निरिवेन्धनम् ॥ १२ ॥ मूत्ररेतःसमुत्सर्गे मोहाद्भुञ्जीत वा क्वचित् । *त्रिरात्रं तत्र कुर्वीत प्रायश्चित्तं विशुद्धये ॥ १३ ॥ मूत्रयित्वा द्विजो मार्गे स्मृतिभ्रंशाज्जलं पिबेत् । अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥ १४ ॥ निगिरन्यदि मेहेत भुङ्क्ते वा मेहने कृते । अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥ १५ ॥ भोजनस्य तु काले च योऽशुचिर्भवति द्विजः । भूमौ निक्षिप्य तं ग्रासं स्नात्वा शुद्धिमवाप्नुयात् ॥१६॥

---

* एतदर्धस्थानेऽर्थ पाठः ख. पुस्तके " अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति " इति ।

---

१ ख. °निश्चितम् । २ ख.-यत्र । ३ क ग ङ. °त्रं द्वारे तिष्ठति गो° । ४ च °वं पौर्णमास्या । ५ ख. तु वर्जयेत् । ६ ख °हेत्सर्वं प्र° । ७ क. ग. शुचिमं° ।

चाण्डालैः श्वपचैः स्पृष्टो विण्मूत्रे कुरुते द्विजः । त्रिरात्रं तत्र कुर्वीत भुक्तोच्छिष्टस्तदाचरेत् ॥ १७ ॥ उदक्या सूतिका चैव ह्यन्त्यजा स्पृशति द्विजम् । त्रिरात्रेणैव शुध्येत इति शातातपोऽब्रवीत् ॥ १८ ॥ रजस्वला यदा स्पृष्टा चाण्डालान्त्यजवायसैः । तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुध्यति ॥ १९॥ रजस्वले च द्वे नार्यावन्योन्यं स्पृशतो यदि । सुवर्णपञ्चगव्येन स्नात्वा शुद्धिमवाप्नुयात् ॥ २० ॥ रजस्वलायाः प्रेतायाः संस्कारादीनि नाऽऽचरेत्। ऊर्ध्वं त्रिरात्रतः स्नातां शवधर्मेण दाहयेत् ॥ २१ ॥ चाण्डालं पतितं व्यङ्गमुन्मत्तं शवमन्त्यजम् । शृगालं सूतिकां नारीं रजसा च परिप्लुताम्[1] ॥ २२ ॥ श्वकुक्कुटवराहांश्च ग्राम्यान्स्पृशति मानवः । सचैलं सशिरः[2] स्नात्वा तदानीमेव शुध्यति ॥ २३ ॥ अशुद्धः स्वयमप्येतानशुद्धांश्च यदा स्पृशेत् । विशुध्यत्युपवासेन शातातपवचो यथा ॥२४॥ उच्छिष्टं स्पृशते विप्रो[3] यदाऽशुद्धं[4] च मानवः । अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥ २५ ॥ आदित्येऽस्तमिते रात्रावस्पृश्यं स्पृशते यदि । भगवन्येन शुद्धिः स्यात्तन्मे ब्रूहि विनिश्चितम् ॥ २६ ॥ अनस्तमित आदित्ये संगृहीतं तु यज्जलम् । तेन सर्वात्मना शुद्धिः[5] शवस्पृष्टं न शुध्यति ॥ २७ ॥ स्वाभिप्रायकृतं कर्म यत्किंचिज्ज्ञानवर्जितम् । क्रीडाधर्मेण बालानां तत्सर्वं निष्प्रयोजनम् ॥ २८ ॥ विना धर्मेण शास्त्रेण प्रायश्चित्तं प्रदीयते । न तेन शुद्धिमाप्नोति प्रायश्चित्ते कृते सति ॥ २९ ॥ अनधीत्य धर्मशास्त्रं प्रायश्चित्तं ददाति यः । प्रायश्चित्ती भवेत्पूतस्तत्पापं पर्षदं व्रजेत् ॥ ३० ॥ गोभूहिरण्यहरणे स्त्रीसंबन्धकृतेषु च । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥ ३१ ॥ अथ कश्चित्प्रमादेन म्रियतेऽग्न्युदकादिभिः । तस्याऽऽशौचं विधातव्यं कर्तव्या चोदकक्रिया॥३२॥ ऋतौ तु गर्भशङ्कायां स्नानं मैथुनिनः स्मृतम् । ऋतुं विना यदा गच्छेच्छौचं मूत्रपुरीषवत्[6] ॥ ३३ ॥ तावदेवाशुची स्यातां दंपती शयनं गतौ । शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥ ३४ ॥ उच्छिष्टं संस्पृशेद्यस्तु ह्येक एव स

१ च. °रिप्लुता° । २ क. ग. घ. °लं शिरसा स्ना° । ३ ख. °प्रो मद्यं शूद्री च मानवीम् । अ° । ४ क. यथा शुद्धं च मानव । अ° । ५ ख °द्धिः शुना स्पृष्टं तु वर्जयेत् । स्वा° । ६ ख. च. °त् । द्वावेतावशु° ।

दुष्यति । तं स्पृष्ट्वाऽन्यं(न्यो)न दुष्येत सर्ववर्णेष्वयं विधिः ॥ ३५ ॥ शोधितानां तु पात्राणां यद्येकमुपहन्यते । तावन्मात्रस्य तच्छौचं नेतरेषामिति स्थितिः ॥ ३६ ॥ पिण्याकाश्चैव तक्राम्बु सक्तवः प्रतिवासरम् । एकरात्रोपवासश्च कृच्छ्रसौम्योऽयमुच्यते ॥ ३७ ॥ एषामेव त्रिरभ्यासादेकैकस्य यथाक्रमम् । तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥ ३८ ॥ पिण्डयज्ञकृता देयं प्रेतायान्नं दिनत्रयम् । जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ॥३९॥ मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् । प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ ४० ॥ मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः । पितामह्या सहैवास्याः सपिण्डीकरणं स्मृतम् ॥ ४१ ॥ मातुलेनैव गोत्रेण यावत्तस्याः सपिण्डता । भार्यायां संस्थितायां तु सपिण्डीकरणान्तिकम् ॥४२॥ पितुः सा भजते गोत्रमूर्ध्वं तु पैतिपैतृकम् । इति प्रोक्तं पुराविद्भिर्धर्मशास्त्रानुसारतः ॥ ४३ ॥ सर्ववर्णासु नारीषु ये स्युर्विप्रस्य बान्धवाः । तेषामाशौचं विप्रस्य दशाहं सूतकं भवेत् ॥ ४४ ॥ पूर्वपातस्थितानां तु षड्भिस्तु पृथगेव च । यद्येकजाता बहवः पृथक्क्षेत्राः पृथक्स्थिताः ॥४५॥ एकपिण्डः पृथक्स्थो यस्तं पिण्डं त्रिषु वर्तयेत् । एवं सपिण्डि(ण्ड)ता कार्या सर्वदैव विचक्षणैः ॥ ४६ ॥ नाभिमात्रे जले स्थित्वा चिन्तयेदूर्ध्वमानसः । आगच्छन्तु मे पितरः प्रतिगृह्णन्तु तज्जलम् ॥ ४७ ॥ पिवतः पतते तोयं भाजने मुखनिःसृतम् । अभोज्यान्नं विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥ ४८ ॥ हस्तदत्तं तु यत्तोयं लवणं व्यञ्जनानि च । तद्दातुर्नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ॥ ४९ ॥ पात्रे तु मृन्मये यस्तु श्राद्धे वै भोजयेद्द्विजान् । अन्नदाता पुरोधाता भोक्ता च नरकं व्रजेत् ॥ ५० ॥ श्राद्धे भुक्त्वा य उच्छिष्टं वृषलाय प्रयच्छति । स गच्छेन्नरकं घोरं तिर्यग्योनौ च जायते ॥ ५१ ॥ आसनारूढपादो वा वस्त्रार्धप्रावृतोऽपि वा । मुखेन फूत्कृतं भुङ्क्ते भुक्त्वा चान्द्रायणं चरेत् ॥ ५२ ॥ मुखपर्युषितो नित्यं देवतास्त्वर्चयेत्तु यः । तस्मात्सर्वप्रयत्नेन प्रकुर्याद्दन्तधावनम् ॥ ९३ ॥ नेत्राञ्जनं सताम्बूलं सिन्दूरं रक्तवाससी । विभृयात्सोपवासाऽपि सर्वदा भर्तृवृद्धये ॥ ५४ ॥ गन्धालंकारवस्त्राणि धूपमाल्यानुलेपनम् । उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥ ५५ ॥

---

१ क. ग. घ. ङ. शोणिता° । २ क. ग. ङ. वक्त्राम्बु । ३ ख. °र्यायाः संस्थितायास्तु स । ४ ख. °तिपितृ° । ५ ख. °त् । प्रथमेऽवस्थि° । ६ क. ग. घ. ङ. °यस्ते पिण्डत्रिषु वर्तते । ए° । ७ च. °दत्तास्तु योऽश्नीयाल्लवणं व्यञ्जनादिकम् । त° । ८ च श्राद्धं । ९ क ग. °चयन्नत. । त° । १० क. ग. घ. ङ. °ससा । वि° ।

दन्तकाष्ठममावास्यां चतुर्दश्यां च मैथुनम् । हन्ति सप्त कुलान्कृत्वा तैलाभ्यङ्गं तथा व्रती ॥ ५६ ॥ षष्ठ्यष्टम्यौ पञ्चदशी पक्षद्वयचतुर्दशी । आयुः संहरते[1] पापात्तैले मांसे क्षुरे भगे ॥५७॥ मूत्रपुरीषकरणाच्छ्वकाकस्पर्शे सचैलं स्नानं महाव्याहृतिहोमश्च ॥५८॥ कुमारप्रसवे नाड्यामच्छिन्नायां गुडघृतहिरण्यवस्त्र[2]प्रावरणप्रतिग्रहे न दोषः स्यात्त-दहनीत्येके ॥ ५९ ॥ अनग्निरनि[3]केतः स्यान्निपात्रावरणो मुनिः । यत्रास्तमितशायी च सर्वभूतानुकम्पकः ॥ ६० ॥ निगृहीतेन्द्रियग्रामो यत्र तत्र वसेन्नरः । तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ ६१ ॥ द्रव्येणान्यायलब्धेन यः करोत्यू( त्यौ )-र्ध्वदैहिकम् । नासौ फलमवाप्नोति तस्यार्थस्य दुरागमात् ॥ ६२ ॥ आहिताग्निस्तु यो विप्रः शूद्रान्नान्न निवर्तते । पञ्चैतानि प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः ॥६३॥ काम जानामि ते मूलं संकल्पात्किल जायसे । संकल्पं न करिष्यामि मूलच्छिन्नो भविष्यसि ॥ ६४ ॥ उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् । मरणव्याधिशो-कानां किमद्य निपतिष्यति ॥ ६५ ॥ श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतं चास्य न वाऽकृतम् * ॥ ६६ ॥ यः स्त्रीणां न त्यजे-[4]द्भोगमुत्तरोत्तरलोलुभिः । पुरो दीर्घा पदन्यासैश्छायां सायंतनीमिवे ॥ ६७ ॥ सुच्छ-[5]न्दघनजातेन शाकेनापि प्रमुच्यते । इति बु[6]द्ध्वा समस्तार्थैः कः कुर्यादसमञ्जसम् ॥६८॥

इति श्रीवृद्धशातातपर्षिप्रोक्ता वृद्धशातातपस्मृतिः समाप्ता ।

---

समाप्तेयं वृद्धशातातपस्मृतिः ।

---

* इत उत्तरं वचनद्वयं ख पुस्तके न विद्यते ।

---

१ क ग घ. °तैलं मांसं क्षुरे भवेत् । मू° । २ च °वस्त्राभर° । ३ क ग घ °रग्निकेन तस्या° । ४ क. ग. घ. ङ. °जेद्रोगे रुत्तरोत्तार° । ५ च °व । स्वच्छ° । ६ च. बुद्ध्वा समस्तार्थे कः ।

ॐ तत्सद्ब्रह्मणे नमः ।

# वृद्धहारीतस्मृतिः ।

---

( तत्र प्रथमोऽध्यायः । )

*यस्य द्विरदवक्त्राद्याः पारिषाद्याः ( षदाः ) परःशतम् । विघ्नं विघ्नन्ति भय ( ज )तां विष्वक्सेनं तमाश्रये ॥ १ ॥ हरिः ॐ । अम्बरीषस्तु तं गत्वा हारीतस्याऽऽश्रमं नृपः । ववन्दे तं महात्मानं बालार्कसदृशप्रभम् ॥ २ ॥ संपृष्टः कुशलस्ते( लं ते )न पूजितः परमासने । उपविष्टस्ततो विप्रमुवाच नृपनन्दनः ॥ ३ ॥ भगवन्सर्वधर्मज्ञ सर्ववेदविदां वर । पृ²च्छामि त्वां महाभाग परमं धर्ममव्ययम् ॥ ४ ॥ कथं वर्णाश्रमाणां तु नित्यनैमित्तिका क्रिया । कर्तव्या मुनिशार्दूल नारीणां च नरस्य च ॥ ५ ॥ स्वरूपं जीवपरयोः कथं मोक्षपदस्य च । तत्प्राप्तिसाधनं ब्रह्मन्वक्तुमर्हसि सुव्रत ॥ ६ ॥ एवमुक्तस्य ( क्तः स ) विप्रर्षिस्तेन राजर्षिणा तदा । उवाच परमप्रीत्या नमस्कृत्य जनार्दनम् ॥ ७ ॥ हारीत उवाच—शृणु राजन्प्रवक्ष्यामि सर्ववेदोपबृंहितम् । यदुक्तं ब्रह्मणा पूर्वं पृच्छतो मम भूपते ॥ ८ ॥ तद्ब्रवीमि परं धर्मं शृणुष्वैकाग्रमानसः । सर्वेषामेव देवानामनादिः पुरुषोत्तमः ॥ ९ ॥ ईश्वरस्तु स एवास्य जगतः प्रभुरव्ययः । नारायणो वासुदेवो विष्णुर्ब्रह्माऽच्युतो हरिः । स्रष्टा धाता विधाता च स एव परमेश्वरः ॥ १० ॥ हिरण्यगर्भः सविता गुणभृन्निर्गुणोऽव्ययः । परमात्मा परं ब्रह्म परं ज्योतिः परात्परः ॥ ११ ॥ इन्द्रः प्रजापतिः सूर्यः शिवो वह्निः सनातनः । सर्वात्मकः सर्वसुहृत्सर्वभृद्धूतवाह(भाव)नः ॥ १२ ॥ यमी च भगवान्कृष्णो मुकुन्दोऽनन्त एव च । यज्ञो यज्ञपतिर्यज्वा ब्रह्मण्यो ब्रह्मणस्पतिः ॥ १३ ॥ स एव पुण्डरीकाक्षः श्रीशो नाथोऽधिपो महान् । सहस्रमूर्धा विश्वात्मा सहस्रकरपादवान् ॥ १४ ॥

---

* एतद्वचनं न ख. पुस्तके ।

---

१ ख ब्रूहि । २ ख. °त्तिकाः क्रिया । क° । ३ ख. नृपस्य । ४ ख. °पथस्य । ५ ख °त्प्राप्तेः सा° । ६ क. नमः कृत्वा । ७ क. भूतले । ८ ख °वान्यो जगतो विभु° । ९ क. °रिः । ईश्वरस्तु स° । १० क. श्रीभूलीलाधि° ।

यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः । चतुर्भिः शोभनोपायैः साध्योऽयं स महात्मभिः ॥ १५ ॥ तुरीयपदयोर्भक्त्या सुसिद्धः समुदाहृतः । तं स्वी कुर्वन्ति विद्वांसः स्वस्वरूपतया सदा ॥ १६ ॥ नैसर्गिकं हि सर्वेषां दास्यमेव हरेः सदा । स्वाम्यं परस्वरूपस्य दास्यं जीवस्य सर्वदा । प्रकृत्या त्वात्मनो रूपं स्वाम्यं दास्यमिति स्थितिः ॥ १७ ॥ दास्यमेव परं धर्मं दास्यमेव परं हितम् । दास्येनैव भवेन्मुक्तिरन्यथा निरयं व्रजेत् ॥ १८ ॥ विष्णोर्दास्यं परा भक्तिर्येषां तु न भवेत्क्वचित् । तेषामेव हि संसृष्टं निरयं ब्रह्मणा नृप ॥ १९ ॥ नारायणस्य दासा ये न भवन्ति नराधमाः । जीवन्त एव चाण्डाला भविष्यन्ति न संशयः ॥ २० ॥ तस्माद्दास्यं परां भक्तिमालम्ब्य नृपसत्तम । नित्यनैमित्तिकं सर्वं कुर्यात्प्रीत्यै हरेः सदा ॥ २१ ॥ तस्य स्वरूपं रूपं च गुणांश्चापि विभूतयः । ज्ञात्वा समर्चयेद्विष्णुं यावज्जीवमतन्द्रितः ॥ २२ ॥ तमेव मनसा ध्यायेद्वाचा संकीर्तयेत्प्रभुम् । जपेच्च जुहुयाद्भक्तोत(क्तस्त)द्गानेकविलक्षणः ॥ २३ ॥ शङ्खचक्रोर्ध्वपुण्ड्रादिधारणं दास्यलक्षणम् । तन्नामकरणं चैव वैष्णवं तदिहोच्यते ॥ २४ ॥ अवैष्णवास्तु ये विप्रा पाषण्डास्ते नराधमाः । तेषां तु नरके वासः कल्पकोटिशतैरपि ॥ २५ ॥ तापादिपञ्चसंस्कारी मन्त्ररत्नार्थतत्त्ववित् । वैष्णवः स जगत्पूज्यो याति विष्णोः परं पदम् ॥ २६ ॥ अचक्रधारी यो विप्रो बहुवेदश्रुतोऽपि वा । स जीवन्नेव चाण्डालो मृतो निरयमाप्नुयात् ॥२७॥ तस्मात्तापादिसंस्काराः कर्तव्या धर्मकाङ्क्षिणा । अयमेव परो धर्मः प्रधानः सर्वकर्मणाम् ॥ २८ ॥

इति श्रीवृद्धहारीतस्मृतौ वैष्णवधर्मशास्त्रे पञ्चसंस्कारप्रतिपादनं नाम प्रथमोऽध्यायः ॥ १ ॥

(अथ द्वितीयोऽध्यायः ।)

अम्बरीष उवाच—भगवन्वैष्णवाः पञ्च संस्काराः सर्वकर्मणाम् । प्रधानमिति यच्चोक्तं सर्वैरपि महर्षिभिः । तद्विधानं ममाऽऽचक्ष्व विस्तरेणैव सुव्रत ॥१॥ हारीत उवाच—शृणु राजन्प्रवक्ष्यामि निर्मला वैष्णवीः क्रियाः । यदुक्तं ब्रह्मणा पूर्वं वसिष्ठाद्यैश्च वैष्णवैः ॥ २ ॥ संस्काराणां तु सर्वेषामाद्यं चक्रादिधारणम् । तत्कर्तव्यं हि सर्वेषां विधिना वै द्विजन्मनाम् ॥ ३ ॥

१ क. °रीयोपरयो° । २ ख. 'सिद्धोऽयमुदा° । ३ ख °रूपं स्याद्दास्यं । ४ क. °दा । प्राक्प्रत्यगात्मनो । ५ क. °त्वा परम° । ६ क. °द्भक्त्या वै° । ७ ख. °पि । तदादिपर्यसंचारी । ८ क. °वः साक्षाज्जग° । ९ ख. °स्मात्ते हरिसं° । १० ख °तौ विशिष्टध° । ११ ख °ष्णवाः क्रि° ।

आचार्यं संश्रयेत्पूर्वमनघं वैष्णवं द्विजम् । शुद्धसत्त्वगुणोपेतं नवेज्याकर्मकारकम् ॥ ४ ॥ सत्संप्रदायसंयुक्तं मन्त्ररत्नार्थकोविदम् । ज्ञानवैराग्यसंपन्नं वेदवेदाङ्गपारगम् ॥ ५ ॥ शासितारं सदाचारैः सर्वधर्मविदां वरम् । महाभागवतं विप्रं सदाचारनिषेव-(वि)णम् ॥ ६॥ आलोक्य सर्वशास्त्राणि पुराणानि च वैष्णवः । तदर्थमाचरेद्यस्तु-स आचार्य ईतीरितः ॥ ७ ॥ आस्तिक्यमानसं सद्भिरुपेतं धर्मवत्सलम् । श्रद्दधानं सदाचारं गुरुशुश्रूषतत्परम् ॥८॥ संवत्सरं परीक्ष्यार्थे तं शिष्यं शासयेद्गुरुः । तस्याऽऽदौ पञ्च संस्कारान्कुर्यात्सम्यग्विधानतः ॥ ९ ॥ प्रातः स्नात्वा शुचौ देशे पूजयित्वा जनार्दनम् । स्नातं शिष्यं समानीय तेनैव सह देशिकः ॥ १०॥ स्नाप्य पञ्चामृतैर्गव्यैश्चक्रादीनर्चयेदथ । पुष्पैर्धूपैश्च दीपैश्च नैवेद्यैर्विविधैरपि ॥ ११ ॥ तत्तत्प्रकाशकैर्मन्त्रैरर्चयेत्पुरतो हरेः । स्वाग्नौ होमं प्रकुर्वीत इध्माधानादिपूर्वकम् ॥ १२ ॥ पौरुषेण तु सूक्तेन पायसं घृतमिश्रितम् । आज्येन मूलमन्त्रेण हुत्वा चाष्टोत्तरं शतम् ॥ १३॥ वैष्णव्या चैव गायत्र्या जुहुयात्प्रयतो गुरुः । पश्चादग्नौ विनिक्षिप्य चक्राद्यायुधपञ्चकम् ॥ १४ ॥ पूजयित्वा सहस्रारं ध्यात्वा तद्वह्निमण्डले । षडक्षरेण जुहुयादाज्यं विंशतिसंख्यया ॥ १५ ॥ सर्वैश्च हेतिमन्त्रैश्च एकैकाज्याहुतिं क्रमात् । ततः प्रदक्षिणं कृत्वा सशिष्यो वह्निमात्मवान् ॥ १६ ॥ नमस्कृत्वा(त्य) ततो विष्णुं जप्त्वा मन्त्रं वरं शुभम् । प्राङ्मुखं तु समासीनं शिष्यमेकाग्रचेतसम् ॥ १७ ॥ प्रतप्तैश्चक्रशङ्खादिहेतिभिर्मन्त्रमुच्चरन् । दक्षिणे तु भुजे चक्रं वामांसे शङ्खमेव च ॥१८॥ गदां च भालमध्ये तु हृदये नन्दकं तथा । मस्तके तु तथा शार्ङ्गमङ्कयेद्विमलं तथा ॥ १९ ॥ पश्चात्प्रक्षाल्य तोयेन पुनः पूजां समाचरेत् । होमशेषं समाप्याथ वैष्णवान्भोजयेत्ततः ॥ २० ॥ एवं तापक्रिया कार्या वैष्णवी कल्मषापहा । प्रधानं वैष्णवं तेषां तापसंस्कारमुत्तमम् ॥ २१ ॥ तापसंस्कारमात्रेण परां सिद्धिमवाप्नुयात् ॥ २२ ॥ केचित्तु चक्रशङ्खौ द्वौ प्रतप्तौ बाहुमूलयोः । धारयन्ति महात्मानश्चक्रमेकं तु चापरे ॥२३॥ वैष्णवानां तु हेतीनां प्रधानं चक्रमुच्यते । तेनैव बाहुमूले तु प्रतप्तेनाङ्कयेद्बुधः ॥२४॥ जाते पुत्रे पिता स्नात्वा होमं कुर्याद्विधानतः । तेनाग्निनैव संतप्तचक्रेण भुजमूलयोः ॥ २५ ॥

---

१ क. ग. °वमनार्यं वै° । २ ख °चावैं. स° । ३ ख. उदाहृत । ४ ख. °रं प्रतीक्ष्याथ तं । ५ क. °स्वाप्य° । ६ ख. अग्नौ । ७ क. °म् । प्रजपे° । ८ ख. °खशङ्खौ द्वौ द्वे° । ९ ख. °क्रियाः कार्याः वैष्णव्यः कल्मषापहाः । प्र° ।

अङ्कयित्वा शिशोः पश्चान्नाम कुर्याच्च वैष्णवम् । पश्चात्सर्वाणि कर्माणि कुर्वीतास्य विधानतः ॥ २६ ॥ अङ्कयित्वा न चक्रेण यत्किंचित्कर्म संचरेत् । तत्सर्वं याति वैकल्यमिष्टापूर्तादिकं नृप ॥२७॥ कारयेन्मन्त्रदीक्षायां चक्राद्याः पञ्च हेतयः । चक्रं वै कर्मसिद्ध्यर्थं जातकर्मणि धारयेत् ॥ २८ ॥ ×अचक्रधारी विप्रस्तु सर्वकर्मसु गर्हितः । अवैष्णवः समापन्नो नरकं चाधिगच्छति ॥ २९ ॥ चक्रादिचिह्नरहितं प्राकृतं कलुषान्वितम् । अवैष्णवं तु तं दूराच्छ्वपाकमिव संत्यजेत् ॥ ३० ॥ अवैष्णवस्तु यो विप्रः श्वपाकादधमः स्मृतः । अश्राद्धेयो ह्यपाङ्क्तेयो रौरवं नरकं व्रजेत् ॥ ३१ ॥ अवैष्णवस्तु यो विप्रः सर्वधर्मयुतोऽपि वा । स पाषण्डेति वि(ण्ड इति) ज्ञेयः सर्वकर्मसु नार्हति ॥ ३२ ॥ तस्माच्चक्रं विधानेन तप्तं वै धारयेद्द्विजः । सर्वाश्रमेषु वसतां स्त्रीणां च श्रुतिचोदनात् ॥ ३३ ॥ अनायुधासो असुरा अदेवा इति वै श्रुतिः । चक्रेणं तामपवप इत्यृचा समुदीरितम् ॥ ३४ ॥ अपेत्थमङ्कमित्युक्तं वपेति श्रवणं तथा । तस्माद्वै तप्तचक्रस्य चाङ्कनं मुनिभिः स्मृतम् ॥ ३५ ॥ पवित्रं विततं ब्राह्मं प्रभोर्गात्रे तु धारितम् । श्रुत्यैव चाङ्कयेद्गात्रे तद्ब्रह्म समवाप्यते ॥३६॥ यत्ते पवित्रमर्चिष्यम(षि अ)ग्ने विततमन्तरा । ब्रह्मेति निहितं नैव ब्रह्मणो(णः)श्रुतिबृंहितम् ॥३७॥ पवित्रमिति चैवाग्निरग्निर्वै चक्रमुच्यते । अग्निरेव सहस्रारः सहस्रा(स्र)नेमिरुच्यते ॥३८॥ नेमितप्ततनुः सूर्यो ब्रह्मणा समतां व्रजेत् । यत्ते पवित्रमर्चिषि अग्ने तेन पुनीहि नः ॥३९॥ दक्षिणे तु भुजे विप्रो विभृयाद्वै सुदर्शनम् । सव्ये तु शङ्खं विभृयादिति वेदविदो विदुः ॥ ४० ॥ इत्यादिश्रुतिभिः प्रोक्तं विष्णोश्चक्रस्य धारणम् । पुराणेष्वितिहासेषु सात्त्विकेषु स्मृतिष्वपि ॥४१॥ शङ्खचक्रोर्ध्वपुण्ड्रादिरहितं ब्राह्मणं नृप । यः श्राद्धे भोजयेद्विप्रः पितॄणां तस्य दुर्गतिः ॥ ४२ ॥ शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः । रहितः सर्वधर्मेभ्यश्च्युतो नरकमाप्नुयात् ॥ ४३ ॥ रुद्रार्चनं त्रिपुण्ड्रस्य धारणं यत्र दृश्यते । तच्छू( स शू )द्राणां विधिः प्रोक्तो न द्विजानां कदाचन ॥४४॥ प्रतिलोमानुलोमानां दुर्गागणसुभैरवाः । पूजनीया यथार्हेण विल्वचन्दनधारणम् ॥४५॥

× एतदर्ध न क. पुस्तके ।

१ ख. वैफल्य° । २ ख. वा । गवा पण्डति वि° । ३ क °णतमवयवक्रयवि ६° । ४ ख. °मुदाहृत° । ५ क. °अवेत्यकनामि° । ६ क. वयेतिश्रावणं । ७ ख. श्रुतम् । ८ ख. °वासये । य° । ९ क यत्तपवित्रमर्चिष्यानि विततमन्त° । १० क °रा । पुनीहि तेनैव नक्रब्रह्मनोश्रु° । ११ क. °हस्रते नेमिनाततनुर्यो ब्रह्मणोऽस° । १२ ख. व्रजन् । १३ ख. °र्चिष्यमग्नेस्तु न सुनिहितः । १४ क °र्चेन त्रि° । १५ क °लोमाश्वनार्दुगादपमै° । १६ ख यदार्हे° । १७ क °धारिणाम् ।

यक्षराक्षसभूतानि विद्याधरगणास्तथा। चाण्डालानामर्चनीया मद्यमांसनिषेवि( वि )णाम्। स्ववर्णविहितं धर्ममेवं ज्ञात्वा समाचरेत् ॥ ४६ ॥ रुद्रार्चनाद्ब्राह्मणस्तु शूद्रेण समतां व्रजेत्। यक्षभूतार्चनात्सद्यश्चाण्डालत्वमवाप्नुयात् ॥ ४७ ॥ न भस्म धारयेद्विप्रः परमापद्गतोऽपि वा। मोहाद्वै बिभृयाद्यो वै स सुरापो भवेद्ध्रुवम् ॥४८॥ तिर्यक्पुण्ड्रधरं विप्रं पट्टाकारधरं तथा। श्वपाकमिव नेक्षेत न संभाषेत कुत्रचित् ॥ ४९ ॥ तस्माद्द्विजातिभिर्धार्यमूर्ध्वपुण्ड्रं विधानतः। मृदा शुभ्रेण सततं सान्तरालं मनोहरम् ॥ ५० ॥ स्नात्वा शुद्धेऽपि पूर्वाह्ने विष्णुमभ्यर्च्य देशिकः। स्नातं शिष्यं समाहूय होमं कुर्वीत पूर्ववत् ॥ ५१ ॥ परोमात्रेति सूक्तेन पायसं मधुमिश्रितम्। हुत्वाऽथ मूलमन्त्रेण शतमष्टोत्तरं घृतम् ॥ ५२ ॥ स्थण्डिले तु ततः पश्चान्मण्डलानि यथाक्रमम्। दिक्ष्वष्ट मध्ये चत्वारि विन्यसेत्पुरतो हरेः ॥ ५३ ॥ विलिखेत्तत्र पुण्ड्रादि विस्तारायामभेदतः। तेष्वर्चयेत्ततो धीमान्केशवादीननुक्रमात् ॥ ५४ ॥ तत्र तत्र च तन्मूर्तिं ध्यात्वा मन्त्रैः समर्चयेत्। गन्धपुष्पादि सकलं मन्त्रेणैवार्चयेद्गुरुम् ॥ ५५ ॥ प्रदक्षिणमनुव्रज्य सशिष्यः प्रणमेदथ। तद्धस्तौ निक्षिपेच्छिष्यः केशवादीननुक्रमात् ॥ ५६ ॥ हृदि विन्यस्य पुण्ड्राणि गुरूक्तानि स वैष्णवः। शुभ्रेणैव मृदा पश्चाद्बिभृयात्सुसमाहितः ॥ ५७ ॥ त्रिसंध्यासु मृदा विप्रो यागकाले विशेषतः। श्राद्धे दाने तथा होमे स्वाध्याये पितृतर्पणे ॥ ५८ ॥ श्रद्धालुरूर्ध्वपुण्ड्राणि बिभृयाद्द्विजसत्तमः। * तदाऽऽराध्यर्द्धरेनि(हरेर्नि)त्यमूर्ध्वपुण्ड्रविधानतः ॥ ५९ ॥ श्राद्धं होमस्तथा दानं स्वाध्यायः पितृतर्पणम्। भस्मी भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥ ६० ॥ ऊर्ध्वपुण्ड्रं विना यस्तु श्राद्धं कुर्वीत स द्विजः। सर्वं तद्राक्षसैर्नीतं नरकं चाधिगच्छति ॥ ६१ ॥ ऊर्ध्वपुण्ड्रविहीनं तु यः श्राद्धे भोजयेद्द्विजम्। अश्नन्ति पितरस्तस्य विण्मूत्रं नात्र संशयः ॥६२॥ तस्मात्तु सततं धार्यमूर्ध्वपुण्ड्रं द्विजन्मना। धारयेन्न तिर्यक्पुण्ड्रमापद्यपि कदाचन ॥ ६३ ॥ तिर्यक्पुण्ड्रधरं विप्रं चाण्डालमिव संत्यजेत्। सोऽनर्हः सर्वकृत्येषु सर्वलोकेषु गर्हितः ॥ ६४ ॥ ऊर्ध्वपुण्ड्रविहीनः सन्संध्याकर्म समाचरेत्। सर्वं तद्राक्षसैर्नीतं नरकं चाधिगच्छति ॥ ६५ ॥ यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रविवर्जितम्। द्रष्टव्यं नैव तत्किंचिच्छ्मशानमिव तद्भवेत् ॥ ६६ ॥

---

* एतदर्धं न ख. पुस्तके।

---

१ क °स्तदा। चण्डा°। २ क. °वणम्। ३ ख. °ट्टाम्बर°। ४ ख. °क इव वीक्षे°। ५. ख. यदाक्रमात्। दीत्यस्यम°। ६ क. तध्धूनीक्षपे°। ७ क. ग. °ण्ड्रादि गुरुणोक्तानि वै°।

ऊर्ध्वपुण्ड्रं मृदा शुभ्रं ललाटे यस्य दृश्यते । चण्डालोऽपि[1] हि शुद्धात्मा विष्णुलोके महीयते ॥ ६७ ॥ ऊर्ध्वपुण्ड्रस्य मध्ये तु ललाटे सुमनोहरे । लक्ष्म्या सह समासीनो रमते तत्र वै हरिः ॥ ६८ ॥ निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः । स हि तत्र स्थितं विष्णुं श्रियं चैव व्यपोहति ॥ ६९ ॥ अच्छिद्रमूर्ध्वपुण्ड्रं तु यः करोति द्विजाधमः । कल्पकोटिसहस्राणि रौरवं नरकं व्रजेत् ॥ ७० ॥ तस्मा[3]च्छिद्रान्वितं पुण्ड्रं धरेद्विष्णुपदाकृति । ललाटादिषु चाङ्गेषु सर्वकर्मसु वैष्णवः ॥ ७१ ॥ नासिकामूलमारभ्य ललाटान्तं तु विन्यसेत् । अङ्गुलं द्व्यङ्गुलं वाऽपि मध्ये च्छिद्रं प्रकल्पयेत् ॥ ७२ ॥ पार्श्वे चाङ्गुलिमात्रं तु विन्यसेद्द्विजसत्तमः । पुण्ड्राणामन्तराले[6]षु हरिद्रां धारयेच्छ्रियम् ॥ ७३ ॥ ललाटे पृष्ठयोः कण्ठे भुजयोरुभयोरपि । चतुरङ्गुलमात्रं तु बिभृयादायतं द्विजः ॥ ७४ ॥ उरस्यष्टाङ्गुलं धार्यं भुजयोरायतं तथा । उदरे पार्श्वयोर्नित्यमायतं तु दशाङ्गुलम् ॥ ७५ ॥ केशवाद्यैर्नमोन्तैश्च प्रणवाद्यैरनुक्रमात् । ललाटे केशवं रूपं कुक्षौ नारायणं न्यसेत् ॥ ७६ ॥ वक्षःस्थले माधवं च गोविन्दं कण्ठदेशतः । विष्णुं च दक्षिणे पार्श्वे बाह्वोश्च मधुसूदनम् ॥ ७७ ॥ त्रिविक्रमं[7] तु वामांसे वामनं वामपार्श्वतः । श्रीधरं वामबाहौ तु हृषीकेशं [8]तथांश(स)के ॥ ७८ ॥ पृष्ठे च पद्मनाभं तु ग्रीवे दामोदरं तथा । तत्प्रक्षालनतोयेन वासुदेवेति मूर्धनि ॥ ७९ ॥ केशवस्तु सुवर्णाभः शङ्खचक्रगदाधरः । शुक्लाम्बरधरः सौम्यो मुक्ताभरणभूषितः ॥ ८० ॥ नारायणो घनश्यामः शङ्ख[9]पद्मगदासिभृत् । पीतवासा मणिमयैर्भूषणैरुपशोभितः ॥ ८१ ॥ माधवश्चोत्पलप्रख्यश्चक्रशार्ङ्गगदासिभृत् । चित्रमाल्याम्बरधरः पुण्डरीकनिभेक्षणः ॥ ८२ ॥ गोविन्दः [10]शङ्खवर्णः स्यात्पद्मशङ्खगदासिभृत् । रक्तारविन्दपादाब्जस्तप्तकाञ्चनभूषणः ॥ ८३ ॥ गौरवर्णो भवे[11]द्विष्णुः शङ्खचक्रहलासिभृत् । क्षौमाम्बरधरः स्रग्वी केयूराङ्गदभूषितः ॥ ८४ ॥ अरविन्दनिभः श्रीमान्मधुजित्कमलासनः । चक्रं शार्ङ्गं च मुसलं पद्मं दोर्भिर्बिभर्त्यसौ ॥ ८५ ॥ त्रिविक्रमो रक्तवर्णः शङ्खचक्रगदासिभृत् । किरीटहारकेयूरकुण्डलैश्च विराजितः ॥ ८६ ॥ वामनः कुन्दवर्णः स्यात्पुण्डरीकायतेक्षणः । दोर्भिर्वज्रं गदां [12]शङ्खं पद्मं हैमं बिभर्त्यसौ ॥ ८७ ॥ श्रीधरः पुण्डरी-

---

१ क. °पि स शु° । २ ख. अथेदमू° । ३ ख. °स्माद्भागान्वि° । ४ ख. °टान्तेषु वि° । ५ ख. °द्व्यङ्गुलद्वयमात्रं तु म° । ६ ख. °ले तु ह° । ७ क ग. °मं तथैवांसे । ८ ख. तदा भुजे । पृ° । ९ °ङ्खचक्रग° । १० ख. शशिव° । ११ ख. °द्विष्णुश्चक्रशङ्खह° । १२ ख चक्रं ।

कांभश्चशाङ्गासिपद्मभृत् । रक्तारविन्दनयनो मुक्तादामविभूषितः ॥८८॥ विद्युद्वर्णो हृषीकेशश्चक्रशार्ङ्गहलासिभृत् । रक्तमाल्याम्बरधरः पुण्डरीकावतंसकः ॥ ८९ ॥ इन्द्रनीलनिभः शङ्खचक्रपद्मगदाधरः । पद्मनाभः पीतवासाश्चित्रमाल्यानुलेपनः ॥ ९० ॥ दामोदरः शार्दूलाभः पद्मशार्ङ्गासिशङ्खभृत् । पीतवासा विशालाक्षो नानारत्नविभूषितः ॥ ९१ ॥ एवं पुण्ड्राणि सततं धारयेद्वैष्णवोत्तमः । पुण्ड्रसंस्कार इत्येवं शिष्येणापि च कारयेत् ॥ ९२ ॥ तन्त्रशेषं समाप्यार्थं ब्राह्मणान्भोजयेत्ततः ॥९३॥

इति श्रीवृद्धहारीतस्मृतौ पुण्ड्रसंस्कारो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

(अथ तृतीयोऽध्यायः ।)

---

तृतीयं नामसंस्कारं कुर्वीत शुभवासरे। स्नात्वा संपूज्य देवेशं गन्धपुष्पादिभिर्गुरून्॥१॥ नामाधिदैवतं पश्चात्पूजयेत्प्रयतात्मवान्। द्वादशैव तु मासास्तु केशवाद्यैरधिष्ठिताः॥२॥ आरभ्य मार्गशीर्षं तु यथासंख्यं द्विजोत्तमः । यस्मिन्मासि भवेद्दीक्षा तन्मूर्तेर्नाम चोदितम् ॥ ३ ॥ नृसिंहरामकृष्णाख्यं दासनाम प्रकल्पयेत् । शक्त्या दशावताराणां वर्जयेन्नाम वैष्णवः । नाम दद्यात्प्रयत्नेन वैष्णवं पापनाशनम् ॥ ४ ॥ यस्य वै वैष्णवं नाम नास्ति चेत्तु द्विजन्मनः। अनामि(म)कः स विज्ञेयः सर्वकर्मसु गर्हितः॥५॥ चक्रस्य धारणं यस्य जातकर्मणि संभवेत् । तत्र वै मासनामापि दद्याद्विप्रो विधानतः ॥ ६॥ ध्यात्वा समर्चयेन्नाममूर्तिं मन्त्रेण देशिकः । धूपं दीपं च नैवेद्यं ताम्बूलं च समर्पयेत् ॥ ७ ॥ प्रदक्षिणमनुव्रज्य भक्त्या सम्यक्प्रणम्य च । तन्मन्त्रं मूलमन्त्रं वा जपेत्साहस्रसंख्यया ॥ ८ ॥ पश्चाद्धोमं प्रकुर्वीत शतमष्टोत्तरं हविः । वैष्णवैरनुवाकैश्च जुहुयात्सर्पिषा तथा ॥ ९ ॥ नाम दद्यात्तथा शिष्ये मन्त्रतोयैः समाप्लुतम् । ततः पुष्पाञ्जलिं दत्त्वा होमशेषं समापयेत् ॥ १० ॥ वैष्णवान्भोजयेत्पश्चाद्दक्षिणाद्यैश्च तोषयेत् । एवं हि नामसंस्कारं कुर्वीत द्विजसत्तमः ॥ ११ ॥ गुणयोगेन[10] चान्यानि विष्णोर्नामानि लौकिके । विशिष्टं वैष्णवं नाम सर्वकर्मसु चोदितम् ॥ १२ ॥ हरेः परं पितुर्नाम यो द[11]दात्यपरं सुतम् । अ[12]तिरोचनकं दिव्यं तृतीयं श्रुतिचोदितम् ॥ तस्माद्भगवतो नाम सर्वे[13]षां मुनिभिः स्मृतम् ॥ १३ ॥

इति श्रीवृद्धहारीतस्मृतौ नामसंस्कारस्तृतीयोऽध्यायः ॥ ३ ॥

---

१ ख. °काव्यचक्रशार्ङ्गी च पद्मधृक् । र° । २ ख. °निभश्चक्रशङ्खप° । ३ ख. सार्वभौमः । ४ क. °क्षो मालार° । ५ ख. °त् । मन्त्रशे° । ६ ख. °थ वैष्णवान्भो° । ७ क °र्गुरु. । ना° । ८ क. °क्त्यावेशा° । ९ क. °नासिकः। १० क. °गे चाऽऽत्मनि च वि° । ११ क. दद्यात्तत्परं । १२ क. अविरोधेन देव इति तृ° । १३ क. °षा श्रुतिचोदित° ।

( अथ चतुर्थोऽध्यायः । )

एवं तृतीयसंस्कारं कृत्वा वै[1] वैष्णवोत्तमः । चतुर्थं मन्त्रसंस्कारं कुर्वीत द्विजसत्तमः॥१॥ प्रातः स्नात्वा विधानेन पूजयेज्जगतां पतिम् । अष्टोत्तरसहस्रं तु मन्त्ररत्नं जपेद्गुरुः ॥२॥ स्नातं शिष्यं समाहूय सुवेषं समलंकृतम् । आदाय कलशं रम्यं पवित्रोदकपूरितम्॥३॥ पञ्चत्वक्पल्लवयुतं पञ्चरत्नसमन्वितम् । मङ्गलद्रव्यसंयुक्तं मन्त्रेणैवाभिमन्त्रयेत् ॥ ४ ॥ संमार्जयेत्ततः शिष्यं तज्जलेन कुशैः शुभैः । सूक्तैश्च विष्णुदेवत्यैः पावमानैस्तथैव च ॥ ५ ॥ अष्टोत्तरशतं पश्चान्मन्त्ररत्नेन मार्जयेत् । अभिषिच्य ततो मूर्ध्नि शुक्लवस्त्रधरं शुचिम् ॥ ६ ॥ स्वलंकृतं समाचान्तमूर्ध्वपुण्ड्रधरं तथा । पवित्रहस्तं पद्माक्षमालया समलंकृतम् ॥ ७ ॥ निवेश्य(श्य) दक्षिणे स्वस्य आसने कुशनिर्मिते । स्वगृह्योक्तविधानेन पुरतोऽग्निं प्रकल्पयेत् ॥ ८ ॥ पौरुषेण तु सूक्तेन श्रीसूक्तेन तथैव च । मध्वाज्यमिश्रितं रम्यं पायसं जुहुयाद्गुरुः ॥ ९ ॥ अष्टोत्तरशतं पश्चादाज्यं मन्त्रद्वयेन च । मूलमन्त्रेण जुहुयाच्चरुघृतविमिश्रितम् ॥ १० ॥ केशवादीन्समुद्दिश्य नित्यान्मुक्तांस्तथैव च । एकैकामाहुतिं हुत्वा होमशेषं समापयेत् ॥ ११ ॥ ततः प्रदक्षिणं कृत्वा नमस्कृत्वा(त्य) जनार्दनम् । आचार्यः स्वगुरुं नत्वा जपेद्गुरुपरम्पराम् ॥१२॥ मातरं सर्वजगतां प्रपद्येत श्रियं ततः। त्वं माता सर्वलोकानां सर्वलोकेश्वरप्रिये॥१३॥ अपराधशतैर्जुष्टमाश्रयस्वैनमच्युतम्[2] । एवं प्रपद्य लक्ष्मीं तां श्रियं सद्गुरुभावतः॥१४॥ नित्ययुक्तं तया देव्या वात्सल्यादिगुणान्वितम् । शरण्यं सर्वलोकानां प्रपद्ये तं सनातनम् ॥ १५ ॥ नारायण दयासिन्धो वात्सल्यगुणसागर । एनं रक्ष जगन्नाथ वहुजन्मापराधिनम् ॥ १६ ॥ इत्याचार्येण संदिष्टः प्रपद्येत जनार्दनम् । प्रपद्येत ततः शिष्यो गुरुमेव दयानिधिम् ॥ १७ ॥ गुरो त्वमेव देवस्त्वं त्वमेव परमा गतिः । त्वमेव परमो धर्मस्त्वमेव परमं तपः ॥ १८ ॥ इति प्रपन्नमाचार्यो निवेश्य पुरतो हरेः । प्रागग्रेषु समासीनं दर्भेषु सुसमाहितम्[3] ॥ १९ ॥ स्वाचार्यं पुरतो ध्यात्वा नमस्कृत्वा(त्या)थ भक्तिमान् । गुरोः परम्परां जप्त्वा हृदि ध्यात्वा जनार्दनम् ॥२०॥ कृपया वीक्ष्य[4] तं शिष्यं दक्षिणं ज्ञानदक्षिणम् । निक्षिप्य हस्तं शिरसि वामं हृदि च विन्यसेत् ॥ २१ ॥ पादौ गृहीत्वा शिष्यस्तु गुरोः प्रयतमानसः । भो गुरो ब्रूहि मन्त्रं मे ब्रूयादिति दयानिधे ॥ २२ ॥ अध्यापयेत्ततस्तस्मै मन्त्ररत्नं शुभाह्वयम् । सन्न्यासं च समुद्रं च सर्षिच्छन्दोधिदैवतम् ॥ २३ ॥

---

१ ख. वैदिकोत्त° २ ख. °जुष्टं नमस्ते न मम च्यु° । ३ ख. °हित° । स्वा° । ४ ख. वीक्षितं ।

सार्थमध्यापयेच्छिष्यं प्रयतं शरणागतम्। अष्टाक्षरं द्वादशार्णं षडर्क्षीं वैष्णवीं तथा॥२४॥
रामकृष्णनृसिंहाख्यान्मन्त्रांस्तस्मै निवेदयेत्। न्यासे चाप्यर्चने वाऽपि मन्त्रमेकान्तिनं
श्रयेत्॥ २५॥ अवैष्णवोपदिष्टेन मन्त्रेण नरकं[3] व्रजेत्॥२६॥ अवैष्णवाद्गुरोर्मन्त्रं यः
पठेद्वैष्णवो द्विजः। कल्पकोटिसहस्राणि पच्यते नरकाग्निना॥ २७॥ अचक्र-
धारिणं[4] विप्रं मन्त्रमध्यापयेत्तु[5] यः। रौरवं नरकं प्राप्य चाण्डालीं योनिमाप्नुयात्॥२८॥
तस्माद्दीक्षाविधानेन शिष्यं भक्तिसमन्वितम्। मन्त्रमध्यापयेद्विद्वान्वैष्णवं पापनाश-
नम्॥ २९॥ अनधीत्य द्वयं मन्त्रं योऽन्यवैष्णवमुत्तमम्। अधीत्य मन्त्रसंसिद्धिं न
प्राप्नोति न संशयः[6]॥ ३०॥ जातकर्माणि वा चौले तथा मौञ्जीनिबन्धने। चक्रस्य
धारणं यत्र भवेत्तस्य तु तत्र वै॥ ३१॥ उपनीय गुरुः शिष्यं[7] स्वगृह्योक्तविधानतः।
अध्यापयेच्च सावित्रीं[8] तथा मन्त्रद्वयं शुभम्॥ ३२॥ प्राप्तमन्त्रस्ततः शिष्यः पूजये-
च्छ्रद्धया गुरुम्। गोभूहिरण्यरत्नाद्यैर्वासोभिर्भूषणैरपि॥ ३३॥ सद्वृत्तौ[9] शासयेच्छि-
ष्यमाचार्यः शंसि(संशि)तव्रतः। स्वरूपं साधनं साध्यं मन्त्रेणास्मै निवेदयेत्॥ ३४॥
द्वयेन वृत्तियाथात्म्यं सम्यगस्मै निवेदयेत्। आचार्याधीनवृत्तिस्तु[10] सत्पथे निवसेत्सदा
॥ ३५॥ कर्मणा मनसा वाचा हरिमेव भजेत्सुधीः। यावच्छरीरपातं[11] तु द्वयमाव-
र्तयेत्सदा॥ ३६॥ एवं हि विधिना सम्यङ्मन्त्रसंस्कारसंस्कृतः॥ ३७॥

इति श्रीवृद्धहारीतस्मृतौ मन्त्रसंस्कारश्चतुर्थोऽध्यायः॥ ४॥

(अथ पञ्चमोऽध्यायः।)

मन्त्रार्थतत्त्वविदुषं(द्वांसं) योगतन्त्रे नियोजयेत्। पूर्वाह्णे पूजयेद्विष्णुं[12] तस्य प्रियकरं
शुभम्॥ १॥ मन्त्ररत्नविधानेन गन्धपुष्पादिभिर्गुरुः। अर्चयित्वाऽच्युतं भक्त्या
होमं पूर्ववदाचरेत्॥ २॥ सर्वैश्च वैष्णवैः सूक्तैः पायसं घृतमिश्रितम्। आज्यं मन्त्रेण
होतव्यं शतमष्टोत्तरं तथा॥ ३॥ शक्त्या च वैष्णवैर्मन्त्रैः सर्वैर्होमं समाचरेत्।
एकैक(का)माहुतिं हुत्वा[13] सर्वावरणदेवताः॥ ४॥ प्रणवाद्यैश्चतुर्थ्यन्तैस्तेषां वै नाम-
भिर्यजेत्। होमशेषं समाप्याथ वैष्णवान्भोजयेत्ततः॥ ५॥ मन्त्ररत्नेन तद्बिम्बं[14]
पुष्पाञ्जलिशतैर्यजेत्[15]। प्रणम्य भक्त्या देवेशं जप्त्वा मन्त्रमनुत्तमम्॥ ६॥

१ ख. पट्कर्क्षी। २ ख. तदा। ३ ख °ते नारकात्मना। ४ ख. °णं यस्तु म°। ५ ख °येद्गुरु°। रौ°। ६ क संशयम्। ७ ख °ष्यं गृह्योक्तविधिना तत.। ८ ख. °वित्रं तपोम°। ९ ख. सद्वृत्ता शा°। १० ख °स्तु संयतस्तु व°। ११ ख °वच्चतीर°। १२ ख. °येद्देवं तस्य प्रियतरं शुभः। म°। १३ क. नीत्वा। १४ क तद्बिय पु°। १५ ख °शतं य°।

आहूय प्रणतं शिष्यं तद्बिम्बं दर्शयेद्गुरुः । कृपयाऽथ ततस्तस्मै दद्याद्बिम्बं हरेर्गुरुः ॥ ७ ॥ एनं रक्ष जगन्नाथ केवलं कृपया तव । अर्चनं यत्कृतं तेन विभो स्वीकर्तुमर्हसि ॥ ८ ॥ एवं लब्ध्वा गुरोर्बिम्बं पूजयेत्तं प्रयत्नतः । हिरण्यवस्त्राभरणयानशय्यासनादिभिः ॥ ९ ॥ ततःप्रभृति देवेशमर्चयेद्विधिना सदा । श्रौतस्मार्तागमोक्तानां ज्ञात्वाऽन्यतममच्युतम् ॥ १० ॥

इति श्रीवृद्धहारीतस्मृतौ विशिष्टधर्मशास्त्रे पञ्चसंस्कार-
विधिर्नाम पञ्चमोऽध्यायः ॥ ५ ॥

=====

( अथ षष्ठोऽध्यायः । )

---

अम्बरीष उवाच—

भगवन्सर्वमन्त्राणां विधानं मम सुव्रत । ब्रूहि सर्वमशेषेण प्रयोगं सार्थसंस्कृतम् ॥१॥

हारीत उवाच—

शृणु राजन्प्रवक्ष्यामि मन्त्रयोगमनुत्तमम् । यथोक्तं विष्णुना पूर्वं ब्रह्मणः परमात्मना ॥ २ ॥ सर्वेषामेव मन्त्राणां प्रथमं गुह्यमुत्तमम् । मन्त्ररत्नं नृपश्रेष्ठ सद्यो मुक्तिफलप्रदम् ॥ ३ ॥ सर्वैश्वर्यप्रदं पथ्यं सर्वेषां सर्वकामदम् । यस्योच्चारणमात्रेण परितुष्टो भवेद्धरिः ॥ ४ ॥ देशकालादिनियममरिमित्रादिशोधनम् । स्वरवर्णादिदोषश्च पौरश्चर्णिकं न तु ॥ ५ ॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथेतराः । तस्याधिकारिणः सर्वे सत्त्वशीलगुणा यदि ॥ ६ ॥ अनन्यसाधना ये तु अनन्यशरणास्तथा । अनन्यभोग्या ये राजंस्त एवास्याधिकारिणः ॥ ७ ॥ पञ्चसंस्कारसंपन्नाः श्रद्धावन्तोऽनसूयकाः । भक्त्या परमयाऽऽविष्टा युक्तास्तस्याधिकारिणः ॥ ८ ॥ पञ्चविंशाक्षरो मन्त्रः पदैः षड्भिः समन्वितः । वाक्यद्वयं परं मन्त्रं ज्ञेयं रत्नमनुत्तमम् ॥९॥ *जगदाश्रयणीया श्रीः सा श्री(श्रि)ता जगतां पतिम् । तया विद्यानपायिन्या संयुतः परमः पुमान् ॥१०॥ नारायणोऽच्युतः श्रीमान्वात्सल्यगुणसागरः । नाथः सुशीलः सुलभः सर्वज्ञः शक्तिमान्परः ॥ ११ ॥ आपद्बन्धुः सदामित्रं परिपूर्णमनोरथः । दयासुधाब्धिः सविता वीर्यवान्द्युतिमान्वशी ॥१२॥ प्रपद्ये चरणौ तस्य शरणं

---

* एतदर्धस्थानेऽयं पाठ ख. पुस्तके—"यदाश्रयति विद्यादिः संस्थिता जगता पतिम्" इति ।

---

१ ख. °रणकं । २ क. °या नत्यान° । ३ क. सखा मि° । ४ ख °मान्विभुः । प्र° ।

श्रेयसे मम ॥ १३ ॥ श्रीमते विष्णवे नित्यं सर्वावस्थासु सर्वदा । निर्ममो निरहंकारः कैंकर्यं करवाण्यहम् ॥ १४ ॥ एवमर्थं विदित्वैवं पश्चान्मन्त्रं प्रयोजयेत् । नारायण ऋषिश्छंदो गायत्री च परा शुभा ॥ १५ ॥ स्वयं नारायणः श्रीमान्देवता समुदाहृतः । करयोस्तलयोराद्यमक्षरं विन्यसेद्द्विजः ॥ १६ ॥ शेषाक्षराणि देयानि चतुर्विंशतिपर्वसु । षट्पदैरङ्गुलिन्यासमङ्गेषु च यथाक्रमम् । षडङ्गं षट्पदैः कृत्वा मन्त्रार्णैश्च यथाक्रमम् ॥ १७ ॥ मूर्ध्नि भाले नेत्रनासाश्रवणेषु तथाऽऽनने । भुजयोर्हृत्प्रदेशे च स्तनयोर्नाभिमण्डले ॥ १८ ॥ पृष्ठे च जघने कट्योरूर्वोर्जान्वोश्च पादयोः । पञ्चविंशाक्षराण्यस्य क्रमेणाङ्गेषु विन्यसेत् ॥ १९ ॥ एवं न्यासविधिं कृत्वा पश्चाद्ध्यानं समाचरेत् । इन्दीवरदलश्यामं कोटिसूर्याग्निवर्चसम् ॥२०॥ चतुर्भुजं सुन्दराङ्गं सर्वाभरणभूषितम् । पद्मासनस्थं देवेशं पुण्डरीकनिभेक्षणम् ॥ २१ ॥ रक्तारविन्दसदृशं दिव्यहस्तपदान्वितम् । माणिक्यमुकुटोपेतं नीलकुञ्चितशीर्षजम् ॥ २२ ॥ श्रीवत्सकौस्तुभोरस्कं वनमालाविराजितम् । दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पावतंसकम् ॥२३॥ हारकुण्डलकेयूरनूपुरादिविराजितम् । कटकैरङ्गुलीयैश्च पीतवस्त्रेण शोभितम् ॥ २४॥ शङ्खचक्रगदापद्मपाणिनं पुरुषोत्तमम् । वामाङ्के विन्यसेत्तस्य देवीं कमललोचनाम् ॥ २५ ॥ तरुणीं सुकुमाराङ्गीं सर्वलक्षणशोभिताम् । दुकूलवस्त्रसंवीतां सर्वाभरणभूषिताम् ॥ २६ ॥ तप्तकाञ्चनसंकाशां पीनोन्नतपयोधराम् । रत्नकुण्डलसंयुक्तां नीलकुञ्चितमूर्धजाम् ॥ २७ ॥ दिव्यचन्दनलिप्ताङ्गीं दिव्यपुष्पावतंसकाम् । मातुलिङ्गं च रक्ताब्जं दर्पणं वरदं तथा ॥२८ ॥ देवीं च बिभ्रतीं दोर्भिश्चिन्तयेदिष्टदां सदा । एवं ध्यात्वाऽर्चयेद्यत्नादच्युतं नित्यमेव हि ॥ २९ ॥ यथाऽऽत्मनि तथा देवे न्यासकर्म समाचरेत् । अर्चयेदुपचारैश्च मनसा वा जनार्दनम् ॥ ३० ॥ आवाहनासने पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रोपवीते च भूषणं गन्धमेव च ॥ ३१ ॥ पुष्पं धूपं तथा दीपं नैवेद्यं च प्रदक्षिणम् । नमस्कारं च ताम्बूलं पुष्पमालां निवेदयेत् ॥ ३२ ॥ नमस्कृत्वा(त्य) गुरून्पश्चाज्जपेन्मन्त्रं समाहितः । अष्टोत्तरसहस्रं तु शतमष्टोत्तरं तथा ॥ ३३ ॥ ध्यायन्वै मनसा देवं जपेदेकाग्रमानसः । प्राङ्मुखोदङ्मुखो वाऽपि समासीनः कुशासने ॥ ३४ ॥ त्रिसंध्यासु जपेदेवं सर्वसिद्धिमवाप्नुयात् ॥ ३५ ॥

---

१ ख. °यणो महाशब्दो गा° । २ ख. मन्त्रार्थैश्च । ३ ख. °दाश्रित° । ४ ख. °कुन्तलशी° । ५ ख संयुक्तां स° । ६ ख. °त्वा परं नित्यमर्चयेदच्युतं द्विजः । य° । ७ ख. °मर्घ्यमा° ।

आदावन्ते जपस्यास्य प्राणायामान्समाचरेत् । पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः ॥ ३६ ॥ वामेन पूरयेद्वायुं बाह्यं नासा जपेन्मनुम् । उभाभ्यां धारणं वायोः कुम्भकं समुदाहृतम् ॥ ३७ तद्रेचनं दक्षिणेन रेचनं समुदाहृतम् । पर्यावृत्त्या पुनश्चैवं प्राणायामत्रयं चरेत् ॥ ३८ ॥ पूरके कुम्भके चैव रेचके च विशेषतः । अष्टाविंशतिवारं तु जपेन्मन्त्रं समाहितः ॥ ३९ ॥ उत्तमं मुनिभिः प्रोक्तं प्राणायामं नृपोत्तम । जपन्द्वादशवारं तु मध्यमं तत्प्रकीर्तितम् ॥४०॥ षड्वारं तु कनीयः स्यान्त्रिवारमधमं स्मृतम् ॥ ४१ ॥ मनसैवार्चयेद्देवं पश्चादर्थं विचिन्तयेत् । प्राणायामत्रयं कृत्वा पश्चान्न्यासं समाचरेत् ॥ ४२ ॥ स्नात्वा शुक्लाम्बरधरः कृत्वा संध्यादि कर्म च । धृतोर्ध्वपुण्ड्रदेहश्च पवित्रकर एव च ॥ ४३ ॥ धृत्वा पद्माक्षमालां च संनिधावासने स्थितः । भूतशुद्धिविधानं च कृत्वा मन्त्रं प्रयोजयेत् ॥ ४४ ॥ अष्टाक्षरस्य मन्त्रस्य गुरुर्नारायणः स्मृतः । छन्दश्च देवी गायत्री परमात्मा च देवता ॥ ४५ ॥ ज्ञेयश्चाष्टाक्षरो मन्त्रः सर्वपापप्रणाशनः । सर्वदुःखहरः श्रीमान्सर्वकामफलप्रदः ॥ ४६ ॥ सर्वदेवात्मको मन्त्रस्ततो मोक्षप्रदो नृणाम् ॥ ४७ ॥ ऋचो यजूंषि सामानि तथैवाऽऽथर्वणानि च । सर्वमष्टाक्षरान्तःस्थं यच्चान्यदपि वाङ्मयम् ॥ ४८ ॥ सर्वार्थो वेदगर्भस्थो वेदाश्चाष्टाक्षरे स्थिताः । अष्टाक्षरस्तु प्रणवे अकारे प्रणवः स्थितः ॥४९॥ इह लौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् । कैवल्यं भगवत्त्वं च मन्त्रोऽयं साधयिष्यति ॥ ५० ॥ सकृदुच्चारणान्नृणां चतुर्वर्गफलप्रदम् । स्वरूपं साधनं प्राप्यं ददाति हि समञ्जसा ॥ ५१ ॥ महापापं चातिपापमुपपापं तथैव च । जपादस्य मनोराशु प्रणश्यति न संशयः ॥ ५२ ॥ अश्वमेधसहस्राणि राजसूयशतानि च । सकृदष्टाक्षरं जप्त्वा लभते नात्र संशयः ॥ ५३ ॥ गवामयुतदानस्य पृथिव्या मण्डलस्य च । कन्याशतसहस्रस्य गजाश्वानां तथैव च ॥ ५४ ॥ दानस्य यत्फलं नृणां सत्पात्रे रघुनन्दन । शतवारं मनुं जप्त्वा तत्फलं समवाप्नुयात् ॥५५॥ सार्थं समुद्रं सन्यासं सर्षिच्छन्दोऽधिदैवतम् । अष्टाक्षरं मनुं जप्त्वा विष्णुसायुज्यमाप्नुयात् ॥ ५६ ॥ पदत्रयात्मकं मन्त्रं चतुर्थ्या सहितं तथा । स्वरूपसाधनोपेयामिति मत्वा जपेद्बुधः ॥ ५७ ॥ प्रणवेन स्वरूपं स्यात्साधनं मनसा सह । संविभक्त्या चतुर्थ्याऽत्र पुरुषार्थो भवेन्मनोः ॥ ५८ ॥ अकारं चाप्युकारं च मकारं चेति तत्त्वतः । तान्येकधा समभवत्तदोमित्येतदुच्यते ॥ ५९ ॥ तस्मादोमिति विज्ञेयः प्रणवः साक्षरान्वितः ।

१ ख. जपन्म° । २ ख. क्रमात् । ३ ख. °पापं विद्यते चोपपातकम् । ज° । ४ ख. नृपनन्दन । ५ क. °न सर्वरू° । ६ ख. तथा । ७ क. °वेन्मुने । अ° । ८ ख °रात्मक° । वे° । ९ क °त पञ्चविंशाक्षरः साक्षा । उ° ।

वेदत्रयात्मकं ज्ञेयं भूर्भुवः स्वरितीति वै ॥ ६० ॥ अकारस्तु भवेद्विष्णुस्तदृग्वेद उदाहृतः। उकारस्तु भवेल्लक्ष्मीर्यजुर्वेदात्मको महान् ॥६१॥ मकारस्तु भवेज्जीवस्तयोर्दास उदाहृतः। पञ्चविंशाक्षरः साक्षात्सामवेदस्वरूपवान् ॥ ६२ ॥ पञ्चविंशोऽयं पुरुषः पञ्चविंश आत्मेति श्रुतिः[1]। आत्मा च पञ्चविंशः स्या[2]दिति तं मानसं स्मरेत् ॥६३॥ इत्यौपनिषदं[3] ह्यर्थं विदित्वा स्वं[4] निवेदयेत्। अवधारणमन्ये तु मध्यमार्णं वदन्ति हि ॥ ६४ ॥ तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदपि चन्द्रमाः। इत्यवधारणश्रुतेरेवमेवोपबृंहितम् ॥ ६५ ॥ ऊ( ॐ )कारेणैव श्रीशब्दः प्रोच्यते मुनिसत्तमैः। न्यायेन गुणशब्दस्तु तस्यैव श्रीपतेर्वशः ॥६६॥ श्रीरस्येशाना जगतो विष्णुपत्नीति वै श्रुतिः। कल्याणगुणसिद्धिस्तु लक्ष्मीभर्तुश्च नेतरा ॥ ६७ ॥ सामानाधिकरण्यत्वात्कारणत्वं तदोच्यते। अकार एव सर्वेषामक्षराणां हि कारणम्। अकारो वै सर्वा वागित्यादि श्रुतिवचस्तथा ॥ ६८ ॥ स्पर्शोष्मभिर्व्यज्यमानो नाना वहुविधोऽभवत्। कारणत्वं तथैवास्य विष्णोर्वै जगतां पतेः[11] ॥ ६९ ॥ तस्मात्स्रष्टा च[12] हर्ता च धाता च जगतां हरिः। रक्षिता जीवलोकस्य गुणवानेव सर्वगः ॥ ७० ॥ अनन्या विष्णुना लक्ष्मीर्भास्करेण प्रभा यथा। लक्ष्मीमनु( न )पगामिनीमिति श्रुतिवचो महत् ॥ ७१ ॥ तस्मादकारो वै विष्णुः श्रीश एव[13] जगत्पतिः। लक्ष्मीपतित्वं तस्यैव नान्यस्येति सुनिश्चितम् ॥ ७२ ॥ नित्यैवैषा जगन्माता हरेः श्रीरनपायिनी। यथा सर्वगतो विष्णुस्तथैवैषा जगन्मयी ॥ ७३ ॥ तस्मादकारो वै विष्णुर्लक्ष्मीभर्ता जगत्पतिः। तस्मिंश्चतुर्थी[14] लुप्तत्वात्त्रिपदस्य च संग्रहः ॥ ७४ ॥ अकारप्रथमां तस्माच्चतुर्थ्या[15] संग्रहेण तु। तच्च श्रुतिविरोध( रुद्ध )त्वान्न युक्तमिति चोदितम्[16] ॥ ७५ ॥ महसे ब्रह्मणे त्वा वै ओमित्यात्मानं युञ्जीत। परस्य चाऽऽत्मनां तस्माद्भेदस्तत्र सुनिश्चितः ॥७६॥ त्वमस्माकं तपस्यैव श्रुत्युक्तमिति पार्थिव(?)। तौ शाश्वतौ विषचितावियन्ताविति वै तथा ॥ ७७ ॥ गृहीष्व[17] दया प्रागचात्मा[18] स विश्वभृत्(?)। असावमर्त्यो[19] मर्त्येन नयेनेत्येव[20] योनिता ॥ ७८ ॥ इत्यादिश्रुतयो भेदं वदन्ति परजीवयोः ॥ ७९ ॥

---

१ ख. श्रुतेः। २ ख. °ति ममाऽऽत्मानं सं°। ३ क. इत्युदाहृतमर्थं। ४ क स्वा। ५ क. °स्तदुष°। ६ ख. °द्वत्येवं धा°। ७ ख. °णसिद्धिस्तु। ८ ख °वैरौ। श्री°। ९ क तथोच्य°। १० क. एष। ११ क. पतिः। त°। १२ ख. च दाता च विधाता ज°। १३ क. एवं। १४ ख °र्थीयुक्तत्वा°। १५ ख. °तुर्थ्या संग्रहं न तु। १६ क. पार्थिव। १७ ख. गृभि ( भ्णी)ष्व। १८ ख प्रागेव वाऽऽत्मानवि°। १९ ख. स्सोयमर्त्यो। २० क. °न येनेत्येव सयोनी। इ°।

दास्यमेवाऽऽत्मनां विष्णोः स्वरूपं परमात्मनः। साम्यं लक्ष्मीपतेः[1] प्रोक्तं देवादीनां तथाऽऽत्मनाम् ॥ ८० ॥ अनन्यशे[2]षरूपा वै जीवास्तस्य जगत्पतेः। दास्यं स्वरूपं सर्वेषामात्मनां सततं हरेः ॥ ८१ ॥ भगवच्छेषमात्मानमन्यथा यः प्रपद्यते। स एव हि महापापी चाण्डालः स्यान्न संशयः ॥ ८२ ॥ तस्मान्मकारवाच्योऽसौ पञ्चविंशात्मकः पुमान्। अकारवाच्यस्येशस्य दा[3]स्यमेव विधीयते ॥ ८३ ॥ अनुज्ञानाश्रयो नित्यो निर्विकारोऽव्ययः सदा। देहेन्द्रियात्परो ज्ञाता कर्ता भोक्ता सनातनः ॥८४॥ मकारवाच्यो जीवोऽसौ दास एव हि सर्वदा। श्रीशस्याकारवाच्यस्य विष्णोरस्य जगत्पतेः ॥ ८५ ॥ स्वस्वामिनोरुकारेण ह्यवधारणमुच्यते। स जीवः स्या[4]दतः स्वामी सर्वदा नृपसत्तम। अनयोर्नान्यथेत्युक्तमुकारेण महर्षिभिः ॥ ८६ ॥ इत्येवं प्रणवस्यार्थं प्रणवस्य पदस्य तु। आत्मनश्च स्वरूपत्वाद्विजे(ज्ञे)यमृषिसत्तमैः॥ ८७ ॥ सर्वेषामेव मन्त्रा[5]णां कारणं प्रणवः स्मृतः। तस्माद्व्याहृतयो जातास्ताभ्यो वेदत्रयं तथा ॥ ८८ ॥ भूरित्येव हि ऋग्वेदो भुव[6] इति यजुरतथा। स्वरिति सामवेदः स्यात्प्रणवो भूर्भुवः सुवः ॥ ८९ ॥ भूर्विष्णुश्च तथा लक्ष्मीर्भुव इत्यभिधीयते। तयोः स्वरिति जीवस्तु सुव इत्यभिधीयते ॥ ९० ॥ अग्निर्वायुस्तथा सूर्यस्तेभ्य एव हि जज्ञिरे। य एता व्याहृतीर्हुत्वा सर्वं वेदं जुहोति वै ॥ ९१ ॥ प्रसङ्गा[7]त्कथितं चेदं मन्त्रशेषमुदीर्यते। अस्वातन्त्र्यात्तु जीवानामधीनं परमात्मनः ॥ ९२ ॥ नमसा प्रोच्यते त[8]स्मिन्नहंताममतोज्झितम्। स्वरूपादित्रिवर्गस्य संसिद्धिर्न[9][10]मसैव हि ॥ ९३ ॥ नमसा रहितं सर्वं विफलं परिकीर्तितम्। नमसैव हि संसिद्धिर्भवेदत्र न संशयः ॥ ९४ ॥ पुरतः पृष्ठत[11]श्चैव पार्श्वतश्च विशेषतः। नमसैवेक्ष्यते राजंस्त्रिवर्गः सर्वदेहिनाम् ॥ ९५ ॥ मकारेण स्व[12]तन्त्रः स्यान्न[13]कारस्तन्निषिध्यति। तस्माच्च नम इत्यत्र स्वातन्त्र्यमपनोदति ॥ ९६ ॥ द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरस्तु हि शाश्वतम्। ममेति द्व्यक्षरं मृत्युर्न ममेति हि शाश्वतम् ॥ ९७ ॥ न ममेति हि सर्वत्र स्वातन्त्र्यरहिताय वै। युज्यते मुनिभिः सम्यक्सर्वकर्मसु पार्थिव ॥ ९८ ॥ तस्मात्तु नमसा युक्ताः सर्वे मन्त्राश्च पार्थिव। सर्वसिद्धिप्रदा नृणां भवन्त्यत्र न संशयः ॥ ९९ ॥ नमसा रहिता ये हि न तु मुक्तिप्रदा नृणाम्। तस्मात्तु नमसैवैषां पा(प)रतन्त्र्य(न्त्र)त्वमीशितुः ॥१००॥

---

१ क. °क्ष्मीवरप्रो°। २ क. °शेषारू°। ३ ख. दास एवाभिधी°। ४ क. स्याद्धरिः स्वा°। ५ क. °न्त्राणामावस्तु प्र°। ६ ख °वरिति। ७ ख. °ङ्गात्महितं। ८ ग तस्मान्न°। ९ ख °तोऽपि त°। १० ख. °नं तु सै°। ११ ख °तश्चावगे°। १२ क स्वतन्त्रस्य नका°। १३ ख. °न्नरस्त°।

पारतन्त्र्याल्लभेत्सिद्धिं स्वातन्त्र्यान्नाशमेष्यति ॥ १०१ ॥ दास्यमेव हि जीवानां प्रोच्यते नमसैव तु । नमसा रहितं लोके किंचिदत्र न विद्यते ॥ १०२ ॥ नमो देवेभ्यो नम इति एषामीशे तथा मनः । हृतं चिदेनो नमसा आविवासेति वै श्रुतिः ॥१०३॥ क्षयैरकारः संप्रोक्तो नकारस्तं निषिध्यति । तस्मात्तु नर इत्यत्र नित्यत्वेनोच्यते जनः ॥ १०४ ॥ नारा इति समूहत्वे बा(ब)हुल्य(ल)त्वाज्जनस्य च । तेषामयनभावोऽसस्तेन नारायणः स्मृतः ॥१०५॥ महाभूतान्यहंकारो महदव्यक्तमेव च । अण्डं तदन्तर्गता ये लोकाः सर्वे चतुर्दश । चतुर्विधशरीराणि कालः कर्मेति वै जगत् ॥१०६॥ भवाहरूणंवर्षा नारत्वेनोच्यते बुधैः । तेषामपि निवासत्वान्नारायण इतीरितः ॥१०७॥ अन्तर्बहिश्च जगतो धाता व्याप्ता सनातनः । स्रष्टा नियन्ता शरणं विधाता विश्वभावनः ॥ १०८ ॥ माता पिता सखा भ्राता निवासश्च सुहृद्गतिः । योऽसौ श्रियः श्रीः परमस्तेन नारायणः स्मृतः ॥ १०९ ॥ नराणां सर्वजगतामयनं शरणं हरिः । तस्मान्नारायण इति मुनिभिः संप्रकीर्त्यते ॥ ११० ॥ सर्वेषु देशकालेषु सर्वावस्थासु सर्वदा । तस्यैव किंकरोऽस्मीति चतुर्थी परमात्मनः ॥ १११ ॥ भगवत्परिचर्यैव जीवानां फलमुच्यते । तद्विना किं शरीरेण यातनाऽस्य जनस्य तु ॥ ११२ ॥ यस्मिञ्शरीरे जीवानां न दास्यं परमात्मनः । तदेव निरयं प्रोक्तं सर्वदुःखफलं भवेत् ॥ ११३ ॥ दास्यमेव फलं विष्णोर्दास्यमेव परं सुखम् । दास्यमेव हरेर्मोक्षं दास्यमेव परं तपः ॥ ११४ ॥ ब्रह्माद्याः सकला देवा वसिष्ठाद्या महर्षयः । काङ्क्षन्तः परमं दास्यं विष्णोरेव यजन्ति तम् ॥११५॥ तस्माच्चतुर्थ्या मन्त्रस्य प्रधानं दास्यमुच्यते । न दास्यवृत्तिर्जीवानां नाशहेतुः परस्य हि ॥ ११६ ॥ इत्थं संचिन्त्य मन्त्रार्थं जपेन्मन्त्रमतन्द्रितः । अविदित्वा मनोरर्थं जपेदप्रयतमानसः ॥ ११७ ॥ न सिद्धिंमवाप्नोति स्वरूपं च न विन्दति ॥ ११८ ॥ संन्यासं च समुद्रं च शक्त्यृषिच्छन्दोधिदैवतम् । सार्थं सयन्त्रं सध्यानं मन्त्रमेव प्रपूजयेत् ॥ ११९ ॥ नारायणर्षिर्गायत्री देवी छन्दोऽधिदेवताः । परमात्मा च लक्ष्मीशो विष्णुरेवाच्युतो हरिः ॥१२०॥ प्रणवस्तु भवेद्बीजं चतुर्थी शक्तिरुच्यते । क्रुद्धोल्का( ल्का )य महोल्काय वीरोल्काय तथैव च ॥ १२१ ॥

१ क. न मम इ° । २ क. मतः । दत्तं चिदेनु न° । ३ ख. °वाक्येति । ४ क. क्षपेर° । ५ क. °वासास्ते° । ६ ख. °षेपां ना° । ७ क. ग. °मयनवासः स्यात्ना° । ८ ख. °ता स म स° । ९ ख. भूतभावनः । १० ख. योनौ श्रि° । ११ ख. न संसिद्धिम° । १२ ख. °ति । संसारं च समुद्रं च सर्षिच्छन्दोधि° । १३ ख. सार्धं नय° । १४ ख. °यणार्षे गाय° । १५ क. स । १६ ख. विष्णूल्काय ।

ज्वालकाय महासुदर्शनचक्राय पश्चाङ्गं न्यास उच्यते । हृन्मूर्ध्नोश्च शिखायां च कूर्चके नेत्रयोर्न्यसेत् ॥ १२२ ॥ पञ्चाङ्गं न्यासमित्युक्तं सर्वमन्त्रेषु वैष्णवैः । पदत्रयेण कुर्वीत षडङ्गं तु यथाक्रमम् ॥ १२३ ॥ मूर्ध्न्याननें च हृदये भुजयोर्जघने तथा । पृष्ठे च जान्वोः पदयोर्मन्त्रार्णानि यथा न्यसेत् । अष्टाक्षराण्यष्टदिक्षु क्रमेण तदनन्तरम् ॥ १२४ ॥ नासिकायां तथाऽक्ष्णोश्च श्रोत्रयोराननें तथा । कण्ठे च स्तनयोर्नाभौ गुह्ये च तदनन्तरम् ॥ १२५ ॥ अचक्राय विचक्राय सचक्राय तथैव च । ज्वालाचक्राय त्रैलोक्यासुररक्षान्तकाय च ॥ १२६ ॥ आधारकालचक्राय दशदिक्षु यथाक्रमम् । स्वाहान्तं प्रणवाद्यन्तं न्यसेच्चक्राणि वैष्णवः ॥ १२७ ॥ एवं न्यासविधिं कृत्वा पश्चाद्ध्यानं समाचरेत् । हृदये प्रतिमायां वा जले सवितृमण्डले ॥ १२८ ॥ वह्नौ च स्थण्डिले वाऽपि चिन्तयेद्विष्णुमव्ययम् । बालार्ककोटिसंकाशं पीतवस्त्रं चतुर्भुजम् ॥ १२९ ॥ पद्मपत्रविशालाक्षं सर्वाभरणभूषितम् । शङ्खं चक्रं गदां पद्मं चतुर्दोर्भिर्धृतं तथा ॥ १३० ॥ श्रीभूमिसहितं देवमासीनं परमासने । तत्र चाऽऽधारशक्त्याद्यैर्धर्माद्यैः सूरिभिर्वृतैः ॥ १३१ ॥ दिव्यरत्नमये पीठे पङ्कजेऽष्टदले शुभे । तत्कर्णिकोपरितले तप्तकाञ्चनसंनिभे ॥ १३२ ॥ देवीभ्यां सहितं तस्मिन्नासीनं पङ्कजासने । चिन्तयेद्दक्षिणे पार्श्वे लक्ष्मीं काञ्चनसंनिभाम् ॥ १३३ ॥ पद्महस्तां विशालाक्षीं दुकूलवसनां शुभाम् । वामे दूर्वादलश्यामां विचित्राम्बरभूषिताम् ॥ १३४ ॥ चिन्तयेद्धरणीं देवीं नीलोत्पलधरां शुभाम् । माहिष्य( महिषी )श्च दुलाग्रे च चिन्तयेद्धृतचामराम्(ः) ॥ १३५ ॥ एवं ध्यात्वा हरिं नित्यं जपेत्मन्त्रमानसः । स्नात्वा शुक्लाम्बरधरः कृतकृत्यो यथाविधि ॥ १३६ ॥ धृतोर्ध्वपुण्ड्रदेहश्च पवित्रकर एव च । शुचिः कृष्णाजिनासीनः प्राणायामी च न्यासकृत् ॥ १३७ ॥ *प्राङ्मुखोदङ्मुखो वाऽपि देवस्याभिमुखोऽपि वा । प्राणायामत्रयं कृत्वा पश्चान्न्यासं समाचरेत् ॥ १३८ ॥ शङ्खचक्रगदापद्मशार्ङ्गखड्गान्यनुक्रमात् । तार्क्ष्यं च वनमालां च मुद्रा अष्ट प्रपूजयेत् ॥ १३९ ॥ पश्चाद्ध्यात्वा जगन्नाथं मनसैवार्चयेद्विभुम् । गन्धपुष्पादि सकलं मन्त्रेणैव निवेदयेत् ॥ १४० ॥

---

* एतद्वचनं न विद्यते ख. पुस्तके ।

---

१ ख. ज्वालकाय । २ क °श्चाङ्गन्यास । ३ ख °वचो ने° । ४ ख °ला महासुचक्राय त्रैलोक्याय तदनन्तरम् । आ° । ५ क. शङ्खचक्रगदापद्मांश्चतुर्भिर्दोर्भिरेव च । धृतं श्रीभूमिसहितमा° । ६ ख °भिर्धृतैः । ७ ख. °म् । महिष्यग्रद° । ८ ख. स्नातः । ९ क धृत्वोर्ध्व° । १० क. °नसा वा° ।

अनेनाभ्यर्चितो विष्णुः प्रीतो भवति तत्क्षणात् । अयुतं वा सहस्रं वा त्रिसंध्यासु जपेन्मनुम् ॥१४१॥ विष्णोः समानरूपेण शाश्वतं पदमाप्नुयात् ॥१४२॥ आयुष्कामी जपेन्नित्यं षण्मासं विजितेन्द्रियः । अयुतं तु जपेन्मन्त्रं सहस्रं जुहुयाद्घृतम् । आयुनिरामयं सम्यग्भवेद्वर्षशताधिकम् ॥ १४३ ॥ विद्याकामी जपेद्वर्षं त्रिसंध्यास्वयुतं मनुम् । जुहुयाद्विमलैः पुष्पैः सहस्रं संयतेन्द्रियः। अष्टादशानां विद्यानां भवेद्व्याससमो द्विजः ॥ १४४ ॥ विवाहार्थी जपेन्नित्यमेवं वर्षचतुष्टयम् । लाजहोमी सहस्रं तु लभेत्कन्यां सुशोभिताम् ॥ १४५ ॥ संपत्कामी जपेन्नित्यं- त्वयुतं वत्सरत्रयम् । पद्मैर्वा पद्मपत्रैर्वा तथा होमी श्रियं लभेत् ॥ १४६ ॥ भूकामी तु जपेन्नित्यं वत्सरं विजितेन्द्रियः । दूर्वाभिर्जुहुयात्तद्वल्लभेद्भूमिमभीप्सिताम् ॥ १४७ ॥ राज्यकामी जपेन्नित्यं षडब्दमयुतं तु वा । सहस्रं जुहुयान्नित्यं पायसं घृतमिश्रितम् ॥ १४८ ॥ चक्रवर्ती भवेत्सद्यः पद्माभर्तुः प्रसादतः ॥ १४९ ॥ द्वादशाब्दं जपेदेवं सततं विजितेन्द्रियः । आज्यहोमी तु यो नित्यमिन्द्रत्वं लभते नरः ॥ १५० ॥ लक्षं जपेच्च यो नित्यं त्रिंशद्वर्षं जितेन्द्रियः । ब्रह्मत्वं वा शिवत्वं वा समाप्नोति न संशयः ॥ १५१॥ यावज्जीवं तु यो नित्यमयुतं सुसमाहितः । सहस्रं वा शतं वाऽपि होतव्यं वह्निमण्डले ॥ १५२ ॥ आज्येन चरुणा वाऽपि तिलैर्वा शर्करान्वितैः । पद्मैर्वा बिल्वपत्रैश्च समिद्भिः पिप्पलस्य वा ॥ १५३ ॥ कोमलैस्तुलसीपत्रैरर्चयित्वा सनातनम् । अनन्तविहगेशाना क्षिप्रमन्यतमो भवेत् ॥ १५४॥ किमत्र बहुनोक्तेन सर्वसिद्धिप्रदो नृणाम् । श्रीमदष्टाक्षरो मन्त्रो नित्यं प्रियतमो हरेः॥ १५५ ॥ आसीनो वा शयानो वा तिष्ठन्वा यत्र कुत्रचित् । जपेदष्टाक्षरं मन्त्रं तस्य विष्णुः प्रसीदति ॥१५६॥ स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः। अभितः सर्वदेवानां यो जपेत्सततं मनुम् ॥ १५७॥ ब्रह्मघ्नो वा कृतघ्नो वा महापापयुतोऽपि वा । अष्टाक्षरस्य जप्तारं दृष्ट्वा पापैर्विमुच्यते॥१५८॥ अष्टाक्षरस्य जप्तारो यथा भागवतोत्तमाः । पुनन्ति सकलं लोकं सदेवासुरमानुषम् ॥१५९॥ अष्टाक्षरस्य जप्तारं प्रणमेद्यस्तु भक्तितः। सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥१६०॥ अचिन्त्यमेतन्माहात्म्यं मनोरस्य जगत्पतेः। न हि वक्तुं मया शक्यं ब्रह्मादित्रिदशैरपि ॥ १६१ ॥ अथ वक्ष्यामि माहात्म्यं द्वादशार्णस्य पार्थिव । यस्योच्चारणमात्रेण द्वादशाब्दफलं लभेत् ॥ १६२ ॥

---

१ क विष्णुस्तत- प्रीतो भविष्यति । अ॰ । २ ख. ॰यं संपद्भवे॰ । ३ क ॰पेन्मन्त्रं त्रि॰ । ४ ख. ॰सं निय॰ । ५ क. ॰र्मा लभेत्कन्या जप्त्वा साहस्रसंख्यया । रा॰ । ६ ख. ॰डब्दं त्वयुतं तथा । स॰ । ७ ख. आत्मदो॰ । ८ ग दृष्ट्वा पापैः प्रमु॰ ।

नमो भगवते तुभ्यं वासुदेवाय शार्ङ्गिणे। प्रणवेन समायुक्तं द्वादशार्णं मनुं जपेत्॥१६३॥ पूर्ववत्प्रणवस्यार्थ(र्थं)नमसश्च महामनोः। ऐश्वर्यं च तथा वीर्यं तेजः शक्तिरनुत्तमा ॥१६४॥ ज्ञानं बलं यदेतेषां षण्णां भगं इतीरितः। एभिर्गुणैः[प्र]पूर्णो यो स एव भगवान्हरिः॥ १६५ ॥ नित्या च या भगवती प्रोच्यते मुनिसत्तमैः। ऐश्वर्यरूपा सा देवी सुभगा कमलालया॥१६६॥ ईश्वरी सर्वजगतां विष्णुपत्नी सनातनी। तस्याः पतित्वाद्धीशस्य भगवानिति चोच्यते॥१६७॥ तस्मात्तु भगवाञ्श्रीमानेकार्थो मुनिभिः स्मृतः। भगवानिति शब्दोऽयं तथा पुरुष इत्यपि॥ १६८॥ निरुपाधौ च वर्तेत वासुदेवेऽखिलात्मनि। वक्ष्यन्ति केचिद्भगवाञ्ज्ञानवानिति सत्तमाः॥१६९॥ तद्वासुदेवेनोक्तं स्यात्सामान्यत्वात्ततोऽन्यथा। तस्मात्कल्याणगुणवाञ्श्रीमान्योऽसौ जगत्पतिः ॥१७०॥ स एव भगवान्विष्णुर्वासुदेवः सनातनः। भगवते श्रीमते चेत्येकार्थे प्रोच्यते बुधैः॥१७१॥ गुणवान्भगवानेव सृष्टिस्थितिविनाशकृत्। द्वौ द्वौ गुणावधिष्ठाय सर्गाद्या(द्य)मकरोत्प्रभुः॥ १७२॥ प्रद्युम्नश्चानिरुद्धश्च संकर्षण इतीरितः। भगवान्वासुदेवोऽसौ सृष्ट्याद्यमकरोत्स्वयम्॥१७३॥ ऐश्वर्यवीर्यवान्सर्गे प्रद्युम्नः पर्यपद्यत। तेजःशक्तिं समाविश्य अनिरुद्धो ह्यपालयत्॥ १७४॥ बलज्ञाने तथा द्वे तु संकर्षणो ह्यधिष्ठितः। अकरोद्भगवानेव संहारं जगतोऽस्य तु॥ १७५॥ एवं षड्गुणपूर्णत्वात्पतित्वादपि च श्रियः। सर्गादेः कारणत्वाच्च भगवानिति चोच्यते॥ १७६॥ सर्वत्रासौ समस्तं च वसत्यत्र च वै यतः। ततः स वासुदेवेति विद्वद्भिः परिपठ्यते॥ १७७॥ चतुर्थी पूर्ववद्विद्यात्कैङ्कर्यार्थं महात्मनः। एवं ज्ञात्वा मनोरर्थं द्वादशार्णस्य चक्रिणः॥ १७८॥ संसिद्धिं परमाप्नोति सम्यगावर्त्य चेतसा। गत्वा गत्वा निवर्तन्ते सर्वक्रतुफलैरपि॥ १७९॥ तद्गत्वा न निवर्तन्ते द्वादशाक्षरचिन्तकाः। द्वादशार्णं सकृज्जप्त्वा सर्वपापैः प्रमुच्यते॥ १८०॥ ब्रह्महत्यादिपापानि तत्संसर्गकृतानि च। द्वादशार्णमनुर्जप्तुर्दहत्यग्निरिवेन्धनम्॥ १८१॥ सर्वसौभाग्यसुखदं पुत्रपौत्रादिवृद्धिदम्। सर्वकामप्रदं नृणामायुरारोग्यवर्धनम्॥ १८२॥ देवत्वममरेशत्वं शिवत्वं ब्रह्मतां तथा। द्वादशार्णमनुं जप्त्वा समाप्नोति न संशयः॥ १८३॥ दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकोऽपि वा। द्वादशार्णमनुं जप्त्वा विष्णुसायुज्यमाप्नुयात्॥ १८४॥

---

१ ख. नित्यं। २ ख °स्यार्थेन°। ३ ख °गवदीरि°। ४ ख. °णै° पूर्ववाक्यै. स। ५ क °त्वाच्छ्रीश°। ६ क °ष्टिसंहाररक्षक। द्वौ द्वौ गु°। ७ ख सर्वाद्यम°। ८ क. °श्वर्ये वी°। ९ क °म्न. प्रपद्यते। ते°। १० क. °था तौ संकर्षण अवि°। ११ ख. °गत. पुन। ए°। १२ ख °मस्तं च। १३ क. °द्विया कैङ्क°। १४ ख °दिवर्धनम्। १५ °वब्रह्मत्वमेव च। द्वा°।

प्रजापतिः कश्यपश्च मनुः स्वायंभुवस्तथा। सप्तर्षयो ध्रुवश्चैते ऋषयस्त्वस्य कीर्तिताः ॥ १८५ ॥ वसिष्ठः कश्यपोऽत्रिश्च विश्वामित्रश्च गौतमः । जमदग्निर्भरद्वाज एते सप्त महर्षयः ॥ १८६ ॥ भगवान्वासुदेवो वै देवताऽस्य प्रकीर्तिता। छन्दश्च परमा देवी गायत्री समुदाहृता ॥ १८७ * तस्यापि प्रणवो बीजमैश्वर्यं शक्तिरुच्यते। चतुर्थी-रा(मा)हुरन्ते तु शक्तिबीजं तथा मनोः ॥१८८॥ ऐश्वर्यं पदमेवात्र प्रोच्यते मुनिसत्तमैः ॥१८९॥ पदैश्चतुर्भिर्द्वादशभिरक्षरैरन्वितो मनुः । साधकानां सदा राजन्कामधेनुरितीरितः ॥१९०॥ दशाङ्गुलीषु तलयोर्द्वादशार्णानि विन्यसेत्। पदैश्चतुर्भिरङ्गेषु विन्यसेत्तदनन्तरम् ॥ १९१ ॥ चतुरङ्गेषु विन्यस्य मन्त्रेणोत्तरयोर्द्वयोः । मूर्ध्न्यास्यनेत्रयोर्नासाकर्णयोर्भुजयोस्तथा ॥ १९२ ॥ हृदि कुक्षौ तथा गुह्ये ऊर्वोर्जान्वोश्च पादयोः। मन्त्रार्णानि तु विन्यस्य क्रमेणैव नृपोत्तम ॥ १९३ ॥ अचक्राय विचक्राय सुचक्राय तथैव च । तथा त्रैलोक्यचक्राय महाचक्राय वै तथा ॥ १९४ ॥ असुरान्तकचक्राय स्वाहान्तं प्रणवादिकम् । हृदयादिषडङ्गेषु यथाशास्त्रं प्रयोजयेत् ॥ १९५ ॥ क्षीराब्धौ शेषपर्यङ्के समासीनं श्रिया सह । नीलजीमूतसंकाशं तप्तकाञ्चनभूषणम् ॥ १९६ ॥ पीताम्बरधरं देवं रक्ताब्जदललोचनम् । [ + दीर्घैश्चतुर्भिर्दोर्भिश्च सर्वाभरणभूषितैः ॥ १९७ ॥ शङ्खचक्रगदाशार्ङ्गान्बिभ्राणं परमेश्वरम् । नानाकुसुमसंबद्धनीलकुन्तलशीर्षजम् ॥ १९८ ॥ श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् । समाश्लिष्टं श्रिया देव्या पद्मया पद्महस्तया ] ॥ १९९ ॥ स्तूयमानं विमानस्थैर्देवगन्धर्वकिंनरैः । × मुनिभिः सनकाद्यैश्च सेवितं च सुरर्षिभिः ॥ २०० ॥ एवं ध्यात्वा हरिं नित्यं जपेन्मन्त्रं समाहितः । अर्चयित्वा हृषीकेशं सुगन्धकुसुमैः सदा ॥ २०१ ॥ शालग्रामादिषु स्थानेष्वार्च्य मन्त्रं जपेद्बुधः । जप्त्वा द्वादशसाहस्रं यावज्जीवं समाहितः ॥२०२॥ [ = वैष्णवं पदमाप्नोति पुनरावृत्तिवर्जितम् । आयुष्कामी जपेन्नित्यं वत्सरं विजितेन्द्रियः ॥ २०३ ॥ संख्या द्वादशसाहस्रं होमं तिलसहस्रकम् । लभेताऽऽयुः शतसमा दुःखरोगविवर्जितम् ॥ २०४॥ विवाहकामी षण्मासं जपेन्नित्यं जितेन्द्रियः। आज्यहोमी सहस्रं तु लभेत्कन्यां सुलक्षणाम् ] ॥ २०५ ॥ संपत्कामी जपेन्नित्यं वत्सरं तु सहस्रशः । लाजैश्च व्रीहिभिर्हुत्वा सहस्रं श्रियमाप्नुयात् ॥२०६॥ राज्यमिन्द्रपदं वाऽपि शिवत्वं ब्रह्मतामपि । बहुकालं बिल्वपत्रैः कमलैर्वा जपेन्मनुम्। जुहुयाच्च जपेन्नित्यं तत्तत्प्राप्नोत्यसंशयम् ॥ २०७ ॥

---

* इत आरभ्य अक्षरैरन्वितो मनुरित्यन्तग्रन्थः ख. पुस्तके न । + एतच्चिह्नान्तर्गतग्रन्थः क. पुस्तके न विद्यते । × एतदर्धं न क. पुस्तके । = एतच्चिह्नान्तर्गतग्रन्थो न विद्यते क पुस्तके ।

---

१ क. °य स्वा° । २ ख. °नेष्वर्च्यमानं ज° । ३ ख जपित्वा द° । ४ क. समाचरेत् । ५ क. °र्वा जितेन्द्रियः । हुत्वा कालमपेतयं त(कमलापतये ध)नमाप्नोति मानवः । द्वा° ।

यं यं कामयते चित्ते तत्र तत्र नृपोत्तम । जुहुयान्मालतीपुष्पैरयुतं विजितेन्द्रियः ॥ २०८ ॥ तां तां सिद्धिमवाप्नोति पदं चाऽऽप्नोति वैष्णवम् ॥ २०९ ॥ द्वादशार्णेन मनुना पक्षे पक्षे नृपोत्तम । द्वादश्यां पूजयेद्विष्णुं कोमलैस्तुलसीदलैः ॥ २१० ॥ विष्णुतुल्यवपुः श्रीमान्मोदते परमे पदे । द्वादशार्णमनोरेवं विधानं प्रोच्यते नृप ॥ २११ ॥ अथ ते संप्रवक्ष्यामि षडक्षरमनोरिदम् । विधानं सर्वफलदं जन्ममृत्यु-निकृन्तनम् ॥ २१२ ॥ ॐ नमो विष्णवे चेति षडक्षरमुदाहृतम् । पूर्ववत्प्रणवस्यार्थे नमःशब्द उदाहृतः ॥ २१३ ॥ व्याप्तत्वाद्व्यापकत्वाच्च विष्णुरित्यभिधीयते । सदैक-रूपरूपत्वात्सर्वात्मत्वाद्विभुत्वतः ॥ २१४ ॥ अनामयत्वाच्छ्रीशत्वाद्धर्मस्तित्वाद्-भुणित्वतः । यथेष्टफलदातृत्वाद्विष्णुरित्यभिधीयते ॥ २१५ ॥ णकारो बलमि-मित्युक्तः षकारः प्राण उच्यते । तयोस्तु संगतिर्यत्र तथाऽऽत्मेत्युच्यते श्रुतिः ॥ २१६ ॥ तस्माण्णकारषकारानुसंहितमु(मनु)त्तमम् । समाणं सकलं वेदसंहितामुत्तमां तु यः ॥ २१७ ॥ तस्यैवाऽऽयुषमित्युक्तं नेतरस्यैवं तच्छ्रुतः । एतदेव हि विद्वांसो वक्ष्यन्ते ये मह-र्षयः एवं वक्ष्यामहे किंतु किमुत व्याख्यामहे वयम् (?) ॥ २१८ ॥ इयौ णकारषकारा-वनुसंहितमेव तत् । तदेव विष्णुः कृष्णेति जिष्णुरित्यभिधीयते ॥ २१९ ॥ विष्णवे नम इत्येष मन्त्रः सर्वफलप्रदः । ऐश्वर्यं तु विकारः स्यात्तादात्म्याण्णद्वयं स्मृतम् ॥ २२० ॥ ऐश्वर्यं द्वयंबीजं स्याद्विष्णुमन्त्रमनुत्तमम् । तत्षडर्णं विधानेन केवलं हि जपे-महि ॥ २२१ ॥ इत्युक्त्वा मुनयः सर्वे वेदवेदाङ्गपारगाः । परित्यज्येतरं धर्मं तदे-कशरणं गताः ॥ २२२ ॥ एवं महामनुं जप्त्वा विधानेनाच्युतं गताः । तस्मादेव महामन्त्रं सर्वसिद्धिप्रदं नृप ॥ २२३ ॥ सकृदुच्चारणेनास्य हरिस्तत्र प्रसीदति । ब्रह्माद्याः सनकाद्याश्च मुनयश्च जपन्ति हि ॥ २२४ ॥ छन्दस्तु तस्य गायत्री देवता विष्णुरच्युतः । स्यादों बीजं नमः शक्तिर्मनोरस्य प्रकीर्तितम् ॥ २२५ ॥ त्रिभिः पदैः षडङ्गेषु यथासंख्यं सुविन्यसेत् । अङ्गुलीष्वपि चाङ्गेषु मन्त्रार्णानि यथाक्र-मात् ॥ २२६ ॥ मूर्ध्न्यास्ये हृदये बाह्वोः पृष्ठे गुह्ये यथाक्रमम् । विन्यस्य चक्रन्यासं च पश्चाद्ध्यानं सुखासने ॥ २२७ ॥ प्रणवेनोन्मुखीकृत्य हृत्पङ्कजमधोमुखम् । विकाशयेच्च मन्त्रेण विमलं तत्सकेसरम् ॥ २२८ ॥ तस्योपरि च वह्न्यर्कसोमबिम्बानि चिन्तयेत् । तत्र रत्नमयं पीठं तन्मध्येऽष्टदलाम्बुजम् ॥ २२९ ॥ तस्मिन्कोटिशशा-

---

१ ख. द्विजोत्तमाः । २ क. °रमुदाहृतम् । ३ ख °त्वादीश° । ४ ख. °भस्तत्वा° । ५ ख. तदात्मे-त्युच्यते श्रुतिः । ६ ख. °लं देवसं° । ७ ख. °व न श्रुते. । ८ क. °च्छ्रुति- । ए° । ९ क. वीक्ष्यन्ते । १० ख. °मेति यत् । ११ क °यवीतं स्या° । १२ ख. °ड्वर्णवि° । १३ ख. °दान्तपा° । १४ ख °देत. न्मद्दा° । १५ ख. °ध्यानेषु तन्मयम् । प्र° । १६ ख. °काशये° । १७ ख. तस्य के° ।

ङ्काभं सर्वलक्षणलक्षितम् । चतुर्भुजं सुन्दराङ्गं युवानं पद्मलोचनम् ॥ २३० ॥ कोटिकन्दर्पलावण्यं नीलभ्रूलतिकालकम् । श्लक्ष्णनासं लसद्गण्डं बिम्बितोज्ज्वलकुण्डलम् ॥ २३१ ॥ शङ्खचक्रगदापद्म( द्मं ) दधानं दोर्भिरुज्ज्वलैः । केयूराङ्गदहाराद्यैर्भूषणैश्चन्दनैरपि ॥ २३२ ॥ अलंकृतं दिव्यपुष्पै रक्तहस्ताङ्घ्रिपङ्कजम् । मुक्ताफलाभदन्तालिं वनमालाविभूषितम् ॥ २३३ ॥ श्रीवत्सकौस्तुभोरस्कं दिव्यपीताम्बरं हरिम् । तप्तकाञ्चनवर्णाभं पद्मया पद्महस्तया ॥ २३४ ॥ समाश्लिष्टममुं देवं ध्यात्वा विष्णुमयो भवेत् । मनसैवोपचाराणि कृत्वा मन्त्रं जपेत्ततः ॥ २३५ ॥ त्रिसंध्यासु जपेन्नित्यं सहस्रं साष्टकं द्विजः । [¹विष्णोर्लोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥२३६॥ पूर्ववज्जपहोमाज्यं(द्यं) कृत्वा सिद्धिं वरं(रां)लभेः (भेत्) । भगवत्संनिधौ वाऽपि तुलसीकाननेऽपि वा] ॥ २३७ ॥ समाहितमना जप्त्वा षडर्णं नियतेन्द्रियः । तिलहोमायुतं कृत्वा सर्वसिद्धिमवाप्नुयात् ॥ २३८ ॥ एवं विष्णुमनोः प्रोक्तं विधानं नृपसत्तम । विधानं रघुनाथस्य मन्त्रस्यापि ब्रवीमि ते ॥ २३९ ॥ षडक्षरं दाशरथेस्तारकं ब्रह्म गद्यते । सर्वैश्वर्यप्रदं नृणां सर्वकामफलप्रदम् ॥ २४० ॥ एतमेव परं मन्त्रं ब्रह्मरुद्रादिदेवताः । ऋषयश्च महात्मानो मुक्ता जप्त्वा भवाम्बुधौ ॥ २४१ ॥ एतन्मन्त्रमगस्त्यस्तु जप्त्वा रुद्रत्वमाप्नुयात् ( सवान् ) । ब्रह्मत्वं काश्यपो जप्त्वा कौशिकस्त्वमरेशताम् ॥ २४२ ॥ कार्तिकेयो मनुत्वं च इन्द्राकौं गिरिनारदौ । वालखिल्यादिमुनयो देवतात्वं प्रपेदिरे ॥ २४३ ॥ एष वै सर्वलोकानामैश्वर्यस्यैव कारणम् । इममेव जपन्मन्त्रं रुद्रस्त्रिपुरघातकः ॥ २४४ ॥ ब्रह्महत्यादिनिर्मुक्तः- पूज्यमानोऽभवत्सुरैः । अद्यापि रुद्रः काश्यां तु सर्वेषां त्यक्तजीविनाम् ॥ २४५ ॥ दिशत्येतन्महामन्त्रं तारकं ब्रह्मनामकम् । तस्य श्रवणमात्रेण सर्वे एव दिवं गताः ॥ २४६ ॥ श्रीरामाय नमो ह्येष तारकब्रह्मनामकः । नाम्नां विष्णोः सहस्राणां तुल्य एव महामनुः ॥२४७॥ अनन्ता भगवन्मन्त्रा नानेन तु समाः कृताः । श्रियो रमणसामर्थ्यात्सौन्दर्यगुणगौरवात् ॥२४८॥ श्रीराम इति नामेदं तस्य विष्णोः प्रकीर्तितम् । रमया नित्ययुक्तत्वाद्राम इत्यभिधीयते ॥ २४९ ॥ रकारमैश्वर्यबीजं मकारस्तेन संयुतः । अवधारणयोगेन रामेत्यस्मान्मनोः( नुः )स्मृतः ॥ २५० ॥

¹ एतच्चिह्नान्तर्गतग्रन्थो न विद्यते क. पुस्तके ।

१ च. °सं रक्तगण्डं । २ ख. °प्रधारणं दो° । ३ ख. °तं गन्धपु° । ४ ख. °धानमधुनाऽमुष्य म° । ५ ख. कथ्यते । ६ क. °रद्वारक । ७ ख. °त्सौकर्य° । ८ क. °णसागरात् ।

तस्माद्राप्नोति वै बीजमाद्यं तस्य मनोः स्मृतम् । शक्तिः श्रीरुच्यते राजन्सर्वाभीष्टफलप्रदा ॥ २५१ ॥ श्रियो मनोरमो योऽसौ स राम इति विश्रुतः । चतुर्थ्या नमसश्चैव सोऽर्थः पूर्ववदेव हि ॥ २५२ ॥ ब्रह्मा विष्णुश्च रुद्रश्च अगस्त्याद्या महर्षयः । छन्दश्च परमा देवी गायत्री समुदाहृता ॥ २५३ ॥ श्रीरामो देवता प्रोक्ता विनियोगो यथारुचि । अङ्गुलीष्वपि चाङ्गेषु न्यासकर्माद्यबीजतः ॥ २५४ ॥ मूर्ध्न्यास्ये हृदये पृष्ठे गुह्ये चरणयोस्तथा । वैष्णवाच्च गुरोः पञ्चसंस्कारविधिपूर्वकम् ॥२५५॥ अधीत्य मन्त्रं विधिना पश्चादेवं जपेद्बुधः । ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथा नराः॥२५६॥ मन्त्राधिकारिणः सर्वे ह्यनन्यशरणा यदि । स्नानादिकृतकृत्यः सन्नूर्ध्वपुण्ड्रः पवित्रधृत् ॥२५७॥ कृष्णासने सुखासीनः प्राणायामी च न्यासकृत् । ध्यायेत्कमलपत्राक्षं जानकीसहितं हरिम् ॥ २५८ ॥ नैव ध्यानं प्रकुर्वीत विग्रहे सति शार्ङ्गिणः । चन्दनागरुकर्पूरवासिते रत्नमण्डपे ॥ २५९ ॥ +वितानैः पुष्पमालाद्यैर्धूपैर्दिव्यैर्विराजिते । तन्मध्ये कल्पवृक्षस्य च्छायायां परमासने ॥ २६० ॥ नानारत्नमये दिव्ये सौवर्णे सुमनोहरे । तस्मिन्बालार्कसंकाशे पङ्कजेऽष्टदले शुभे ॥ २६१ ॥ वीरासने समासीनं वामाङ्काश्रितसीतया । सुस्निग्धशाद्वलश्यामं कोटिवैश्वानरप्रभम् ॥ २६२ ॥ युवानं पद्मपत्राक्षं कनकाम्बरशोभितम् । सिंहस्कन्धानुरूपांसं कम्बुग्रीवं महाहनुम् ॥२६३॥ पीनवृत्तायतस्निग्धमहाबाहुचतुष्टयम् । विशालवक्षसं रक्तं(क्त)हस्तपादतलं शुभम् ॥ २६४ ॥ बन्धूकद्युतिसंकाशस्निग्धोष्ठद्वयशोभितम् । पूर्णचन्द्राननं स्निग्धं(ग्ध)भ्रूयुगं घननासिकम् ॥ २६५ ॥ रम्भोरुद्वयमानीलकुन्तलं स्मितसुन्दरम् । तरुणादित्यसंकाशं कुण्डलाभ्यां विराजितम् ॥२६६॥ हारकेयूरकटकैरङ्गुलीयैश्च भूषणैः । श्रीवत्सकौस्तुभाभ्यां च वैजयन्त्या विभूषितम् ॥ २६७ ॥ हरिचन्दनलिप्ताङ्गं कस्तूरीतिलकान्वितम् । शङ्खचक्रधनुर्बाणान्बिभ्राणं दोर्भिरायतैः ॥ २६८ ॥ वामाङ्के सुस्थितां देवीं तप्तकाञ्चनसंनिभाम् । पद्माक्षीं पद्मवदनां नीलकुन्तलमूर्धजाम् ॥२६९॥ *सिंहस्कन्धसु(न्धानु)रूपाता(सां) कम्बुकण्ठीं सुलोचनाम् । हरिचन्दनलिप्ताङ्गीं कस्तूरीतिलकाञ्चिताम् ॥ २७० ॥ तरुणादित्यसंकाशां ताटङ्कद्वयमण्डिताम् । आरूढयौवनां नित्यां पीनोन्नतपयोधराम् ॥ २७१ ॥ दुकूलवस्त्रसंवीतां भूषणैरुपशोभि-

+ एतदर्धं न विद्यते क. पुस्तके । * इत आरभ्य ताटङ्कद्वयमण्डितामित्यन्तं न विद्यते ख. पुस्तके ।

१ क. °रथो यो । २ क °तुर्थीनमसोश्चै° । ३ क. °रामदे° । ४ ख. प्रोक्त सर्वैश्वर्यप्रदो हरि । अ° । ५ क. °द्यवर्जित । ६ क °देतज्जपे° । ७ ख °स्तथेतरा । ८ ख समासीन । ९ क. °मनयनं कम्बु° । १० ख °कस्मितमुक्ताभदन्तौष्ठ° । ११ ख °काञ्चित° । १२ ख. लशीर्षजा° ।

ताम्। भजतां कामदां पद्महस्तां सीतां विचिन्तयेत् ॥ २७२ ॥ लक्ष्मणं पश्चिमे भागे धृतच्छत्रं महाबलम्। पार्श्वे भरतशत्रुघ्नौ वालव्यजनपाणिनौ ॥ २७३ ॥ अग्रतस्तु हनूमन्तं बद्धाञ्जलिपुटं तथा। सुग्रीवं जाम्बवन्तं च सुषेणं च विभीषणं ॥ २७४ ॥ नीलं नलं चाङ्गदं च ऋषभं दिक्षु पूजयेत्। वसिष्ठो वामदेवश्च जाबालिरथ कश्यपः ॥ २७५ ॥ मार्कण्डेयश्च मौद्गल्यस्तथा पर्वतनारदौ। द्वितीयावरणं प्रोक्तं रामस्य परमात्मनः ॥ २७६ ॥ धृष्टिर्जयन्तो विजयः सुराष्ट्रो राष्ट्रवर्धनः। अलको धर्मपालश्च सुमन्तुश्चाष्ट मन्त्रिणः ॥२७७॥ तृतीयावरणं तस्य तत्र चन्द्रादिदेवताः। कुमुदाद्याश्च चण्डाद्या विमाने चान्तरायकाः[1] ॥ २७८ ॥ एवं ध्यात्वा जगन्नाथं पूजयेन्मनसाऽपि वा। षट्सहस्रं जपेन्मन्त्रं जुहुयाच्च सहस्रकम् ॥ २७९ ॥ जुहुयाच्चरुणा वाऽपि शतं पुष्पाञ्जलिं न्यसेत्। एवं संपूज्य देवेशं यावज्जीवमतन्द्रितः ॥ २८० ॥ तद्देहपतने[2] तस्य सारूप्यं परमे पदे। विद्यास्त्रीराज्यवित्ताद्यं यं यं कामयते हृदि ॥ २८१ ॥ नान्यदेवं नमस्कृत्वा(त्य) सर्वसिद्धिमवाप्नुयात्। विना वै वैष्णवं मन्त्रमन्यमन्त्रा[3]न्विवर्जयेत्[4] ॥ २८२ ॥ तमेव पूजयेद्रामं तन्मन्त्रं वै जपेत्सदा। अन्यथा नाशमाप्नोति इह लोके परत्र च ॥ २८३ ॥ अद्वितीयं यदा[5] मन्त्रं तारकब्रह्मनामकम्। जपित्वा सिद्धिमाप्नोति अन्यथा नाशमाप्नुयात् ॥ २८४ ॥ सावित्रीमन्त्ररत्नं च तथा मन्त्रद्वयं शुभम्। सर्वमन्त्रं[6] जपेत्पूर्वं संसिद्ध्यर्थं जपेत्सदा ॥ २८५ ॥ अजप्यै( प्त्वै )तान्महामन्त्रान्न तु संसिद्धिमाप्नुयात्। तस्माच्छक्त्या जपेत्त्वेतान्[7][8]पश्चान्मन्त्रं प्रयोजयेत् ॥ २८६ ॥ विद्यास्त्रीवित्तराज्यादिरूपारोग्यजयार्थिनः। पुष्पाज्यबिल्वरक्ताब्जजातिदूर्वाङ्कुरैस्तथा ॥ २८७ ॥ आरक्तकरवीरैश्च[9] हुत्वा सिद्धिमवाप्नुयुः। सर्वसिद्धिमवाप्नोति तिलहोमेन वैष्णवः ॥ २८८ ॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा। सायं प्रातश्च जुहुयात्षण्मासं विजितेन्द्रियः ॥ २८९ ॥ यावज्जीवं जपेद्यस्तु भक्त्या राममनुस्मरन्। सदारपुत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ २९० ॥ प( फ )ट्कारयुक्तं स्वाहान्तं रामास्त्रं संप्रकीर्तितम्। सर्वापत्सु जपेन्मन्त्रं रामं ध्यात्वा महाबलम् ॥ २९१ ॥ चोराग्निशत्रुसंबाधे तथा रोगभयेषु च। तोयवातग्रहादिभ्यो भयेषु च सभक्तिकम् ॥ २९२ ॥ शङ्खचक्रधनुर्बाणपाणिनं सुमहाबलम्। लक्ष्मणानुचरं रामं ध्यात्वा राक्षसनाशनम्। सहस्रं तु जपेन्मन्त्रं सर्वापद्भ्यो विमुच्यते ॥ २९३ ॥ सूर्योदये यथा नाशमुपैति ध्वान्तमाशु वै। तथैव रामस्मरणाद्विनाशं यान्त्युपद्रवाः। एवं श्रीराममन्त्रस्य विधानं जायते नृप ॥ २९४ ॥ विधानं कृष्णमन्त्रस्य वक्ष्यामि शृणु पार्थिव। श्रीकृष्णाय नमो ह्येष मन्त्रः सर्वार्थसाधकः ॥ २९५ ॥

---

१ ख. °न्तरीय°। २ क. तद्देह°। ३ क. °न्त्र अन्यमन्त्रं वि°। ४ ख. °न्विसर्जयेत्। ५ क. यथा मन्त्रं तारकं ब्र°। ६ क. मन्त्रं नयेत्पूतं सं°। ७ ख. जपित्वैता°। ८ क. °त्वेनं पश्चा°। ९ क. च। शापना°।

कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते । भस्मी भवन्ति राजेन्द्र महापातककोटयः ॥ २९६ ॥ सकृत्कृष्णेति यो ब्रूयाद्भक्त्या वाऽपि च मानवः । पापकोटिविनिर्मुक्तो विष्णुलोकमवाप्नुयात् ॥ २९७ ॥ अश्वमेधसहस्राणि राजसूयशतानि । भक्त्या कृष्णमनुं जप्त्वा समाप्नोति न संशयः ॥ २९८ ॥ गवां च कन्यकानां च ग्रामाणां चायुतानि च । दत्त्वा गोदावरी कृष्णा यमुना च सरस्वती ॥ २९९ ॥ कावेरी चन्द्रभागादिस्नानं कृष्णेति[1] नो समम् । कृष्णेति पञ्चकृज्जप्त्वा सर्वतीर्थफलं लभेत्[2] ॥ ३०० ॥ कोटिजन्मार्जितं पापं ज्ञानतोऽज्ञानतः कृतम् । भक्त्या कृष्णमनुं जप्त्वा दह्यते तूलराशिवत् ॥ ३०१ ॥ अगम्यागमनात्पापादभक्ष्याणां च भक्षणात् । सकृत्कृष्णमनुं जप्त्वा मुच्यते नात्र संशयः ॥ ३०२ ॥ कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । उभयोः संगतिर्यत्र तद्ब्रह्मेत्यभिधीयते ॥ ३०३ ॥ णकारश्च षकारश्च बलप्राणावुभौ स्मृतौ । आत्मन्येतौ[3] समायुक्तौ जगतोऽस्यापि कृष्णतः ॥ ३०४ ॥ तस्मात्कृष्णेति मन्त्रोऽयं वाचकः परमात्मनः । कृष्णेति परमो मन्त्रः सर्ववेदाधिकः स्मृतः ॥ ३०५ ॥ श्रियः सतः[4] प्राणपदाच्छ्रीकृष्ण इति वै स्मृतः । एवमर्थं विदित्वैव पश्चान्मन्त्रं जपेद्बुधः ॥ ३०६ ॥ सर्वकामप्रदत्त्वात्तु[5] वीजं कांदर्पमुच्यते । नित्याऽनपाया श्रीशक्तिर्मनोरस्य प्रयुज्यते ॥ ३०७ ॥ देवर्षिर्नारदस्तस्य गायत्री छन्द उच्यते । देवता रुक्मिणीभर्ता कृष्णः सर्वफलप्रदः ॥ ३०८ ॥ पूर्ववद्विधिना मन्त्रं गृहीत्वा वैष्णवाद्गुरोः । स्नानवस्त्रादिभिः शुद्धः कृत्यं कृत्वोर्ध्वपुण्ड्रधृत् ॥ ३०९ ॥ तुलसीकानने रम्ये देवानामालये[6] शुभे । कुशे कृष्णाजिने वाऽपि पुण्ये[7] वा शुभवासरे ॥ ३१० ॥ समासीनस्तु कुर्वीत प्राणायामश्च ( मं च ) पूर्ववत् । आदिवीजेन कुर्वीत षडङ्गेषु यथाक्रमम् ॥ ३११ ॥ अङ्गुलीष्वपि तेनैव न्यासकर्म समाचरेत् । मुखे बाह्वोश्च हृदये करे[8] जान्वोश्च पादयोः ॥ ३१२ ॥ विन्यस्य मन्त्रवर्णानि चक्रन्यासं[9] त ( सस्त ) तः स्मृतः । पूर्वजन्ममयादीनि[10] स्मरेदाभरणानि च ॥ ३१३ ॥ विचित्रशुभपर्यङ्के दिव्यकल्पतरोरधः । सुगन्धपुष्पसंकीर्णे सर्वतः

---

१ ख. °ति योऽस° । २ क. भवेत् । ३ क. आत्मार्पितौ । ४ क. सत्ताप्राणवलाच्छ्री° । ५ ख. °त्वाच्च वी° । ६ ख. देशे वा प्राङ्मुख शु° । ७ ख पुण्ये । ८ ख ध्वजे । ९ ख चक्रं न्यासं तत. कृतम् । पू° । १० ख. °र्ववन्मन्त्रपादीनि स्मरेच्छाभ° ।

सुविचित्रिते ॥ ३१४ ॥ तस्मिन्देव्या समासीनं रुक्मिण्या रुक्मवर्णया। नीलोत्पलाभं कन्दर्पलावण्यं पद्मलोचनम् ॥ ३१५ ॥ चन्द्राननं जपापुष्परक्तहस्तपदाम्बुजम्। नीलकुञ्चितकेशं च सुकपोलं सुनासिकम् ॥ ३१६ ॥ सुभ्रूयुगं सुबिम्बोष्ठं सुदन्तालिविराजितम्। उन्नतांसं दीर्घबाहुं पीनवक्षसमव्ययम् ॥ ३१७ ॥ निरङ्कुचन्द्रनखरं सर्वलक्षणलक्षितम्। श्रीवत्सकौस्तुभोद्भासिवनमालामहोरसम् ॥ ३१८ ॥ पीताम्बरं च भूषाढ्यं बालार्काभं सुकुण्डलम्। हारकेयूरकटकैरङ्गुलीयैश्च शोभितम् ॥ ३१९ ॥ मौक्तिकान्वितनासाग्रं कस्तूरीतिलकान्वितम्। हरिचन्दनलिप्ताङ्गं सदैवाऽऽरूढयौवनम् ॥ ३२० ॥ मन्दारपारिजातादिकुसुमैः कवरीकृतम्। अनर्घ्यमुक्ताहारैश्च तुलसीवनमालया ॥ ३२१ ॥ शङ्खचक्रसमेताभ्यामुद्बाहुभ्यां विराजितम्। इतराभ्यां तथा देवीं समाश्लिष्टं निरन्तरम् ॥ ३२२ ॥ अलंकृताभिः सत्यादिर्महिषीभिः समावृतम्। कालिन्दी सत्यभामा च मित्रविन्दा च नाग्निजित् ॥ ३२३ ॥ सुनन्दा च सुशीला च जाम्बवती सुलक्ष्मणा। एता महिष्यः संप्रोक्ताः कृष्णस्य परमात्मनः ॥ ३२४ ॥ ताभिश्च राजकन्यानां सहस्रैः परिसेवितम्। * तारकावृतराजेव शोभितं निधिभिर्वृतम् ॥ ३२५ ॥ एवं ध्यात्वा हरिं नित्यमर्चयित्वा जपेन्मनुम्। शालग्रामे च तुलसीवने वा स्थण्डिले हृदि ॥ ३२६ ॥ स्मृत्वा जपेत्त्रिसंध्यासु षट्सहस्रं मनुं द्विजः। विष्णुतुल्यवपुः श्रीमान्विष्णुलोकमवाप्नुयात्। सर्वसिद्धिमवाप्नोति इह लोके परत्र च ॥ ३२७ ॥ विद्यार्थी वेणुगायं तं जपेद्ध्यायन्नृतुत्रयम्। जुहुयात्कुसुमैः शुभ्रैर्विद्यासिद्धिमवाप्नुयात् ॥ ३२८ ॥ आयुष्कामी तु पूर्वाह्णे वत्सरं प्रयुतं जपेत्। ध्यायेच्छिशुतनुं कृष्णं तिलैर्हुत्वाऽऽयुराप्नुयात् ॥ ३२९ ॥ कन्यार्थी तु जपेत्सायं षोडशं त्वयुतं हरिम्। ध्यात्वा सहस्रं जुहुयाल्लाजैर्मधुविमिश्रितैः ॥ ३३० ॥ स्त्रियं लभेत्स्वाभिमतां रूपौदार्यवतीं सतीम्। संपत्कामी जपेन्नित्यं मध्याह्ने तु ऋतुत्रयम् ॥ ३३१ ॥ द्वारकायां सुधर्मायां रत्नसिंहासने स्थितम्। शंङ्खादिनिधिभी राजकुलैरपि सुसेवितम् ॥ ३३२ ॥ हारादिभूषणैर्युक्तं शङ्खाद्यायुधधारिणम्। ध्यात्वा संपूज्य होमं च जपश्चायुतसंख्यया ॥ ३३३ ॥

---

* एतदर्धस्थानेऽन्यं पाठ क. पुस्तके—"अनर्घ्यमुक्ताहारैश्च तारकावृतशोभितम्" इति।

---

१ क. °समुन्नत° । २ ख °द्रालं च° । ३ ग °रं भूषणाढ्यं । ४ क सुकुन्तलं । ५ ख. °कान्वित° । ६ ख. सत्यादिन् । ७ ख °त्सरान्त्यन्तु° । ८ क °ष्टपत्वायु° । ९ क. °तु त्वृतु° । १० क. शङ्खचक्रादि° ।

अब्जाविल्वदलैर्वाऽपि हेोमो मधुविमिश्रितः । शाश्वतीं श्रियमाप्नोति कुवेरसदृशो भवेत् ॥ ३३४ ॥ रूपलावण्यकामी तु रासमण्डलमध्यगम् । ध्यायंस्त्रिमाससमयुतं जप्त्वा लावण्यवान्भवेत् ॥ ३३५ ॥ एवं कृष्णमनोरस्य माहात्म्यं परिकीर्तितम् । अनन्तान्भगवन्मन्त्रान्वक्तुं शक्यं न ते मया ॥ ३३६ ॥ वाराहं नारसिंहं च वामनं तुरगाननम् । क्रमेणैव तु वक्ष्यामि यथावच्छृणु पार्थिव ॥ ३३७ ॥ हुंकारं प्रथमं वीजमाद्यं वाराहमुच्यते । पश्चात्तु धरणीवीजं लक्ष्मीवीजं ततः परम् । त्रीन्वीजानादितः कृत्वा पश्चान्मन्त्रप्रयोजनम् ॥ ३३८ ॥ ॐ नमो भगवते[2] पश्चाद्वाराहरूपिणे[3] भूर्भुवः[4] स्वः पतयेति भूपतित्वं मे देहीति[5] तदाप्यायस्वेति ॥ ३३९ ॥ अङ्गुलीषु यथाऽङ्गेषु वीजेनाऽऽद्येन वै क्रमात् । यथा संन्यासं[6] कृत्वा पश्चाद्ध्यानं समाचरेत् ॥ ३४० ॥ वृहत्तनुं वृहद्ग्रीवं वृहद्दंष्ट्रं सुशोभनम् । समस्तवेदवेदाङ्ग[7]साङ्गोपाङ्गयुतं हरिम् ॥३४१॥ रजताद्रिसमप्रख्यं शतवाहुं शतेक्षणम् । उद्धृत्य दंष्ट्रया भूमिं समालिङ्ग्य भुजैर्मुदा ॥ ३४२ ॥ ब्रह्मादित्रिदशैः सर्वैः सनकाद्यैर्मुनीश्वरैः । स्तूयमानं समन्ताच्च गीयमानं च किंनरैः ॥३४३॥ एवं ध्यात्वा हरिं नित्यं प्रातरष्टोत्तरं शतम् । जप्त्वा लभेच्च भूपत्वं ततो विष्णुपुरं व्रजेत् ॥ ३४४ ॥ नमो यज्ञवराहाय इत्यष्टाक्षरको मनुः । +एवं ध्यात्वा हरिं नित्यं प्रातरष्टोत्तरं शतम् ॥ ३४५ ॥ उक्तवीजत्रयं पूर्वं कृत्वा मन्त्रं जपेद्बुधः । मूलमन्त्रमिदं प्राहुर्वाराहं मुनिपुंगवाः ॥३४६॥ एतमेव परं मन्त्रं जप्त्वा भूमिपतिर्भवेत् । नित्यमष्टसहस्रं तु जपेद्विष्णुं विचिन्तयन् ॥ ३४७ ॥ कमलैर्विल्वपत्रैर्वा जुहुयाच्च दशांशकम् । एवं संवत्सरं जप्त्वा सार्वभौमो भवेद्ध्रुवम्॥३४८॥ राज्यं कृत्वा च धर्मेण पश्चाद्विष्णुपदं व्रजेत् । विधानं नारसिंहस्य मनोर्वक्ष्यामि सुव्रत ॥३४९॥ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्योर्मृत्युं नमाम्यहम् ॥ ॥३५०॥ आर्षं ब्रह्माऽनुष्टुप्छन्दो देवता च नृकेसरी । चतुश्चतुश्च षट् षट् च षट्चतुश्च यथाक्रमात्॥३५१॥ शिरोललाटनेत्रेषु मुखवाह्वङ्घ्रिसंधिषु । साग्रेषु कुक्षौ हृदये गले पार्श्वद्वयेऽपि च ॥ ३५२ ॥ अपराङ्गे ककुब्जे(दि) च न्यसेद्वर्णाननुक्रमात् । वायोर्दशाक्षरं यत्तु[9] सहोंकारं सरेफकृत् ॥ ३५३ ॥

---

+ एतदर्धं न विद्यते ख. पुस्तके ।

---

१ ख. होमं मधुविमिश्रितम् । शा° । २ क. °ते च प° । ३ ख °श्चाद्वराहरुपाय भू° । ४ स. °व. सुव । प° ५ ख. °ति ददापय स्वाहेति च । अं° । ६ ख °सवद्भू° । ७ क. °दाङ्गं सा° । ८ क. °पु । नासा° । ९ ख, त्तु °वहूङ्कारं जपेत्सक्° ।

बिन्दुना सहितं यत्तु नृसिंहं बीजमुच्यते । अङ्गुलीषु तथाऽङ्गेषु न्यासं तेनैव चोदितम् ॥ ३५४ ॥ तद्बीजमादितः कृत्वा मन्त्रं पश्चात्प्रयोजयेत् ॥ ३५५ ॥ ॐ नमो भगवते वासुदेवाय नमो नरसिंहाय ज्वालामालिने दीर्घदंष्ट्रायाग्निनेत्राय सर्वरक्षोघ्नाय सर्वभूतविनाशाय दह दह पच पच रक्ष रक्ष हुं फट् स्वाहा इति ज्वालामालिपातालनृसिंहाय नमः ॥ ३५६ ॥ बीजेनैव न्यासः ॥ ३५७ ॥ आं ह्रीं क्ष्रौं क्रौं हुं फट् ॥ ३५८ ॥ अस्य मन्त्रस्य ब्रह्मा ऋषिः पङ्क्तिश्छन्दो नृसिंहो देवता नृसिंहास्त्रमिदं बीजेनैव न्यासः ॥ ३५९ ॥ श्रीकारपूर्वो नृसिंहो द्विर्जयादुपरि स्थितः । त्रिःसप्तकृत्वो जप्तुः स्यान्महाभयनिवारणम् ॥ ३६० ॥ अस्य ब्रह्मा च रुद्रे(द्र)श्च प्रह्लादश्च महर्षयः । तथैव जगती छन्दो देवता च नृकेसरी । न्यासं बीजेन कुर्वीत ततो ध्यानं नृपोत्तम ॥ ३६१ ॥ माणिक्याद्रिसमप्रभं निजरुचा संत्रस्तरक्षोगणं जानुन्यस्तकराम्बुजं त्रिनयनं रत्नोल्लसद्भूषणम् । बाहुभ्यां धृतशङ्खचक्रमनिशं दंष्ट्रोल्लसत्स्वाननं ज्वालाजिह्वमुदग्रकेशनिचयं वन्दे नृसिंहं प्रभुम् ॥ ३६२ ॥ उद्यत्कोटिरविप्रभं नरहरिं कोटिक्षपेशोज्ज्वलं दंष्ट्राभिः सुमुखोज्ज्वलं नखमुखैर्दीर्घैरनेकैर्भुजैः । निर्भिन्नासुरनायकं तु शशभृत्सूर्याग्निनेत्रत्रयं विद्युज्जिह्वसटाकलापभयदं वह्निं वहन्तं भजे ॥ ३६३ ॥ कोपादालोलजिह्वं विवृतनिजमुखं सोमसूर्याग्निनेत्रं पादादानाभिरक्तं प्रसभमुपरि संभिन्नदैत्येन्द्रगात्रम् । चक्रं शङ्खं सपाशाङ्कुशमुशलगदाशार्ङ्गबाणान्वहन्तं भीमं तीक्ष्णाग्रदंष्ट्रं मणिमयविविधाकल्पमीडे नृसिंहम् ॥ ३६४ ॥ महाभयेष्विदं ध्यानं सौम्यमभ्युदयेषु च । सौवर्णमण्डपान्तस्थं पद्मं ध्यायेत्सकेसरम् ॥ ३६५ ॥ पञ्चास्यवदनं भीमं सोमसूर्याग्निलोचनम् । तरुणादित्यसंकाशं कुण्डलाभ्यां विराजितम् ॥ ३६६ ॥ उपेयन्यासं सुमुखं तीक्ष्णदंष्ट्राविराजितम् । व्यात्तास्यमरुणोष्ठं च भीषणैर्नयनैर्युतम् ॥ ३६७ ॥

---

१ क. °सिंहक्षतपीडित. । अ° । २ क. °ते नर° । ३ क. °मालालि° । ४ क. °तनृवि° । ५ क. °मालीपा° । ६ क. °सिंहो देवता नृसिंहास्त्रमिदं बीजेनैव न्यास । श्रीकार आ° । ७ ख. हूं । ८ क. °म् । चापेयकांसम्° । ९ क. °पर्ण भापणैर्यु° ।

सिंहस्कन्धानुरूपांसं वृत्तायतचतुर्भुजम्। जपासमाङ्घ्रिहस्ताब्जं पद्मासनसुसंस्थितम् ॥३६८॥ श्रीवत्सकौस्तुभोरस्कं वनमालाविराजितम्। केयूराङ्गदहाराढ्यं नूपुरादिविराजितम् ॥ ३६९ ॥ चक्रशङ्खाभयवरचतुर्हस्तं विभुं स्मरेत्। वामाङ्के संस्थितां लक्ष्मीं सुन्दरीं भूषणान्विताम् ॥ ३७० ॥ दिव्यचन्दनलिप्ताङ्गीं दिव्यपुष्पोपशोभिताम्। गृहीतपद्मयुगलमातुलिङ्गकरान्विताम् ॥३७१॥ एवं देवीं नृसिंहस्य वामाङ्कोपरि संस्थिताम्। ध्यात्वा जपेज्जपं नित्यं पूजयेच्च यथाविधि ॥३७२॥ क्ष्रौं ह्रीं श्रीं नृसिंहाय नमः ॥ ३७३॥ इमं लक्ष्मीनृसिंहस्य जपेत्सर्वार्थदं मनुम्। अष्टोत्तरसहस्रं वा जपेत्संध्यासु वाग्यतः ॥ ३७४ ॥ अखण्डबिल्वपत्रैश्च जुहुयादाज्यमिश्रितैः। सर्वसिद्धिमवाप्नोति षण्मासान्प्रयतो भवेत् ॥ ३७५ ॥ देवत्वममरेशत्वं गन्धर्वत्वं तथा नृप। प्राप्नुवन्ति नरा राज्यं स्वर्गं मोक्षं च दुर्लभम् ॥ ३७६ ॥ यं यं कामयते चित्ते तं तमेवाऽऽप्नुयाद्ध्रुवम्। ब्रह्मर्षिस्तत्र गायत्री नरसिंहश्च देवता ॥ ३७७ ॥ तदेव बीजं शक्तिः श्रीर्मनोरस्य विधीयते। न्यासमध्येन बीजेन चार्चनं तुलसीदलैः ॥ ३७८ ॥ पूर्वोक्तविधिना पीठे पूजयित्वा समाहितः। परितः पूजयेद्दिक्षु गरुडं शंकरं तथा ॥३७९॥ शेषं च पद्मयोनिं च श्रियं मायां धृतिं तथा। पुष्टिं समर्चयेद्दिक्षु ततो लोकेश्वरान्यजेत् ॥ ३८० ॥ महाभागवतं दैत्यनाशकं देवमग्रतः। एवं संपूज्य देवेशं नारसिंहं सनातनम् ॥३८१॥ तत्पदं समवाप्नोति मुदितः स्वजनैः सह ॥३८२॥ कर्पूरधवलं देवं दिव्यकुण्डलभूषितम्। किरीटकेयूरधरं पीताम्बरधरं प्रभुम् ॥ ३८३ ॥ पद्मासनस्थं देवेशं चन्द्रमण्डलमध्यगम्। सूर्यकोटिप्रतीकाशं पूर्णचन्द्रनिभाननम् ॥ ३८४ ॥ मेखलाजिनदण्डादिधारिणं वटुरूपिणम्। कलधौतमयं पात्रं दध्यन्नेन सुपूजितम् ॥ ३८५ ॥ पीयूषकलशं वामे दधानं द्विभुजं हरिम्। सनकाद्यैः स्तूयमानं सर्वदेवैरुपासितम्। एवं ध्यात्वा जपेन्नित्यं स्वासने च समाहितः ॥ ३८६ ॥ विष्णवे वामनायेति प्रणवादिनमोन्तकः। इन्द्रर्षिं च विराट्छन्दो देवता वामनः स्वयम् ॥ ३८७ ॥ सुधाबीजं सुदीर्घं तु बीजमाद्यं तु वामनम्। तेनैव तु षडङ्गाद्यं न्यासं कुर्वीत वैष्णवः ॥ ३८८ ॥ दध्यन्नं पायसं वाऽपि जुहुयात्प्रत्यहं द्विजः। औपासनाग्नौ जुहुयादष्टोत्तरशतं गृही ॥ ३८९ ॥ कुबेरसदृशः श्रीमान्भवेत्सद्यो न संशयः ॥ ३९० ॥ ॐ नमो विष्णवे महाबलाय स्वाहा, इति वामनमन्त्रः ॥ ३९१ ॥ स्मृत्वा त्रैविक्रमं रूपं

---

१ च. स्मरन्। २ ख. °कराद्यलाम। ३ ख. श्रीं श्रीं नृ°। ४ ख. °ण्मासं प्रय°। ५ ख नर सर्वे स्व°। ६ ख °समायेन बी°। ७ क. °नानर्थप्रहरादम°। ८ ख दधानं वसु°। ९ क. °हितम्। वि°। १० क. °न्तकम्। इ°। ११ क. इन्द्रर्षि च। १२ क. वामन.। १३ ख. °वे पतये म°।

जपेन्मन्त्रमनन्यधीः। मुक्तो बन्धाद्भवेत्सद्यो नात्र कार्या विचारणा ॥ ३९२ ॥ ह्रीं श्रीं श्रीवामनाय नम इति मूलमन्त्रः ॥३९३॥ ब्रह्मर्षिचै( श्चै )व गायत्री देवता च त्रिविक्रमः। न्यासं बीजेन जपवानष्टोत्तरसहस्रकम् (?) ॥३९४॥ इति वामनमन्त्रस्य जपादन्नपातैर्भवेत् ॥३९५॥ उद्गीथप्रणवोद्गीथ सर्ववागीश्वरेश्वर[2]। सर्वदे[3]वमयाचिन्त्य सर्वं वोधय मे पितः ॥ ३९६ ॥ ह्रूं[4] ऐं हयग्रीवाय नमः[5] ॥ ३९७ ॥ ब्रह्मार्षि[1] चैव गायत्री हयग्रीवोऽस्य देवता। न्यासं बीजेन कृत्वाऽथ पश्चाध्दयानं समाचरेत्॥३९८॥ शरच्छशाङ्कप्रभमश्ववक्त्रं मुक्तामयैराभरणैरुपेतम्। रथाङ्गशङ्खाञ्चितबाहुयुग्मं जानुद्वयं(य)न्यस्तकरं भजामः ॥ ३९९ ॥ शङ्खाभः शङ्खचक्रे करसरसिजयोः पुस्तकं चान्यहस्ते विभ्रद्व्याख्यानमुद्रां लसदितरकरो मण्डलस्थः सुधांशोः। आसीनः पुण्डरीके तुरगवरशिराः पूरुषो मे पुराणः श्रीमानज्ञानहारी मनसि निवसतामृग्यजुःसामरूपः ॥ ४०० ॥ एवं ध्यात्वा जपेन्मन्त्रं संध्यासु त्रिजितेन्द्रियः। सर्ववेदार्थतत्त्वज्ञो भवेदत्र न संशयः[6] ॥ ४०१ ॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा। जपेच्च जुहुयाच्चैवं साज्यैः शुभ्रैः सतण्डुलैः ॥ ४०२ ॥ विद्यासिद्धिमवाप्नोति षण्मासाद्द्विजसत्तमः[7]। अष्टादशानां विद्यानां बृहस्पतिसमो भवेत् ॥४०३॥ सहस्रारं हुं फडित्येवं(ति) मूलं सौदर्शनं मनुम्। अहिर्बुध्नोऽनुष्टुभ(ब)स्य देवता च सुदर्शनम् ॥ ४०४ ॥ अचक्राय विचक्राय सुचक्राय तथैव च। विचक्राय सुचक्राय ज्वालाचक्राय वै क्रमात् ॥४०५॥ षडङ्गेषु च विन्यस्य पश्चाद्ध्यानं समाचरेत्। नमश्चक्राय स्वाहेति दशदिक्षु यथाक्रमम् ॥४०६॥ चक्रेण सह बद्धा(ध्ना)मीत्युक्त्या(क्त्वा)प्रतिदि[8]शेत्ततः। त्रैलोक्यं रक्ष रक्ष हुं[9] फट् स्वाहा इति वै क्रमात् ॥४०७॥ अग्निमाकारमन्त्रोऽयं सर्वरक्षाकरः परः। ॐ मूर्ध्नि स(सं) भ्रूमध्ये[10] हं मुखे स्वा[11]हमधीत्यतः। रं गुह्ये हं तु जान्वोश्च फट्पदद्वयसंधिषु ॥४०८॥ कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राज[12]( ट्ट )हासम् ॥

१ ख ब्रह्मार्षे चै°। २ क. °रम्। स°। ३ ख. °र्ववेदम°। ४ ख. हूं। ५ ख. °म°। निलार्षे। ६ ख °श्र. सुत°। ७ ख °ण्मासं द्वि°। ८ क °दिशं ततः। ९ क. हूं। १० °ध्ये ह मुखे साह°। ११ क. °हधीमत.। १२ °दंष्ट्राञ्जहा°।

शङ्खं चक्रं गदाब्जं पृथुतरमुशलं चापपाशाङ्कुशाढ्यं बिभ्राणं दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम् ॥ ४०९ ॥ ॐ नमो भगवते महासुदर्शनाय हूं फट् इति षोडशाक्षरमिति सुदर्शनविधानम् ॥ ४१० ॥

इति श्रीवृद्धहारीतस्मृतौ विशिष्टपरमधर्मशास्त्रे भगवन्मन्त्रविधानं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

( अथ सप्तमोऽध्यायः । )

---

हारीत उवाच—अथ वक्ष्यामि राजेन्द्र विष्णोराराधनं परम्। प्रत्यूषे सहसोत्थाय सम्यगाचम्य वारिणा ॥ १ ॥ आत्मानं देहमीशं च चिन्तयेत्संयतेन्द्रियः। ज्ञानानन्दमयो नित्यो निर्विकारो निरामयः ॥ २ ॥ देहेन्द्रियात्परः साक्षात्पञ्चविंशात्मको ह्यहम्[1]। अस्मिन्देहे वसाम्यद्य[2] शेषभूतो हि शार्ङ्गिणः ॥३॥ शुक्रशोणितसंभूते जरारोगाद्युपद्रवे। मेदोरक्तास्थिमांसादिहेयद्रव्यसमाकुले ॥ ४ ॥ मलमूत्रवसापङ्के नानादुःखसमाकुले। तापत्रयमहावह्निदह्यमानेऽनिशं भृशम् ॥ ५ ॥ इ(ए)षणात्रयकृष्णाहिपीड्यमाने दुरत्यये। क्लिश्या(श्या)मि पापभूयिष्ठे कारागृहनिभेऽशुभे ॥ ६ ॥ बहुजन्मबहुक्लेशगर्भवासादिदुःखिते। वसामि सर्वदोषाणामालये दुःखभाजने ॥ ७ ॥ अस्माद्विमोक्षणार्थाय चिन्तयिष्यामि[3] केशवम्। वैकुण्ठे परमव्योम्नि दुग्धाब्धौ वैष्णवे पदे ॥ ८ ॥ अनन्तभोगिपर्यङ्के समासीनं श्रिया सह। इन्द्रनीलनिभं श्यामं शङ्खचक्रगदाधरम् ॥ ९ ॥ पीताम्बरधरं देवं पद्मपत्रायतेक्षणम्। श्रीवत्सकौस्तुभोरस्कं सर्वाभरणभूषितम् ॥ १० ॥ चिन्तयित्वा नमस्कृत्वा(त्य) कीर्तयेद्दिव्यनामभिः। संकीर्त्य नामसाहस्रं नमस्कृत्वा(त्य) गुरूनपि ॥ ११ ॥ तुलसीं काञ्चनं गां च संस्पृश्याथ समाहितः। दूराद्बहिर्विनिष्क्रम्य शुचौ देशे च निर्जने ॥ १२ ॥ कर्णस्थब्रह्मसूत्रस्तु शिरः प्रावृत्य वाससा। कुर्यान्मूत्रपुरीषे च ष्ठीवनोच्छ्वासवर्जितः ॥१३॥ अहन्युदङ्मुखो रात्रौ दक्षिणाभिमुखस्तथा। समाहितमना मौनी विण्मूत्रे विसृजेत्ततः ॥ १४ ॥ उत्थायातन्द्रितः शौचं कुर्यादभ्युद्धृतैर्जलैः। गन्धलेपक्षयकरं यथासंख्यं मृदा शुचिः ॥ १५ ॥ अर्धप्रसृतिमात्रां तु मृदं दद्याद्यथोक्तवत्। पदपाने त्रि-

---

१ क. ह्ययम्। २ ख. °न्देहे वसाम्यस्य शे°। ३ ख. °यामि चि°।

लिङ्गे तु सव्यहस्ते तथा दश ॥ १६ ॥ उभयोः सप्त दातव्यास्तिस्रस्तिस्रस्तु पादयोः । आजङ्घान्मणिबन्धात्तु प्रक्षाल्य शुभवारिणा ॥ १७ ॥ उपविष्टः शुचौ देशे अन्तर्जानुकरस्तथा । पवित्रपाणिराचामेत्प्रसृतिस्थेन वारिणा ॥ १८ ॥ त्रिः प्राश्याङ्गुष्ठमूलेन द्विधोन्मृज्य कपोलकौ । मध्यमाङ्गुलिभिः पश्चाद्द्विरोष्ठावुन्मृजेत्तथा ॥ १९ ॥ नासिकौष्ठान्तरं पश्चात्सर्वाङ्गुलिभिरेव च । पादौ हस्तौ शिरश्चैव जलैः संमार्जयेत्ततः ॥ २० ॥ अङ्गुष्ठतर्जनीभ्यां तु स्पृशेद्द्वौ नासिकापुटौ । अङ्गुष्ठानामिकाभ्यां तु चक्षुःश्रोत्रे जलैः स्पृशेत् ॥ २१ ॥ कनिष्ठाङ्गुष्ठनाभिं च तलेन हृदयं ततः । सर्वाङ्गुलीभिः शिरसि बाहुमूले तथैव च ॥ २२ ॥ नामभिः केशवाद्यैश्च यथासंख्यमुपस्पृशेत् । द्विराचामेत्तु सर्वत्र विण्मूत्रोत्सर्जने त्रयम् ॥ २३ ॥ सामान्यमेतत्सर्वेषां शौचं तु द्विगुणोदितम् । आचम्यातः परं मौनी दन्तान्काष्ठेन शोधयेत् ॥ २४ ॥ प्राङ्मुखोदङ्मुखो वाऽपि कषायं तिक्तकण्टकम् । कनिष्ठाग्रमितस्थूलं द्वादशाङ्गुलमायतम् ॥ २५ ॥ पर्वाधःकृतकूर्चेन तेन दन्तान्निकर्षयेत् । अपां द्वादशगण्डूषैर्वक्त्रं संशोधयेद्द्विजः ॥ २६ ॥ मुखं संमार्जयित्वाऽथ पश्चादाचमनं चरेत् । पवित्रपाणिराचम्य पश्चात्स्नानं समाचरेत् ॥ २७ ॥ नद्यां तडागे खाते वा तथा प्रस्रवणे जले । तुलसीमृत्तिकां धात्रीमुपलिप्य कलेवरे ॥ २८ ॥ अभिमन्त्र्य जलं पश्चान्मूलमन्त्रेण वैष्णवः । निमज्ज्य तुलसीमिश्रं जलं संप्राशयेत्ततः ॥ २९ ॥ आचम्य मार्जनं कुर्यात्कुशैः सतुलसीदलैः । पौरुषेण तु सूक्तेन आपो हि ष्ठादिभिस्तथा ॥ ३० ॥ निमज्ज्याप्सु जले पश्चात्त्रिवारमघमर्षणम् । उत्थाय पुनराचम्य पश्चादप्सु निमज्ज्य वै ॥ ३१ ॥ मन्त्ररत्नं त्रिवारं तु जपन्ध्यायन्सनातनम् । पिबेदुत्थाय तेनैव त्रिवारमभिमन्त्रितम् ॥ ३२ ॥ आचम्य तर्पयेद्देवान्पितॄनपि विधानतः । निष्पीड्य कूले वस्त्रं तु पुनराचमनं चरेत् ॥ ३३ ॥ धौतवस्त्रं सोत्तरीयं सकौपीनं धरेत्स्थितम् । निबद्धशिखकच्छस्तु द्विराचम्य यथाविधि ॥ ३४ ॥ धारयेदूर्ध्वपुण्ड्राणि मृदा शुभ्राणि वैष्णवः । श्रीकृष्णतुलसीमूलमृदा वाऽपि प्रयत्नतः ३५ ॥ मन्त्रेणैवाभिमन्त्र्याथ ललाटादिषु धारयेत् । नासिकामूलमारभ्य विभूयाच्छ्रीपदाकृति ॥ ३६ ॥ सान्तरालं भवेत्पुण्ड्रं दण्डाकारं तु वा तथा । ललाटे धारयेत्पश्चाद्ग्रीवान्तं केशवादिभिः ॥ ३७ ॥ नाम्नां द्वादशभिर्मूर्ध्नि वासुदेवं तलाम्बुना । पवित्रपाणिः शुद्धात्मा संध्यां कुर्यात्समाहितः ॥ ३८ ॥

---

१ ख °तिस्थः स पा°। २ क. °ङ्गुष्ठे स नाभित°। ३ क °मितं स्थू°। ४ क. मौले । ५ क. °मज्ज्योऽस्तं यजत पश्चा° । ६ ख जपेद्ध्या° । ७ क. °रेचित° । ८ क शुभ्रेण । ९ क °कृतिः । सा° । १० ख. वा यथा । ललाटादि तथा पश्चा° ।

प्रादेशमात्रौ कौशेयौ साग्रौ मूलयुतौ तथा। सान्तर्गर्भौ सुविमलौ पवित्रं कारयेद्द्विजः॥ ३९॥ देवार्चने जपे होमे कुर्याद्ब्राह्मयं पवित्रकम्। इतरे वर्तुलग्रन्थिरे-(ए)वं धर्मो विधीयते॥ ४०॥ पथि दर्भाश्रिता(श्रितौ) दर्भा ये दर्भा यज्ञभूमिषु। स्तरणासनपिण्डेषु ब्रह्मयज्ञे च तर्पणे॥ ४१॥ पाने भोजनकाले च धृतान्दर्भान्विसर्जयेत्। सपवित्रकरेणैव आचामेत्प्रयतो द्विजः॥ ४२॥ आचान्तस्य शुचिः पाणिर्यथा पाणिस्तथा कुशः। संध्याचमनकाले तु धृतं न परिवर्जयेत्॥ ४३॥ अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः। समूलास्तु कुशा ज्ञेयाश्छिन्नाग्रास्तृणसंज्ञिताः॥ ४४॥ कुशोदकेन यत्कण्ठं नित्यं संशोधयेद्द्विजः। न पर्युपन्ति पापानि ब्रह्मकूर्चे दिने दिने॥ ४५॥ कुशासनं सदा पूतं जपहोमार्चनादिषु। कुशेनैव कृतं कर्म सर्वमानन्त्यमश्नुते॥ ४६॥ तस्मात्कुशपवित्रेण संध्यां कुर्याद्यथाविधि। स्वगृह्योक्तविधानेन संध्योपास्तिं समाचरेत्॥ ४७॥ ध्यात्वा नारायणं देवं रविमण्डलमध्यगम्। गायत्र्याऽर्घ्यं प्रदद्याच्च जपं कुर्वीत भक्तिमान्॥ ४८॥ सूर्यस्याभिमुखो जप्त्वा सावित्रीं नियतात्मवान्। उपस्थानं ततः कृत्वा नमस्कुर्यात्ततो हरिम्॥ ४९॥ नमो ब्रह्मण इत्यादि जपित्वाऽथ विसर्जयेत्। ततः संतर्पयेद्विष्णुं मन्त्ररत्नेन मन्त्रवित्॥ ५०॥ शतवारं सहस्रं वा तुलसीमिश्रितैर्जलैः। वैकुण्ठपार्षदं पश्चात्तर्पयेच्च यथाविधि॥ ५१॥ अनन्तविहगेशादिदेवतानामनुक्रमात्। एकैकमञ्जलिं दत्त्वा पश्चादाचमनं चरेत्॥ ५२॥ श्रीशस्याऽऽराधनार्थं हि कुर्यात्पुष्पस्य संचयम्। तुलसीविल्वपत्राणि दूर्वां कौशेयमेव च॥ ५३॥ विष्णुक्रान्तं मरुवकं केशाम्बुददलं तथा। उशीरं जातिकुसुमं कुन्दं चैव कुरण्टकम्॥ ५४॥ शमीं चम्पां कदम्बं च चूतपुष्पं च माधवीम्। पिप्पलस्य प्रवालानि जाम्बवं पाटलं तथा॥ ५५॥ आस्फोटं कुटजं लोध्रं कर्णिकारं च किंशुकम्। नीपार्जुने शिंशपं च श्वेतकिंशुकनामकम्॥ ५६॥ जम्बीरं मातुलुङ्गं च यूथिकारचयं तथा। पुंनागं बकुलं नागकेशराशोकमल्लिकाः॥ ५७॥ शतपत्रं च हारिद्रं करवीरं प्रियङ्गु च। नीलोत्पलं सप्तलां च नन्द्यावर्तं च कैतकम्॥ ५८॥ घटजं स्थलपद्मं च सर्वाणि जलजानि च। तत्कालसंभवं पुष्पं गृहीत्वाऽथ गृहं विशेत्॥ ५९॥

---

१ ख. नैशेयौ। २ क. °ते। विधति दर्भा ये दर्भा ये। ३ ख. °पानभो°। ४ ख. °भो समिधस्तु। ५ क. °शिका। कु°। ६ ख °न्तदीपारेखादि°। ७ क. °नामुपक्र°। ८ क. °रुचयं कुरुवेलुदकेशावनं त°। ९ क. शमीपुष्पं क°। १० क. पाटला। ११ ख °तुलङ्गं। १२ क. °कारं च वन त°। १३ ख. °लं सूतलं च। १४ ख. °लदानि।

वितानादियुते दिव्यधूपदीपैर्विराजिते । चन्दनागरुकस्तूरीकर्पूरामोदवासिते ॥ ६० ॥ विचित्ररङ्गवल्ल्याढ्ये मण्डपे रत्नपीठके । विस्तीर्णपुष्पपर्यङ्के देव्या सहितमच्युतम् ॥ ६१ ॥ संनिधावासने स्थित्वा कुशे पद्मासने स्थितः । प्राणायामविधानेन भूतशुद्धिं विधाय च ॥ ६२ ॥ प्राणायामत्रयं कृत्वा पश्चाद्ध्यानं यथोक्तवत् । परव्योम्नि स्थितं देवं लक्ष्मीनारायणं[1] विभुम् ॥ ६३ ॥ परितः[2] शक्तिभिर्युक्तं भूनीला[3]विमलादिभिः । अनन्तविहगाधीशै[4]सैन्याद्यैः सुरसत्तमैः ॥ ६४ ॥ चण्डाद्यैः कुमुदाद्यैश्च लोकपालैश्च सेवितम् । चतुर्भुजं सुन्दराङ्गं नानारत्नविभूषणम् ॥ ६५ ॥ वामाङ्कस्थश्रिया युक्तं शङ्खचक्रगदाधरम् । मन्त्ररत्नविधानेन न्यासमुद्रादिकर्मकृत् ॥ ६६ ॥ पञ्चो[5]पनिष[6]द्न्यासं कुर्यात्सर्वत्र कर्मसु । ॐ[7] ईशाय नमः परायेति परमेष्ठ्यात्मने नमः ॥ ६७ ॥ ॐ यां नमः परायेति ततः पुरुषात्मने नमः । ॐ[8] रां नमः परायेति ततो विश्वात्मने नमः ॥ ६८ ॥ ॐ वां नमः परायेति स्वानिवृत्त्यात्मने[9] नमः । ॐ लां नमः परायेति ततः सर्वात्मने नमः ॥ ६९ ॥ शिरोनासाग्रहृदयगुह्यपादेषु विन्यसेत् । यथाक्रमेण तन्मन्त्रान्पश्चाङ्गेषु क्रमान्न्यसेत् ॥ ७० ॥ तन्मुद्रया तं[10]दाऽऽवाह्य दद्यादासनमेव च । पाद्यार्घ्याचमनस्नानपात्राणि स्थाप्य पूजयेत् ॥ ७१ ॥ पूरयित्वा शुभजलं पात्रेषु कुसुमैर्युतम् । द्रव्याणि निक्षिपेत्तेषु मङ्गलानि यथाक्रमात् ॥ ७२ ॥ उशीरं चन्दनं कुष्ठं पाद्यपात्रे विनिक्षिपेत् । विष्णुक्रान्तं च दूर्वां च कौशेयांस्तिलसर्षपान् ॥ ७३ ॥ अक्षतांश्च फलं पुष्पमर्घ्यपात्रे विनिक्षिपेत् । जातीफलं च कर्पूरमेलां चाऽऽचमनीयके ॥ ७४ ॥ मकरन्दं प्रवालं च रत्नं सौवर्णमेव च । तानि दद्यात्स्नानपात्रे धात्रीं सुरतरुं तथा ॥ ७५ ॥ द्रव्याणामप्यलाभे तु तुलसीपत्रमेव च । चन्दनं वा सुवर्णं वा कौशेयं वा विनिक्षिपेत् ॥ ७६ ॥ दर्शयेत्सुरभेर्मुद्रां पूजयेत्कुसुं[11]मव्रजैः । अभिमन्त्र्य च मन्त्रेण धूपदीपैर्निवेदयेत् ॥७७॥ अनं[12]न्तं चोद्धरण्या च दद्यात्पाद्यादिकं तथा । तत्पात्रक्षालनं कृत्वा तथा पुष्पाञ्जलिं न्यसेत् ॥ ७८ ॥ सौवर्णानि च रौप्याणि ताम्र[13]कांस्यं प्रयोजयेत् । पात्राणामप्यलाभे तु शङ्खमेकं विशिष्यते ॥ ७९ ॥ शङ्खोदकं सदा पूतमतिप्रियतमं हरेः । उद्धरि(र)ण्या जलं दद्यान्नाप्सु शङ्खं निमज्जयेत् ॥ ८० ॥

---

१ क °णं हरिम् । २ ख. पराभिः श° । ३ ख भूलीला° । ४ क. °शसेनान्याद्यैर्गुरुत्त° । ५ ख. पद्मप° । ६ ख °पदं न्या° । ७ क ॐ सों परा° । ८ ख ॐ वामनः प° । ९ क. °येन्निवृ° । १० क. तयाऽऽवा° । ११ क °सुमाक्षतं । अ° । १२ क. °नन्तस्योद्धरणं द° । १३ ख. °कांस्यानि यो° ।

अष्टाक्षरेण मनुना मन्त्ररत्नेन वा यजेत् । पाद्यार्घाचमनं दत्त्वा मधुपर्कं निवेदयेत् ॥ ८१ ॥ पुनराचमनं दत्त्वा पादपीठं निवेदयेत् । दन्तधावनगण्डूषदर्पणालोचनं तथा ॥ ८२ ॥ निवेद्याभ्यञ्जनं तैलेनोद्वर्तं केशरञ्जनम् । सुखोष्णितजलैः स्नानं पुनरुद्वर्तनं चरेत् ॥ ८३ ॥ कुङ्कुमेन हरिद्रेण चन्दनेन सुगन्धिना । उद्वर्त्य गन्धतोयेन स्नापयेच्च पुनस्ततः ॥ ८४ ॥ स्नानपात्रोदकं पश्चादादाय कुसुमैः सह । पौरुषेण तु सूक्तेन स्नापयेत्कमलापतिम् ॥ ८५ ॥ मार्जयेच्छुभवस्त्रेण दीपैर्नीराजयेत्तथा । वस्त्रं चैवोपवीतं च दद्यादाभरणानि च ॥ ८६ ॥ कस्तूरीतिलकं गन्धं पुष्पाणि सुरभीणि च । अङ्के निवेश्य देवस्य लक्ष्मीं संपूजयेत्तथा ॥ ८७ ॥ पार्श्वयोर्धरणि(णी)लीले महिष्यः परितस्तथा । विमलोत्कर्षिणीत्याद्याः पूर्वमेव प्रकीर्तिताः ॥ ८८ ॥ चण्डादिद्वारपालांश्च कुमुदादींस्तथाऽर्चयेत् । तथैवाऽऽवरणाधीशाः पूजनीयाः समन्ततः ॥ ८९ ॥ वासुदेवः सीरपाणिः प्रद्युम्नश्च उषापति. । दिक्षु कोणेषु तत्पत्न्यो लक्ष्मीरेव रती उषा ॥ ९० ॥ द्वितीयावरणं पश्चात्केशवाद्याः सशक्तयः । संकर्षणादयः पश्चान्मत्स्यकूर्मादयस्तथा ॥ ९१ ॥ श्रीर्लक्ष्मीः कमला पद्मा पद्मिनी कमलालया । रमा वृषाकपेर्धन्या वृत्तिर्यज्ञान्तदेवता ॥ ९२ ॥ शक्तयः केशवादीनां संप्रोक्ताः परमे पदे । हिरण्या हरणी सत्या नित्यानन्दा त्रयी सुखा ॥ ९३ ॥ सुगन्धा सुन्दरी विद्या सुशीला च सुलक्षणा । संकर्षणादिमूर्तीनां शक्तयः समुदाहृताः ॥ ९४ ॥ वेदा वेदवती धात्री महालक्ष्मीः सुखालया । भार्गवी च तथा सीता रेवती रुक्मिणी प्रभा ॥ ९५ ॥ मत्स्यकूर्मादिमूर्तीनां शक्तयः संप्रकीर्तिताः । एवं सशक्तयः पूज्याः केशवाद्याः सुरेश्वराः ॥ ९६ ॥ पश्चात्सशक्तयः पूज्याः शङ्खचक्रादिहेतयः । शङ्खं चक्रं गदां पद्मं शार्ङ्गं च मुशलं हलम् ॥ ९७ ॥ बाणं च खड्गखेटं च च्छुरिका दिव्यहेतयः । भद्रा सौम्या तथा माया जया च विजया शिवा ॥ ९८ ॥ सुमङ्गला सुनन्दा च हिता रम्या सुरक्षिणी । शक्तयो दिव्यहेतीनां पूजनीयाः+सनातनीः ॥ ९९ ॥ बहिर्लोकेश्वराः पूज्याः साध्याश्च समरुद्गणाः । एवमावरणं सर्वमर्चयेत्परमात्मनः ॥ १०० ॥ पुनरर्घ्यादिकं दत्त्वा धूपदीपैर्निवेदयेत् ॥ १०१ ॥ प्रागुदीच्यां च सेनेशं नागराजं तथा परे । पुरतो वैनतेयं च पूजयेच्छक्तिभिः सह ॥ १०२ ॥

+ अत्र प्रथमार्थे द्वितीया बोध्या ।

१ क. पीठे नि° । २ क. °णाजो चं° । ३ क. °नं गन्धतैलाद्गोद्वर्तने के° । ४ ख. °योरर्धधरणी महिष्यः पतितास्त° । ५ ख. °णीत्याप पू° । ६ ग. मुसलं । ७ क. °रक्षणी । ८ ख. °तना. । व° । ९ ख. सदृशं ।

सेनापतेः सूत्रवतीं नागराजस्य वारुणीम् । भद्रां च वैनतेयस्य पूजयेद्वैष्णवोत्तमः ॥ १०३ ॥ गुग्गुलं महिषाणां च सालनिर्यासमेव च । अगरुं देवदारुं च उशीरं श्रीफलं तथा ॥ १०४ ॥ ह्रीवेरं चन्दनं मुस्ता दशाङ्गं धूपमुच्यते । गवाज्येन च संयोज्यं दद्याद्धूपं सुवासितम् ॥१०५॥ कार्पासमार्कं क्षौमं च शाल्मलीक्षीरकोद्भवम् । अम्भोजं कौटजं काशतूलिकाऽष्टाङ्गमुच्यते ॥ १०६ ॥ गवाज्यं तिलतैलं वा कुसुमैश्च सुवासितम् । संयोज्य वह्निना दीपं भक्त्या विष्णोर्निवेदयेत् ॥१०७॥ नैवेद्यं शुभहृद्यान्नं पायसापूपसंयुतम् । फलैश्च भक्ष्यभोज्यैश्च पानकैर्व्यञ्जनैः सह ॥ १०८ ॥ गवाज्यं च दधि क्षीरं शर्करां च निवेदयेत् । शुद्धं हविष्यं हृद्यं च सुरुच्यं वै निवेदयेत् ॥ १०९ ॥ यच्छास्त्रेषु निषिद्धं तु तत्प्रयत्नेन वर्जयेत् । कोद्रवं[4] चौलकं लुब्धं यावनालं तथा सितम् ॥ ११० ॥ निष्पावं च मसूरांश्च तुच्छधान्यानि सर्वशः । भु(शु)क्तं पर्युषितं रूक्षं यज्ञे कर्मणि वर्जयेत् ॥ १११ ॥ वर्जयेदारनालं च मद्यमांससमानि च । निर्यासान्वर्जयेत्सर्वान्विना हिङ्गु च गुग्गुलुम् ॥ ११२ ॥ छत्राकं मूलकं शिग्रु करञ्जं लशुनं तथा । कुम्भीदलं च पिण्याकं श्वेतवृन्ताकमेव च ॥ ११३ ॥ आत्रं(न्त्रं) (?) च नालिकाशाकं नारिकेलाख्यमेव च । पीलुं च शणपुष्पं च भूस्तृणं भौतिकं तथा ॥ ११४ ॥ कोशातकीं बिम्बफलं मद्यमांससमानि च । अभक्ष्याण्यप्यशेषाणि वर्जयेद्यज्ञकर्मसु ॥ ११५ ॥ कलिङ्गं कतकं विम्बफलं जन्तुफलं तथा । वंशाङ्कुरमलाबुं च तालहिन्तालके फले ॥ ११६ ॥ अश्वत्थं प्लक्षनीपं च वटमारग्वधं तथा । कलम्बिका च निर्गुण्डी मुण्डी वार्ताकमेव च ॥११७॥ ऊषरं लवणं चैव श्वेतं च बृहतीफलम् । नखचर्मातकं चैव चिञ्चिलं चेति यत्नतः ॥ ११८ ॥ विज्ञेयानि(नी)त्यभक्ष्याणि वर्जयेद्यज्ञकर्मणि । श्लेष्मातकं च विड्जानि प्रत्यक्षलवणं तथा ॥ ११९ ॥ अनिर्दशाहगोक्षीरमवत्सायास्तथाऽऽविकम् । औष्ट्रमेकशफं चैव पशूनां विड्भुजामपि ॥ १२० ॥ अनिदीर्णं तथा तक्रं करनिर्मन्थितं दधि । ताम्रेण संयुतं गव्यं क्षीरं च लवणान्वितम् ॥ १२१ ॥ घृतं लवणसंयुक्तं प्रयत्नेन विवर्जयेत् । सूपान्नं च गुडान्नं च शर्करामधुसंयुतम् ॥ १२२ ॥ मरीचिमिश्रं दध्यन्नं पायसान्नं फलैः सह । तुलसीदलसंमिश्रं जलैः संप्रोक्ष्य वाग्यतः ॥ १२३ ॥ अष्टाविंशतिवारं तु मूलमन्त्राभिमन्त्रितम् । मुद्रां च सौरभेयीं तां दर्शयेन्मन्त्रमुच्चरन् ॥ १२४ ॥ सुधाब्धिममृतं बीजं चिन्तयन्परमात्मनः । दद्यात्पुष्पाञ्जलिं पश्चाद्दशवारं समाहितः ॥ १२५ ॥ आपोशनक्रियापूर्वमन्नमस्मै निवेदयेत् । शतवारं जपेन्मन्त्रं घण्टाशब्दं निनादयन् ॥ १२६ ॥

१ रा चरा तथा य° । २ क °तमम् । गु° । ३ ख. गुग्गुलुं महिपाक्षीं च । ४ क. °वं चोलकौलुर्थं या° । ५ ख. °तूरं च तु° । ६ क. °ग्गुलम् । ७ ख. नालिकेर्याख्य° । ८ ख. विल्वं । ९ ख °गुण्डिमुम्बिका° । १० क. ऊपरं । ११ ख. °नि च भ° ।

जपेत्पीयूषदै(दे)वत्यान्मन्त्रानेकाग्रचेतसा । हरेर्भुक्तवतः पश्चाद्दद्याद्वारि सुवासितम् ॥१२७॥ पश्चादाचमनं दद्याज्जलैर्गन्धविमिश्रितैः । *मुखवासं ततो दत्त्वा पुष्पाञ्जलिमथाऽऽचरेत् ॥ १२८ ॥ हविःशेषेण देवानां बलिं भुवि विनिक्षिपेत् । चण्डादिद्वारपालानां सर्वेषां च दिवौकसाम् ॥ १२९ ॥ दद्यादुदकपूर्वेण हविःशेषं द्विजोत्तमः । अभ्यर्च्य पौरुषस्यास्य सूक्तस्य सुरसत्तमान् ॥ १३० ॥ विष्णवर्पितचतुर्भागं क्रमाद्धव्यस्य चार्पयेत् । अनन्तताक्ष्यसेनेशपवित्राणां निवेदयेत् ॥ १३१ ॥ तीर्थेन सहितं हव्यं पृथक्पात्रेषु निक्षिपेत् । सर्वेषां वारिपूर्वेण पश्चात्पुष्पाञ्जलिं चरेत् ॥ १३२ ॥ नीराजनं ततो दत्त्वा ताम्बूलं च निवेदयेत् । प्रणमेच्च ततो भक्त्या रम्यैः स्तोत्रैः शुभाह्वयैः ॥ १३३ ॥ प्रसार्य बाहू पादौ च बद्धेनाञ्जलिना सह । स्तुवन्स्तुतिभिरेवं च प्रणामो दीर्घ उच्यते ॥ १३४ ॥ नत्वा दीर्घप्रणामैश्च स्तुत्वा स्तुतिभिरेव च । सर्वैश्च वैष्णवैर्मन्त्रैः कुर्यात्पुष्पाञ्जलिं ततः ॥ १३५ ॥ सूक्तैश्च विष्णुदै(दे)वत्यैर्नामभिः शार्ङ्गिणस्तथा ॥ १३६ ॥ ततः शुभासने स्थित्वा जपेन्मन्त्रमनुत्तमम् । न्यासमुद्रादिपूर्वेण ध्यायन्वै कमलेक्षणम् ॥ १३७ ॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । जप्त्वा पुष्पाञ्जलिं दद्याद्यथाशक्त्या च मन्त्रतः ॥ १३८ ॥ नमेद्योगेन देवेशं हृदिस्थं कमलेक्षणम् । म[3](मा)नसैर्वाऽर्चयित्वाऽस्मिन्समाधौ विरमेत्सुधीः ॥ १३९ ॥ प्रातरौपासनं कृत्वा तत्र होमं समाचरेत् । आज्येन चरुणा वाऽपि समिद्भिर्वा च[4] यज्ञियैः ॥ १४० ॥ तण्डुलैर्घृतमिश्रैर्वा बिल्वपत्रैरथापि वा । तिलैर्वा कुसुमैर्वाऽपि यवैर्मिश्रि(व्रीहि)भिरेव च(?) ॥ १४१ ॥ यज्ञरूपं हरिं ध्यात्वा सर्ववेदमयं प्रभुम्[5] । दिव्याभरणसंपन्नं शङ्खचक्रगदाधरम् ॥ १४२ ॥ वरदं पुण्डरीकाक्षं वामाङ्कस्थश्रियं हरिम् । यज्ञस्वरूपिणं वह्नौ ध्यायन्मन्त्रद्वयेन च ॥ १४३ ॥ सर्वैश्च वैष्णवैर्मन्त्रैरेकैकेनाऽऽहुतिं तथा । नामभिः केशवाद्यैश्च सूक्तैर्विष्णुप्रकाशकैः ॥ १४४ ॥ वैकुण्ठपार्षदं सर्वं हुत्वा चैव ततो बलिम् । क्षिपेच्चतुर्विधान्भूतानुद्दिश्य च ततो भुवि ॥ १४५ ॥ आचम्य पूजयेत्पश्चा[6]त्तदीयान्सुसमाहित[7]ः । तेभ्यः प्रणम्य भक्त्याऽथ संतर्प्य पितृदेवताः ॥ १४६ ॥ वेदमध्यापयेच्छक्त्या धर्मशास्त्रं च संहिताः । सात्त्विकानि पुराणानि सेतिहासानि वैष्णवः ॥ १४७ ॥ सर्वोपनिषदामर्थं सद्भिः सह विचिन्तयेत् । योगक्षेमार्थवृ[8]त्तिं च कुर्याच्छक्त्या यथार्हतः ॥ १४८ ॥ ब्राह्मणाः

---

* इत आरभ्य द्विजोत्तम इत्यन्तं न विद्यते ख. पुस्तके ।

---

१ क. °श्रितम् । मु° । २ क. °पूर्णेन प° । ३ क. °मनसि वाऽर्च° । ४ क. °मिश्रभि° । ५ ख. विभुम् । ६ क. °श्चादीप्यानतत्सुस° । ७ क. °हितम् । ते° । ८ ख. °वृद्धिं च ।

क्षत्रिया वैश्याः शूद्रा वर्णा यथाक्रमम् । आद्यास्त्रयो द्विजाः प्रोक्तास्तेषां वै मन्त्रसत्क्रियाः ॥ १४९ ॥ सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः। तेषां संकरयोगाच्च प्रतिलोमानुलोमजाः ॥ १५० ॥ विप्रान्मूर्धाभिषिक्तस्तु क्षत्रियायामजायत । वैश्यायां तु तथाऽऽम्बष्ठो निषादः शूद्रया तथा ॥ १५१ ॥ राजन्याद्वैश्यशूद्र्यां तु माहिष्योग्रौ तु तौ स्मृतौ । शूद्र्यां वैश्यात्तु करणंस्थिरैर्वा तेऽनुलोमजाः ॥ १५२ ॥ विप्रायां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा । चण्डालस्तु ततः शूद्रात्सर्वकर्मसु गर्हितः ॥१५३॥ मागधः क्षत्रियायां वै वैश्याक्षत्त्रात्तु शूद्रतः । शूद्राद(दा)योगवं वैश्या जनयामास वै सुतम् ॥ १५४ ॥ रथकारः करण्यां तु माहिष्येण प्रजायते । असंतसंततयो ज्ञेयाः प्रतिलोमानुलोमजाः ॥ १५५ ॥ प्रतिलोमासु वै जाता गर्हिताः सर्वकर्मणाम् । एतेषां ब्राह्मणाद्याश्च षट्कर्मसु नियोजिताः ॥ १५६ ॥ त्रिकर्मसु क्षत्रविशावेकस्मिञ्शूद्रयोनिजः । प्रतिग्रहं च वृत्त्यर्थं ब्राह्मणस्तु समाचरेत् ॥ १५७ ॥ असदेवासतां प्रोक्तं निषिद्धं तद्विवर्जयेत् । पाषण्डाः पतिताः पापास्तथैव प्रतिलोमजाः ॥ १५८ ॥ कुलटाश्च विकर्मस्था असतः परिकीर्तिताः । लवणं तिलकार्पासं चर्म च त्रपुसीसकम् ॥ १५९ ॥ आयसं मधु मांसं च विषमन्नं घृतं रुजम् । किल्विषं गजमुष्टं च सर्षपं जलमेव च ॥ १६० ॥ तृणं काष्ठं च कूष्माण्डं शिशपां च विवर्जयेत् । महिषीं गर्दभं चैव वाजिनं च तथाऽऽविकम् ॥ १६१ ॥ * दासी च जानं वृषभनावं चानडुहं तिला[ः](?) । एवमाद्यमसद्द्रव्यं प्रयत्नेन विवर्जयेत् ॥ १६२ ॥ धान्यं वासांसि भूमिं च सुवर्णं रत्नमेव च।=पुष्पाणि फलमूलाद्यं सद्द्रव्यं मुनिभिः स्मृतम्॥१६३॥ सर्वत्र प्रतिगृह्णीयाद्भूमिं धान्यं फलादिकम् ॥ १६३ ॥ भूमिं यस्तु प्रगृह्णाति भूमिं यस्तु प्रयच्छति । तावुभौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ(णौ) ॥ १६४ ॥ धान्यं करोति दातारं प्रग्रहीतारमेव च । धान्यं नृपवरश्रेष्ठ इह लोके परत्र च ॥ १६५ ॥ तस्माद्धान्यं धरित्रीं च प्रतिगृह्णीत सर्वतः ॥ १६६ ॥ कुसूलधान्य एव स्यात्कुम्भधान्योऽथ वा नृप । शिलोञ्छेनापि वा जीवेच्छ्रेयान्ने(न्न)षां परोऽवरः ॥ १६७ ॥

* एतदर्धस्थानेऽयं पाठः ख. पुस्तके—"दासीमजां यानवृक्षा न पश्चानडुहं तुलाम्" इति । = एतदर्धं न विद्यते ख पुस्तके ।

१ क. °द्रना तं° । २ क °णस्य तं चेत्यनु° । ३ ख. तथा । ४ क. °क्षत्त्रात्तु शू° । ५ क. °सत्यं तु सतो । ६ क. °मानिलोम वै जा° । ७ क. °म । न ते° । ८ क. °सतंप्रो° । ९ ख तृणका° । १० क. °ण्डेगा शम्यां च । ११ क. महिषमुष्टं च सर्षपं जलग° । १२ ख. धान्यं । १३ ख. कुसुम्भधा° । १४ ख. °स्कुसुम्भधान्यव न°

जीवेद्यायावरेणैव विप्रः सर्वत्र सर्वदा । वर्जयित्वैव पाषण्डान्पतितांश्चान्यदैविकान् कृपिणा वाऽपि जीवेत सतां चानुमतेन वा ॥ १६८ ॥ न वाहयेदनडुहं क्षुधितं[1] श्रान्तमेव च । तस्य पुंस्त्वमहित्वैव वाहयेद्द्विजपुंगवः ॥ १६९ ॥ कर्मलोपमकुर्वन्वै कृषिं कुर्वीत वै द्विजः । हरेः पूजां यथाकालं कृपिलोपे[2] समाचरेत् ॥१७०॥ न ब्राह्म्यं संत्यजेद्विप्रस्तथा यज्ञादिकर्म च । आपद्यपि न कुर्वीत सेवां वाणिज्यमेव च ॥ १७१ ॥ असत्प्रतिग्रहं स्तेयं तथा धर्मस्य विक्रयम् । अन्यायोपार्जितं द्रव्यमापद्यपि विवर्जयेत् ॥ १७२ ॥ भृतकाध्यापनं चैवं[3] न कुर्याद्वेदविक्रयम् । विदित्वैवं च सद्वृत्तिमेवं जीवति धार्मिकः ॥ १७३ ॥ महाभागवते दत्तं यत्किंचिन्मिश्रितं भवेत् । असत्प्रतिगृहीतं त्वविमलं तन्न संशयः ॥ १७४ ॥ प्रीतये वासुदेवस्य यद्दत्तमसतामपि । महाभागवतस्पर्शात्तत्सदित्युच्यते बुधैः ॥ १७५ ॥ तापादिपञ्चसंस्कारै[4]स्तथाकारैस्त्रिभि[5]र्युतः । हरेरनन्यशरणो महागवतः स्मृतः ॥ १७६ ॥ यक्षराक्षसभूतानां तामसानां दिवौकसाम् । तेषां यत्प्रीतये दत्तं तथा यद्यपि वर्जयेत्[6] ॥ १७७ ॥ बुद्धरुद्रौ तथा वायुर्दुर्गागर्णपभैरवाः । यमः स्कन्दो नैर्ऋतश्च तामसा देवताः स्मृताः ॥१७८॥ एवं विशुद्धिं द्रव्यस्य ज्ञात्वा गृह्णीत सत्तमः । कृषिस्तु सर्ववर्णानां सामान्यो धर्म उच्यते ॥ १७९ ॥ प्रतिग्रहस्तु विप्राणां राज्ञां क्ष्मापालनं तथा । कुसीदं चैव वाणिज्यं विशामेव प्रकीर्तितम् ॥ १८० ॥ सेवावृत्तिस्तु शूद्राणां कृषिर्वा संप्रकीर्तिता । अशक्तस्तु भवेद्राजा पृथिव्याः परिपालने ॥ १८१॥ जीवेद्वाऽपि विशां वृत्त्या शूद्राणा वा यथासुखम् । कृषिर्भृतिः पाशुपाल्यं सर्वेषां न निषिध्यते ॥ १८२ ॥ स्तेयं परस्त्रीहरणं हिंसा कुहककौतुके । स्त्रीमद्यमांसलवणविक्रयं पतितं स्मृतम् ॥ १८३ ॥ अपकृष्टनिकृष्टानां जीवितं शिल्पकर्मभिः । हीनं तु प्रतिलोमानामहीनमनुलोमिनाम् ॥ १८४ ॥ चर्मवैणववस्त्राणां हिंसाकर्म[10] च नेजनम्[11] । गाणिक्यं यवनाद्यं च मद्यमांसक्रिया तथा ॥ १८५ ॥ सारथ्यं वाहकानां च रथानां भूभृतामपि । एवमादि निषिद्धं यत्प्रातिलोम्यं तदुच्यते ॥ १८६ ॥ यत्सौम्य[12] शिल्पं लोकेऽस्मिन्सौम्यं तदनुलोमकम् । मृदारुशैललोहानां शिल्पं सौम्यमिहोच्यते ॥ १८७ ॥ न्यायेन पालयेद्राजा पृथिवीं शास्त्रमार्गतः । स्वराष्ट्रकृतधर्मस्य सदा षड्भागसिद्धये ॥ १८८ ॥ राज्ञां राष्ट्रकृतं पापमिति धर्मविदो विदुः । तस्मादपापसंयुक्तां यथा संरक्षयेद्भुवम् ॥१८९॥

---

१ ख. क्षुधार्तं । २ ख °पिकोपे । ३ ख. °व सदाऽसत्कर्मभावनम् । प्री° । ४ ख. °पादीन्प° । ५ क. °स्काराास्तथा° । ६ ख. °स्त्रिभि श्रुत । ७ क. °त् । वद्ध° । ८ ख. °णसुमै° । ९ ख. °कौतिके । १० क. हिंसं कर्म च ने° । ११ ख. °म् । माणिक्यं वपनाग्नि च । १२ क. °त्सौम्यं शि° ।

अग्निदं गरदं हिंस्रं चौरं दुर्वृत्तमेव च । धूर्तं पतितमित्यादीन्हन्यादेवाविचारयन् ॥१९०॥ अङ्कयित्वा श्वपादेन गर्दभे चाधिरोह्य वै । प्रवासयेत्स्वराष्ट्रात्तु ब्राह्मणं पतितं नृपः ॥ १९१ ॥ कुलटां कामचारेण गर्भघ्नीं भर्तृहिंसिकाम् । निकृत्तकर्णनासोष्ठीं कृत्वा नारीं प्रवासयेत् ॥ १९२ ॥ न्यायेन दण्डनं राज्ञः स्वर्गकीर्तिकरं भवेत् । अन्याय-दण्डनं राज्ञः स्वर्गकीर्तिविनाशनम् ॥ १९३ ॥ अदण्ड्यान्दण्डयन्राजा तथा दण्ड्या-नदण्डयन् । अयशो महदाप्नोति नरकं चाधिगच्छति ॥ १९४ ॥ दिग्दण्डस्त्वथ वा-ग्दण्डो धनदण्डो वधस्तथा । ज्ञात्वाऽपराधं देशं च जनं कालमथापि वा ॥ १९५ ॥ वयः कर्म च वित्तं च दण्डं न्यायेन पातयेत् । निश्चित्य शास्त्रमार्गेण विद्वद्भिः सह पार्थिवः ॥ १९६ ॥ गुरूणां तु गुरुं दण्डं पापानां च लघोर्लघुम् । व्यवहारान्स्वयं पश्यन्कुर्यात्सद्भिर्वृतोऽन्वहम् ॥ १९७ ॥ मिथ्यापवादशुद्ध्यर्थं पञ्च दिव्यानि कल्प-येत् । ×ज्ञात्वा शुद्धेषु दिव्येषु शुद्धान्वै मानयेत्तथा ॥ १९८ ॥ तन्मिथ्याशंसिनं दुष्टं जिह्वाछेदेन दण्डयेत् ॥ १९९ ॥ परद्रव्यादिहरणं परदाराभिमर्शनम् । यः कुर्यात्तु बलात्तस्य हस्तच्छेदः प्रकीर्तितः ॥२००॥ यो गच्छेत्परदारांस्तु बलात्कामाच्च वा नरः । सर्वस्वहरणं कृत्वा लिङ्गच्छेदं च दापयेत् ॥२०१॥ दहेत्कटाग्निना देहं गुरुस्त्रीगामिनं(णं) तथा । ब्रह्मघ्नं च सुरापं वा गोस्त्रीबालनिषूदनम् । देवविप्रस्वहन्तारं शूलमारोपयेन्नरम् ॥२०२॥ दैवतं ब्राह्मणं गां च पितृमातृगुरूंस्तथा । पादेन ताडयेद्यस्तु तस्य तच्छेदनं स्मृतम् ॥२०३॥ तेषामुपरि हस्तं तु दोष्णोश्छेदं तु कामतः । प्रत्येकं दण्डनं कुर्याद्दुर्वृ-त्तस्य परस्त्रियाम् ॥ २०४ ॥ चुम्बने तालुविच्छेदो द्वौ हस्तौ परिरम्भणे । हस्त-स्याङ्गुलिविच्छेदः केशादिग्रहणे स्त्रियाः ॥ २०५ ॥ दाहयेत्तप्ततैलेन हस्तमुष्ट्या च ताडनम् । सुरतं याचमानस्य जिह्वाच्छेदं च कामतः ॥ २०६ ॥ कामेङ्गितेषु सर्वत्र ताल्वोश्च दहनं स्मृतम् । दृष्ट्वा मुहुः प्रेरणे तु नेत्रयोः स्फोटनं चरेत् ॥ २०७ ॥ मानकूटं तुलाकूटं कूटसाक्ष्यकृतां नृणाम् । सहस्रं दापयेद्दण्डं वृत्त्या स्वस्यापनायने ॥ २०८ ॥ येषु केषु च पापेषु शारीरं दण्डनं स्मृतम् । तेषु तेष्वङ्कनेनैव अक्षतो ब्राह्मणो व्रजेत् ॥ २०९ ॥

---

× एतदाद्यर्धद्वयं न क पुस्तके ।

---

१ ख. °र्तिविवर्धनम् । अद° । २ ख. °मद्योऽपि । ३ क. पालयेत् । ४ ख °त् । अपद्र° । ५ क. पादने । ६ क. °दण्डवृत्त्या स्वस्यापि ना° । ७ ख शरीरे ।

पापानेवाङ्कयित्वाऽस्य मुण्डयित्वा शिरोरुहान् । सर्वस्वहरणं कृत्वा राष्ट्रात्सम्यक्प्रवासयेत् ॥ २१० ॥ अवैष्णवं विकर्मस्थं हरिवासरभोजिनम् । ब्राह्मणं गार्दभं यानमारोप्यैव विवासयेत् ॥ २११ ॥ न्यायेन पालयेद्राजा धर्मात्षड्भागमाहरेत् । त्रिभागमाहरेद्धान्याद्धनात्षड्भागमेव च ॥ २१२ ॥ गोभूहिरण्यवासोभिर्धान्यरत्नविभूषणैः । पूजयेद्ब्राह्मणान्भक्त्या पोषयेच्च विशेषतः ॥ २१३ ॥ बिम्बानि स्थापयेद्विष्णोर्ग्रामेषु नगरेषु च । चैत्यान्यायतनान्यस्य रम्याण्येव तु कारयेत् ॥ २१४ ॥ वसुपुष्पोपहाराद्यं भूधेन्वादि समर्पयेत् । इतरेषां सुराणां च वैदिकानां जनेश्वरः ॥ २१५ ॥ धर्मतः कारयेच्छश्वच्चैत्यान्यायतनानि तु । वापीकूपतडागादि फलपुष्पवनानि च ॥ २१६ ॥ कुर्वीत सुविशालानि पूर्वकाण्यपि पालयेत् ॥ २१७ ॥ *फलितं पुष्पितं वाऽपि वनं छिन्द्यात्तु यो नरः । तडागसेतुं यो भिन्द्यात्तं शूलेनानुरोहयेत् ॥ २१८ अग्निदं गरदं गोघ्नं बालस्त्रीगुरुघातिनम् । भगिनीं मातरं पुत्रीं गुरुदारान्स्नुषामपि ॥ २१९ ॥ साध्वीं तपस्विनीं वाऽपि गच्छन्तमतिपापिनम् । हिंस्रयन्त्रप्रयोक्तारं दाहयेद्वै कटाग्निना ॥ २२० ॥ अदण्डयित्वा दुर्वृत्तांस्तत्पापं पृथिवीपं[ तिः ] । संप्राप्य निरयं गच्छेत्तस्मात्तान्दण्डयेत्तथा ॥ २२१ ॥ यः स्ववर्णाश्रमं हित्वा अन्ये ( नये )न तु वर्क्षयेत् ( र्तते ) । तं दण्डयेत्पणशतं नाशयेत्तद्विदेशतः ॥ २२२ ॥ सर्वेष्वेतेषु पापेषु धनदण्डं प्रयोजयेत् । पितेव पालयेद्भृत्यान्प्रजाश्च पृथिवीपतिः ॥ २२३ ॥ प्रजासंरक्षणार्थाय संग्रामं कारयेन्नृपः । तस्मिन्मृत्युर्भवेच्छ्रेयो राज्ञः संग्राममूर्धनि ॥ २२४ ॥ मृतेन लभते स्वर्गं जितेन पृथिवीचयम् । यशः कीर्तिविवृद्ध्यर्थं धर्मसंग्राममाचरेत् ॥ २२५ ॥ मुक्तशीर्षं मुक्तवस्त्रं त्यक्तहेतिं पलायितम् । न हन्याद्वन्दिनं राजा युद्धे प्रेक्षणकृज्जनान् ॥ २२६ ॥ भग्ने स्वसैन्ये संग्रामे न यस्य विनिवर्तनम् । पदे पदे समग्रस्य यज्ञस्य फलमश्नुते ॥ २२७ ॥ नातः परतरो धर्मो नृपाणां करशालिनाम् । युद्धलक्ष्म्या मही सम्यग्दीयते नृपसत्तमैः ॥ २२८ ॥ जित्वा शत्रून्महीं लब्ध्वा यत्नेन परिपालयेत् । पालितां वर्धयेन्नित्यं वृद्धं ( द्धां ) पात्रे विनिक्षिपेत् ॥ २२९ ॥ पात्रमित्युच्यते विप्रस्तपोविद्यासमन्वितः । न विद्यया केवलया तपसा वाऽपि पात्रता ॥ २३० ॥

* एतद्वचनं न विद्यते क पुस्तके ।

१ क. °मादिशत् । २ ख °हारौघ भू° । ३ ख °येदथ चैत्या° । ४ क. °तटाकादि° । ५ ख. °पति । प्र° । ६ ख. °शतम् । स° । ७ क. °वीचय° । ८ क °र्तिप्रवृत्त्यर्थं । ९ ख. °सैन्यपुञ्जे च स° । १० ख. °मे विनिवर्तिन । पदे पदे स° । ११ ख. °णा नर° । १२ ख. °लब्ध्वा महीशस्य दीय° । १३ ख. °त्वा लब्ध्वां यत्नेन पा° ।

श्रुतमध्ययनं शीलं तप इत्युच्यते बुधैः । ईश्वरस्याऽऽत्मनश्चापि ज्ञानं विद्येति चोच्यते ॥ २३१ ॥ तथाविधेषु पात्रेषु भूमिं दत्त्वा धनं नृपः । शासनं कारयेत्सम्यक्स्वहस्तलिखितादिभिः ॥ २३२ ॥ उपजीव्योपसर्पेच्च रम्ये देशे नृपोत्तमः । दुर्गाणि तत्र कुर्वीत जन[1]कोशात्मगुप्तये ॥ २३३ ॥ तत्र कर्मसु निष्णातां[2]न्कुशलान्धर्मनिष्ठितान् । सत्यशौचयुताञ्शुद्धानध्यक्षान्स्थापयेन्नृपः ॥ २३४ ॥ अशीतिभा[3]गो वृद्धिः स्यान्मा[4]से मासे सबन्धके । अबन्धके स्याद्द्विगुणं यथातत्का[5]लसांप्रतम् ॥ २३५ ॥ लेख[6]येत्तदृणं सम्यक्समामासादिकल्पनैः । देयं सवृद्ध्या(द्धि) धनिने पुरु[7]षैस्त्रिभिरेव तत् ॥ २३६ ॥ निर्धनस्तु शनैर्दद्याद्यथाकालं यथोदयम् । औद्धत्याद्वा बलाद्वा तु न दद्याद्धनिने ऋणम् ॥ २३७ ॥ दण्डयित्वा च तं राजा धनिने दापयेदृणम् । छिन्ने दग्धेऽथ वा पत्रे साक्षिभिः परिकल्पयेत् ॥ २३८ ॥ वस्त्रधान्यहिरण्यानां चतु[8]स्त्रिशद्गुणादिभिः । न सन्ति साक्षिणस्तत्र देशकालान्तरादिभिः ॥ २३९ ॥ शोधयित्वा तु दिव्येन दापयेद्धनिने ऋणम् । मध्यस्थस्थापितं द्रव्यं वर्धते न ततः परम् ॥२४०॥ [9]कृते प्रतिग्रहे चाऽऽधौ पूर्वौ वै बलवत्त[10]रः । आदि(धि)स्तु द्विविधं(धः) प्रोक्तं (क्तो) भोग्यं गोप्यं तथैव च ॥ २४१ ॥ क्षेत्रारामादिकं भोग्यं गोप्यं द्रव्यमु[11]पस्करम् । गोप्याधिभो[12]ग्ये नो वृद्धिः सोप[13]स्का[14]रार्थदापिते ॥ २४२ ॥ नष्टं देयं विन[15]ष्टं च द्रव्यं राजकृतादृते । उपस्थितस्य भोक्त[16]व्यमाधिस्तेनोऽन्यथा भवेत् ॥ २४३ ॥ प्रयोजने सति धनं कुलेऽन्यस्यां[17]ऽऽधिमाप्नुयात् । तत्कालकृतमूल्ये वा तत्र तिष्ठेदवृद्धिकम् ॥२४४॥ विना धारणकाद्वाऽपि विक्रीणीत म(स)साक्षिक[18]म् । तं वनस्थमनाख्याय[19] धान्यमस्य न दीयते(!) ॥ २४५ ॥ त[20]दा यदधिकं द्रव्यं प्रतिदेयं तथैव च । न दा[21]प्योऽपहृतस्त्यक्तराजदैविकतस्करैः ॥ २४६ ॥

---

१ ख. °नकस्याऽऽत्मगु° । २ क °ताञ्शुद्धान्दक्षा° । ३ क. °भागवृ° । ४ ख. °न्मासि मासि स° । ५ ख. °लमात्रकम् । ६ क. °येत क्षणं । ७ ख °यित्वैव तं । ८ ख. °तुस्त्रिद्विगुणा° । ९ क °ते प्रीतिरग्रहे चाऽऽद्यौ स्वर्गादेव चलोत्तराः । आ° । १० ख °रः । अथविर्द्विवि° । ११ क. °पस्मर° । १२ क °भोगे नो । १३ क. °पस्करा° । १४ ख. °स्कारे तथाऽपि । १५ क. °ष्टं देय चेद्° । १६ ख. °क्तव्य आ[illegible]° । १७ क. °स्यादिना । १८ क. °म् । वमने स्य° । १९ क °य यदन्यस्य न च दी° । २० क. तदीयनिधि° । २१ क. दायोऽपहृतं न तु रा° ।

न प्रदद्याच्चु तन्मोहात्स दण्डयश्चोरवत्तदा । *अजीवन्स्वेच्छया दण्डचो दाप्य(प्यो ऽ)र्थं चापि सोदयम् ॥ २४७॥ याचितान्वाहितन्यायान्निक्षेपादिष्वयं विधिः ॥ २४८॥ सुराकामद्यूतकृतं वृथादानं तथैव च । दण्डशुल्कावशिष्टं च पुत्रो दद्यान्न पैतृकम् ॥ २४९ ॥ पितरि प्रोषिते प्रेते व्यसनाभिधिष्ठितेऽपि वा । × पुत्रपौत्रैर्ऋणं देयं निह्नुते चाक्षिचोदितम् ॥ २५० ॥ रिक्थग्राही ऋणं दद्याद्योपिद्ग्राहस्तथैव च । पुत्रो नै स्वाश्रितद्रव्यः पुत्रहीनस्तु रिक्थिनः ॥ २५१ ॥ प्रातिभाव्यमृणं साक्ष्यं देयं तस्मै यथोचितम् । दीयते स्यात्प्रातिभुवा धनिने तु ऋणं यथा ॥ २५२ ॥ द्विगुणं तत्प्रदातव्यं दण्डं राज्ञे च तत्समम् । पुत्रादिभिर्न दातव्यं प्रातिभाव्यमृणं स्त्रियाँ ॥२५३॥ प्रतिपन्नं स्त्रिया देयं पत्या चैव हि यत्कृतम् । स्वयं कृतं तु यदृणं नान्यत्स्त्री दातुमर्हति ॥ २५४ ॥ यत्पैतृकं धनं पुत्रा विभजेयुः सुनिर्णयम् । मातृकं चेद्दुहितरस्तदभावे तु तत्सुतः ॥ २५५ ॥ भगिन्यश्च तुरीयांशं पैतृकादाहरेद्धनात् । न स्त्रीधनं तु दायादा विभजेयुरनापदि ॥ २५६ ॥ पितृमातृसुताभ्रातृपत्यपत्याद्युपागतम् । आधिवेतनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥ २५७ ॥ अपुत्रा योषितश्चैव भर्तव्याः साधुवृत्तयः । निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ २५८ ॥ नैव भागं वनस्थानां यतीनां ब्रह्मचारिणाम् । पाषण्डपतितानां च न चावैदिककर्मणाम् ॥२५९॥ विभक्तेष्वनुजो जातः स्ववर्णो यदि भागभाक् । अविभक्तपितृकाणां पितृतो भागकल्पना ॥ २६० ॥ द्वैमातृणां मातृतश्च कल्पयेद्वा समोऽपि वा(?) । विभक्तस्यास्य पुत्रस्य पत्नी दुहितरस्तथा ॥ २६१ ॥ पितरौ भ्रातरश्चैव तत्सुताश्च सपिण्डिनः । संबन्धिबान्धवाश्चैव क्रमाद्वै रिक्थभागिनः ॥ २६२ ॥ सीम्नोऽपवादे क्षेत्रेषु सामन्ताःस्थविरादयः । गोपाः सीमाकृषाणां च सर्वे भवनगोचराः ॥ २६३ ॥ नयेयुरेते सीमानं स्थूणाङ्गारतुषद्रुमैः । न तु वल्मीकनिम्नास्थिचैत्याद्यैरुपशोभितम् ॥ २६४ ॥ औरसो दत्तकश्चैव क्रीतः कृत्रिम एव च । क्षेत्रजः कानिकश्चैव दौहित्रः सप्तमः स्मृतः । पिण्डज(द)श्च परश्चैषां पूर्वाभावे परः परः ॥ २६५ ॥ पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव च । पुत्री च भ्रातरश्चैव पिण्डदाः स्युर्यथाक्रमात् ॥ २६६ ॥

---

१ एतदर्धस्थानेऽयं पाठ. ख. पुस्तके—"ददीत स्वेच्छया दण्डं दापयेद्वाऽपि सोदरम" इति ।

× एतदाद्यर्धद्वयं न क पुस्तके ।

---

१ क स । २ क °ल्कावशि° । ३ क °नाभिष्टुते । ४ क °नन्याश्रितं द्र° । ५ ख स्त्रियाम । ६ ख. °ति । पत्यै स्वकं । ७ ख सुनिर्णितम् । ८ ख °श्च प्रमुदिता· पै° । ९ क °तृतद्यमद्याद्यु° । १० क आदिवेहनि° । ११ ख. सवर्णो । १२ क °कु । पितृतो १३ ख °तृव्याद्भाग° । १४ क समैव च । वि° । १५ क °वादक्षे° । १६ क °य । गोपासीमाकपा° १७ क °तुपद्रवैः । न । १८ ख. °मै । सन्तु वल्मीकलिम्ना १९ ख °भिता· । औ° । २० ख. सत्तम· ।

एवं धर्मेण नृपतिः शासयेत्सर्वदा प्रजाः । यदुक्तं मनुना धर्मं व्यवहारपदं प्रति ॥ २६७ ॥ विलोकितं च विद्वद्भिर्वीतरागैर्विमत्सरैः । विमृश्य धर्मविद्भिश्च विमलैः पापभीरुभिः ॥ २६८ ॥ धर्मेणैव सदा राजा शासयेत्पृथिवीं स्वकाम् । विपरीतां दण्डयेद्वै यावद्दर्पोपनाशनम् ॥ २६९ ॥ सभ्या अपि च दण्ड्या वै शास्त्रमार्गविरोधिनः । राजधर्मोऽयमित्येवं प्रसङ्गात्कथितो मया ॥ २७० ॥ कात्यायनेन मनुना याज्ञवल्क्येन धीमता । नारदेन च संप्रोक्तं विस्तरादिदमेव हि ॥ २७१ ॥ तस्मान्मया विस्तरेण नोक्तमत्र नृपोत्तम । परं भागवतं धर्मं विस्तरेण ब्रवीमि ते ॥२७२॥ विष्णोरभ्यर्चनं यत्तु नित्यं नैमित्तिकं नृप । यदाह भगवान्धातुस्तेन स्वायंभुवस्य च ॥ २७३ ॥ नारदस्य च ये सम्यक्तदद्य कथयामि ते ॥ २७४ ॥

इति श्रीवृद्धहारीतस्मृतौ विशिष्टपरमधर्मशास्त्रे प्रासकालभगवत्समाराधन-
विधिर्नाम सप्तमोऽध्यायः ॥ ७ ॥

---

(अथाष्टमोऽध्यायः ।)

अम्बरीष उवाच—

भगवन्ब्रह्मणा यत्तु संप्रोक्तं स्यान्मनोः पुरा । तत्सर्वं परमं धर्मं वक्तुमर्हसि मेऽनघ ॥१॥

हारीत उवाच—

सर्गादौ लोककर्ताऽसौ भगवान्पद्मसंभवः । मन्वादिप्रमुखान्विप्रान्ससृजे धर्मगुप्तये ॥ २ ॥ मनुर्भृगुर्वसिष्ठश्च मरीचिर्दक्ष एव च । अङ्गिराः पुलहश्चैव पुलस्त्योऽत्रिर्महातपाः ॥ ३ ॥ वेदान्तपारगास्ते च तं प्रणम्य जगद्गुरुम् । भगवन्परमं धर्मं भवबन्धापनुत्तये ॥४॥ वद सर्वमशेषेण श्रोतुमिच्छामहे वयम् ॥५॥ इत्युक्तः स द्विजैः सोऽपि ब्रह्मा नत्वा जनार्दनम् । वेदान्तरगोचरं धर्मं तेषां वक्तुं प्रचक्रमे ॥ ६ ॥ सर्वेषामेव लोकानां स्रष्टा धाता जनार्दनः । सर्ववेदान्ततत्त्वार्थः सर्वयज्ञमयः प्रभुः ॥ ७ ॥ यज्ञो वै विष्णुरित्यत्र प्रत्यक्षं श्रूयते श्रुतिः । इज्यते यत्तमुद्दिश्य परमो धर्म उच्यते ॥ ८ ॥ भगवन्तमनुद्दिश्य हूयते यत्र कुत्र वै । तत्र हिंसाफलं पापं भवेदत्र विगर्हितम् ॥९॥ तस्मात्सर्वस्य यज्ञस्य भोक्तारं पुरुषं हरिम् । ध्यात्वैव जुहुयात्तस्मै हव्यं दीप्ते हुताशने ॥ १० ॥ मुखमग्निर्भगवतो विष्णोः सर्वगतस्य वै । तस्मिन्नेव यजन्नित्यमुत्तमं मुनिसत्तमाः ॥ ११ ॥ यजेदग्निमुखे शक्त्या जलमन्नं फलादिकम् । प्रीतये वासुदेवस्य सर्वभूतनिवासिनः ॥ १२ ॥

---

१ ख. °लोक्य त । २ क. °रीतान्द° । ३ क. तत्तस्मात्सर्वय° । ४ क. परम् ।

तमेव चार्चयेन्नित्यं नमस्कुर्यात्तमेव हि। ध्यात्वा जपेत्तमेवेशं तमेव ध्यापयेद्धृदि ॥ १३ ॥ तन्नामैव प्रगातव्यं वाचा वक्तव्यमेव च। व्रतोपवासनियमांस्तमुद्दिश्यैव कारयेत् ॥ १४ ॥ तत्समर्पितभोगः स्यादन्नपानादिभक्षणैः। मतिः स्वार्थः स्वदारेषु नेतरत्र कदाचन ॥ १५ ॥ न हिंस्यात्सर्वभूतानि यज्ञेषु विधिना विना। सोऽहं दासो भगवतो मम स्वामी जनार्दनः।एवंवृत्तिर्भवेदस्मिन्स धर्मः परमो मतः ॥१६॥ एष निष्कण्टकः पन्थास्तस्य विष्णोः परं पदम्। अन्यत्तु कुपथं ज्ञेयं निरयप्राप्तिहेतुकम् ॥ १७ ॥ भगवन्तमनुद्दिश्य यः कर्म कुरुते नरः। स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः ॥ १८ ॥ यो हि विष्णुं परित्यज्य सर्वलोकेश्वरं हरिम्। इतरानर्चते मोहात्स लोकायतिकः स्मृतः ॥ १९ ॥ * श्रुतिस्मृत्युदितं धर्ममकृत्वा यश्चरेन्नरः। विकर्मस्थः स विज्ञेयः सर्वकर्मसु गर्हितः ॥ २० ॥ यो देवार्थं गर्हयति धर्माधर्मौ न विन्दति। न बुध्येत्परलोकं यः स नास्तिक उदाहृतः ॥ २१ ॥ उक्तधर्मं परित्यज्य यो ह्यधर्मे च वर्तते। पतितः स तु विज्ञेयः सर्वधर्मबहिष्कृतः ॥२२ यः कर्म कुरुते विप्रो विना विष्ण्वर्चनं क्वचित्। ब्राह्मण्याद्भ्रश्यते सद्यश्चण्डालत्वं स गच्छति ॥ २३ ॥ ब्राह्मणो वैष्णवो विप्रो गुरुर्विप्रश्च वेदवित्। पर्यायेण च विद्येत नामानि क्ष्मासुरस्य च ॥ २४ ॥ तस्मादवैष्णवत्वेन विप्रत्वाद्भ्रश्यते हि सः। अर्चयित्वाऽपि गोविन्दमितरानर्चयेत्पृथक् ॥ २५ ॥ अवैष्णवत्वं तस्यापि मिश्रभक्त्या भवेद्ध्रुवम्। भोक्तारं सर्वयज्ञानां सर्वलोकेश्वरं हरिम्। ज्ञात्वा तत्प्रीतये सर्वाञ्जुहुयात्सततं हविः ॥ २६ ॥ दानं तपश्च यज्ञश्च त्रिविधं कर्म कीर्तितम्। तत्सर्वं भगवत्प्रीत्यै कुर्वीत सुसमाहितः ॥ २७ ॥ तस्मात्तु वैष्णवा विप्राः पूजनीया यथा हरिः ॥ २८ ॥ ये तु वै हेतुकं वाक्यमाश्रित्यैव स्ववाग्बलात्। वैष्णवं प्रतिषिध्यन्ति ते लोकायतिकाः स्मृताः ॥ २९ ॥ यो यत्तु वैष्णवं लिङ्गं धृत्वा च तमसाऽऽवृतः। त्यजेच्चैद्वैष्णवं[3] धर्मं सोऽपि पाषण्डतां व्रजेत् ॥ ३० ॥ तस्मात्तु वैष्णवो भूत्वा वैदिकीं वृत्तिमाश्रितः। कुर्वीत भगवत्प्रीत्यै कुर्याद्यज्ञादि कर्म यत् ॥ ३१ ॥ तद्विशिष्टमिति[4] प्रोक्तं सामान्यमितरं स्मृ(रत्स्मृ)तम्। फलहीना भवेत्सा तु सामान्या वैदिकी क्रिया ॥ ३२ ॥ तोयवर्जितवापीव निरर्थी भवति ध्रुवम्। नैसर्गिकं तु जीवानां

---

* इत आरभ्य उदाहृत इत्यन्तं न विद्यते ख. पुस्तके।

---

१ क. °क्षणे। म°। २ ख. °रुरप्यथ। ३ क. °जेच्च वैदिकं ध°। ४ ख. °दिकाकि°।

दास्यं विष्णोः सनातनम् ॥३३॥ तद्विना वर्तते मोहादात्मचारः सनातनात् । तस्मात्तु भगवद्दास्यमात्मनां श्रुतिचोदितम् ॥३४॥ दास्यं विना कृतं यत्तु तदेव कलुषं भवेत्। विशिष्टं परमं धर्मं दास्यं भगवतो हरेः ॥ ३५ ॥

ऋषय ऊचुः—

कथं दास्यं हि तद्वृत्तिः कथं नैसर्गिकं नृणाम् । तत्सर्वं ब्रूहि तत्त्वेन लोकानुग्रहकाम्यया ॥ ३६ ॥

ब्रह्मोवाच—

सुदर्शनोर्ध्वपुण्ड्रादिधारणं दास्यमुच्यते । *तान्त्रिकी वैदिकी या च तदी(दी)क्षा चोदितक्रिया ॥ ३७ ॥ तत्राप्याराधनत्वेन कृता पापस्य नाशिनी । निरू[1]पणत्वाद्दास्यस्य धार्यं चक्रं महात्मनः ॥ ३८ ॥ अङ्गत्वात्सर्वधर्माणां वैष्णवत्वाच्च धर्मतः । +धृत्वा वै विधिना चक्रं हरेस्तप्तं द्विजोत्तमाः ॥ ३९ ॥ कर्म कुर्याद्भगवतस्तस्यैवाऽऽज्ञामनुस्मरन् । विधिनैव प्रतप्तेन चक्रेणैवाङ्कयेद्भुजे ॥ ४० ॥ तथैव बिभृयाद्भाले पुण्ड्रं शुभ्रतरं मृदा । बिभृयादुपवीतं तु सव्यस्कन्धे विधानतः ॥ ४१ ॥ कण्ठे पद्माक्षमाला च कौशेयं दक्षिणे करे । एभिश्चिह्नैर्विना विप्रो न भवेद्धि कथंचन ॥४२॥ स[2] लभेत्कर्मणां सिद्धिं वैदिकानां विशेषतः। आश्रमाणां चतुर्णां च स्त्रीणां च श्रुतिचोदनात् । अङ्कयेच्छङ्खचक्राभ्यां प्रतप्ताभ्यां विधानतः ॥ ४३ ॥ एकैकमुपवीतं तु यतीनां ब्रह्मचारिणाम् । गृहिणां च वनस्थानामुपवीतद्वयं स्मृतम् ॥ ४४ ॥ सोत्तरीयं त्रयं वाऽपि बिभृयाच्छुभ्रतन्तुं[3] वा ॥ ४५ ॥ त्रयमूर्ध्व[4]द्वयं तन्तु तन्तुत्रयमधोवृतम् (?) । त्रिवृच्च ग्रन्थिनैकेन उपवीतमिहोच्यते ॥ ४६ ॥ अर्ककार्पासकौशेयक्षौमं[5]शाणमयानि च । तन्तूनि चोप[6]वीतानां योज्यानि मुनिसत्तमाः ॥ ४७ ॥ सर्वेषामप्यलाभे तु कुर्यात्कुशमयं द्विजः । ऐणेयमुत्तरीयं स्याद्वनस्थब्रह्मचारिणाम् ॥ ४८ ॥ शुक्लकाषायवसने गृहस्थस्य यतेः क्रमात् । उक्तालाभेषु सर्वेषां कुशचीरं विशिष्यते ॥ ४९ ॥ मौञ्जी वै मेखला दण्डं पालाशं ब्रह्मचारिणः। त्रयस्तु वैणवा दण्डा यतेः काषायवाससी ॥ ५० ॥ कुशचीरं वल्कलं वा वनस्थस्य विधीयते। = कटीसूत्रं च कौपीनं मद्दच्च शुक्लवाससा ॥५१॥ कुण्डले चाङ्गुलीयानि गृहस्थस्य विधीयते। मुँ[7]ण्डिनौ सूक्ष्मशिखिनौ यत्यन्तेवासिनावुभौ ॥ ५२ ॥

---

* एतदर्धस्थानेऽयं पाठः ख पुस्तके " तद्विधिर्वैदिकी या च तदाज्ञा चोदिता क्रिया " इति । + एतदर्धं न ग. पुस्तके । = एतदाद्यर्धद्वयं न विद्यते क. पुस्तके ।

---

१ क 'रूपिणत्वादास्यत्वं धा°' । २ ख. न । ३ ख °न्तुना । त्र° । ४ क. °र्ध्वगतं तन्तु ने तत्त्रय° । ५ ख 'मत्तोण' । ६ क °पजीवाना । ७ क. मुण्डितौ ।

वानप्रस्थो जटी वा स्यात्सदा वै श्मश्रुरोमधृत् । सुकेशी सुशिखो वा स्याद्गृहस्थः सौम्यवेषवान् ॥ ५३ ॥ यतिश्च ब्रह्मचारी च उभौ भिक्षाशिनौ स्मृतौ । शाकमूलफलाशी स्याद्वनस्थः सततं द्विजः ॥ ५४ ॥ कुसूलकुम्भधान्यो वा त्र्याहिको वा भवेद्गृही । प्रतिग्रहेण सौम्येन जीवेद्यायावरेण वा ॥ ५५ ॥ यस्त्वेकं दण्डमालम्ब्य धर्मं ब्राह्मं परित्यजेत् । विकर्मस्थो भवेद्विप्रः स याति नरकं ध्रुवम् ॥५६॥ शिखायज्ञोपवीतादि ब्रह्मकर्म यतिस्त्यजेत् । स जीवन्नेव चण्डालो मृतः श्वानोऽभिजायते ॥५७॥ स्वरूपेणैव धर्मस्य त्यागो हानिर्भवेद्ध्रुवम् । कर्मणां फलसंत्यागः संन्यासः समुदाहृतः ॥५८॥ अनाश्रितः कर्मफलं कृत्यं कर्म समाचरेत् । स संन्यासी च योगी च स मुनिः सात्त्विकः स्मृतः ॥ ५९ ॥ तुष्ट्यर्थं वासुदेवस्य धर्मं वै यः समाचरेत् । *स योगी परमेकान्तं हरेः प्रियतमो भवेत् ॥ ६० ॥ मोहाद्दास्यं विना विष्णोः किंचित्कर्म समाचरेत् । न तस्य फलमाप्नोति तामसीं गतिमश्नुते ॥६१॥ हित्वा यज्ञोपवीतं तु हित्वा चक्रस्य धारणम् । हित्वा शिखोर्ध्वपुण्ड्रं च विप्रत्वाद्भ्रश्यते ध्रुवम् ॥ ६२ ॥ पञ्चसंस्कारपूर्वेण मन्त्रमध्यापयेद्गुरुः । संस्काराः पञ्च कर्तव्याः पारमैकान्त्यसिद्धये ॥६३॥ प्रतिसंवत्सरं कुर्यादुपाकर्म ह्यनुत्तमम् । सर्ववेदव्रतं कृत्वा तत्र संपूजयेद्धरिम् ॥६४॥ दद्याद्यज्ञोपवीतानि विष्णवे परमात्मने । ब्राह्मणेभ्यश्च दत्त्वाऽथ बिभृयात्स्वयमेव च ॥ ६५ ॥ तदग्नौ पूज्य संतर्प्य चक्रं चैवाङ्कयेद्भुजे । एवं प्रत्याब्दिकं धार्यमुपवीतं सुदर्शनम् ॥ ६६ ॥ पुण्ड्रास्तु प्रतिसंध्यं तु नित्यमेव च धारयेत् । द्वारवत्युद्भवं गोपीचन्दनं वेङ्कटोद्भवम् ॥ ६७ ॥ सान्तरालं प्रकुर्वीत पुण्ड्रं हरिपदाकृतिम् । श्राद्धकाले विशेषेण कर्ता भोक्ता च धारयेत् ॥ ६८ ॥ × सुदर्शनं चोर्ध्वपुण्ड्रं प्रधानं वैष्णवं स्मृतम् । न लभ्यते वैष्णवत्वमृते चक्रस्य धारणात् ॥ ६९ ॥ अर्थपञ्चकतत्त्वज्ञः पञ्चसंस्कारदीक्षितः । महाभागवतो विप्रः सततं पूजयेद्धरिम् ॥ ७० ॥

---

* एतदाद्यर्धद्वयं न क. पुस्तके । × एतद्वचनं न विद्यते ख पुस्तके ।

---

१ ख. °स्थो यतिर्वा स्या° । २ ख °क्षाशनौ । ३ क °स्त्वेकद° । ४ क. धर्म्यं । ५ क परिग्रजेत् । ६ ख स उदा° । ७ क. यत्र । ८ ख प्रात्याह्निकं । ९ ख. °ति । श्रा° ।

नारायणः परं ब्रह्म विप्राणां दैवतं सदा । तस्य भुक्तावशेषं तु पावनं मुनिसत्तमाः ॥ ७१ ॥ हरिभुक्तोज्झितं दद्यात्पितॄणां च दिवौकसाम् । तदेव जुहुयाद्वह्नौ भुञ्जीयात्तु तदेव हि ॥ ७२ ॥ हरेरनर्पितं यत्तु देवानामर्पितं च यत् । मद्यमांससमं प्रोक्तं तद्भुञ्जीयात्कदा च न ॥ ७३ ॥ हरेः पादजल प्राश्यं नित्यं नान्यदिवौकसाम् । सुराणामितरेषां तु फलपुष्पजलादिकम् ॥ ७४ ॥ निर्माल्यमशुभं प्रोक्तमस्पृश्यं हि कदाचन । विधिर्ह्येष द्विजातीनां नेतरेषां कदाचन ॥ ७५ ॥ शिवार्चनं त्रिपुण्ड्रं च शूद्राणां चैं विधीयते । तद्विशानामिदं ये च विप्राः शिवपरायणाः ॥ ७६ ॥ ते वै देवलका ज्ञेयाः सर्वकर्मबहिष्कृताः ॥ ७७ ॥ वैखानसास्तु ये विप्रा हरिपूजनतत्पराः । न ते देवलका ज्ञेया हरिपादाब्जसंश्रयात् ॥ ७८ ॥ नापहृत्य हरेर्द्रव्यं ग्रामार्चनपरो भवेत् । भक्त्या संपूज्य देवशं नासौ देवलकः स्मृतः ॥ ७९ ॥ भक्त्या योऽप्यर्चयेद्देवं ग्रामार्चे हरिमव्ययम् । प्रसादतीर्थस्वीकारान्नासौ देवलकः स्मृतः ॥ ८० ॥ शङ्खचक्रोर्ध्वपुण्ड्रादिधारणं स्मरणं हरेः । तन्नामकीर्तनं चैव तत्पादाम्बुनिषेवणम् ॥ ८१ ॥ तत्पादवन्दन चैव तन्निवेदितभोजनम् । एकादश्युपवासश्च तुलस्यैवार्चनं हरः ॥ ८२ ॥ तदीयानामर्चनं च भक्तिर्नवविधा स्मृता । एतैर्नवविधैर्युक्तो वैष्णवः प्रोच्यते बुधैः ॥ ८३ ॥ एतैर्गुणैर्विहीनस्तु न विप्रो न च वैष्णवः । कर्मणा मनसा वाचा न प्रमाद्येज्जनार्दनम् ॥ ८४ ॥ भक्तिः सा सात्त्विकी ज्ञेया भवेदव्यभिचारिणी । नान्यं देवं नमस्कुर्यान्नान्यं देवं प्रपूजयेत् ॥ ८५ ॥ नान्यप्रसादं भुञ्जीत नान्यदायतनं विशेत् । न त्रिपुण्ड्रं तथा कुर्यात्पदाकारं तथैव च ॥ ८६ ॥ न चान्यदेवताभक्तिरापद्यपि कदाचन । ध्यायन्यजनमेशं वै वैष्णवत्वमवाप्नुयात् ॥ ८७ ॥ वैष्णवः सर्वदेवानां पूजनीयो यथा हरिः । तस्मिन्संपूज्यमाने वै प्रसन्नोऽभूद्धरिः क्षणात् ॥ ८८ ॥ पूजिते वैष्णवे विप्रे पूजितं स्याज्जगत्त्रयम् । यतिर्यस्य गृहे भुङ्क्ते तस्य भुङ्क्ते हरिः स्वयम् ॥ ८९ ॥ हरिर्यस्य गृहे भुँङ्क्ते तस्य भुङ्क्ते जगत्त्रयम् । महाभागवतो विप्रः सततं पूजयेद्धरिम् ॥ ९० ॥ पाञ्चकल्पविधानेन निमित्तेषु विशेषतः । अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ॥ ९१ ॥ षट्सु तेषु हरेः पूजा नित्यमेव विशेषतः । स्नानकाले तु संप्राप्ते नद्यां पुण्यजले शुभे ॥ ९२ ॥ ध्यात्वा नारायणं देवं नागपर्यङ्कशायिनम् । द्वादशार्णेन मनुना सोऽर्चयित्वाऽऽक्षतादिभिः ॥ ९३ ॥ अष्टोत्तरशतं जप्त्वा ततः स्नानं समाचरेत् । एतदेवार्चनं प्रोक्तं ब्राह्मणस्य जगत्पतेः ॥ ९४ ॥

---

१ क °यणपदं ब्र° । २ ख °क्तोऽपि तं । ३ क °क्तं न त° । ४ ख तु । ५ क ग्रामार्चा । ६ ख. °त्पद्याकारं जगत्त्र° । ७ भुक्तो यस्य भु° । ८ ख. विधीयते ।

होमकाले तु सततं परिस्तीर्यानलं शुभम्। यज्ञरूपं महात्मानं चिन्तयेत्पुरुषोत्तमम् ॥ ९५ ॥ साङ्गत्रयीमयं शुद्धं दिव्याङ्गोपाङ्गशोभितम्। सर्वलक्षणसंपन्नं शुद्धजाम्बूनदप्रभम् ॥ ९६ ॥ युवानं पुण्डरीकाक्षं शङ्खचक्रधनुर्धरम्। सर्वयज्ञमयं ध्यायेद्वामाङ्काश्रितपद्मया ॥ ९७ ॥ संपूज्य चाक्षतैरेव पश्चाद्धोमं समाचरेत्। प्राणाग्निहोत्रसमये सम्यगाचम्य वारिणा ॥ ९८ ॥ कुशासने समासीनः प्राग्वा प्रत्यङ्मुखोऽपि वा। परिषिच्यासमा( च्याथ चाऽऽ )त्मानं प्राणायामं समाचरेत् ॥ ९९ मन्त्रेणोद्बुध्य हृदये पङ्कजं केशरान्वितम्। तस्मिन्वह्न्यर्कशीतांशुबिम्बान्यनुविचिन्तयेत् ॥ १०० ॥ सर्वाक्षरमयं दिव्यं रत्नपीठ तदुत्तरे। तन्मध्येऽष्टदलं पद्मं ध्यायेत्कल्पतरोरधः ॥ १०१ ॥ वीरासने समासीनं तस्मिन्नीशं विचिन्तयेत्। स्निग्धदूर्वादलश्यामं सुन्दरं भूषणैर्युतम् ॥ १०२ ॥ पीताम्बरं युवानं च चन्दनस्रग्विभूषितम्। शरत्पद्मासनं रक्तपद्माभाङ्घ्रिकरद्वयम् ॥ १०३ ॥ स्निग्धवर्णं महाबाहुं विशालोरस्कमव्ययम्। चक्रशङ्खगदाबाणपाणिं रघुवरं हरिम् ॥ १०४ ॥ जानकीलक्ष्मणोपेत मनसैवार्चयेद्विभुम्। मन्त्रद्वयेनार्चयित्वा जप्त्वा चैव षडक्षरम् ॥ १०५ ॥ पश्चाद्वै जुहुयात्पञ्च प्राणानभ्यर्च्य तं पुनः। ध्यायन्वै मनसा विष्णुं सुखं भुञ्जीत वाग्यतः ॥ १०६ ॥ एवं ह्यर्चनं विष्णोरुत्तमं मुनिसत्तमाः। अत्यन्ताभिमता विष्णोर्हृत्पूजा परमात्मनः ॥ १०७ ॥ संध्याकाले तु संप्राप्ते रविमण्डलमध्यगम्। हिरण्यगर्भं पुरुषं हिरण्यवपुषं हरिम् ॥ १०८ ॥ श्रीवत्सकौस्तुभोरस्कं वैजयन्तीविराजितम्। शङ्खचक्रादिभिर्युक्तं भूषितैर्दोर्भिरायतैः ॥ १०९ ॥ शुक्लाम्बरधरं विष्णुं मुक्ताहारैर्विभूषितम्। ध्यात्वा समर्चयेद्देवं कुसुमैरक्षतैरपि ॥ ११० ॥ प्रणवेन च सावित्र्या पश्चात्सूक्तं निवेदयेत्। ध्यायन्नेवं जपेद्विष्णुं गायत्रीं भक्तिसंयुतः ॥ १११ ॥ तथैवाभ्यर्च्य गोविन्दं नमस्कृत्वा( त्य ) विसर्जयेत्। एवमभ्यर्च्य देवेशं त्रिसंध्यासु तथा हरिम् ॥ ११२ ॥ वैश्वदेवावसाने तु पुरस्ताद्वै विभावसोः। उपलिप्य स्थण्डिले तु जुहुयाद्बलिकर्म तत् ॥ ११३ ॥ ध्यात्वा सर्वगतं विष्णुं घनश्यामं सुलोचनम्। कौस्तुभोद्भासितोरस्कं तुलसीवनमालिनम् ॥ ११४ ॥ पीताम्बरधरं देव रत्नकुण्डलशोभितम्। हरिचन्दनलिप्ताङ्गं पुण्डरीकायतेक्षणम् ॥ ११५ ॥ मौक्तिकान्वितनासाग्रं जगन्मोहनविग्रहम्। गोपीजनैः परिवृत वेणु गायन्तमच्युतम् ॥ ११६ ॥ ध्यात्वा कृष्णं जगन्नाथं पूजयित्वा यथाविधि। जुहुयाद्धरिचक्रं तदेवानुदिश्य सत्तमाः ॥ ११७ ॥ जप्त्वा कृष्णमनुं पश्चादभ्यर्च्य मनसा हरिम्। आचम्य प्रयतो भूत्वा नमस्कृत्य विसर्जयेत् ॥ ११८ ॥

---

१ ख. शुभ्रदि°। २ ख. परिष्यासनमा°। ३ ख. °दयप°। ४ ख. दिव्यर°। ५ क. °सने र°। ६ ख रत्नप°। ७ क. °ङ्खधनुर्बाणपाणिनं स्वव°। ८ क °यत्नीम°। ९ ख. विवर्जयेत्। १० ख. °भ्यर्चयेद्देवं त्रि°। ११ ख °द्भक्तिक°। १२ क. °वं त्रिसंध्याशोभितं हरिम्। १३ क °याद्बलिं चक्र गदना°।

स्थण्डिलेऽभ्यर्चनं विष्णोरेवं कुर्याद्विधानतः । त्रिसंध्यामर्चयेद्विष्णुं प्रतिमासु विशेषतः ॥ ११९ ॥ सुवर्णरजताद्यैर्वा शिलादार्वादिनाऽपि वा । कृत्वा बिम्बं हरेः सम्यक्सर्वावयवसंयुतम् ॥ १२० ॥ सर्वलक्षणसंपन्नं सर्वायुधसमन्वितम् । ततोऽधिवासनं कुर्यात्त्रिरात्रं शुद्धवारिषु ॥ १२१ ॥ तत्रार्चयेद्विधानेन जपहोमादिकर्मभिः । स्नाप्य पञ्चामृतैर्गव्यैस्तथा मन्त्रजलैरपि ॥ १२२ ॥ यज्ञवेद्यां समारोप्य पूजयेत्तत्र दीक्षितः । मङ्गलद्रव्यसंयुक्तैः पूर्णकुम्भैः समन्वितैः ॥ १२३ ॥ शरावैर्द्रव्यसंपूर्णैः पताकैस्तोरणादिभिः । कुम्भेषु वासुदेवादीन्सुरान्संपूजयेत्क्रमात् ॥ १२४ ॥ वासुदेवो हयग्रीवस्तथा संकर्षणो विभुः । महावराहः प्रद्युम्नो नारसिंहस्तथैव च ॥ १२५ ॥ अनिरुद्धो वामनश्च पूजनीया यथाक्रमात् । तस्य पूर्णशरावेषु लोकेशानर्चयेत्ततः ॥ १२६ ॥ मध्ये तु वारुणं कुम्भं पञ्चरत्नसमन्वितम् । पूजयेद्गन्धपुष्पाद्यैर्ध्यात्वाऽस्मिञ्जलशायिनम् ॥ १२७ ॥ ततः संपूजयेद्देवं धान्योपरि निधाय च । व्याघ्रचर्म समास्तीर्य तस्मिन्कौशेयवाससि ॥ १२८ ॥ निवेद्य(श्य) पूजयेद्बिम्बं मूलमन्त्रेण वैष्णवः । तोरणेषु चतुर्दिक्षु चण्डादीनर्चयेत्तथा ॥ १२९ ॥ कुमुदादिसुरान्दिक्षु तथा धर्मादिदेवताः । संपूज्य विधिना तस्मिन्पश्चाद्धोमं समाचरेत् ॥ १३० ॥ आग्नेयं कल्पयेत्कुण्डं मेखलाद्युपशोभितम् । अश्वत्थाद्वा शमीगर्भादाहृत्याग्निं विनिक्षिपेत् ॥ १३१ ॥ वैष्णवस्य गृहाद्वाऽपि समानीयानलं द्विजः । गृह्योक्तविधिने(नै)वात्र प्रतिष्ठाप्य हुताशनम् ॥ १३२ ॥ इध्माधानादिपर्यन्तं कृत्वा होमं समाचरेत् । पायसेन गवाज्येन तिलैर्व्रीहिभिरेव च ॥ १३३ ॥ चतुर्भिर्वैष्णवैः सूक्तैः पायसं जुहुयाद्धविः । हिरण्यगर्भसूक्तेन श्रीसूक्तेन तथैव च ॥ १३४ ॥ अहं रुद्रेभिरिति वा गवाज्यं जुहुयात्ततः । त्वमग्ने द्युभिरिति च सूक्तेन प्रत्यृचं तिलैः ॥ १३५ ॥ अस्य वामेति सूक्तेन प्रत्यृचं व्रीहिभिस्तथा । अग्निं नरो दीधितिभिः सूक्तेन प्रत्यृचं तथा ॥ १३६ ॥ समिद्भिः(ध्मैः) पिप्पलीरौद्रै(लस्याऽऽर्द्रै)र्होतव्यं मुनिसत्तमाः । अष्टोत्तरं सहस्रं वा शतमष्टोत्तरं तु वा ॥ १३७ ॥ होतव्यमाज्यं पश्चात्तु तथा मन्त्रचतुष्टयम् । वैकुण्ठपार्षदं होमं पायसेन घृतेन वा ॥ १३८ ॥ समाप्य होमं हविषः शेषं तस्मै निवेदयेत् । चतुर्मन्त्रांश्चतुर्वेदांश्चतुर्दिक्षु जपेत्ततः ॥ १३९ ॥ तत्र जागरणं कुर्याद्गीतवादित्रनर्तकैः(नैः) । रजन्यां तु व्यतीतायां तु स्नात्वा नद्यां विधानतः ॥ १४० ॥ वैकुण्ठतर्पणं कुर्याद्दत्विग्भिर्ब्राह्मणैः सह । तर्पयित्वा पितॄन्देवान्वाग्यतो गृहमाविशेत् ॥ १४१ ॥ आचम्य पूर्ववत्पूजां कृत्वा होमं समाचरेत् । जुहुयाद्ब्र(द्ब्र)ह्मणस्पत्यैः सूक्तैश्च घृतपायसम् ॥ १४२ ॥

१ ख. °वशोभित° । २ क °जप्त्वा नामा° । ३ ख यज्ञपेद्या स° । ४ ख. समन्वित. । ५ क. समास्थाय । ६ ख. °तदा । कु° । ७ ख °त्याग्नौ वि° । ८ क °धिना वा° । ९ ख त्रिभिः । १० ख. °तरस° । ११ ख. °तो भवनं वि° । १२ ख. °ह्मण. स्तुत्यै. सू° ।

पौरुषेण तु सूक्तेन श्रीसूक्तेन तथैव च । वैकुण्ठपार्षदं हुत्वा कर्मशेषं समापयेत् ॥ १४३॥ नयनोन्मीलनं कुर्यात्सुमुहूर्तेन वैष्णवः । महाभागवतश्रेष्ठः सूक्ष्महेमशलाकया ॥ १४४॥ द्वयेनैव प्रकुर्वीत नयनोन्मीलनं हरेः । निवेश्य भद्रपीठे तु स्नापयेत्सुसमाहितः ॥ १४५॥ सर्वैश्च वैष्णवैः सूक्तैर्ऋत्विजः कलशोदकैः । ततस्तु मध्यमं कुम्भमादाय द्विजसत्तमः ॥ १४६ ॥ स्नापयेन्मन्त्ररत्नेन शतवारं समाहितः । सौवर्णेन च ताम्रेण शङ्खेन रजतेन वा ॥ १४७ ॥ स्नाप्य पञ्चामृतैर्गव्यैरुद्धृत्य शुभचन्दनैः । मन्त्रेण स्नापयित्वा तु तुलसीमिश्रितैर्जलैः ॥ १४८ ॥ वासोभिर्भूषणैः सम्यगलंकृत्य च वैष्णवः । उपचारैः समभ्यर्च्य पश्चान्नीराजयेत्तदा ॥ १४९ ॥ अलंकृते शुभे गेहे पीठे संस्थापयेद्धरिम् । सूक्तेनोत्तानपादस्य दृढं स्थाप्य सुखासने ॥ १५० ॥ अष्टोत्तरशतं(त) वारं शुभमन्त्रचतुष्टयात् । ध्यात्वा पुष्पाञ्जलिं दद्यान्महाभागवतोत्तमः ॥ १५१ ॥ नत्वा गुरुं परं धाम्नि स्थितं देवं जनार्दनम् । ध्यात्वैवं मन्त्ररत्नेन तस्मिन्बिम्बे निवेशयेत् ॥ १५२ ॥ अर्चयित्वोपचारैस्तु मङ्गलानि निवेदयेत् । * दर्पणं कपिलां कन्यां शङ्खं दूर्वाक्षतान्पयः ॥ १५३ ॥ सौवर्णमाज्यं लाजांश्च मधु सर्षपमञ्जनम् । एवं त्रयोदशे मासि मङ्गलानि निवेदयेत् । तथैव दश मुद्रास्तु मन्त्रेणैव समीक्षयेत् ॥ १५४ ॥ तद्विधं मूर्तिमन्त्रेण पश्चाद्दशशतानि तु । पुष्पाणि दद्याद्भक्त्या च जपेच्च सुसमाहितः ॥ १५५ ॥ सतिलैस्तण्डुलैः शुभ्रैर्जुहुयाच्च द्विजोत्तमाः । आशिषो वाचनं कृत्वा दीपैर्नीराजयेत्तदा ॥ १५६ ॥ भोजयित्वा ततो विप्रान्दक्षिणाभिश्च तोषयेत् । आचार्यमृत्विजश्चापि विशेषेण समर्चयेत् ॥ १५७ ॥ तदग्निं×संग्रहेन्नित्यं होमार्थं परमात्मनः । त्रिरात्रमुत्सवं तत्र कुर्याच्छक्त्या यतात्मवान् ॥ १५८ ॥ वैष्णवैः पावमानैश्च तत्र पुष्पाञ्जलिं चरेत् । आज्येन चरुणा वाऽपि होमं कुर्वीत वैष्णवः ॥ १५९ ॥ प्रत्यहं भोजयेद्विप्रान्वैष्णवान्घृतपायसम् । तन्मूर्तिप्रीतये शक्त्या दद्याद्वासांसि दक्षिणाः ॥ १६० ॥ कुर्यादवभृथेष्वेवं महाभागवतैः सह । सहस्रनामभिर्विष्णोः सूक्तैर्विष्णुप्रकाशकैः । नद्यामवभृथं कृत्वा तर्पयेत्पितृदेवताः ॥ १६१ ॥ अस्यवामेति सूक्तेन पायस मधुसंयुतम् । आज्येन मूलमन्त्रेण सहस्रं जुहुयात्तदा ॥ १६२ ॥ आशिषो वाचनं कृत्वा भोजयेद्द्विजसत्तमान् । एवं संस्थापयेद्देवमर्चयेद्विधिना सह ॥ १६३ ॥ गृहार्चायां स्थापने तु लघुतन्त्रं समाचरेत् । अधिवासनवेद्यादिमन्त्रतन्त्रं विवर्जयेत् ॥ १६४ ॥ एकत्र पञ्चगव्येषु विनिक्षिप्य परेऽहनि ।

* इत आरभ्य निवेदयेदित्यन्तं न क पुस्तके । × विकरणव्यत्ययः ।

१ ख. °तस्तन्मध्य° । २ क °न्त्रवस्त्वेन । ३ क °र पृथग्मन्त्र° । ४ ख. गुरून्परं । ५ ख सनातनम् । ६ ख तद्‌विम्बमू° । ७ ख. °पापमामुश्च । ८ ख थेष्टि च म° । ९ ख तदा । १० क अदिवासने वे° । ११ ख. °नमेद्या° । १२ ख. °न्त्रमत्र वि° ।

पञ्चामृतैः स्नापयित्वा पश्चादुद्वर्तनादिकम् ॥ १६५ ॥ आदाय कलशं शुद्धं पवित्रोदकपूरितम् । निक्षिप्य पञ्च रत्नानि सुवर्णं तुलसीदलम् ॥ १६६ ॥ चन्दनाक्षतदूर्वाश्च तिलान्धात्रीं च सर्षपम् । अभिमन्त्र्य कुशैः पश्चान्मन्त्ररत्नेन वैष्णवः ॥१६७॥ शतवारं सहस्रं वा मन्त्रेणैवाभिषेचयेत् । सर्वैश्च वैष्णवैः सूक्तैर्गायत्र्या वैष्णवेन च ॥ १६८ ॥ नामभिः केशवाद्यैश्च सर्वैर्मन्त्रैश्च वैष्णवैः । स्नाप्य मन्त्रैर्भूषणैश्च शुभे धान्ये निवेशयेत् ॥ १६९ ॥ स्थण्डिलेऽग्निं प्रतिष्ठाप्य इध्माधानादि पूर्ववत् । होमं कुर्याद्गवाज्येन पायसान्नेन वैष्णवः॥ १७० ॥ कर्तुरौपासनाग्नौ तु होममत्र(तन्त्रे) विशिष्यते । प्रत्यृचं वैष्णवैः सूक्तैर्जुहुयाद्घृतपायसम् ॥ १७१ ॥ अस्यवामेति सूक्तेन गवाज्यं जुहुयात्ततः । मन्त्ररत्नेन जुहुयादष्टोत्तरसहस्रकम्॥१७२॥तद्बिम्बमूर्तिमन्त्रेण तिलहोमं तथैव च । अविज्ञातस्तु(ते तु) तन्मन्त्रं (न्त्रे) मूलमन्त्रेण वा यजेत् ॥१७३॥ यजेच्छ्रीभ्रू(भू)प्रकाशैश्च गायत्र्या विष्णुसंज्ञया । वैकुण्ठपार्षदं होमं कृत्वा होमं समापयेत् ॥ १७४ ॥ नयनोन्मीलनं कृत्वा सौवर्णेन कुशेन वा । निवेश्याऽऽवाहयेत्पीठे मन्त्ररत्नेन वैष्णवः ॥ १७५ ॥ मन्त्रेणैवार्चनं कृत्वा पश्चात्पुष्पाञ्जलिं यजेत् । तस्मिन्बिम्बे तु तन्मूर्तिं ध्यात्वा नियतमानसः ॥ १७६ ॥ अष्टोत्तरसहस्रं तु दद्यात्पुष्पाञ्जलिं ततः। सर्वैश्च वैष्णवैः सूक्तैर्दद्यात्पुष्पाणि वैष्णवः ॥ १७७ ॥ ब्राह्मणान्भोजयेत्पश्चात्पायसान्नं घृतान्वितम् । शक्त्या च दक्षिणां दत्त्वा विशेषेणार्चयेद्गुरुम् ॥१७८॥सहस्रनामभिः स्तुत्वा आशीर्भिरभिवादयेत्।प्रदक्षिणनमस्कारान्कुर्वीतात्र पुनः पुनः॥१७९॥प्रसीद मम नाथेति भक्त्या संप्रार्थयेद्विभुम् । दीपैर्नीराजयेत्पश्चाच्छ्रीसूक्तेन समाहितः ॥ १८० ॥ हुतशेषं हविः प्राश्य जप्त्वा मन्त्रमनुत्तमम् । ध्यायन्कमलपत्राक्षं भूमौ स्वप्यात्कुशोत्तरे ॥ १८१ ॥ एवं गृहार्चा बिम्बस्य विष्णुं संस्थाप्य वैष्णवः। अर्चयेद्विधिना नित्यं यावद्देहनिपातनम् ॥ १८२ ॥ शालग्रामशिलायां तु पूजनं परमात्मनः । कोटिकोटिगुणाधिक्यं भवेदत्र न संशयः ॥ १८३ ॥ न जपो नाधिवासश्च न च संस्थापनाक्रिया । शालग्रामार्चने विष्णुस्तस्मिन्संनिहितः सदा ॥ १८४॥ मूर्तीनां तु हरेः साक्षाद्यस्यां प्रीतिरनुत्तमा । तस्यामेव तु तां ध्यात्वा पूजयेत्तद्विधानतः ॥ १८५ ॥ मूर्त्यन्तरमबिम्बे तु न यष्टव्यं तदेव तत् । शालग्रामशिलायां तु यष्टव्या इष्टमूर्तयः ॥ १८६ । अर्चनं वन्दनं दानं प्रणामं(मो) दर्शनं नृणाम् । शालग्रामशिलायां तु सर्वं कोटिगुणं भवेत् ॥ १८७ ॥ स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु

---

१ ख. °प्य वस्त्रैर्भू° । २ क. °द्बिम्बं मू° । ३ क. यते श्रीभूप्र° । ४ ख. °श्चाच्छक्त्या तेन । ५ ख. °त्तरम् । ए° । ६ क देह । ७ ख हरेस्तस्य यस्या । ८ क मूर्ति तर्हि न । ९ क. °न्तरं न बि° ।

दीक्षितः। यो वहेच्छिरसा नित्यं शालग्रामशिलाजलम् ॥ १८८ ॥ असत्यकथनं हिंसामभक्ष्याणां च भक्षणम्। शालग्रामजलं पीत्वा सर्वं दहति तत्क्षणात् ॥ १८९॥ द्विजानामेव नान्येषां शालग्रामशिलार्चनम्। बालकृष्णवपुर्देवं पूजयेत्तद्द्विजः सदा॥१९० पठेद्वाऽप्यर्चयेद्विष्णुं त्रिशिष्टः शूद्रयोनिजः। स्थण्डिले हृदये वाऽपि पूजयेत्तद्द्विजः सदा ॥ १९१ ॥ वाराहं नारसिंहं च हयग्रीवं च वामनम्। ब्राह्मणः पूजयेद्विष्णुं यज्ञमूर्तिं च केवलम् ॥ १९२ ॥ क्षत्त्रियः पूजयेद्रामं केशवं मधुसूदनम्। नारायणं वासुदेवमनन्तं च जनार्दनम् ॥ १९३ ॥ प्रद्युम्नमनिरुद्धं च गोविन्दं चाच्युतं हरिम्। संकर्षणं तथा कृष्णं वैश्यः संपूजयेत्तथा ॥ १९४ ॥ बालं गोपालवेषं वा पूजयेच्छूद्रयोनिजः। एवं एव हि संपूज्या विप्रेण मुनिसत्तमाः ॥ १९५ ॥ सर्वेऽपि भगवन्मन्त्रा जप्तव्याः सर्वसिद्धिदाः। तस्माद्द्विजोत्तमः पूज्यः सर्वेषां भूतिमिच्छताम्॥१९६॥ पञ्चसंस्कारसंपन्नो मन्त्ररत्नार्थकोविदः। शालग्रामशिलायां तु पूजयेत्पुरुषोत्तमम्। पूजितस्तुलसीपत्रैर्ददाति सकलं हरिः ॥ १९७ ॥ यः श्राद्धं कुरुते विप्रः शालग्रामशिलाग्रतः। पितॄणां तत्र तृप्तिः स्याद्गयाश्राद्धादनन्तकम् ॥ १९८ ॥ जप्तं हुतं तथा दानं वन्दनं च जलक्रिया। शालग्रामसमीपे तु सर्वं कोटिगुणं भवेत् ॥ १९९ ॥ ध्यात्वा कमलपत्राक्षं शालग्रामशिलोपरि। पौरुषेण तु सूक्तेन पूजयेत्पुरुषोत्तमम् ॥ २०० ॥ अनुष्टुबस्य सूक्तस्य त्रिष्टुबन्त्वा(न्त्याऽ)स्य देवता। पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥२०१॥ प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे। तृतीयां वामपादे च चतुर्थीं दक्षिणे करे ॥ २०२ ॥ पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे तथा। सप्तमीं वामकट्यां तु ह्यष्टमीं दक्षिणेऽपि च ॥ २०३ ॥ नवमीं नाभिदेशे तु दशमीं हृदि विन्यसेत्। एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ॥ २०४ ॥ त्रयोदशीं दक्षिणे तु स्वास्यदेशे चतुर्दशीम्। अक्ष्णोः पञ्चदशीं मूर्ध्नि षोडशीं चैव विन्यसेत् ॥ २०५ ॥ एवं न्यासविधिं कृत्वा पश्चाद्ध्यानं समाचरेत्। सहस्रार्कप्रतीकाशं कन्दर्पायुतसंनिभम् ॥ २०६ ॥ युवानं पुण्डरीकाक्षं सर्वाभरणभूषितम्। पीनवृत्तायतैर्दोर्भिश्चतुर्भिर्भूषणान्वितैः ॥ २०७ ॥ चक्रं पद्मं गदां शङ्खं बिभ्राणं पीतवाससम्। शुक्लपुष्पानुलेपं च रत्नहस्तपदाम्बुजम् ॥ २०८ ॥ सुस्निग्धनीलकुटिलकुन्तलैरुपशोभितम्। श्रिया भूम्या समाश्लिष्टपार्श्वं ध्यात्वा समर्चयेत् ॥ २०९ ॥

---

१ ख °सदा। वा°। २ क. बालगो°। ३ ख °र्दद्यादि स°। ४ ख. °न्तरम्। ५ क त्रिविष्टलस्य। ६ क. °भिर्भूषितं भूष°।

यथाऽऽत्मनि तथा देवे न्यासकर्म समाचरेत् । आद्ययाऽऽवाहनं विष्णोरासनं च द्वितीयया ॥ २१० ॥ तृतीयया च तत्पाद्यं चतुर्थ्याऽर्घ्यं निवेदयेत् । पञ्चम्याऽऽचमनीयं तु दातव्यं च ततः क्रमात् ॥ २११ ॥ षष्ठ्या स्नानं च सप्तम्या वस्त्रमप्युपवीतकम् । अष्टम्या चैव गन्धं तु नवम्या च सुपुष्पकम् ॥ २१२ ॥ दशम्या धूपकं चैव एकादश्याऽथ दीपकम् । द्वादश्या च त्रयोदश्यां नैवेद्यं च निवेदयेत् ॥ २१३ ॥ चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणम् । * षोडश्या शयनं दत्त्वा शेषकर्म समाचरेत् ॥ २१४ ॥ स्नानवस्त्रोपवीतेषु चरौ चाऽऽचमनं चरेत् । हुत्वा षोडशभिर्मन्त्रैः षोडशाऽऽज्याहुतीः क्रमात् ॥२१५॥ तथैवाऽऽज्येन होतव्यमृग्भिः पुष्पाञ्जलिं चरेत् । तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमुत्तमम् ॥ २१६ ॥ कृत्वा माध्याह्निकं स्नानमूर्ध्वपुण्ड्रधरस्ततः । नित्यां संध्यामुपास्याथ रविमण्डलमध्यगम् ॥ २१७ ॥ हरिं ध्यायन्नुदुत्योर्ध्वं हंसः शुचिषदित्यृचा । सावित्रीं च जपेत्तिष्ठन्प्राणानायम्य पूर्वतः ॥२१८॥ सौरेण चानुवाकेन उपस्थानजपं तथा । आत्मानं परिषिच्याथ दर्भान्तरपुटाञ्जलिम् ॥ २१९ ॥ दक्षिणाङ्के तु विन्यस्य जपयज्ञाप्तये बुधः । सव्याहृतिं सप्रणवां गायत्रीं तु जपेत्तदा ॥ २२० ॥ शक्त्या च चतुरो वेदान्पुराणं वैष्णवं जपेत् । चरितं रघुनाथस्य गीतां भगवतो हरेः ॥ २२१ ॥ ध्यायन्वै पुण्डरीकाक्षं जप्त्वा वाऽप उपस्पृशेत् । पूर्ववत्तर्पयेद्देवं वैकुण्ठपार्षदं तथा ॥ २२२ ॥ देवानृषीन्पितॄंश्चैव तर्पयित्वा तिलोदकैः । निष्पीड्य वस्त्रमाचम्य गृहमाविश्य पूर्ववत् ॥ २२३ ॥ पूजयित्वाऽच्युतं भक्त्या पौरुषेण विधानतः । दैवं भूतं पैतृकं च मानुषं च विधानतः ॥ २२४ ॥ प्रीतये सर्वयज्ञस्य भोक्तुर्विष्णोर्यजेत्ततः । वैकुण्ठं वैष्णवं होमं पूर्ववज्जुहुयात्तदा ॥ २२५ ॥ चतुर्विधेभ्यो भूतेभ्यो बलिं पश्चाद्विनिक्षिपेत् । द्वारि गोदोहमात्रं तु तिष्ठेदतिथिवाञ्छया ॥ २२६ ॥ भोजयेच्चाऽऽगतान्काले फलमूलौदनादिभिः । महाभागवतान्विप्रान्विशेषेणैव पूजयेत् ॥ २२७ ॥ मधुपर्कप्रदानेन पाद्यार्घ्याचमनादिभिः । गन्धैः पुष्पैश्च ताम्बूलैर्धूपदीपनिवेदनैः ॥ २२८ ॥ ब्रह्मासने निवेश्यैव पूजयेच्छ्रद्धयाऽन्वितः । सकृत्संपूजिते विप्रे महाभागवतोत्तमे ॥ २२९ ॥ षष्टिं वर्षसहस्राणि हरिः संपूजितो भवेत् । मोहादन( द्वि ना )र्चयेद्यस्तु महाभागवतोत्तमम् ॥ २३० ॥

---

* एतदाद्यर्धद्वयं न विद्यते क पुस्तके ।

---

१ ख °श्या चरुं दिव्यं नि° । २ ख. °पेत्तद्य पौ° । ३ ख. °यन्नगद स्यादेनस· शुचिरित्यृ° । ४ क. सौवर्णेनानु° । ५ ख. °नं च परीक्ष्याथ । ६ ख. °कुण्ठवै° । ७ क. °द्यार्घांच° । ८ ख. °धूपैर्दीपैर्निवे° ।

कोटिजन्मार्जितात्पुण्याद्दृश्यते नात्र संशयः । गृहे तस्य[1] न चाश्नाति शतवर्षाणि केशवः ॥ २३१ ॥ मुखं हि सर्वदेवानां महाभागवतोत्तमः ॥ तस्मिन्संपूजिते विंभ पूजितं स्याज्जगत्त्रयम् ॥ २३२ ॥ अर्थपञ्चकतत्त्वज्ञः पञ्चसंस्कारसंस्कृतः । नवभक्तिसमायुक्तो महाभागवैतो[2]त्तमः ॥२३३॥ काले समागते तस्मिन्पूजिते मधुसूदनः । क्षणादेव प्रसन्नः स्यादीप्सितानि प्रयच्छति ॥२३४॥ महाभागवताना च पवित्रपादोदकं तु यः । शिरसा वा[3] धरेद्भक्त्या सर्वपापैः प्रमुच्यते ॥ २३५ ॥ यस्मिन्कस्मिन्हि वसति महाभागवतोत्तमे । अप्येकरात्रमथवा तद्देशस्तीर्थसंमितः ॥ २३६ ॥ भोजयित्वा महाभागान्वैष्णवानतिथीनापि । ततो बालसुहृद्वृद्धान्बान्धवांश्च समागतान् ॥२३७॥ भोजयित्वा यथाशक्त्या(क्ति) यथाकालं जितक्षुधः । भिक्षां दद्यात्प्रयत्नेन यतीनां ब्रह्मचारिणाम् ॥ २३८ ॥ शूद्रो वा प्रतिलोमो वा पथि श्रान्तः क्षुधातुरः । भोजयेत्तं प्रयत्नेन गृहमभ्यागतो यदि ॥ २३९ ॥ पाषण्डः पतितो वाऽपि क्षुधार्तो गृहमागतः । नैव दद्यात्स्वँ[4]पाकान्नमाममेव प्रदापयेत् ॥ २४० ॥ स्वशक्त्या तर्पयित्वा[5] च ह्यतिथीन्गृहमागतान् । सम्यङ्निवेदितं विष्णोः स्वयं भुञ्जीत वाग्यतः ॥ २४१ ॥ प्रक्षाल्य पादौ हस्तौ च सम्यगाचम्य वारिणा । विष्णोरभिमुखं पीठे हेमदिग्धे कुशोत्तरे ॥२४२॥ प्राग्वा प्रत्यङ्मुखो वाऽपि जान्वोरन्तःकरः शुचिः । उदङ्मुखो वा पै(पि)[6]त्र्ये तु समासीताभिपूजितः ॥ २४३ ॥ वंशतालादिपत्रैस्तु कृतं वसनमश्म च[7] । कापालमिष्टकं वाऽपि पर्णं[8] तृणमयं तथा ॥ २४४ ॥ चर्मासनं शुष्ककाष्ठं शिल्पं पर्यङ्कमेव च । निषिद्धदारुपीठं च दान्तमस्थिमयं च यत् ॥ २४५ ॥ दग्धं पैरावि[9](रिथ)तं तालमायसं च विवर्जयेत् । विभीतकं तिन्दुक च करञ्जं व्याधिघातकम् ॥ २४६ ॥ भल्लातकं कपित्थं च हिन्तालं शिग्रुमेव च । निषिद्धतरवो ह्येते सर्वकर्मसु गर्हिताः ॥ २४७ ॥ शुद्धदारुमये पीठे समासीने कुशोत्तरे । पीठे[12] त्वलाभे सौम्ये[13] स्यात्केवलं कुशविष्टरम् ॥ २४८ ॥ चतुरस्रं त्रिकोणं च वर्तुलं चार्धचन्द्रकम् । वर्णानामानुपूर्व्येण मण्डलानि यथाक्रमात् ॥ २४९ ॥ स्वलंकृते मण्डलेऽस्मिन्विमलं भाजनं न्यसेत् । स्वर्णं कांस्यं च रौप्यं च पर्णं वा शास्त्रचोदितम् ॥ २५० ॥ चतुःषष्टिपलं कांस्यं तदर्धं पादमेव वा । गृहिणामेव भोज्यं स्यात्ततो हीनं तु वर्जयेत् ॥ २५१ ॥ पलाशपद्मपत्रे[14] तु गृही यत्नेन वर्जयेत् । यतीनां च वनस्थानां पितॄणा च शुभप्रदम् ॥२५२॥

१ क °स्य समस्तानि श° । २ ख. °वतः स्मृत । का° । ३ स वा श्रयेद्ध° । ४ स. °त्स्वपक्वान° । ५ ख. °यित्वैवअतिथीनागतान्गृहे । स° । ६ क. पैत्रे । ७ स. च । कपा° । ८ स वर्णं । ९ स. रालं । १० स. °क्षुधातुपी° । ११ क. जयातितं । १२ स पीठत्व° । १३ क. सौम्यस्य केव° । १४ क. °त्रेषु गृहिणा तु विन° ।

वटाश्वत्थार्कपर्णानि कुम्भीतिन्दुकयोस्तथा । एरण्डतालबिल्वेषु कोविदारकरञ्जके ॥ २५३ ॥ भल्लातकाश्च पर्णानां पर्णानि परिवर्जयेत् । मोचागर्भपलाशं च वर्जयेत्सर्वकर्मसु ॥ २५४ ॥ मधुकं कुटजं चैव ब्राह्मं प्लक्षमुदुम्बरम् । मातुलुङ्गं पानसं च मोचाचर्मदलानि च ॥ २५५ ॥ पालाशपर्णं श्रीपर्णं शुभानीमानि भोजने । यथालाभोपपन्नेन भोजने घृतसंस्कृते ॥ २५६ ॥ पत्न्यादिभिर्दत्तमन्नं वासुदेवार्पितं शुभम् । गायत्र्या मूलमन्त्रेण संप्रोक्ष्य शुभचारिणा ॥ २५७ ॥ ऋतसत्याभ्यामिति च मन्त्राभ्यां परिषिचयेत् । अन्नरूपं विराट्पुरुषं ध्यात्वा मन्त्रं जपेद्बुधः ॥ २५८ ॥ ध्यात्वा हृत्पङ्कजे विष्णुं सुधांशुसदृशद्युतिम् । शङ्खचक्रगदापद्मपाणिं वै दिव्यभूषणम् ॥२५९॥ मनसैवार्चयित्वाऽथ मूलमन्त्रेण वैष्णवः । पादोदकं हरेः पुण्यं तुलसीदलमिश्रितम् ॥२६०॥ अमृतोपस्तरणमसीति मन्त्रेण प्राशयेत् । उद्दिश्यैव हरिं प्राणाञ्जुहुयात्सघृतं हविः ॥ २६१ ॥ अन्नालाभे तु होतव्यं शाकमूलफलादिभिः । पञ्चप्राणाद्याहुतयो मन्त्रैस्तैर्जुहुयाद्धरेः ॥ २६२ ॥ श्रद्धायां प्राणे न(नि)विष्टेति मन्त्रेण यथाक्रमम् । तर्जनीमध्यमाङ्गुष्ठैः प्राणायेति यजेद्धविः ॥ २६३ ॥ मध्यमानामिकाङ्गुष्ठैरपानायेत्यनन्तरम् । कनिष्ठानामिकाङ्गुष्ठैर्व्यानायेत्याहुतिं ततः ॥ २६४ ॥ कनिष्ठातर्जन्यङ्गुष्ठैरुदानायेति वै यजेत् । समानायेति जुहुयात्सर्वैरङ्गुलिभिर्द्विजः ॥ २६५ ॥ अयमग्निर्वैश्वानरिरित्यात्मानमनन्तरम् । शतमष्टोत्तरं मन्त्रं मनसैव जपेत्ततः ॥२६६॥ ध्यायेन्नारायणं देवं भोजनं तु यथाक्रमम् । वक्त्रादपातयन्ग्रासं चिन्तयन्मधुसूदनम् ॥२६७॥ नाऽऽसनारूढपादस्तु न वेष्टितशिरास्तथा । न स्कन्दयन्न च हसन्बहिर्नाप्यवलोकयन् ॥२६८॥ नाऽऽत्मीयान्मलपङ्कलपन्बहिर्जानुकरो न च । न पादारोपितकरः पृथिव्यामपि वा न च ॥ २६९ ॥ न प्रसारितपादश्च नोत्सङ्गकृतभाजनः । नाश्नीयाद्भार्यया सार्धं न पुत्रैर्वा कदाचन ॥२७०॥ न शयानो नातिसङ्गो न विमुक्तशिरोरुहः । अन्नं वृथा न विकिरन्निष्ठीवन्ननिकाङ्क्षया ॥ २७१ ॥ नातिशब्देन भुञ्जीत न वस्त्रार्धोपवेष्टितः । प्रगृह्य पात्रं हस्तेन भुञ्जीयात्पैतृकं यदि । चषके पुटके वाऽपि पिबेत्तोयं द्विजोत्तमः ॥२७२॥ तक्रं वाऽप्यथवा क्षीरं पानकं वाऽपि भोजने । वक्त्रेण सान्तर्धानेन दत्तमन्येन वा पिबेत् ॥२७३॥

---

१ क. कुम्भिति° । २ क. °लपत्रेषु । ३ ख. °काश्यप° । ४ ख. °येत्तत्तु सर्वदा । म° । ५ ख. °नं ब्राह्मजम्बुप्ल° । ६ ख. °तुलङ्गं । ७ ख °लाक्ष्यवर्णं श्री° । ८ ख. °थाकालोपपन्ने तु भो° । ९ ख. °त्तवस्तु वास्तुदेवार्पिते शुभे । गा° । १० क. कृतं स° । ११ ख. ° राजं संध्या° । १२ ख. °णे निष्ठेति । १३ ख. °क्रमात् । त° । १४ क. °नरेत्या° । १५ क °व यजेत्त° । १६ ख. ध्यायन्ना° । १७ ख. °वं भुञ्जीयात्तु यथासुखम् । १८ ख. न वादकोपितनर । १९ ख. °र्वाऽपि विह्वलः । न । २० ख °वन्नाति° ।

ग्रासशेषं न चाश्नीयात्पीतशेषं पिबेन्न तु । शाकमूलफलादीनि दन्ताच्छिन्नं न खादयेत् ॥ २७४ ॥ उद्धृत्य वामहस्तेन तोयं वक्त्रेण यः पिबेत् । स सुरां वा पिबेद्‌व्यक्तां सद्यः पतति रौरवे ॥ २७५ ॥ शब्देनापोशने पीत्वा शब्देन दधिपायसे । शब्देनान्नरसं क्षीरं पीत्वैव पतितो भवेत् ॥ २७६ ॥ प्रत्यक्षलवणं शुक्तं क्षीरं लवणसंयुतम् । दधि हस्तेन मथितं सुरापानसमं स्मृतम् ॥ २७७ ॥ आरनालरसं तद्व त्तथैवानर्पितं हरेः । आयसेन तु पात्रेण नैव दद्याद्धृतादिकम् ॥ २७८ । नोच्छिष्टं घृतमादद्यात्पैतृके भोजने विना । तथैव तु पुरोडाशं पृषदाज्यं च माक्षिकम् ॥२७९॥ पानीयं पायसं क्षीरं घृतं लवणमेव च । हस्तदत्तं न गृह्णीयात्तुल्यं गोमांसभक्षणम् ॥ २८० ॥ अपूपं पायसं माषं यावकं कृसरं मधु । केवलं यो वृथाऽश्नाति तेन भुक्तं सुरासमम् ॥ २८१ ॥ करञ्जमूलकं शिग्रु लशुनं तिलपिष्टकम् । तलास्थिश्वेतवृन्ताकं सुरापानसमं विदुः ॥ २८२ ॥ अन्यच्च फलमूलादि भक्ष्यपानादिकं च यत् । स्रक्चन्दनादि ताम्बूलं यो भुङ्क्ते ह्यनर्पितम् ॥ २८३ ॥ कल्पकोटिसहस्राणि रेतोविण्मूत्रभाग्भवेत् ॥ २८४ ॥ तस्मात्सर्वं सुविमलं हरिभुक्तं यथोक्तवत् । सपवित्रेण यो भुङ्क्ते सर्वयज्ञफलं लभेत् ॥ २८५ ॥ ध्यायन्नारायणं देवं वाग्यतः प्रयतात्मवान् । भुक्त्वा व(चा)नतितृप्त्यै(प्त्यै)व प्राशयेदम्बु निर्मलम् ॥ २८६ ॥ अमृतापिधानमसीति मन्त्रेण कुशपाणिना । किंचिदन्नमुपादाय पीतशेषेण वारिणा ॥ २८७ ॥ पैतृकेण तु तीर्थेन भूमौ दद्यात्तदर्थिनाम् । रौरवे नरके घोरे वसतां क्षुत्पिपासया ॥ २८८ ॥ तेषामन्नं सोदकं च अक्षय्यमुपतिष्ठतु । इति दत्त्वोदकं तेषां तस्मिन्नेवाऽऽसने स्थितः ॥ २८९ ॥ प्रक्षाल्य हस्तौ पादौ च मुखं संशोध्य वारिभिः । द्विराचम्य विधानेन मन्त्रेण प्राशयेज्जलम् ॥ २९० ॥ पीत्वा मन्त्रजलं पश्चादाचम्य हृदयाम्बुजे । राममिन्दीवरश्यामं चक्रशङ्खधनुर्धरम् । युवानं पुण्डरीकाक्षं ध्यात्वा मन्त्रं जपेद्बुधः॥२९१॥विभावसुमुपस्पृश्य समासीनः सुखासने। वेदमध्यापयेच्छिष्यान्शास्त्रं वा धर्मसंहिताम्॥२९२॥रवावस्तमिते संध्या बहिः कुर्वीत पूर्ववत्। बहिः संध्या शत(दश) गुणं गोष्ठे शतगुणं तथा॥२९३॥गङ्गाजले सहस्रं स्यादनन्तं विष्णुसंनिधौ॥२९४॥उपास्य पश्चिमां संध्यां जप्त्वा जप्यं समाहितः।पूर्ववत्पूजयेद्विष्णुं गन्धपुष्पाक्षतादिभिः॥२९५॥ अष्टाक्षरविधानेन निवेश्यैवं समाहितः । सायमौपासनं हुत्वा वैष्णवं होममाचरेत्

---

१ क. °त्वा पैतृके पतति रौरवे। शब्देनापोशनं पीत्वा पैतृके पति° । २ क युक्तं । ३ ख मांसं । ४ ख. °म् । ताला° । ५ ख. °लाद्यं भक्ष्यं पा° । ६ क भुङ्क्तेवव न। ७ ग °ध. । सुखासने समासीनो वेदमध्यापयेत्ततः। सच्छिष्यान्यास्तु शास्त्रं वा स्नेहाद्वा धर्मसंहिताम् । इतिहासपुराणं वा कथयच्छृणुयाच्च वा रवावस्तं गते । ८ क. °त । संध्या कोटिगुणितं गो° ।

॥ २९६ ॥ ध्यात्वा यज्ञमयं विष्णुं मन्त्रेणाष्टोत्तरं शतम् । तिलव्रीह्याज्यचरुभिस्तत्रै-
केनापि वा यजेत् ॥ २९७ ॥ वैश्वदेवं भूतबलिं हुत्वा दत्त्वा च आचमेत् । शय्यायां
विन्यसेद्देवं पर्यङ्के समलंकृतम् ॥ २९८ ॥ सविताने गन्धपुष्पधूपैरामोदिते शुभे ।
शाययित्वा च देवेशं नारायणमनामयम् ॥ २९९ ॥ कालजीमूतसंकाश मन्दस्मेरमु-
खाम्बुजम् । कोटिकन्दर्पलावण्यं देवीभ्यां सहितं हरिम ॥ ३०० ॥ हिरण्यगर्भसूक्तेन
नासदासीदनेन च । कृत्वा पुष्पाञ्जलिं पश्चादुपचारैः समर्चयेत् ॥ ३०१ ॥
श्रिये जात इत्यृचैव ध्रुवसूक्तेन च द्विजः । [ * दीपैर्नीराजनं कृत्वा
पश्चादर्घ्यं निवेदयेत् ॥ ३०२ ॥ सुवाससा य(ज)वनिकां विन्यस्याथ समाहितः ।
द्वादशार्णं महामन्त्रं जपेदष्टोत्तरं शतम् ॥ ३०३ ॥ अस्त्रैश्च शङ्खचक्राद्यैर्दिक्षु रक्षां
सुविन्यसेत् । स्तोत्रैः स्तुत्वा नमस्कृत्वा (त्य) पुनः पुनरनन्तरम् ॥ ३०४ ॥ वैष्णवैश्च
सुहृद्भिश्च भुञ्जीयादर्पितं हरेः । आचम्याग्निमुपस्पृश्य समासीनस्तु वाग्यतः । ध्यायन्हादि
शुभं मन्त्रं जपेदष्टोत्तरं शतम् ॥ ३०५ ॥ शेषाहिशायिनं देवं मनसैवार्चयेत्ततः ।
शयीत शुभशय्यायां विमले शुभमण्डले ॥ ३०६ ॥ ऋतौ गच्छेद्धर्मपत्नीं विना
पञ्चसु पर्वसु । पुत्रार्थी चेत्तु युग्मासु स्त्रीकामी विषमासु च ॥ ३०७ ॥ न श्राद्ध-
दिवसे चैव नोपवासदिने तथा । नाशुचिर्मलिनो वाऽपि न चैव मलिनां तथा
॥ ३०८ ॥ न क्रुद्धां न च क्रुद्धः सन्न रोगी न च रोगिणीम् । न गच्छेत्क्रूरादिवसे
मघामूलद्वयोरपि ॥ ३०९ ॥ ब्राह्मे मुहूर्त उत्थाय आचामेत्प्रयतात्मवान् । यतिश्च
ब्रह्मचारी च वनस्थो विधवा तथा ॥ ३१० ॥ अजिने कम्बले वाऽपि भूमौ स्वप्या-
त्कुशोत्तरे । ध्यायन्तः पद्मनाभं तु शयीरन्विजितेन्द्रियाः ॥ ३११ ॥ अर्पयेद्वाऽर्चये-
द्विष्णुं त्रिकालं श्रद्धयाऽन्वितः । आचरेयुः परं धर्मं यथावृत्त्यनुसारतः ॥ ३१२ ॥ प्रातः
कृष्णं जगन्नाथं कीर्तयेत्पुण्यनामभिः । शौचादिकं तु यत्कर्म पूर्वोक्तं सर्वमाचरेत्
॥ ३१३ ॥ नैमित्तिकविशेषेण पूजयेत्पतिमव्ययम् । तत्तत्काले तु तन्मूर्तेरर्चनं मुनिभिः
स्मृतम् ॥ ३१४ ॥ प्रसुप्ते पद्मनाभे तु नित्यं मासचतुष्टयम् । द्रोण्यां दोलायामपि
वा भक्त्या संपूजयेद्विभुम् ॥ ३१५ ॥ क्षीराब्धौ शेषपर्यङ्के शयानं रमया सह । नीलजी-
मूतसंकाशं सर्वालंकारसुन्दरम् ॥ ३१६ ॥ कौस्तुभोद्भासिततनुं वैजयन्त्या विराजितम् ।
लक्ष्मीघनकुचस्पर्शशुभोरस्कं सुवर्चसम् ॥ ३१७ ॥ ध्यात्वैवं पद्मनाभं तु द्वादशार्णेन
नित्यशः । पूजयेद्गन्धपुष्पाद्यैस्त्रिसंध्यास्वपि वैष्णवः ] ॥ ३१८ ॥ निवेद्य पायसान्नं
तु दद्यात् पुष्पाञ्जलिं ततः । सहस्रं शतवारं वा द्वयं मन्त्रं जपेत्सुधीः ॥ ३१९ ॥ द्वादशार्णं
मनुं चैव जप्त्वाऽऽज्येन तिलैश्च वा । केवलं चरुणा वाऽपि जुहुयात्प्रतिवासरम् ॥ ३२० ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थ. ख. पुस्तक एवास्ति ।

१ ख. °कृते । स° ।

अधःशायी ब्रह्मचारी सर्वभोगविवर्जितः। वार्षिकांश्चतुरो मासानेवमभ्यर्च्य केशवम् ॥ ३२१ ॥ बोधयित्वाऽथ कार्तिक्यां दद्यात्पुष्पाण्यनेकशः। साज्यैस्तिलैः पायसेन मधुना च सहस्रशः॥ ३२२ ॥ मूलमन्त्रेण जुहुयात्सूक्तैश्चावभृथं ततः। सहस्रनामभिः कृत्वा दद्यादर्पणमेव च ॥ ३२३ ॥ गृहं गत्वाऽथ देवेशं पूजयित्वा यथाविधि। भोजयेद्वैष्णवान्विप्रान्दक्षिणाभिश्च तोषयेत् ॥ ३२४ ॥ शुक्लपक्षे नभोमासि द्वादश्यां वैष्णवः शुचिः। पवित्रारोपणं कृत्वा नाभिमात्रायतं न्यसेत् ॥ ३२५ ॥ तथा वक्षसि पर्यन्तं सहस्रं तान्तवं स्मृतम्[१]। कुशग्रन्थिसहस्रं तु पादान्तं विन्यसेत्ततः ॥ ३२६ ॥ सौवर्णीं राजतीं मालां शतग्रन्थियुतां न्यसेत्। मृणालतान्तवं पश्चात्पुष्पमालां ततः परम् ॥ ३२७ ॥ शतमौक्तिकहाराणि नानारत्नमयान्यपि। उपोष्यैकादशीं तत्र रात्रौ जागरणान्वितः। अभ्यर्चयेज्जगन्नाथं गन्धपुष्पफलादिभिः ॥ ३२८ ॥ नीत्वा रात्रिं नर्तनाद्यैः प्रभाते विमले नदीम्। गत्वा स्नात्वा च विधिना तर्पयित्वेशमर्चयेत्। सर्वैश्च वैष्णवैर्मन्त्रैर्मध्वाज्यतिलपायसैः[२] ॥ ३२९ ॥ * हुत्वा दत्त्वा दशार्णेन सहस्रं जुहुयात्ततः। पश्चादारोपयेद्विष्णोः पवित्राणि शुभानि वै ॥ ३३० ॥ पवस्व सोम इति च जपन्सूक्तं सुपावनम्। निवेदयेत्पवित्राणि तथा विष्णोर्यथाक्रमम्[३] ॥ ३३१ ॥ मन्दिरं कुशयोक्त्रेण वेष्टयन्परमात्मनः। वितानपुष्पमालाद्यैरलंकृत्य च सर्वतः ॥ ३३२ ॥ सहस्रं द्वादशार्णेन भक्त्या पुष्पाञ्जलिं न्यसेत्। अथोपनिषदुक्तानि पञ्च सूक्तान्यनुक्रमात्[४] ॥ ३३३ ॥ त्वयाहन्पीतमिज्यादि (!) जपन्पुष्पाञ्जलिं ततः। ब्राह्मणान्भोजयेत्पश्चात्स्वयं कुर्वीत पारणम् ॥ ३३४ ॥ शक्तश्चेदुत्सवं[५] कुर्यात्त्रिरात्रं वैष्णवोत्तमः। प्रत्यब्दमेवं कुर्वीत पवित्रारोपणं हरेः ॥ ३३५ ॥ क्रतुकोटिसहस्रस्य फलं प्राप्नोत्यसंशयः। तत्र दुर्भिक्षरोगादिभयं नास्ति कदाचन ॥ ३३६ ॥ संप्राप्ते कार्तिके मासे सायाह्ने पूजयेद्धरिम्। हृद्यैः पुष्पैश्च जातीभिः कोमलैस्तुलसीदलैः ॥ ३३७ ॥ अर्चयेद्विष्णुं गायत्र्याऽनुवाकैर्वैष्णवैरपि। पावमान्यैश्च तन्मासं भक्त्या पुष्पाञ्जलिं न्यसेत् ॥ ३३८ ॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा[६]। अष्टाविंशतिं वा शक्त्या दद्याद्दीपान्सुपालिकान् ॥ ३३९ ॥ सुवासितेन तैलेन गव्येनाऽऽज्येन वा हरेः। अष्टोत्तरशतं नित्यं तिलहोमं समाचरेत् ॥ ३४० ॥ मनुना वैष्णवेनापि गायत्र्या विष्णुसंज्ञया। हुत्वा पुष्पाञ्जलिं दद्यात्[७]ताभ्यामेव तथा[८] विभोः ॥ ३४१ ॥

---

* इत आरभ्य न्यसेदित्यन्तग्रन्थव्यत्यासः क पुस्तके।

---

१ क. °म। शुक्लग्र°। २ ख. °ष्णवैः सूक्तैर्म°। ३ ख °क्रमात्। म°। ४ ख. °त्। त्वेहयत्पीत°। ५ ख शक्त्या वा चोत्स°। ६ क वा। शक्त्या दद्याद्द्विजान्सर्वान्सपरिपा°। ७ ख दत्त्वा ताभ्या°। ८ ख तदा।

हविष्यं मोदकं शुद्धं नक्तं भुञ्जीत वाग्यतः ॥ ३४२ ॥ तैलं शुक्तं तथा मांसं निष्पावान्माक्षिकं तथा। चणकानपि माषांश्च वर्जयेत्कार्तिकेऽहनि ॥ ३४३ ॥ भोजयेद्वैष्णवान्विप्रान्नित्यं दानानि शक्तयः। अन्ते च भोजयेद्विप्रान्दक्षिणाभिश्च तोषयेत् ॥ ३४४ ॥ एवं संपूज्य देवेशं कार्तिके कृतकोटिभिः। पुण्यं प्राप्यानघो भूत्वा विष्णुलोके महीयते ॥ ३४५ ॥ दशमीमिश्रितां त्यक्त्वा वेलायामरुणोदये। उपोष्यैकादशीं शुद्धां द्वादशीमपि वैष्णवः ॥ ३४६ ॥ स्नात्वाऽऽमलक्या नद्यां तु विधानेन हरिं यजेत्। सुगन्धकुसुमैः शुभ्रैरुपचारैश्च सर्वशः। रात्रौ जागरणं कृत्वा पुराणं (ण)संहितां पठेत् ॥ ३४७ ॥ जागरेऽस्मिन्नशक्ते(क्त)श्चेद्दर्भानास्तीर्य वैष्णवः। पुरतो वासुदेवस्य भूमौ स्वप्यात्समाहितः ॥ ३४८ ॥ ततः प्रभातसमये तुलसीमिश्रितैर्जलैः। स्नात्वा संतर्प्य देवेशं तुलसीमूलमन्त्रतः ॥ ३४९ ॥ द्वयेन वा विष्णुसूक्तैः कुर्यात्पुष्पाञ्जलींस्ततः। तथैव जुहुयादाज्यं मन्त्रेणैव शतं ततः ३५० ॥ पायसान्नं निवेद्येशे ब्राह्मणान्भोजयेत्ततः। ध्यायन्कमलपत्राक्षं स्वयं भुञ्जीत वाग्यतः ॥ ३५१ ॥ अहः शेषं तु निनयेत्पुराणं वाचयन्बुधः। सायाह्ने समनुप्राप्ते दोलायां पूजयेद्धरिम् ॥ ३५२ ॥ अभ्यर्च्य गन्धपुष्पाद्यैर्भक्ष्यैर्नानाविधैरपि। ब्राह्मणस्य तु (स्पत्य)सूक्तैश्च शनैर्दोलां प्रचालयेत् ॥ ३५३ ॥ इतिहासपुराणाभ्यां गीतवाद्यैः प्रबन्धकैः। एवं संपूजयेद्देवं तस्यां निशि समाहितः ॥ ३५४ ॥ मध्याह्ने पूजयेद्देवं वैष्णवर्क्षे समाहितः। चम्पकैः शतपत्रैश्च करवीरैः सितैरपि ॥ ३५५ ॥ वैष्णवेनैव मन्त्रेण पूजयेत्कमलापतिम्। न करीन्द्रेति सूक्तेन दद्यात्पुष्पाञ्जलिं हरेः ॥ ३५६ ॥ मन्त्रेणाष्टोत्तरशतं दद्यात्पुष्पाणि भक्तितः। तथैव होमं कुर्वीत तिलैर्व्रीहिभिरेव वा ॥ ३५७ ॥ सुदध्यन्नं फलयुतं नैवेद्यं विनिवेदयेत्। दीपैर्नीराजनं कृत्वा वैष्णवान्भोजयेत्ततः ॥ ३५८ ॥ मन्दवारे तु सायाह्ने नावत्सम्यगुपोषितः। तिलैः स्नात्वा विधानेन संतर्प्य च सनातनम् ॥ ३५९ ॥ नृसिंहवपुषं देवं पूजयेत्तद्विधानतः। मन्त्रराजेन गायत्र्या मूलमन्त्रेण वा यजेत् ॥ ३६० ॥ अखण्डाबिल्वपत्रैश्च जातिकुन्दैश्च यूथिकैः। पत्रैश्च पञ्चशान्त्या च त्वमग्ने द्युभिरिति च ॥ ३६१ ॥ दद्यात्पुष्पाञ्जलिं भक्त्या मन्त्रेणैव शतं यथा। आभ्यामेवानुवाकाभ्यां प्रत्यृचं जुहुयाद्घृतम् ॥ ३६२ ॥ मन्त्रेणाष्टोत्तरशतं बिल्वपत्रैर्घृतान्वितैः। वैकुण्ठपार्षदं हुत्वा होमशेषं समापयेत् ॥ ३६३ ॥

---

१ ख शुक्तं। २ ख. दानादि। ३ क नित्यश। ४ ख °लक्या सू°। ५ ख °षं समानीय पुरा°। ६ क. °न्बुधैः। सा°। ७ क प्रचारयेत्। ८ ख °येद्विष्णुं वैष्णवेन स°। ९ क कलिन्द्रे°। १० क जातीकुन्दैश्च यूथकै°। ११ ख. °कै। छन्नः पञ्चोशनाशान्त्यास्त्वम°। १२ क. त्वरमानेद्युतिरिति। १३ क. °न्त्रेणावश°। १४ क. °कुण्ठं पा°।

मधुशर्करसंयुक्तानपूपान्मोदकांस्तथा । मण्डकान्विविधान्भक्ष्यान्सूपान्नं मधुमिश्रितम् ॥ ३६४ ॥ सुवासितं पानकं च नृसिंहाय समर्पयेत् । नृत्यं गीतं तथा वाद्यं कुर्वीत पुरतो हरेः ॥ ३६५ ॥ भोजयेच्च ततो विप्रान्नव सप्ताथ पञ्च वा । तदर्पितहविष्यान्नं भुञ्जीयाद्वाग्यतः स्वयम् ॥ ३६६ ॥ ध्यायन्नृसिंहं मनसा भूमौ स्वप्याज्जितेन्द्रियः । एवं शनिदिने देवमभ्यर्च्य नरकेसरिम् । सर्वान्कामानवाप्नोति सोऽश्वमेधफलं लभेत् ॥ ३६७ ॥ षष्टिवर्षसहस्रं स पूजां प्राप्नोति केशवः । कुलकोटिं समुद्धृत्य वैकुण्ठपदमाप्नुयात् ॥ ३६८ ॥ प्रायश्चित्तमिदं गुह्यं पातकेषु महत्स्वपि । अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ॥ ३६९ ॥ पक्षे पक्षे पौर्णमास्यामुदितेऽस्मिन्निशाकरे । स्नात्वा संपूजयेद्विष्णुं वामनं देवमव्ययम् ॥ ३७० ॥ समासीनं महात्मानं तस्मिन्पूर्णेन्दुमण्डले । संतर्पयेच्छुभजलैः कुसुमाक्षतमिश्रितैः ॥ ३७१ ॥ तत्र मूलेन मन्त्रेण पूजयेत्परमेश्वरम् । तुलसीकुन्दकुसुमैरथ पुष्पाञ्जलिं चरेत् ॥ ३७२ ॥ त्वं सोम इति सूक्तेन प्रत्यृचं कुसुमैर्यजेत् । पश्चाद्धोमं प्रकुर्वीत पायसान्नं सशर्करम् ॥ ३७३ ॥ मन्त्रेणाष्टोत्तरशतं सूक्तेन प्रत्यृचं तथा । अग्निसोमानुवाकेन समिद्भिः पिप्पलैर्यजेत् ॥ ३७४ ॥ सहस्रनामभिः स्तुत्वा नमस्कृत्वा(त्य) जनार्दनम् । वैष्णवान्भोजयेत्पश्चात्पायसान्नेन शक्तितः ॥ ३७५ ॥ स्वयं भुक्त्वा हविःशेषं शयीत नियतेन्द्रियः । एवं संपूज्य देवेशं पौर्णमास्यां जनार्दनम् ॥ ३७६ ॥ सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ ३७७ ॥ मघायामपि पूर्वाह्णे स्नात्वा कृष्णं जलैर्द्विजः । संतर्प्य मूलमन्त्रेण तिलमिश्रितवारिभिः ॥ ३७८ ॥ तर्पयित्वा पितॄन्देवानर्चयेदच्युतं ततः । कृष्णैश्च तुलसीपत्रैः केतकैः कमलैरपि ॥ ३७९ ॥ शोणितैः करवीरैश्च जपाकुटजपाटलैः । अस्यवामेति सूक्तेन दद्यात्पुष्पाञ्जलिं हरेः ॥ ३८० ॥ मन्त्रेणाष्टोत्तरशतं कृष्णैश्च तुलसीदलैः । तथैव जुहुयादग्नौ तिलैः कृष्णैः सशर्करैः ॥ ३८१ ॥ आज्येन पौरुषं सूक्तं प्रत्यृचं जुहुयात्ततः । नारायणानुवाकेन उपस्थाय जनार्दनम् ॥ ३८२ ॥ सुसंयावैः सौहृदैश्च शाल्यन्नं विनिवेदयेत् । वैष्णवान्भोजयेत्पश्चात्स्वयं भुञ्जीत वाग्यतः ॥ ३८३ ॥ तस्यां रात्रौ जपेन्मन्त्रमयुतं हरिसंनिधौ । वैष्णवैरनुवाकैश्च दत्त्वा पुष्पाञ्जलिं ततः ॥ ३८४ ॥ पुरतो वासुदेवस्य भूमौ स्वप्यात्कुशोत्तरे । एवं संपूज्य देवेशं मघाया वैष्णवोत्तमः ॥ ३८५ । उद्धृत्य वंशजान्सर्वान्वैष्णवं पदमाप्नुयात् ॥ ३८६ ॥ व्यतीपाते तु संप्राप्ते हयग्रीवं जनार्दनम् । पुष्पैश्च करवीरैश्च पुण्डरीकैः समर्चयेत्

१ क °वा । हर्यपिं° । २ ख. ध्यायेन्नृ° । ३ ख. °मेधायुतं ल° । ४ क °हस्रस्य पू° । ५ ग. °ण्ठपुरमा° । ६ ख °स्मिन्दिवाक° । ७ क °ग्निष्टोमा° । ८ क शयने । ९ क °ं पूर्वाह्णे सशुभैर्जलैः । सं° । १० ख. कृष्णं श्रीतु° । ११ क °म् । सूपैर्यवि. । १२ क. तिलैश्च ।

॥ ३८७ ॥ योरैयीत्यनुवाकेन प्रत्यृचं वै यजेद्बुधः । मन्त्रेण च शतं दत्त्वा पश्चाद्धोमं समाचरेत् ॥ ३८८ ॥ यवैश्च तण्डुलैर्वाऽपि तिलैः पुष्पैरथापि वा । मन्त्रेणाष्टोत्तरशतं जुहुयाद्वैष्णवोत्तमः ॥ ३८९ ॥ अमूरेकाद्यष्टसूक्तैः प्रत्यृचं जुहुयाच्चरुम् । शेषं निवेद्य हरये संप्राश्याऽऽचमनं चरेत् ॥३९०॥ सहस्रशीर्षसूक्तेन ह्युपस्थाय जनार्दनम् । शाल्योदनं सूपयुतं विविधैश्च फलैरपि ॥ ३९१ ॥ गैव्याज्येन युतं दत्त्वा दीपैर्नीराजयेत्ततः । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् ॥ ३९२ ॥ हविष्यं तु स्वयं भुक्त्वा भूमौ स्वप्याज्जितेन्द्रियः । एव संपूज्य देवेशं व्यतीपाते सनातनम् ॥३९३॥ दशवर्षसहस्रस्य पूजायाः फलमाप्नुयात् । ग्रहणे रविसंक्रान्तौ वराहवपुषं हरिम् ॥३९४॥ कुमुदैरुँज्ज्वलैः पद्मैँस्तथा दूर्वांकुरण्टकैः । अर्चयेद्भूधरं देवं तन्मन्त्रेणैव वैष्णवः ॥ ३९५ ॥ दूँरादिहेति सूक्तेन दद्यात्पुष्पाञ्जलिं द्विजः । मन्त्रेण च सहस्रं तु शतं वाऽपि यजेत्तँथा ॥ ३९६ ॥ तिलैश्च जुहुयात्तद्वत्सूक्तेन प्रत्यृचं घृतम् । सूपान्नं कृसरान्नं च भक्ष्यापूपान्घृतप्लुतान् ॥ ३९७ ॥ नैवेद्यं विनिवेद्येशे ब्राह्मणान्भोजयेत्ततः । एवं संपूज्य देवेशं संक्रान्तौ ग्रहणे हरिम् ॥ ३९८ ॥ कल्पकोटिसहस्राणि विष्णुलोके महीयते । वैँधृतौ पूजयेद्रामं काकुत्स्थं पुरुषोत्तमम् ॥ ३९९ ॥ सीतालक्ष्मणसंयुक्तं मध्याह्ने पूजयेद्विभुम् । पुंनागकेतकीपद्मैरुत्पलैः करवीरकैः ॥ ४०० ॥ चाम्पेयैर्वकुलैः पूजां षडर्णेनैव कारयेत् । जातये वातिसूक्तेन कुर्यात्पुष्पाञ्जलिं ततः ॥ ४०१ ॥ संक्षेपेण शतश्लोँक्या प्रतिश्लोकं यजेत्तथा । पुष्पाञ्जलिं(लि)सहस्रं तु मन्त्रेणैव यजेँत्ततः ॥ ४०२ ॥ त्वमग्न इति सूक्तेन पायसं जुहुयादृचा । पश्चान्मन्त्रेणाऽऽज्यहोमो नैवेद्यं पायसं घृतम् ॥ ४०३ ॥ कदलीफलं शर्करां च पानकं च निवेदयेत् । पञ्च सप्त त्रयो वाऽपि पूजनीया द्विजोत्तमाः ॥ ४०४ ॥ सुहृद्यैरन्नपानाद्यैर्गोहिरण्यादिदक्षिणैः । हविष्यान्नं स्वयं भुक्त्वा पठेद्रामायणं नरः ॥४०५॥ एवं संपूज्य विधिवद्राघवं जानकीयुतम् । भुक्त्वा भोगान्मनोरम्यान्विष्णुलोके महीयते ॥ ४०६ ॥ लक्ष्मीनारायणं देवं भार्गवे वासरे निशि । अखण्डबिल्वपत्रैश्च तुलसीकोमलैर्दलैः ॥४०७॥ अर्चयेन्मन्त्ररत्नेन वामाङ्कस्थश्रिया सह । चन्दनं कुङ्कुमोपेतं कस्तूर्या च समर्चयेत् ॥ ४०८ ॥ श्रीसूक्तपुरुषसूक्ताभ्यां दद्यात्पुष्पाञ्जलिं ततः । मन्त्रद्वयेन पुष्पाणां सहस्रं च निवेदयेत् ॥ ४०९ ॥ त्वमग्न इति सूक्तेन प्रत्यृचं कुसुमान्य( मर्य )जेत् । अखण्डबिल्वपत्रैर्वा पद्मपत्रैर्घृतेन वा ॥ ४१० ॥ श्रीसूक्तपुरुषसूक्ताभ्यां प्रत्यृचं जुहुयात्ततः । अग्निं नँरो(रे)ति सूक्तेन तिलैर्व्रीहिभिरेव च ॥४११॥

---

१ क. °रइस° । २ ख. अभूदेका° । ३ क. गव्याज्ये° । ४ क. °रुत्पलैः । ५ ख. °द्मैस्तुलसीभि कु° ६ क. दूर्वादि° । ७ ख. °त्तदा । ति° । ८ ख. वैशाखे । ९ क. जातिये वासू° । १० ख °श्लोक्या प्रतिश्लोक्या य° । ११ ख. °जेदमाम् । त्व° । १२ ख. नवेति । १३ क. °लैर्व्रीह्यतिरे° ।

मन्त्ररत्नेन जुहुयात्सुगन्धकुसुमैः शतम् । मण्डकान्क्षीरसंयुक्तान्पायसान्नं सशर्करम् । शाल्यन्नं पृषदाज्यं च भक्त्याऽसौ विनिवेदयेत् ॥ ४१२ ॥ अभ्यर्च्य विप्रमिथुनान्वासोलंकारभूषणैः । भोजयित्वा यथाशक्त्या(क्ति) पश्चाद्भुञ्जीत वाग्यतः ॥ ४१३ ॥ मन्वन्तरशतं विष्णुं दुग्धाब्धौ हेमपङ्कजैः । संपूज्य यदवाप्नोति तत्फल भृगुवासरे ॥ ४१४ ॥ एवं संपूज्यमानस्तु तस्मिन्नहनि वैष्णवैः । लक्ष्म्या सह हरिः साक्षात्प्रत्यक्षं तत्क्षणाद्भवेत् ॥४१५॥ कृष्णाष्टम्यां चतुर्दश्यां सायंसंध्या समागमे । गोपालं पुरुषं कृष्णमर्चयेच्छ्रद्धयाऽन्वितः ॥ ४१६ ॥ मल्ली(ल्लि)कामालतीकुन्दयूथीकुटजकेतकैः । लोध्रनीपार्जुनैर्नागैः कर्णिकारैः कदम्बकैः ॥ ४१७ ॥ कोविदारैः करवीरैर्बिल्वैरास्फोटकैरपि । दशाक्षरेण मन्त्रेण पूजयेत्पुरुषोत्तमम् ॥४१८॥ ये त्रिंशतीति सूक्तेन दद्यात्पुष्पाञ्जलिं ततः । श्रीकृष्णं तुलसीपत्रैः प्रत्यृचं पूजयेद्विभुम् ॥ ४१९ ॥ श्रीकृष्णाय नम इति मन्त्रेणाष्टोत्तरं शतम् । पूजयित्वाऽथ होमं तु तिलैः कृष्णैर्घृतान्वितैः ॥ ४२० ॥ प्रत्यृचं वैष्णवैः सूक्तैर्जुहुयात्पुरुषोत्तमम् । समिद्भिः पिप्पलैश्चापि मन्त्रेणाष्टोत्तरं शतम् ॥ ४२१ ॥ नामभिः केशवाद्यैश्च चरुं पश्चाद्घृतप्लुतम् । वैष्णव्या चैव गायत्र्या पृषदाज्यं शतं तथा ॥ ४२२ ॥ गुडौदनं सर्पिषाऽक्तं भक्ष्याणि विविधानि च । क्षीरान्नं शर्करोपेतं नैवेद्यं च समर्पयेत् ॥ ४२३ ॥ वैष्णवान्भोजयेत्पश्चात्स्वयं भुञ्जीत वाग्यतः । एवमभ्यर्च्य गोविन्दं कृष्णाष्टम्या विशेषतः ॥ ४२४ ॥ सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् । द्वयोरप्यनयोः श्रीशं कूर्मरूपं समर्चयेत् ॥ ४२५ ॥ ससागरां महीं सर्वां लभते नात्र संशयः । अर्चयेन्मूलमन्त्रेण गन्धपुष्पाक्षतादिभिः ॥ ४२६ ॥ अर्चयित्वा विधानेन हविष्यं व्यञ्जनैर्युतम् । सुदीर्घयन्त्रजान्सूपघृतमिश्रान्निवेदयेत् ॥ ४२७ ॥ अहं पूर्वेति सूक्तेन कुर्यात्पुष्पाञ्जलिं ततः । सहस्रं मूलमन्त्रेण पूजयेत्तुलसीदलैः ॥ ४२८ ॥ तिलमिश्रैश्च पृथुकैर्जुहुयाद्धव्यवाहने । प्रयद्ध इति सूक्ताभ्यां नासदासीत्यनेन च ॥४२९॥ मन्त्रेणाऽऽज्यं सहस्रं तु जुहुयाद्वैष्णवोत्तमः । भोजयेद्वैष्णवान्भक्त्या विशेषेणार्चयेद्गुरुम् ॥ ४३० ॥ कौर्मे तु शतवर्षं तु समभ्यर्च्य विधानतः । अत्राप्यर्चनमात्रेण तत्फलं समवाप्नुयात् ॥ ४३१ ॥ मधुशुक्लप्रतिपदि केशवं विधिपूर्वकम् । स्नात्वा मध्याह्नसमये पूज-

---

१ क शतै. । २ ख. °पालपु° । ३ क. °यूथकुरञ्जके° । ४ क °म । यो त्रि(यत्रिं)° । ५ ख °ति सू-क्तेनाष्टो° । ६ ख. विधानतः । ७ क. मू° । सदी° । ८ ख °न्त्रराजा° । ९ ख °हं यवेति । १० क. °द्धय ध्न° । ११ ख °वं पूजयेद्द्विज । स्ना° । १२ ख. °ये करवीरे सुगन्धिभि । अ° ।

येत्करवीरकैः ॥ ४३२ ॥ अग्निमीळ इत्याद्येन प्रत्यृचं कुसुमैर्यजेत् । मन्त्ररत्नेन वाऽभ्यर्च्य चरुपायसहोमकृत् ॥ ४३३ ॥ ईळे द्यावेति सूक्तेन यदिन्द्राग्नीत्यनेन च । विष्णुसूक्तैश्च जुहुयाद्गायत्र्या विष्णुसंज्ञया ॥ ४३४ ॥ अपूपान्कटकाकाराञ्शाल्यन्नं घृतसंयुतम् । फलैश्च भक्ष्यभोज्यैश्च नैवेद्यं विनिवेदयेत् ॥ ४३५ ॥ भोजयेद्ब्राह्मणाञ्शक्त्या दक्षिणाभिः प्रपूजयेत् । एवं संवत्सरं तत्र सम्यक्संपूजयेद्धरिम् ॥४३६॥ सर्वान्कामानवाप्नोति हयमेधायुतं लभेत् ॥४३७॥ तस्मिन्नवम्यां शुक्ले तु नक्षत्रेऽदितिदैवते । तत्र जातो जगन्नाथो राघवः पुरुषोत्तमः ॥ ४३८ ॥ तस्मिन्नुपोष्य मध्याह्ने स्नात्वा संध्यां विधानतः । तर्पयित्वा पितॄन्देवानर्चयेद्राघवं हरिम् ॥ ४३९ ॥ षडक्षरेण मन्त्रेण गन्धमाल्यानुलेपनैः । अभ्यर्च्य जगतामीशं जपेन्मन्त्रं समाहितः ।॥४४०॥ शान्तिं शास्त्रं पुराणं च नाम्नां विष्णोः सहस्रकम् । पावमानैर्विष्णुसूक्तैः कुर्यात्पुष्पाञ्जलिं ततः ॥ ४४१ ॥ रामायणशतश्लोक्या दद्यात्पुष्पाणि वैष्णवः । सशर्करं पायसान्नं कपिलाघृतसंयुतम् ॥ ४४२ ॥ रम्भाफलं पानकं च नैवेद्यं विनिवेदयेत् । सितानि[2] नागपर्णानि स्निग्धपूगीफलानि च ॥ ४४३ ॥ कर्पूरेण च संयुक्तं ताम्बूलं च समर्पयेत् । दीपान्नीराजयेद्भक्त्या नमस्कृत्य पुनः पुनः ॥ ४४४ ॥ प्रीतये रघुनाथस्य कुर्याद्दानानि शक्तितः । षडक्षरेण साहस्रं तिलैर्वा पायसेन वा ॥ ४४५ ॥ कमलैर्बिल्वपत्रैर्वा घृतेन जुहुयात्ततः । अस्य वामेति सूक्तेन समिद्भिः पिप्पलस्य च ॥ ४४६ ॥ वैकुण्ठपार्षदं हुत्वा होमशेषं समापयेत् । रात्रौ जागरणं कृत्वा प्रतियामं प्रपूजयेत् ॥ ४४७ ॥ प्रभाते विमले चापि ततो भरतजन्मनि । तृतीयेऽहनि मध्याह्ने सौमित्रेर्जन्मवासरे ॥ ४४८ ॥ सानुजं जगतामीशमर्चयेत्पूर्ववद्द्विजः । पूजां पुष्पाञ्जलिं होमं जपं ब्राह्मणभोजनम् ॥ ४४९ ॥ अविच्छिन्नं ततः कुर्यादग्निहोत्रं त्रिवासरम् । एवं त्रिरात्रं कुर्वीत राघवाणां विधानतः ॥ ४५० ॥ महोत्सवं जन्मभेषु प्रत्यब्दं चैत्रमासके[4] । चतुर्थेऽह्नि तथा नद्यां कुर्यादवभृथं द्विजः ॥ ४५१ ॥ वैष्णवैरनुवाकैश्च रामनामभिरेव च । चरितं रघुनाथस्य जपन्नवभृथं चरेत् ॥ ४५२ ॥ देवान्पितॄंश्च संतर्प्य गृहं गत्वाऽर्चयेत्प्रभुम् । कुर्यादवभृथेष्टिं च चरुणा पायसेन वा ॥ ४५३ ॥ अस्य वामेति सूक्तेन परोमात्रेत्यनेन वा । प्रत्यृचं जुहुयात्पश्चान्मन्त्रेण शतसंख्यया ॥ ४५४ ॥ हुत्वा समाप्य होमं तु शेषं संप्राशयेच्चरुम् । आचम्य पूजयेद्देवं वैष्णवान्भोजयेत्ततः ॥ ४५५ ॥ स्वयं भुञ्जीत तद्रात्रावधःशायी समाहितः । एवं दाशरथिः पूज्यश्चैत्रे नावमिके तथा ॥ ४५६ ॥ षष्टिर्व(ष्टिं व)र्षसहस्राणि श्वेतद्वीपनिवासिनम् । संपूज्य यदवाप्नोति तदेवात्र समश्नुते ॥ ४५७ ॥

१ क °त्याज्येन । २ ख. पीतानि । ३ ग. °ण कुर्याद्द्वितीयामं समर्चये° । ४ ख. °मासिके । ५ ख. द्वादशाभि° ।

यज्ञायुतशतं लब्ध्वा विष्णुलोके महीयते । तस्यैव पौर्णमास्यां च शीतांशोरुदये तथा ॥ ४५८ ॥ स्नात्वा संपूजयेद्देवं माधवं रमया सह । शुद्धजाम्बूनदप्रख्यं कन्दर्पशतसंनिभम् ॥ ४५९ ॥ लक्ष्म्या सह समासीनं विमले हेमपङ्कजे । चन्दनेन सुगन्धेन करवीराब्जचम्पकैः ॥ ४६० ॥ कर्पूरकुङ्कुमोपेतचन्दनेन च पूजयेत् । तन्मन्त्रान्मन्त्ररत्नाभ्यां माधवं विधिना यजेत् ॥ ४६१ ॥ मण्डकान्क्षीरसंयुक्ताञ्शाल्यन्नं घृतसंयुतम् । कृष्णरम्भाफलैर्जुष्टं नैवेद्यं विनिवेदयेत् ॥ ४६२ ॥ असजीवत्व इत्याद्यैः षट्सूक्तैः कुसुमैर्यजेत् । मन्त्रेणाष्टोत्तरशत कोमलैस्तुलसीदलैः ॥ ४६३ ॥ संपूज्य होमं कुर्वीत साज्येन चरुणा ततः । विहीभोतोरित्यनेन सूक्तेन प्रत्यृचं द्विजः ॥ ४६४ ॥ कमलैर्बिल्वपत्रैर्वा मन्त्रेणाष्टोत्तरं शतम् । हुत्वाऽथ पौरुषं सूक्तं श्रीसूक्तं जुहुयात्ततः ॥ ४६५ ॥ सहस्रनामभिः स्तुत्वा वैष्णवान्भोजयेत्ततः । हुतशेषं स्वयं भुक्त्वा भूमौ स्वप्याज्जितेन्द्रियः ॥ ४६६ ॥ एवं संपूज्य देवेशं माधव्यां मधुसूदनः । सर्वान्कामानवाप्नोति हरिसायुज्यमाप्नुयात् ॥ ४६७ ॥ वैशाख्यां पौर्णमास्यां तु मध्याह्ने पुरुषोत्तमम् । अर्चयेद्रक्तकमलैरुत्पलैः पाटलैरपि ॥ ४६८ ॥ ह्रीवेरकरवीरैश्च गायत्र्या विष्णुसंज्ञया । दध्यन्नं फलसंयुक्तं पायसं च निवेदयेत् ॥ ४६९ ॥ प्रत्यृचं चेद्दिवं सूक्तैः प्रत्यृचं जुहुयात्ततः । पौराष्ट्रं वेति सूक्तेन दीपैर्नीराजयेत्ततः ॥ ४७० ॥ शक्त्या विप्रान्भोजयित्वा पूजयेद्देशिकं तथा । तस्मिन्संपूजितो ( ते ) देवः प्रत्यक्षस्तत्क्षणाद्भवेत् ॥ ४७१ ॥ शयने भोजयेद्विष्णुं पूजयेच्छ्रद्धयाऽन्वितः । कुशप्रसूनदूर्वाग्रपुण्डरीककदम्बकैः ॥ ६७२ ॥ मूलमन्त्रेण श्रीविष्णुं गायत्र्या च समर्चयेत् । सत्येनोत्तमसूक्तेन ऋग्भिः पुष्पाञ्जलिं यजेत् ॥ ४७३ ॥ मन्त्रेणाष्टोत्तरशतं तुलसीपल्लवैस्तथा । पश्चाद्धोमं प्रकुर्वीत विष्णुसूक्तैः सुपायसम् ॥ ४७४ ॥ मन्त्ररत्नेन जुहुयादाज्यमष्टोत्तरं शतम् । सशर्करं पायसान्नमपूपान्विनिवेदयेत् ॥ ४७५ ॥ विश्वजितेति सूक्तेन कुर्यान्नीराजनं ततः । भोजयेद्वैष्णवान्विप्रान्पूजयेच्च विशेषतः ॥ ४७६ ॥ सर्वान्कामानवाप्नोति हयमेधायुतं लभेत् । प्राजापत्यर्क्षसंयुक्ता नभःकृष्णाष्टमी यदा ॥४७७॥ नभस्येव भवेत्सा तु जयन्ती परिकीर्तिता । तस्यां जातो जगन्नाथः केशवः कंसमर्दनः॥४७८॥तस्मिन्नुपोष्य विधिवत्सर्वपापैः प्रमुच्यते॥४७९॥अष्टमीरोहिणीयोगो मुहूर्ते वा दिवानिशम् । मुख्यकाल इति ख्यातो यत्र जातः स्वयं हरिः॥४८०॥ मासद्वये

१ क °मलोऽसितप° । २ ख. °ब्जपङ्कजै । क° । ३ क °त । न हि वो अस्तोने° । ४ क. °न जुहुयाद्द्विजः । ५ ख. °याद्द्विज । स° । ६ क °लै कमलै° । ७ क प्रहत्वे दिव । ८ ख. °त. । साराष्ट्रेवेति । ९ क. °ने बोधने विष्णुं । १० क °त्येन सप्तचत्वारिंशदाग्भि । ११ क. वदेत् । १२ क. °साज्यम° । १३ क. ख्यातस्तत्र ।

यद्यलाभे योगे तस्मिन्दिवा निशि। नवमीरोहिणीयोगः कर्तव्यो वैष्णवैर्द्विजैः॥ ४८१॥ रात्रियोगस्तु बलवांस्तस्यां जातो जनार्दनः। तिथ्यन्तं(न्ते) वाऽथ भान्ते वा पारणा यत्र चोच्यते॥ ४८२॥ यामत्रयावियुक्तायां प्रातरेव हि पारणम्। पूर्वेद्युर्नियमं कुर्या-दन्तधावनपूर्वकम्॥ ४८३॥ प्रातः स्नात्वा विधानेन पूजयेत्कृष्णमव्ययम्। षड-क्षरेण मन्त्रेण बालकृष्णवपुर्हरिम्॥ ४८४॥ सुकृष्णतुलसीपत्रैरर्चयेच्छ्रद्धयाऽन्वितः। दुग्धं क्षीरं शर्करां च नवनीतं निवेदयेत्॥ ४८५॥ सहस्रमयुतं वाऽपि जपेन्मन्त्रं षडक्षरम्। गवाज्यं जुहुयाद्वह्नौ कृष्णमन्त्रेण पायसम्॥ ४८६॥ सहस्रं शतवारं वा प्रत्यृचं विष्णुसूक्तकैः। हुत्वा सुगन्धिपुष्पाणि तैरेव च समर्चयेत्॥ ४८७॥ सहस्रनाम्नां गीतानां पठनं गुरुपूजनम्। वैष्णवान्भोजयेच्छक्त्या हुतशेषं सकृत्स्वयम्॥ ४८८॥ भुक्त्वा कुशोत्तरे स्वप्याद्भूमौ नियमवाङ्शुचिः। परेऽह्न्युपोष्य विधिवत्स्नात्वा नद्यां विधानतः॥ ४८९॥ तर्पयित्वा जगन्नाथं पितॄन्देवांश्च तर्पयेत्। पूर्ववत्पूजयित्वेशं जपहोमादिकं चरेत्॥ ४९०॥ अवैष्णवं द्विजं तस्मिन्वाङ्मात्रे-णापि नार्चयेत्। पुराणादिप्रपाठेन रात्रौ जागरणं चरेत्॥ ४९१॥ शीतांशावुदिते स्नात्वा शुक्लाम्बरधरः शुचिः। नवो नवो भवतीति ऋचाऽर्घ्यं विनिवेदयेत्॥४९२॥ अर्चयेन्मातुरुत्सङ्गे स्थितं कृष्णं सनातनम्। तुलसीगन्धपुष्पैश्च कस्तुरीचन्द्रचन्दनैः॥ ४९३॥ षडक्षरेण मन्त्रेण भक्त्या संपूजयेद्धरिम्। वसुदेवं नन्दगोपं बलभद्रं च रोहिणीम्॥ ४९४॥ यशोदां च सुभद्रां च मायां दिक्षु प्रपूजयेत्। प्रह्लादादीन्वै-ष्णवांश्च तथा लोकेश्वरानपि॥ ४९५॥ धूपं दीपं च नैवेद्यं ताम्बूलं च समर्पयेत्। अनूनमिति सूक्तेन भक्त्या नीराजनं तथा॥ ४९६॥ शं न इत्यादिसूक्तैश्च दद्या-त्पुष्पाणि वैष्णवः। दशाक्षरेण मन्त्रेण पूजयेत्पुरुषोत्तमम्॥ ४९७॥ सहस्रनामभिः स्तुत्वा शय्यायां विनिवेशयेत्। गीतं नृत्यं च वाद्यं च यथाशक्त्या(क्ति) च कारयेत्॥ ४९८॥ ततः प्रभातसमये संध्यामन्वास्य वैष्णवः। दशाक्षरेण मन्त्रेण तुलसी-चन्दनादिभिः॥ ४९९॥ संपूज्य वैष्णवैः सूक्तैः कुर्यात्पुष्पाञ्जलिं ततः। मन्त्रेण जुहुयादाज्यं सहस्रं हव्यवाहने॥ ५००॥ ममाग्न इति सूक्ताभ्यां जुहुयात्पायसं ततः। परोमात्रेति सूक्तेन चरुं तिलविमिश्रितम्॥ ५०१॥ सर्वैश्च भगवन्मन्त्रैरेकै-कामाहुतिं यजेत्। नामभिः केशवाद्यैश्च तथा संकर्षणादिभिः॥ ५०२॥ वैकुण्ठपा-र्षदं हुत्वा होमशेषं समापयेत्। ततो मङ्गलवादित्रैर्यानैर्योक्त्रैश्च चामरैः॥ ५०३॥ लाजैर्हरिद्राचूर्णैश्च गन्धैः पुष्पैः सुगन्धिभिः। मुदा विकीरयन्स(किरेयुः स)र्वे बाल-वृद्धाश्च मध्यमाः॥ ५०४॥

---

१ ख. निलेन नै भवान्ते। २ ख. 'ष्णतनुं हरि'। ३ क सूक्तेभ्यो।

नार्यश्च रमणैः सार्धं सुवासिन्यश्च योषितः। आरोप्य शिविकायां तु देवकीनन्दनं हरिम् ॥ ५०५ ॥ अकर्दमां नदीं रम्यां तडागं वा मनोहरम्। गच्छेयुर्ग्राहशैवाल जलौकादिविवर्जितम् ॥ ५०६ ॥ कुर्यादवभृथं तत्र पावमान्यैः पवित्रकैः। विष्णुसूक्तैश्च सुस्नात्वा(य) देवान्पितॄंश्च तर्पयेत्॥ ५०७ ॥ विचित्राणि च भक्ष्याणि दद्यात्तत्र शुभान्वितः। गृहं गत्वोऽथ देवेशं पूर्ववत्पूजयेद्द्विजः भोजयित्वा ततो विप्रान्दक्षिणाभिश्च तोषयेत्। हिरण्यवस्त्राभरणैराचार्यं पूजयेत्ततः ॥५०९॥ स्वयं च पारणां कृत्वा पुत्रपौत्रसमन्वितः। सायाह्ने समनुप्राप्ते दोलायामर्चयेद्धरिम् ॥५१०॥ चतुःस्तम्भां चतुर्धामवितानाद्यैरलंकृताम्। धूपैर्दीपैश्चैव रम्यां दोलां संपूजयेद्द्विजः ॥ ५११ ॥ स्तम्भेषु वेदान्मन्त्रांश्च धामस्वभ्यर्च्य कच्छपम्। पादेष्वाशागजान्पीठे सप्त च्छन्दांसि चाऽऽस्तरे ॥ ५१२ ॥ प्रणवं चाऽऽतपत्रे तु शेषं केतौ खगेश्वरम्। इतिहासपुराणानि सर्वतः परिपूजयेत् ॥ ५१३ ॥ तस्यां निवेश्य दोलायां वासुदेवं श्रियः पतिम्। उपचारैरर्चयित्वा शनैर्दोलां च दोलयेत् ॥ ५१४ ॥ वेदाद्यैर्ब्र(ब्रा)ह्मणस्पत्यैः सूक्तैरङ्गैर्द्विजोत्तमः। सामगानैः प्रबन्धैश्च गायन्कृष्णं जगद्गुरुम् ॥ ५१५ ॥ सुवासिन्यो दोलयित्वा वैष्णवान्पूजयेत्ततः। एवं संपूज्य देवेशं पापैर्मुक्तो हरिं व्रजेत् ॥५१६॥ दोलायां दर्शनं विष्णोर्महापातकनाशनम्। कोटियोगानुजं पुण्यं लभते नात्र संशयः ॥५१७॥ शिवब्रह्मादयो देवा नारदाद्या महर्षयः। दोलायां दर्शनार्थं वै प्रयान्त्यनुचरैः सह ॥ ५१८ ॥ गन्धर्वाप्सरसः सर्वा विमानस्थाः सकिंनराः। गायन्ति सामगानैश्च दोलायामर्चितं हरिम् ॥ ५१९ ॥ गवाज्यसंयुतैर्दीपैर्भक्त्या नीराजनं चरेत्। मरुत्व इन्द्रसूक्तेन मङ्गलाशीर्भिरेव च ॥ ५२० ॥ ताम्बूलफलपुष्पाद्यैर्वैष्णवान्भोजयेत्ततः। आशिषो वाचनं कृत्वा नमस्कृत्वा(त्य) विसर्जयेत् ॥ ५२१ ॥ एवं संपूज्य देवेशं जयन्त्यां मधुसूदनम्। सर्वाँल्लोकान्भोजयित्वा याति विष्णोः परं पदम् ॥ ५२२ ॥ मासि भाद्रपदे शुक्ले द्वादश्यां विष्णुदैवते। अदित्यामुदभूद्विष्णुरुपेन्द्रो वामनोऽव्ययः ॥५२३॥ तस्यां स्नानोपवासाद्यमक्षय्यं परिकीर्तितम्। श्रीकृष्णजन्मवत्सर्वं कुर्यादत्रापि वैष्णवः ॥ ५२४ ॥ सर्वान्कामानवाप्नोति विष्णुसायुज्यमाप्नुयात्। माघमासे तु सप्तम्यामुदिते चैव भास्करे ॥ ५२५ ॥ स्नात्वा नद्यां विधानेन पूजयेत्पुरुषोत्तमम्। रक्तैश्च करवीरैश्च कुमुदेन्दीवरादिभिः ॥ ५२६ ॥ मन्त्ररत्नेनार्चयित्वा पायसान्नं निवेदयेत्। यतश्च गोपा

१ क °जलूका। २ ख. °त्वा तथैवे°। ३ ख. °णा कुर्यात्पुत्र°। ४ क. °यागजं। ५ ख. °काङ्क्षेत्त्वाशु या°। ६ क °त्वाशु वि°। ७ क °न्द्रो नाम अव्य°। ८ क °न प्रयजेत्पु°।

इत्यादि दश सूक्तान्यनुक्रमात् ॥ ५२७ ॥ पुष्पाणि दद्याद्भक्त्या वै प्रत्यृचं वैष्णवोत्तमः । सहस्रं शतवारं वा मन्त्रेणापि यजेत्ततः ॥ ५२८ ॥ पश्चाद्धोमं प्रकुर्वीत तिलैः कृष्णैः सशर्करैः । वैष्णवैरनुवाकैश्च मन्त्ररत्नेन मन्त्रवित् ॥ ५२९ ॥ वैकुण्ठपार्षदं हुत्वा शेषं कर्म समाचरेत् । नीराजनं ततो दद्याद(दा)यं गौरित्यनेन तु ॥ ५३० ॥ इति वा इति सूक्तेन उपस्थाय जनार्दनम् । सहस्रनामभिः स्तुत्वा वैष्णवान्भोजयेत्ततः ॥ ५३१ ॥ गुरुं संपूजयेद्भक्त्या भुञ्जीयात्तद्धविः सकृत् । अधःशायी ब्रह्मचारी भवेद्रात्रौ समाहितः ॥ ५३२ ॥ एवं संपूज्य देवेशं तस्मिन्नहनि वैष्णवः । त्रिकोटिकुलमुद्धृत्य वैष्णवं पदमाप्नुयात् ॥ ५३३ ॥ द्वादश्यामपि तस्यां वै यज्ञवाराहमच्युतम् । वैष्णव्या चैव गायत्र्या पूजयेत्प्रयतात्मवान् ॥ ५३४ ॥ महिषाख्यं घृताक्तं वै धूपं दद्यात्प्रयत्नतः । दद्यादष्टाङ्गदीपं च गवाज्येन च वैष्णवः ॥ ५३५ ॥ सशर्कराज्यं सूपान्नं मोदकान्कृसरं तथा । इक्षुदण्डानि रम्याणि फलानि च निवेदयेत् ॥ ५३६ ॥ प्र ते महीति सूक्तेन दद्यात्पुष्पाणि भक्तिमान् । सर्वैश्च वैष्णवैः सूक्तैश्चरुणा पायसेन वा ॥ ५३७ ॥ मधुसूक्तेन होतव्यं गायत्र्या विष्णुसंज्ञया । आज्येन वैष्णवैर्मन्त्रैस्त्रिशतं त्रिभिरेव च ॥ ५३८ ॥ वैकुण्ठपार्षदं हुत्वा होमशेषं समापयेत् । भोजयेद्वैष्णवान्भक्त्या गुरुं चापि प्रपूजयेत् ॥ ५३९ ॥ सर्वयज्ञेषु यत्पुण्यं सर्वदानेषु यत्फलम् । तत्फलं लभते मर्त्यो विष्णुसायुज्यमाप्नुयात् ॥ ५४० ॥ कोदण्डस्थे दिनकरे तस्मिन्मासि निरन्तरम् । अरुणोदयवेलायां प्रातः स्नानं समाचरेत् ॥ ५४१ ॥ × तर्पयित्वा विधानेन मूलमन्त्रेण वा यजेत् । तर्पयित्वा विधानेन कृतकृत्यः समाहितः ॥ ५४२ ॥ नारायणं जगन्नाथमर्चयेद्विधिवद्द्विजः । पौरुषेण विधानेन मूलमन्त्रेण वा यजेत् ॥ ५४३ ॥ शतपत्रैश्च जातीभिस्तुलसीबिल्वपुष्करैः । गन्धैश्च धूपैर्दीपैश्च नैवेद्यैर्विविधैरपि ॥ ५४४ ॥ पायसान्नं शर्करान्नं मुद्गान्नं सघृतं हविः । सुवासितं च दध्यन्नमपूपान्मधुमिश्रितान् ॥ ५४५ ॥ मोदकान्पृथुकाल्लाँजान्सक्तुभिश्चणकानपि । त्रिविधानि च भक्ष्याणि फलानि च निवेदयेत् ॥ ५४६ ॥ वेदपारायणेनैव मासमेकं निरन्तरम् । ऋचा दशसहस्राणि ऋचां पञ्चशतानि च ॥ ५४७ ॥ ऋचामशीतिपाद(दा)श्च पारायणं प्रकीर्तितम् । वेदपारायणेनैव प्रत्यृचं कुसुमान्य(मर्च)जेत् ॥ ५४८ ॥ रात्रौ होमं प्रकुर्वीत तिलैर्व्रीहिभिरेव वा । सर्ववेदेष्वशक्तस्तु होमकर्मणि वैष्णवः ॥ ५४९ ॥ वैष्णवैरनुवाकैर्वा प्रत्यहं जुहुयाद्बुधः । यजुषाऽपि तथा साम्नां शक्त्या पुष्पाञ्जलिं चरेत् ॥ ५५० ॥

× एतदर्धं न विद्यते क. पुस्तके ।

१ ख. °ञीत तद्ध° । २ ख °री जपेद्रा° । ३ ख महिसाक्षं । ४ ख जातिभि° । ५ क. °र्विनिवेदित । पा° । ६ ख. °जान्शष्कुलीश्च° ।

अशक्तो यस्तु वेदेन प्रतिवासरमच्युतम् । मूलमन्त्रेण साहस्रं दद्यात्पुष्पाञ्जलिं द्विजः ॥ ५५१ ॥ तेनैव जुहुयाद्भक्त्या सहस्रं वह्निमण्डले । अथवा रघुनाथस्य चारित्रेण महात्मनः ॥ ५५२ ॥ प्रतिश्लोकेन(कं च) पुष्पाणि दद्यान्मासं निरन्तरम् । अधःशायी ब्रह्मचारी सकृद्भोजी भवेन्नरः ॥ ५५३ ॥ मासान्ते तु विशेषेण पूजयेद्वैष्णवान्द्विजान् । एवमभ्यर्च्य गोविन्दं धर्नुमासे निरन्तरम् ॥ ५५४ ॥ दिने दिने वैष्णवेष्टयाफलं प्राप्नोत्यसंशयः । यं यं कामयते चित्ते तं तमाप्नोति पूरुषः ॥५५५॥ महद्भिः पातकैर्मुक्तो विष्णुलोके महीयते । तपोमास्युदिते भानौ मासमेकं निरन्तरम् ॥ ५५६ ॥ स्नात्वा नद्यां तडागे वा तर्पयेत्पतिमच्युतम् । अर्चयेन्माधवं नित्यं तन्मन्त्रेणैव तत्र वै ॥ ५५७ ॥ मन्त्ररत्नेन वा नित्यं माधवीचूतचम्पकैः । मण्डकानि विचित्राणि शर्कराज्ययुतानि च ॥ ५५८ ॥ शाल्यन्नं दधिसंयुक्तं मोदकांश्च निवेदयेत् । वैष्णवैः पावमानैश्च कुर्यात्पुष्पाञ्जलिं ततः ॥ ५५९ ॥ तिलैश्च जुहुयाद्वह्नौ मधुशर्करामिश्रितैः । प्रत्यृचं पुरुषसूक्तेन श्रीसूक्तेनापि वैष्णवः ॥ ५६० ॥ सहस्रं मूलमन्त्रेण तन्मन्त्रेणापि वै द्विजः । सहस्रं वा शतं वाऽपि शक्त्या च जुहुयाद्बुधः ॥ ५६१ ॥ यज्ञेयज्ञमिति ऋचा दीपान्नीराजयेत्ततः । रात्रौ दोलार्चनं कुर्याद्वैष्णवैर्द्विजसत्तमैः ॥ ५६२ ॥ मासान्ते भोजयेद्विप्रान्वासोलंकारभूषणैः । एवं संपूजिते तस्मिन्प्रसन्नोऽभू( न्नः स्या )ज्जनार्दनः ॥ ५६३ ॥ ददाति स्वपदं नित्यं योगिगम्यं सनातनम् । फाल्गुन्यां पौर्णमास्यां वै उदिते च निशाकरे ॥ ५६४ ॥ उपोष्य विधिवद्विष्णुं पूजयेद्वैष्णवोत्तमः । तिलैश्च करवीरैश्च कर्णिकारैश्च पाटलैः ॥ ५६५ ॥ कुङ्कुमागरुकर्पूरैरर्चयेत्कमलापतिम् । + क्षीराणां पायसान्नं वा मण्डकान्विनिवेदयेत् ॥५६६॥ अस्य वामेति सूक्तेन दद्यात्पुष्पाणि शार्ङ्गिणे । षडक्षरेण मन्त्रेण सहस्रं कुसुमैर्यजेत् ॥ ५६७ ॥ विष्णुसूक्तैः प्रत्यृचं च चरुणाऽऽज्येन मन्त्रतः । ब्रह्मा देवानामनेन दीपान्नीराजयेत्ततः ॥५६८॥ प्रसन्नो नित्यमनेन उपस्थाय सनातनम् । वैष्णवान्भोजयेद्भक्त्या भुञ्जीयाद्वाग्यतः स्वयम् ॥ ५६९ ॥ एवं संपूज्य देवेशं तस्यां रात्रौ सनातनम् । षष्टिवर्षसहस्रस्य पूजामाप्नोत्यसंशयः ॥ ५७० ॥ एवं संपूजयेद्विष्णुं निमित्तेषु विशेषतः । यथाकालं यथावर्णं यथाशक्त्या(क्ति) यथाबलम् ॥५७१॥ यथोक्तपुष्पालाभे तु तुलस्या वै समर्चयेत् । नैवेद्यस्याप्यलाभे तु हविष्यं वा निवे-

---

+ इत आरभ्य यजेदित्यन्तं न विद्यते ख. पुस्तके ।

---

१ ख. °वेद्द्विज । मा° । २ क °वीचूतकैः सह । म° । ३ क यज्ञेयतमि° । ४ घ दिव्यं ५ ख. कुन्दसहस्रकुसुमैर्यजेत्त कम° । ६ क. °सन्नेतिरिस° ।

दयेत् ॥ ५७२ ॥ सूक्तानि वैष्णवान्येव सूक्तालाभे यथा जपेत् । एकेन वा पौरुषेण सूक्तेन जुहुयात्तथा ॥५७३॥ सर्वत्राऽऽज्यं प्रशस्तं स्याद्धोमद्रव्याद्यलाभतः । मन्त्रालाभे मूलमन्त्रं सर्वतन्त्रेषु योजयेत् ॥ ५७४ ॥ उपस्थानं तु सर्वत्र तद्विष्णोरिति वा ऋचा । नीराजनं तु सर्वत्र श्रिये जातेत्यनेन वा ॥ ५७५ ॥ तत्तत्कालोचितं सर्वं मनसा वाऽपि पूजयेत् । तुलसीमिश्रितं तोयं भक्त्या वाऽपि समर्पयेत् ॥ ५७६ ॥ सर्वेषु च निमित्तेषु महाभागवतोत्तमान् । संपूज्य परिपूर्णत्वमाप्नोत्यत्र न संशयः ॥५७७॥

इति श्रीवृद्धहारीतस्मृतौ विशिष्टपरमधर्मशास्त्रे भगवन्नित्यनैमित्तिकसमाराधनविधिर्नामाष्टमोऽध्यायः ॥ ८ ॥

====

( अथ नवमोऽध्यायः )

---

हारीत उवाच—

महोत्सवविधिं[1] कृत्वा देवस्य परमात्मनः । ग्रामार्चायाः प्रकुर्वीत यथोक्तविधिना नृप ॥१॥ यात्रोत्सवे कृते विष्णोः श्रुतिस्मृत्युक्तमार्गतः । अनावृष्ट्यग्निदुर्भिक्षभयं नास्त्यत्र किंचन ॥ २ ॥ वारिजं वातजं वाऽग्निसर्पविद्युद्द्विषत्कृतम् । महारोगग्रहैश्चैवं यद्भयं ग्रामवासिनाम् ॥ ३ ॥ कृते महोत्सवे तत्र भयं नास्ति न संशयः । तस्य दासा भविष्यन्ति नाना जनपदेश्वराः ॥ ४ ॥ सार्वभौमो भवेद्राजा भक्त्या कृत्वा महोत्सवम् । * संवत्सरमृतुं मासं पक्षं नित्यं महोत्सवम् ॥ ५ ॥ नवाह्निकं च सप्ताहं पञ्चाहं प्रत्यहं तथा । संवत्सर ऋतौ मासि पक्षे कुर्यात्क्रमेण तु ॥ ६ ॥ तस्मिन्नादौ शुभदिने स्वस्तिवाचनपूर्वकम् । अङ्कुरार्पणमादौ तु गरुत्मत्केतुमुच्छ्रयेत्[3] ॥ ७ ॥ याश्च पडित्योषधयः केतुं[4]को वेद इत्यपि । अश्वत्थाख्यशमीगर्भशुभामरणिमाहरेत् ॥८॥ निर्मथिनेति सूक्तेन तथैवासीदमीति च । आभ्यां च प्रत्यृचं तस्मिन्निध्माधानादि पूर्ववत् ॥ ९ ॥ चत्वाज्यैरथमंत्रीति[5] उपस्थायार्चयेत्तथा । तदग्निं संग्रहेत्तावदुत्सवः परिपूर्यते ॥ १० ॥ दीक्षितः स भवेत्तावदाचार्यो विजितेन्द्रियः । वेदवेदाङ्गविच्छ्रोतस्मार्तकर्मविधानवित् ॥ ११ ॥ महाभागवतो विप्रस्तान्त्रिकः सर्वकर्मसु । लौकिके वा प्रकुर्वीत मथिताग्निर्न चेद्यदि ॥ १२ ॥

---

* एतदर्धं न विद्यते ख. पुस्तके ।

---

१ क. °न कुर्यादुत्स° । २ क. निलदं । ३ घ. °त् । पादाप° । ४ क. °तुर्कारो वे° । ५ ख. °मन्नीति ।

आभ्यामेव च सूक्ताभ्यामग्नौ देवं यजेद्बुधः। प्रातः स्नात्वा विधानेन धौतवस्त्रोर्ध्वपुण्ड्रधृत् ॥ १३ ॥ ऋत्विग्भिर्ब्राह्मणैर्दान्तैर्यागभूमिं विशेद्गुरुः। देवालयस्य मध्ये तु वेदिं रम्यां प्रकल्पयेत् ॥ १४ ॥ अङ्कुरार्पणपात्रैश्च भद्रकुम्भैरलंकृताम्। वितानकुसुमाद्यु(मैर्यु)क्तां कृत्वा तत्र सुखासने ॥ १५ ॥ महोत्सवार्हं बिम्बं च निवेश्यास्मिन्प्रपूजयेत्। श्रीभूनीलादिसंयुक्तं नित्यैः परिजनैर्वृतम् ॥ १६ ॥ मन्त्ररत्नविधानेन पूजयित्वा जगद्गुरुम्। इमे विप्रस्येत्यादिभिस्त्रिभिः सूक्तैश्च पूजयेत् ॥ १७ ॥ सुरभीणि च पुष्पाणि प्रत्यृचं विनिवेदयेत्। चक्षुर्दिक्षु च चत्वारो ब्राह्मणा मन्त्रवित्तमाः ॥ १८ ॥ वाराहं नारसिंहं च वामनं राघवं मनुम्। ईशान्यादिषु चत्वारो विष्णुमन्त्रान्विदिक्षु च ॥ १९ ॥ वेद्या दक्षिणतः कुम्भं लक्षणाढ्यं च तत्र तु। हुताशनं प्रतिष्ठाप्य इध्माधानादिकं चरेत् ॥ २० ॥ सर्वैश्च वैष्णवैः सूक्तैश्चरुं तिलविमिश्रितम्। प्रत्यृचं जुहुयाद्वह्नौ मध्वाज्यगुडमिश्रितम् ॥ २१ ॥ आज्यं श्रीभूमिसूक्ताभ्यां त्वं सोम इति पायसम्। पूर्वोक्तैर्वैष्णवैर्मन्त्रैस्तिलैर्व्रीहिभिरेव च ॥ २२ ॥ प्रत्येकं जुहुयात्पश्चादष्टोत्तरशतं क्रमात्। वैकुण्ठपार्षदं हुत्वा होमशेषं समापयेत् ॥ २३ ॥ सुदध्यन्नं फलयुतं पानकं च निवेदयेत्। ताम्बूलं च समर्प्याथ ऋत्विजश्चापि पूजयेत् ॥ २४ ॥ ततः स्यन्दनमानीय पताकाछत्रसंयुतम्। श्वेतैः सलक्षणै रुक्ममानमश्वैः प्रकल्पितैः ॥ २५ ॥ वस्त्रपुष्पमणिस्वर्णभूषितं तत्र चित्रितम्। तस्मिन्मृदुतरश्लक्ष्णपर्यङ्कं स्थाप्य देशिकः ॥ २६ ॥ तस्मिन्निवेश्य देवेशं देवीभ्यां सहितं हरिम्। अर्चयेद्गन्धपुष्पाद्यैर्धूपदीपादिभिस्तथा ॥ २७ ॥ रथचक्रेषु वेदांश्च धर्मादीनपि पूजयेत्। आधारशक्तिमाधारईषादण्डे पुराणकम् ॥ २८ ॥ छन्दांसि कूबरे सप्तपर्यङ्के भुजगाधिपम्। हयेषु चतुरो मन्त्रान्योक्त्रेष्वङ्गानि षट् च वै ॥ २९ ॥ ध्वजे पताकराजानं छत्रेऽनन्तं स्वराणि तु। तालवृन्ते चामरे च अक्षराणि च पूजयेत् ॥ ३० ॥ अभ्यर्च्यैवं रथं दिव्यं पश्चात्संपूजयेद्धरिम्। दिक्पालावरणाश्चैवमर्चयेद्दिक्षु सर्वतः ॥ ३१ ॥ जीमूतस्येति सूक्तेन तत्र पुष्पाञ्जलिं चरेत्। मरुत्वान्निन्द्रेति सूक्तेन कृत्वा नीराजनं ततः ॥ ३२ ॥ वनस्पतीति सूक्तेन वादयेत्पटहादिकम्। गीतैर्नृत्यैश्च वादित्रैः पुण्यैः स्तोत्रैर्मनोहरैः ॥ ३३ ॥ हयैर्गजैः स्यन्दनैश्च परितस्तर्पयेत्प्रभुम्। ऋत्विजः पुरतो वेदानङ्गानि च जपेत्सदा ॥ ३४ ॥ गायेत्सामानि भक्त्या वै पुरतः पार्श्वतो हरेः। कुङ्कुमैः कुसुमैर्लाजैर्विकिरन्वै समन्ततः ॥ ३५ ॥ स्वलंकृतेषु वीथिषु पर्यटन्सेवयेत्प्रभुम्। ग्र(गृ)हद्वारेषु मार्गेषु भक्ष्यैरिक्षुभिरेव च ॥ ३६ ॥ कुसुमैर्धूपदीपैश्च ताम्बूलैश्चापि सेवयेत्। एवं निषेव्य देवेशं पुनर्गेहं निवेशयेत् ॥ ३७ ॥ तमभि प्रगायतेति जपन्सूक्तं निवेशयेत्। प्रसम्राजमित्यनेन दीपान्नीराजयेत्ततः ॥ ३८ ॥

---

१ ख. °तः स्मार्तवि°। २ ख. कुण्डं। ३ ध. लवणाढ्यं। ४ ख. °ष्ययान°। ५ क. तमुभि प्र°।
६ ख. °मभिः प्र°।

पीठे निवेश्य देवेशमुपचारान्समर्पयेत्[1] । वयमुपेत्य ध्यायेम आशिषो वाचनं चरेत् ॥ ३९ ॥ अनेन विधिना कुर्यादुत्सवं प्रतिवासरम् । जपैर्होमैस्तथा दानैर्विप्राणां भाजनैरपि ॥ ४० ॥ समाप्ते चोत्सवे विष्णोः कुर्यादवभृथं शुभम् । नदीं[2] खातं तडागं वा देवेन सहितो व्रजेत् ॥ ४१ ॥ स्यन्दनादिषु यानेषु स्थिता नार्यः स्वलंकृताः । पुरुषाश्च हरिद्राश्च चूर्णादीन्विकिरे[3]न्निव ॥ ४२ ॥ कुर्यादवभृथं तत्र विशिष्टै-र्ब्राह्मणैः सह । वासुदेवोत्सवे स्नानमश्वमेधफलं लभेत् ॥ ४३ ॥ स्नात्वा संतर्प्य देवादीन्प्रविश्य हरिमन्दिरम् । यजे[4]दवभृथेष्टौ च अस्य वामेति सूक्ततः ॥ ४४ ॥ चरु-माज्यं तिलैर्वाऽपि अनुवाकैश्च वैष्णवैः ॥ ४५ ॥ एवं हुत्वाऽवभृ[5]थेष्टिं वैष्णवान्भोज-येत्ततः । गुरुं च ऋत्विजश्चैव पूजयेद्भक्तितस्ततः ॥ ४६ ॥ पिबा सोमेत्यध्यायेन कुर्यात्स्वस्त्ययनं हरेः । इच्छन्ति त्वेत्यध्यायेन प्रत्यृचं च द्वयेन च ॥ ४७ ॥ अष्टो-त्तरशतं जुहुयात्कुसुमैरेव वैष्णवः । हिरण्यगर्भसूक्तेन तथैवाऽऽज्यं द्विजोत्तमः ॥४८॥ पुनरेव तु होतव्यं हुत्वा वैकुण्ठपार्षदम् । होमशेषं समाप्याथ वैष्णवान्भोजयेदपि ॥ ४९ ॥ सर्वयज्ञसमाप्तौ तु पुष्पयागं समाचरेत् । सर्वं संपूर्णतां याति परितुष्टो ज-नार्दनः ॥ ५० ॥ एवं महोत्सवं कुर्यात्प्रत्यब्दं परमात्मनः ॥ ५१ ॥ अथ नित्यो-त्सवे पूजा होमश्चात्र विधीयते । शिबिकायां निवेश्येशं पूजयित्वा विधानतः ॥५२॥ छत्रचामरवादित्रैः शृङ्गारैस्तालवृन्तकैः । दीपिकाभिरनेकाभिर्दूर्वाग्रकुसुमाक्षतैः ॥ ५३ ॥ फलमोदकहस्ताभिर्नारीभिः समलंकृतम् । देवस्याऽऽयतनं रम्यं त्रिः प्रदक्षिणमाच-रेत् ॥५४॥ तत्तन्मन्त्राञ्जपेद्दिक्षु सर्वासु द्विजपुंगवः । बलिं च निक्षिपेत्तासु देवानुद्दिश्य पूर्वतः ॥ ५५ ॥ प्राची[8] विश्वजिते सूक्तमग्ने तव अनन्तरम् । याम्ये परेयिवांसं तु सोपुणस्तु तद(स्तदन)न्तरम् ॥ ५६ ॥ याश्चाद्भिताेति प्रतीच्यां तुविहिहोत्रेत्यनन्तरम् । ससोम इति सौम्यां तु कद्रुद्रायेत्यनन्तरम् ॥ ५७ ॥ प्रजापतिस्तथा चोर्ध्वे अधश्च पृथिवीं क्षिपेत् । एवं दिक्षु बलिं दत्त्वा परि[10]णीय जनार्दनम् ॥ ५८ ॥ स्तुति[11]भिर्बहु-लाभिश्च भवनं संप्रवेशयेत् । पीठे निवेश्य देवेशं पूजयित्वा विधानतः ॥५९॥ विहिं-सोतेति सूक्तेन दद्यात्पुष्पाणि शार्ङ्गिणे । नीराजनं ततो दद्याद्ध्रुवसूक्तेन वैष्णवः ॥ ६० ॥ शाययित्वाऽथ शय्यायां दद्यात्पुष्पाणि मन्त्रतः । इमं महेति सूक्ताभ्यां पूजयेद्विष्णुमव्ययम् ॥ ६१ ॥

---

१ क. °त् । वयमुपेत्य च दद्यात्पुन आ° । २ क. नदीतीरं त° । ३ ख. °रन्मिथः । कु° । ४ ख. °जेतावभृथेष्टिं च । ५ ख. °ष्टिं वै वैष्ण° । ६ क. पिहिसो° । ७ ख. °त्रभृद्गा° । ८ ख. प्राचीं(च्यां) । ९ क. धृषे अग्ने तव नर° । १० क. परमभ्यज° । ११ ख. °तिभि. पुष्कलाभि° ।

सोदर्शनेन मन्त्रेण रक्षां कुर्यात्समन्ततः । एवं नित्योत्सवं कुर्याद्रात्रौ चाहनि सर्वदा ॥ ६२ ॥ गुरूणामन्त्यदिवसे भगवज्जन्मवासरे । कार्तिक्यां श्रावणे वाऽपि कुर्यादिष्टिं च वैष्णवीम् ॥ ६३ ॥ उपोष्य पूर्वदिवसे दीक्षितः सुसमाहितः । स्वस्तिवाचनपूर्वेण कारयेदङ्कुरार्पणम् ॥ ६४ ॥ नद्यां स्नात्वा च ऋत्विग्भिश्चतुर्भिर्वेदपारगैः । पौरुषेण विधानेन पूजयेत्पुरुषोत्तमम् ॥ ६५ ॥ गन्धैर्नानाविधैः पुष्पैर्धूपैर्दीपैर्निवेदनैः । फलैश्च भक्ष्यभोज्यैश्च ताम्बूलाद्यैः प्रपूजयेत् ॥ ६६ ॥ * ऋग्वेदसंहितायाश्च प्रत्यृचं कुसुमैर्यजेत् । अर्घ्याद्यैरुपचारैस्तु सूक्तान्ते पूजयेद्धरिम् ॥ ६७ ॥ अध्यायान्ते मण्डलान्ते नैवेद्यैर्विविधैरपि । पूजयित्वा हरिं भक्त्या वैष्णवान्भोजयेत्तथा ॥ ६८ ॥ आज्येन चरुणा वाऽपि तिलैः पद्मैरथापि वा । समिद्भिर्बिल्वपत्रैर्वा होमं कुर्वीत वैष्णवः ॥ ६९ ॥ यज्ञरूपं हरिं ध्यायन्प्रत्यृचं वेदसंहिताम् । होमः समाप्यते यावत्तावद्वै दीक्षितो भवेत् ॥ ७० ॥ जुहुयाद्वै गार्हपत्ये सोऽग्निमभ्यर्च्य भूतले । अग्न(ग्ने)रक्षणमप्युक्तं यावादिष्टिः समाप्यते ॥ ७१ ॥ विशिष्टान्वैष्णवान्विप्रान्भोजयेत्प्रतिवासरम् । ऋत्विजश्च पठेत्तावच्चतुर्मन्त्रान्समाहितः ॥ ७२ ॥ यजेदवभृथेष्टिं च पावमान्यैश्च वैष्णवैः । अन्ते संपूजयेद्विप्रान्वासोलंकारभूषणैः ॥ ७३ ॥ ऋत्विजश्च गुरुं चैव पूजयेच्च विशेषतः । एवमिष्टिं तु यः कुर्याद्वैष्णवीं वैष्णवोत्तमः ॥ ७४ ॥ क्रतूनां दशकोटीनां फलं प्राप्नोत्यसंशयः । यस्मिन्देशे वैष्णवेष्ट्या पूजितो मधुसूदनः ॥७५॥ दुर्भिक्षरोगाग्निभयं तस्मिन्नास्ति न संशयः ॥७६॥ अशक्तः सर्ववेदे(वेदे)न कर्तुमिष्टिं च वैष्णवीम् । सर्वैश्च वैष्णवैः सूक्तैर्जुहुयात्प्रत्यृचं हविः । तैरेव पुष्पाञ्जलिं च कुर्यादिष्ट्या प्रपूर्तये । अथवा मूलमन्त्रेण लक्षं जप्त्वा हुताशने ॥७८॥ अयुतं जुहुयात्तद्वत्पुष्पाणि च सनातने । इष्टिः संपूर्णतां याति सर्ववेदाः सदक्षिणाः ॥ ७९ ॥ एवमिष्टिं प्रकुर्वीत प्रत्यब्दं वैष्णवोत्तमः । तुष्ट्यर्थं वासुदेवस्य वंशस्योज्जीवनाय च । + वृद्ध्यर्थमपि लोकस्य देवतानां हिताय च ॥ ८० ॥ पिता वा यदि वा माता भ्राता वाऽन्यसुहृज्जनः । यदि पञ्चत्वमापन्नः कथं कुर्याद्द्विजोत्तमः ॥ ८१ ॥ कनिष्ठवर्जमवात्र वपनं मुनिभिः स्मृतम् । स्नात्वाऽऽचम्य विधानेन कारयेत्पूजनं हरेः ॥८२॥ रङ्गवल्ल्यादिभिस्तत्र कुर्यात्सर्वत्र मङ्गलम् । रोदनं वर्जयित्वैव गोमयेन शुचि स्थलम् ॥ ८३ ॥ विलिप्य मण्डले तत्र धान्यस्योपर्युलूखलम् । कलशांस्तु चतुर्दिक्षु तण्डुलोपरि निक्षिपेत् ॥ ८४ ॥

* एतदर्धं न ख पुस्तके । + एतदर्धं न क पुस्तके ।

१ क. श्रवणे । २ क. भक्षभो° । ३ ख सूपते । ४ ख. °मन्त्रं तु ल° । ५ ख वाऽन्ये सुहृज्जनाः । श° । ६ ख. °पन्नाः क° । ७ क. °पवनं ।

हिरण्यपञ्चगव्यानि पञ्च त्वक्पल्लवान्न्यसेत् । वाससा तन्तुना वाऽपि वेष्टयेत्त्रिः प्रदक्षिणम् ॥ ८५ ॥ उलूखले वासुदेवं कलशेषु क्रमेण तु । प्रद्युम्नमनिरुद्धं च संकर्षणमधोक्षजम् ॥ ८६ ॥ संपूज्य गन्धपुष्पाद्यैर्भक्त्या भक्ष्यं निवेदयेत् । अभ्यर्च्य मुसलं पुष्पैर्गायत्र्या प्रणवेन च ॥ ८७ ॥ हरिद्रामवहन्यात्तु परोमात्रेति वै जपन् । भगवन्मन्दिरे विष्णुं हरिद्राद्यैः प्रपूजयेत् ॥ ८८ ॥ पितुः शरीरं विधिवत्स्नापयेत्कलशोदकैः । तिलैश्च[1] पञ्चगव्यैश्च[2] गायत्र्या वैष्णवेन च ॥ ८९ ॥ उद्वर्त्य[3] धात्रि(त्री)-चूर्णेन तिलैः पञ्चामृतैस्तथा । संवत्कर्मेति सूक्तेन गायत्र्या वैष्णवेन च ॥९०॥ न वा कर्मणेति [ततः]स्नापयेत्पितरं सुतः । नारायणानुवाकेन चैवं स्नाप्य ततः पितुः ॥९१ धौतवस्त्रं च संवेष्ट्य भूषणैर्भूषयेत्ततः । गन्धमाल्यैरलंकृत्य शुचौ देशे कुशोत्तरे ॥ ९२ ॥ तिलोपरि निधायैनं वस्त्रं हित्वाऽन्यतः सुतः । धारयेदुत्तरीये द्वे यावत्कर्म समाप्यते ॥ ९३ ॥ हुत्वैवोपासनं तस्यं आर्द्रयज्ञी(ज्ञि)यकाष्ठकैः । शिविकां कारयित्वाऽथ वस्त्रमालादिभिः शुभाम् ॥ ९४ ॥ तस्मिन्निवेश्य तं प्रेतं वाहकान्वरयेत्ततः । स्ववर्णवैष्णवानेवं पूजयेत्स्वर्णदक्षिणैः ॥ ९५ ॥ * पूजयेत्तान्हिरण्याद्यैर्वस्त्रालंकारभूषणैः । प्रणिपातनमस्कारैर्गन्धपुष्पाक्षतादिभिः ॥ ९६ ॥ वहेयुस्तेऽपि भक्त्या तं पठन्विष्णुस्तवान्मुदा । हरिद्रालाजपुष्पाणि विक(कि)रन्वैष्णवो मुदा ॥ ९७ ॥ वादित्रनृत्यगीताद्यैर्व्रजेयुः कीर्तयेद्धरिम्[10] । हुताग्निमग्रतः कृत्वा गच्छेयुस्तस्य बान्धवाः ॥ ९८ ॥ वाहकानामलाभे तु शकटे गोवृषान्विते । निवेश्य शिविकां रम्यां व्रजेयुर्नगराद्बहिः ॥ ९९ ॥ दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् । पश्चिमोत्तरपूर्वेषु यथासंख्यं द्विजातयः ॥ १०० ॥ प्राग्द्वारं सर्ववर्णानां न निषिद्धं कदाचन । गत्वा शुभतरं देशं रम्यं शुभजलान्वितम् ॥ १०१ ॥ यज्ञवृक्षसमाकीर्णममेध्यादिविवर्जितम् । खातयेत्तत्र कुण्डं तु निम्नं हस्तद्वय तथा[11] ॥ १०२ ॥ द्वाभ्यां त्रिभिर्वा विस्तारं चतुरायतमेव च । ततः संमार्जनं कृत्वा गोमयान्वितवारिणा ॥ १०३ ॥ संप्रोक्ष्य याज्ञियैः काष्ठैश्चितिं[12] कुर्याद्यथाविधि । आस्तीर्य दक्षिणामेवमेणाजिनमनुत्तमम् ॥ १०४ ॥ तस्मिन्नास्तीर्य दर्भान्वै विकीर्य च तिलांस्तथा । तस्मिन्निवेश्य तं प्रेतं घृताक्तं नववस्त्रकम् ॥ १०५ ॥ ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयाद्दैवे पित्र्ये च कर्मणि ॥ १०६ ॥

---

* इत आरभ्य पुष्पाक्षतादिभिरित्यन्तं न ख. पुस्तके ।

---

१ क तिलधात्रीप° । २ क °व्यैर्गा° । ३ ख. °र्त्य सर्वकर्मणे° । ४ क तत. परम् । धौ° । ५ ख. °रि विवा° । ६ ख. सुतम् । ७ क °स्य शिबिका कारयेच्छुभाम् । आर्द्रयज्ञस्य काष्ठैः । ८ क °व वरयेत्तत्र वैष्णवैः । पू° । ९ ख. °ष्णवा मु° । १० ख. °र्तयन्हरि° । ११ ख. तदा । १२ ख. काष्ठैः स्थितिं ।

परिषिच्य चितिं पश्चादापो अस्मानितीत्यृचा । परिस्तीर्य शुभैर्दर्भैरपसव्येन सव्यतः ॥ १०६ ॥ उरस्यग्निं निधायास्य पात्रासादनमाचरेत् । *प्रोक्षणं चमसाज्येन चरुमिध्मस्रुवौ तथा ॥ १०७ ॥ आसाद्योक्तविधानेन इध्माधानान्तमाचरेत् ॥ १०८ ॥ स्वगृह्योक्तविधानेन हुत्वा सर्वमशेषतः । पश्चादाज्ययुतं सर्वं जुहुयादुपवीतवान् ॥ १०९ ॥ सोमानमित्योदनेन प्रत्यृचं तत आज्यतः । तन्महेन्द्रेति सूक्तेन हुत्वा प्रत्यृचमेव च ॥ ११० ॥ एष इत्यनुवाकाभ्यां पृषदाज्यं यजेत्ततः । सर्वैश्च वैष्णवैर्मन्त्रैः पृथगष्टोत्तरं शतम् ॥ १११ ॥ तिलैश्च जुहुयात्पश्चादष्टाविंशतिमेव वा । एकैकामाहुतिं पश्चाद्वैकुण्ठपार्षदं यजेत् ॥ ११२ ॥ ब्रह्ममेध इति प्रोक्तं मुनिभिर्ब्रह्मतत्परैः । महाभागवतानां च कर्तव्यमिदमुत्तमम् ॥ ११३ ॥ केशवार्पितसर्वाङ्गं शैशिर्यं मङ्गलाद्वयम् । न वृथा दापयेद्विद्वान्ब्रह्ममेधविधिं विना ॥ ११४ ॥ परमावगतेनापि कर्तव्यं हि द्विजन्मनः । द्रव्यालाभेऽपि होतव्यं यज्ञियैश्च प्रसूनकैः ॥ ११५ ॥ शूद्रस्यापि विशिष्टस्य परमैकान्तिनस्तथा । स्वाहाकारं च वेदं च हित्वा पुष्पैर्यजेच्छुभैः ॥११६ तूष्णीमद्भिः परिषिच्य परिस्तीर्य कुशैस्तिलैः । नामभिः केशवाद्यैश्च तथा संकर्षणादिभिः ॥ ११७ ॥ मत्स्यकूर्मादिभिश्चैव वेदार्थोक्तप्रबन्धकैः । नमोन्तमेव जुहुयात्स्वाहाकारं विवर्जयेत् ॥ ११८ ॥ अमन्त्रकं प्रजुहुयाच्छूद्रः सर्वमशेषतः । दग्ध्वा शरीरं विधिवद्वैष्णवस्य महात्मनः । ११९ ॥ यन्मरणं तदवभृथमिति मत्वा विचक्षणः । स्नानार्थं पुण्यसलिलं व्रजेद्भागवतैः सह ॥ १२० ॥ अनुलिप्य घृतं सर्वं गोमयं वा तिलैः सह । दूर्वाग्रैरक्षतैर्लाजैः स्नानं कुर्वीत मङ्गलम् ॥ १२१ ॥ स्वगृह्योक्तविधानेन तस्य पुत्राः स्वगोत्रजाः । पिण्डोदकप्रदानाद्यं कर्म चैवौर्ध्वदेहिकम् ॥ १२२ ॥ निर्वर्त्य विधिना धर्मं सामान्येनावशेषतः । विशिष्टं परमं धर्मं नारायणबलिं ततः ॥ १२३ ॥ प्रकुर्याद्वैष्णवैः सार्धं यथाशास्त्रमतन्द्रितः । निमन्त्रयेत्तु पूर्वाह्णे ब्राह्मणान्वैष्णवाञ्शुभान् ॥ १२४ ॥ चतुर्विंशतिसंख्याकान्महाभागवतोत्तमः । केशवादीन्समुद्दिश्य चतुर्विंशतिसंख्यकान् ॥ १२५ ॥ रात्रौ निमन्त्र्य चोद्दिश्य केशवादीनतन्द्रितः । प्रातरुत्थाय ते सर्वे गत्वा पुण्यां नदीं शुभाम् ॥ १२६ ॥ धात्रीफलानुलिप्ताङ्गो निमज्ज्य विमले जले । जपन्वै वैष्णवान्सूक्तान्स्नानं कुर्वीत तैर्द्विजैः ॥ १२७ ॥ वैकुण्ठतर्पणं कुर्यात्कुसुमैः सतिलाक्षतैः । गृहं

* एतद्वचनं न विद्यते क. पुस्तके ।

१ ख. हृव्यं । २ ख. °तः । तं महे° । ३ ख. °यात्पादमष्टा° । ४ क शरीरं मङ्गलस्यं रूपकम् । स वृथा भावये° । ५ क. द्रव्यलाभे तु हो° । ६ ख प्रकुर्वीत शूद्र° । ७ क °नाल्यं क° । ८ क. °शास्त्रं यथाविधि नि° । ९ ख. पूर्वेद्युर्ब्राह्म° । १० क °त्तम । के° । ११ ख. °तिवैष्णवान् । रा° । १२ ख. °न्प संपूज्य तैः सार्धं विजितेन्द्रियः । प्रा° । १३ ख °य तैर्गत्वा नदीं पुण्यजलान्विताम् । १४ ख. °त वै द्विजः । वै° ।

गत्वाऽर्चयेद्देवं सर्वावरणसंयुतम् ॥ १२८ ॥ सुगन्धपुष्पैर्विविधैर्गन्धैर्धूपैश्च दीपकैः । नैवेद्यैर्भक्ष्यभोज्यैश्च फलैर्नीराजनैरपि ॥ १२९ ॥ अर्चयित्वा विधानेन मूलमन्त्रेण वैष्णवः । पुरतोऽग्निं प्रतिष्ठाप्य इध्माधानं समाचरेत् ॥ १३० ॥ चरुं सशर्कराज्यं तु जुहुयाद्वह्निमण्डले । प्रत्यृचं[1] जुहुयान्मन्त्रैर्वैष्णवैः केशवादिभिः ॥ १३१ ॥ हुत्वा तु वैष्णवैर्मन्त्रैः पृथगष्टोत्तरं शतम् । ×गव्याज्येनैव जुहुयाच्चतुर्भिर्वैष्णवोत्तमः ॥ १३२ ॥ वैकुण्ठपार्षदं हुत्वा होमशेषं समापयेत्[2] । अग्नेरुत्तरभागे[3] च गोमयेनानुलिप्य चै[4] । ॥ १३३ ॥ आस्तीर्य दर्भान्प्रागग्रांश्चतुर्विंशतिसंख्यया । उदक्प्रावणिकेनैव केशवादी[5]-न्क्रमेण तु । अभ्यर्च्य गन्धपुष्पाद्यैस्तत्तन्मन्त्रै[6]र्यथाक्रमम् । मध्वाज्यतिलमिश्रेण चरुणा पायसेन वा ॥ १३५ ॥ कुशेषु तेषु दद्यात्तु पिण्डांस्तीर्थे[7] तु दैवते । स्वाहाकारेण मनसा केशवादीन्क्रमेण वै ॥ १३६ ॥ दत्त्वा पिण्डान्सम[भ्य]र्च्य गन्धपुष्पा-क्षतोदकैः । नित्येभ्य[8]श्चैव मुक्तेभ्यो वैष्णवेभ्यस्तथैव च ॥ १३७ ॥ दद्यात्पिण्डत्रयं[9] पश्चात्तेषां दक्षिणतः क्रमात् । विष्णोर्नुकेति सूक्तेन उपस्था[10]य समाहितः ॥ १३८ ॥ प्रदक्षिणं नमस्कारं कृत्वा भक्त्याऽथ वैष्णवः । पिण्डांस्तु सलिले दत्त्वा स्नात्वा संपूज्य केशवम् ॥ १३९॥ ब्राह्मणान्भोजयेत्पश्चात्पादप्रक्षालनादिभिः । केशवादीन्स[11]म-भ्यर्च्य नित्यान्मुक्तांश्च वैष्णवान् ॥ १४० ॥ संपूज्य विधिवद्भक्त्या महाभागवतो-त्तमान् । पायसं सगुडं साज्यं शुद्धान्नं पानकैः फलैः ॥ १४१ ॥ संभोज्य विप्राना-चान्तान्प्रणिपत्य विसर्जयेत् । हविष्यं च सकृद्भुक्त्वा भूमौ[12] स्वप्यात्कुशोत्तरे ॥१४२॥ अथ नारायणबलिर्मुनिभिः संप्रकीर्तितः । स्वर्गस्थानां च सर्वेषां कर्तव्यो वैष्णवो-त्तमैः ॥ १४३ ॥ अलाभेषु तु विप्रेषु[13] सर्वं कृत्वाऽप्यशक्तितः । केशवादीन्समुद्दिश्य नित्यान्मुक्तांश्च वैष्णवान् ॥ १४४ ॥ एकं तु[14] भोजयेद्विप्रं महाभागवतोत्तमम् । श्रुतिस्मृत्युदितं धर्मं विशिष्टाद्यः समाचरेत् ॥ १४५ ॥

---

× एतदर्धं न विद्यते क. पुस्तके ।

---

१ ख. °र्चं वैष्णवैः सूक्तैः केशवाद्यैश्च नामभिः । २ क. °माचरेत् । ३ ख. °गेन गो° । ४ क. च । प्रागुदक्प्रवानेनै के° । ५ ख. °वादिक्रमे । ६ ख. न्मन्त्रै पृथक्पृथक् । म° ७ ख. °स्तीर्थे विधानतः । स्वा° । ८ ख नित्यमभ्यर्च्य मु° । ९ ख °यं चैव तेषा । १० ख. °स्थानजपं तथा । प्र° । ११ ख. °न्समुद्दिश्य नि° । १२ ख. °मौ द्द्यात्कु° । १३ ख. °षु वैष्णवेष्वप्यशक्तित. । सर्वं कृत्वा विधानेन जपहोमार्चनादिकम् । के° । १४ ख वा ।

वैष्णवं परमं धर्मं महाभागवतोत्तमम् । तस्मिन्संपूजिते विप्रे सर्वं वै पूजितं जगत्
॥ १४६ ॥ हरिश्च देवताश्चैव पितरश्च महर्षयः । तस्मिन्संपूजिते विप्रे तुष्यन्त्यत्र न
संशयः ॥ १४७ ॥ अर्चनं मन्त्रपठनं ध्यानं होमश्च वन्दनम् । मन्त्रार्थचिन्तनं योगो
वैष्णवानां च पूजनम् ॥ १४८ ॥ प्रसादतीर्थसेवा च नवेज्याकर्म उच्यते । पञ्चसं-
स्कारसंपन्नो नवेज्याकर्मकारकः ॥ १४९ ॥ आकारत्रयसंपन्नो महाभागवतोत्तमः ।
श्राद्धानामप्यलाभे तु एकं नारायणं बलिम् ॥ १५० ॥ कुर्वीत परया भक्त्या वैकु-
ण्ठपदमाप्नुयात् । नित्यं च प्रतिमासं च पित्रोः श्राद्धं विधानतः ॥ १५१ ॥ सोद-
कुम्भं प्रदद्यात्तु यावदक्षात्रि(ब्दान्ति)कं नरः । प्रत्यब्दं पार्वणश्राद्ध मातापित्रोर्मृतेऽहनि
॥ १५२ ॥ अर्चयित्वाऽच्युतं भक्त्या पश्चात्कुर्याद्विधानतः । वैष्णवानेव
विप्रांस्तु सर्वकर्मसु योजयेत् ॥ १५३ ॥ सर्वत्रावैष्णवान्विप्रान्पतितानिव संत्यजेत् ।
शङ्खचक्रविहीनास्तु देवतान्तरपूजकाः ॥ १५४ ॥ द्वादशीविमुखा विप्राः शैवाश्चावै-
ष्णवाः स्मृताः । अवैष्णवानां संसर्गात्पूजनाद्वन्दनादपि ॥ १५५ ॥ य(या)जनाध्या-
पनात्सद्यो वैष्णवत्वाच्युतो भवेत्।श्रुतिस्मृत्युदितं धर्मं नातिक्रम्याऽऽचरेत्सदा॥१५६॥
स्वशाखोक्तविधानेन वैकुण्ठार्चनपूर्वकम् । कर्तृत्वफलसङ्गित्वे परित्यज्य समाचरेत्
॥ १५७ ॥ धर्मस्य कर्ता भोक्ता च परमात्मा सनातनः । अधर्मं मनसा वाचा
कर्मणाऽपि त्यजेत्सदा ॥१५८॥ अकृत्यकरणाद्विप्रः कृत्यस्याकरणादपि । अनिग्रहा-
च्चेन्द्रियाणां सद्यः पतनमृच्छति ॥ १५९ ॥ अनिशं मनसा यस्तु पापमेवाभिचिन्त-
येत् । कल्पकोटिसहस्राणि निरयं[४] चाधिगच्छति ॥ १६० ॥ यस्तु वाचा वदेत्पापम-
सत्यकथनादिकम् । कल्पायुतसहस्राणि तिर्यग्योनिषु जायते ॥ १६१ ॥ यस्त्वघं
कुरुते नित्यं चापल्यात्करणादिभिः । युगकोटिसहस्राणि विष्ठाया जायते कृमिः
॥ १६२ ॥ दान्तः शुचिस्तपस्वी च सत्यवाग्विजितेन्द्रियः । स सात्त्विकः शमयुतः
सुरयोनिषु जायते ॥ १६३ ॥ यस्त्वर्थकामनिरतः सदा विजयतत्परः । स राजसो
मनुष्येषु भूयो भूयोऽभिजायते ॥ १६४ ॥ क्रोधी प्रमादवान्दम्भो नास्तिको विपरीत-
वाक् । निद्रालुस्तामसो याति बहुशो मृगपक्षिताम् ॥ १६५ ॥ महापापं चातिपापं
पातकं चोपपातकम् । प्रासङ्गिकं नरः कृत्वा नरकान्याति दारुणान् ॥ १६६ ॥
तामिस्रमन्धतामिस्रं महारौरवरौरवौ । संघातः कालसूत्रं च पूयशोणितकर्दमम्
॥ १६७ ॥ कुम्भीपाकं लोहशङ्कुस्तथा विण्मूत्रसागरः । तप्तायसास्त्रयो घोरास्तप्ता-
यसमयं गृहम् ॥ १६८ ॥ शय्या तप्तायसमयी पानकं चाग्निसंनिभम् । शूलमुद्गरसं-

१ ख. °वै संपू° । २ क. °ष्यन्ते नात्र सं° । ३ ख. °षादिष्टयान्तिकं द्विज । प्र° । ४ ख °यं प स
गु° । ५ ख. विषयचापलः । स ।

घातं काकककङ्कोलदंशितम् ॥ १६९ ॥ सिंहव्याघ्रमहानागभीकरं संप्रतापनम् । क्रिमिराशिमहाज्वालं तथा विण्मूत्रभोजनम् ॥१७०॥ असिपत्रवनं घोरं तप्ताङ्गारमयी नदी संजीवनं महाघोरमित्याद्या नरकाः स्मृताः ॥ १७१ ॥ महापातकजैर्घोरैरुपपातकजैस्तथा । व्रजतीमान्महाघोरान्दुर्वृत्तैरन्वितश्च यः ॥१७२॥ मायश्चित्तैरपैत्येनो यदकार्यकृतं महत् । कामतस्तु कृतं यत्तु मरणात्सिद्धिमृच्छति ॥ १७३ ॥ ब्रह्महत्या सुरापानं विप्रस्वर्णस्य हारणम् । गुरुदाराभिगमनं तत्संयोगश्च पञ्चमः ॥ १७४ ॥ संलापात्स्पर्शनाद्वासोदकशय्यासनाशनात् । सौहार्दाद्वीक्षणाद्दानात्तेनैव समतां व्रजेत् ॥१७५॥ गुर्वाक्षेपस्त्रयीनिन्दा सुहृदां वध एव च । ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ १७६ ॥ यागस्थं क्षत्रियं वैश्यं विशिष्टं शूद्रमेव च । शरणागतं स्वामिनं च पितरं भ्रातरं गुरुम् ॥ १७७ ॥ पुत्रं तपस्विनं शिष्यं भार्यां तेषां च सर्वतः । अन्तर्वत्नीं स्त्रियो गाश्च तथाऽऽत्रेयीं रजस्वलाः ॥ १७८ ॥ देवताप्रतिमां साध्वीं बालांश्चैव तपस्विनीम् । घातयित्वा समाप्नोति ब्रह्महत्यां न संशयः ॥ १७९ ॥ जैह्म्यमात्मप्लवकरं निषिद्धान्नं च भक्षणम् । रजस्वलामुखास्वादः पञ्चयज्ञादिवर्जनम् ॥ १८० ॥ अनृतं कूटसाक्ष्यं च महायन्त्रप्रवर्तनम् । आकर्षणादि षट्कर्म लाक्षालवणविक्रयः ॥ १८१ ॥ पाषण्डकौलकुहकवेदबाह्यविधिक्रिया । यक्षराक्षसभूतानामर्चनं वन्दनं तथा ॥ १८२ ॥ वक्त्रेणैवाम्बुपानं च सुरापस्त्रीनिषेवणम् । गवां निष्पीडनं क्षीरं ताम्रस्थं गव्यमेव च ॥ १८३ ॥ * सलवणं क्षीरपानं निषिद्धानां च भक्षणम् । योन्यास्वादः पञ्चयज्ञराहित्यं मलिनं तथा ॥ १८४ ॥ पात्रान्तरगतं यत्तु नारिकेलफलाम्बु च । तालहिन्तालमधूकफलानां रसमेव च ॥ १८५ ॥ खरोष्ट्रमानुषीक्षीरं सुरापानसमानि वै । मानकूटतुलाकूटं निक्षेपहरणानि च ॥ १८६ ॥ भूरत्ननारीहरणं रसाश्वस्तेयमेव च । गुडकार्पासलवणं तिलकं सामिषाम्बु च ॥ १८७ ॥ का(कु)प्यवस्त्रे च हत्वा च लोहानां हरणं तथा । विषाग्निदीपनं चैव सुवर्णस्तेयसंमितम् ॥ १८८ ॥ सखिभार्या कुमारी च सगोत्रा शरणागता । साध्वी प्रव्रजिता राज्ञी निक्षिप्ता च रजस्वला ॥ १८९ ॥ वर्णोत्तमा तथा शिष्या भार्या भ्रातृपितृव्ययोः । मातामही पितामही पितुर्मातुश्च सोदराः ॥ १९० ॥

---

* इत आरभ्य तथेत्यन्तं न विद्यते ख. पुस्तके ।

---

१ ख. कालकङ्कखो° । २ ख. °त्मस्तवं क्रूरं । ३ ख. °द्धाना च । ४ क. °कल्ककुहकव्रात्यरवादिकमेव च । चापस्यलौल्यतादि वे° । ५ क. क्षीरे । ६ क. य नारिकेलाम्बुविषेणम् । तथास्ताहि° । ७ क. °रत्नादिह° । ८ ख. °वणातिलकान्सामि° । ९ क. च । रौप(प्य)व° । १० ख. °दाहनं । ११ क. °ला । कुमारी° । १२ ख. शिष्यभा° ।

अन्या मा(भ्रा)तृव्यदुहिता मातुलानी पितृष्वसा। जननी भगिनी धात्री दुहिताऽऽचार्यभामिनी ॥ १९१ ॥ *स्नुषाऽऽचार्यसुता चैव तत्पत्नी सुमहातपाः। मातुः सपत्नी सार्वभौमी दीक्षिता चैव भामिनी ॥ १९२ ॥ कपिला महिषी धेनुर्देवताप्रतिमा तथा। आसामन्यतमां गच्छेद्गुरुतल्पग उच्यते ॥१९३॥ महापातकिनामत्र तत्संयोगिन एव च। प्रायश्चित्तं नास्ति तेषां भृग्वग्निपतनं स्मृतम् ॥ १९४ ॥ हीनवर्णाभिगमनं गर्भघ्नं भर्तृहिंसनम्। विशेषपतनीयानि स्त्रीणां पुंसां च यानि तु ॥१९५॥ स्त्रीशूद्रविट्क्षत्रवधो गोबालहननं तथा। फलपुष्पद्रुमाणां च ओषधीनां च हिंसनम् ॥ १९६ ॥ वापीकूपतडाकानां ध्वंसनं ग्रामघातनम्। अभिचारादिकं कर्म सस्यध्वंसनमेव च ॥ १९७ ॥ उद्यानारामहननं प्रपाविध्वंसनं तथा। मातापितृसुतत्यागो दारत्यागस्तथैव च ॥१९८॥ स्वाध्यायाग्निगुरुत्यागस्तथा धर्मस्य विक्रयः। कन्याया विक्रयश्चैव स्वाध्यायमद्यविक्रयः ॥ १९९ ॥ परस्त्रीगमनं चैव परद्रव्यापहारणम्। तथा पुंसोऽभिगमनं पशूनां गमनं तथा ॥ २०० ॥ वृषक्षुद्रपशूनां च पुंस्त्वविध्वंसनं तथा। कन्याया दूषणं चैव गवां योनिनिपीडनम् ॥ २०१ ॥ मानुषाणां पशूनां च नासाद्यङ्गविभेदनम्। ग्रामान्त्यजस्त्रीगमनं विज्ञेयमनुपातकम् ॥ २०२ ॥ नित्यनैमित्तिकश्राद्धवर्जनं पशुहिंसनम्। मृगपक्षिमहासर्पयादसा हननक्रिया ॥२०३॥ साधारणस्त्रीगमनं पत्न्यास्ये मैथुनं तथा। पारवित्तं पारदार्यं निन्दितार्थोपजीवनम्॥२०४॥ तथैवानाश्रमे वासो देवद्रव्योपजीवनम्। पयोदधितिलानां च विक्रयं लवणक्रयम् ॥ २०५ ॥ शाकमूलफलस्तेयमतिवृद्ध्युपजीवनम्। निमन्त्रितातिक्रमणं दुष्प्रतिग्रहमेव च ॥ २०६ ॥ ऋणानामप्रदानत्वं संध्याकालातिवर्तनम्। वृथैवाऽऽत्मपरित्यागः संग्रामे च पलायिता ॥ २०७ ॥ दुर्भोजनं दुरालापं स्वधर्मस्य च कीर्तनम्। परेषां दोषवचनं परदारनिरीक्षणम् ॥ २०८ ॥ नास्तिक्यं व्रतलोपश्च स्वाश्रमाचारवर्जनम्। असच्छास्त्राभिगमनं व्यसनान्यात्मविक्रयः ॥ २०९ ॥ व्रात्यतात्मार्थवचनमेकैकमुपपातकम्। इन्धनार्थं द्रुमच्छेदः कृमिकीटादिहिंसनम् ॥ २१० ॥ भावदुष्टं कालदुष्टं क्रियादुष्टं च भक्षणम्। मृच्चर्मतृणकाष्ठाम्बुस्तेयमत्यशनं तथा ॥ २११ ॥ अनृतं विषयचापल्यं दिवास्वप्नमसत्कथा। तच्छ्रावणं परान्नं च दिवामैथुनमेव च ॥ २१२ ॥ रजस्वलासूतिका[1] च (कयोः) परस्त्रीमभि(णां च) दर्शनम्। उपवासदिने श्राद्धे दिवा पर्वणि मैथुनम् ॥ २१३ ॥ शूद्रभोज्यं हीनसख्यमुच्छिष्टस्पर्शनादिकम्। स्त्रीभिर्हास्यं कामजल्पं भुक्तकेश्यादिवीक्षणम् ॥ २१४ ॥

---

* एतद्वचनं न विद्यते क पुस्तके।

---

1 ख. °तिका च।

इत्यादयो ये च दोषाः प्रकीर्णाः परिकीर्तिताः। महापापं पातकं च अनुपातकमेव च ॥ २१५ ॥ उपपापं प्रकीर्णं च पञ्चधा च प्रकीर्तितम्। महापातकतुल्यानि पापान्युक्तानि यानि तु ॥ २१६ ॥ तानि पातकसंज्ञानि तन्न्यूनमनुपातकम्। उपपापं ततो न्यूनं ततो हीनं प्रकीर्णकम् ॥ २१७ ॥ संसर्गस्तु तथा तेषां प्रसङ्गात्संप्रकीर्तितम्। क्रमेण वक्ष्यते तेषां प्रायश्चित्तं विशुद्धये ॥२१८॥ यो येन संवसेत्तेषां तस्यैवं व्रतमाचरेत्। संसर्गिणस्तु संसर्गस्तत्संसर्गस्तथैव च ॥ २१९ ॥ चतुर्थस्य न दोषस्तु पतत्येषु यथाक्रमम्। प्रकीर्णकादिदोषाणां प्रासङ्गिकं स(कं न) विद्यते ॥२२०॥ स्वल्पत्वात्पतनाभावात्तत्संसर्गान्न दुष्यति। स्नानाच्च शुद्धिर्दोषस्य संसर्गात्पतितं विना ॥ २२१ ॥ सावित्र्या वाऽपि शुध्येत कर्तुरेव व्रतक्रिया। कृते पापे यस्य पुंसः पश्चात्तापोऽनुजायते ॥ २२२ ॥ प्रायश्चित्तं तु तस्यैव कर्तव्यं नेतरस्य तु। जातानुतापस्य भवेत्प्रायश्चित्तं यथोदितम् ॥ २२३ ॥ नानुतापस्य पुंसस्तु प्रायश्चित्तं न विद्यते। नाश्वमेधफलेनापि नानुतापी विशुध्यते(ति) ॥ २२४ ॥ तस्माज्जातानुतापस्य प्रायश्चित्तं विधीयते[3]। चरेदकामतः कृत्वा पतनीयं[4] महत्पुमान् ॥ २२५ ॥ न कामतश्चरेद्धर्मं भृग्वग्निपतनं विना। × यः कामतो महापापं नरः कुर्यात्कथंचन ॥२२६ ॥ न तस्य शुद्धिर्निर्दिष्टा भृग्वग्निपतनं विना। इत्युक्तं ब्रह्मणा पूर्वं मनुना च महर्षिभिः ॥ २२७ ॥ पातकेषु च सर्वत्र कामतो द्विगुणं व्रतम्। कामतः पतनीयेषु मरणाच्छुद्धिमृच्छति ॥ २२८ ॥ हयमेधाय न शुद्धिः सार्वभौमस्य भूपतेः। कामतस्त्वनुपापेषु लोके न व्यवहार्यता ॥२२९॥ महत्सु चातिपापेषु प्रदीप्तज्वलनं विशेत्। प्रायश्चित्तैरपैत्येनो यदकामकृतं भवेत् ॥ २३० ॥ कामतो व्यवहार(र्य)स्तु वचनादिह जायते। इति योगेश्वरेणोक्तमुपपापेषु तत्र तत् ॥ २३१ ॥ तस्मादकामतः पापः[5] प्रायश्चितेन शुध्यति। तेषां क्रमेण वक्ष्यामि प्रायश्चित्तं विशुद्धये ॥ २३२ ॥ शिरःकपालध्वजवान्भिक्षाशी कर्म वेदयन्[7]। ब्रह्महा द्वादशाब्दानि पुण्यतीर्थे समाविशेत् ॥ २३३ ॥ प्रयागे सेतुबन्धादिपुण्यक्षेत्रेषु पापकृत्। तत्र वर्षादि विज्ञाप्य स्वकल्मषमशेषतः ॥ २३४ ॥ तत्रस्थैर्ब्राह्मणैरेवानुज्ञातो व्रतमाचरेत्। चत्वारो ब्राह्मणाः शिष्टाः पर्षदित्यभिधीयते ॥ २३५ ॥ तैरुक्तमाचरेद्धर्ममेको वाऽध्यात्मवित्तमः। जटी वल्कलवासाश्च बहिरेव समाविशन् ॥ २३६ ॥ स्नानं त्रिषवणं कुर्वन्क्षितिशायी जितेन्द्रियः। एकभुक्तेन नक्तेन फलैरनशनेन च ॥ २३७ ॥ समापयेत्कर्मफलं[8] यथाकालं यथाबलम्। राममिन्दीवरश्यामं पौलस्त्यघ्नमकल्मषम् ॥ २३८ ॥

× एतदाद्यर्धद्वयं न विद्यते क. पुस्तके।

१ ख. °धा तत्र कीं°। २ ख. °कर्मवि°। ३ ख. विशुध्यते। ४ क. तपनीयं। ५ ख. मः। ६ ख. पापं। ७ क. वेदयेत्। ८ क. °येत तत्कालं यथाविधि यथाब°।

ध्यात्वा षडक्षरं मन्त्रं नित्यं तावदहर्निशम् । एवं द्वादश वर्षाणि पुण्यतीर्थे समाचरेत् ॥ २३९ ॥ मुच्यते ब्रह्महत्यायास्तपसा वीतकल्मषः ॥ २४० ॥ चरितव्रत आयाते यवसं गोषु दापयेत् तैस्तस्य च सुसंस्काराः कर्तव्या बान्धवैर्जनैः ॥ २४१ ॥ विप्रमुख्याय गां दत्त्वा ब्राह्मणान्भोजयेत्ततः । प्रारम्भ( भ्य ) व्रतमध्ये तु यदि पञ्चत्वमाप्नुयात् ॥ २४२ ॥ विशुद्धिस्तस्य विज्ञेया शुभां गतिमवाप्नुयात् । असंस्कृतस्तु गोषु स्यात्पुनरेव व्रतं चरेत् ॥ २४३ ॥ अशक्तस्तु व्रते दद्याद्गोसहस्रं द्विजन्मने । पात्रे धनं वा पर्याप्तं दत्त्वा शुद्धिमवाप्नुयात् ॥ २४४ ॥ ब्रह्महत्यासमेष्वेवं कामतो व्रतमाचरेत् । अकामतश्चरेद्धर्मं पापं मनसि [1]चोच्यते ॥ २४५ ॥ आज्ञापयिताऽनुमन्ताऽनुग्राहकस्तथैव [ च ]। उपेक्षिताऽशक्तिमांश्चेत्पादोनं व्रतमाचरेत् ॥ २४६ ॥ कामतस्तु चरेत्पूर्णं तत्रापि द्विगुणं गुरौ । अन्तर्वत्न्यां तथाऽऽत्रेय्यां तथैव व्रतमाचरेत् ॥ २४७ ॥ आचार्ये च [2]वनस्थे च मातापित्रोर्गुरौ तथा । तपस्विनि ब्रह्मविदि द्विगुणं व्रतमाचरेत् ॥ २४८ ॥ [3]यां[ ग ]स्थं क्षत्रियं वैश्यं विशिष्टं शूद्रमेव च । कपिलां गर्भिणीं गां च हत्वा पूर्णव्रतं चरेत् ॥ २४९ ॥ अकामस्तु तेष्वर्धं मुनिभिः संप्रकीर्तितम् । [4]विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं चरेत् ॥ २५० ॥ तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः । चतुर्णामाश्रमाणां [ च ] शौचवत्साधनं चरेत् ॥ २५१ ॥ प्रायश्चित्तान्तरं मध्ये केचिदिच्छन्ति सूरयः । गोब्राह्मणपरित्राणमश्वमेधावभृथं तथा ॥ २५२ ॥ इयं विशुद्धिरुदिता [5]प्रहृत्याकामतो द्विजान् । अग्निप्रपतनं केचिदिच्छन्ति मुनिसत्तमाः ॥ २५३ ॥ लोमभ्यः स्वाहा इत्यादिमन्त्रैर्हुत्वा पृथक्पृथक् । अवाक्शिराः प्रविश्याग्नौ दग्धः शुद्धो भवेन्नरः ॥ २५४ ॥ * अकामतः सुरां पीत्वा मद्यं वाऽपि द्विजोत्तमः । पूर्ववद्द्वादशाब्दानि चरेद्व्रतमचिह्नितम् ॥ २५५ ॥ जपित्वा दशसाहस्रं त्रिसंध्यासु निरन्तरम् । द्वादशाब्दं मनुं जप्त्वा ततः शुद्धो भवेन्नरः ॥ २५६ ॥ यानि कानि च पापानि सुरापानसमानि तु । अकामतश्चरेदर्धं कामतः पूर्णमाचरेत् ॥ २५७ ॥ सर्वत्र पतनीयेषु चरित्वा व्रतमुक्त[6]वत् । पुनः संस्कारमर्हन्ति त्रयश्चैते द्विजातयः ॥२५८॥ अज्ञानात्तु सुरां पीत्वा रेतो विण्मूत्रमेव च । मानुषीक्षीरपानेन पुनः संस्कारमर्हति ॥ २५९ ॥ इत्युक्तं मनुना पूर्वमन्यैश्चापि महर्षिभिः । [7]कर( ल )ञ्जं लशुनं शिग्रु मूलकं ग्रामसूकरम् ॥२६०॥ छत्राकं कुक्कुटं काकं पिण्याकं लशुनं तथा । गृध्रमुष्ट्रं नृमांसं [8]च खरं तत्तक्रमेव च ॥ २६१ ॥

* इत आरभ्य भवेन्नर इत्यन्तं न विद्यते क पुस्तके ।

१ क. चोद्यते । २ ख. वनस्थेन मा° । ३ ख. यावत्त्वक्ष° । ४ ख. तिथे. । ५ क °मतोऽधिकान् । ६ क. °क्तवान् । पु° । ७ ख. °कुटाण्डं च कालं पि° । ८ क. चैं गो° ।

माहिषं माकरं मांससंवृ(मृ)क्षं वानरमेव च । निष्पीडितं च गोक्षीरमारनालं च मूषकम् ॥ २६२ ॥ मार्जारं श्वेतवृन्ताकं कुम्भीनिम्बदलं तथा । क्रव्यादं च तथा भेकं शृगालं व्याघ्रमेव च ॥ २६३ ॥ एवमादिनिषिद्धांस्तु भक्षयित्वा तु कामतः । चरेद्व्रतं तथा पूर्णं पादोनं वाऽप्यकामतः ॥ २६४ ॥ नारिकेलरसं पीत्वा वायुंव-त्ताडितं द्विजः । जग्ध्वा तालं शलाटुं(टुं) वा करनिर्मथितं दधि ॥ २६५ ॥ ताम्रपात्रगतं गव्यं क्षीरं च लवणान्वितम् । कराग्रेणैव यद्दत्तं घृतं लवणमम्बु च ॥२६६॥ सूतकान्नं च शूद्रान्नं कदर्याद्यन्नमेव च । श्वस्पृष्टं सूतिकादृष्टमुदायादृष्टमेव च ॥ २६७ ॥ पाषण्डभण्डचाण्डालवृपलीपतिवीक्षितम् । दत्त्वाऽवशिष्टं यक्षाणां भूतानां रक्षसां तथा ॥ २६८ ॥ उद्धृत्य वामहस्तेन वक्त्रेणैव पिबेदपः । यच्चान्नमाद्यैको-द्दिष्टे उच्छिष्टमगुरोरपि ॥ २६९ ॥ हरेरनर्पितं भुक्त्वा न भुक्त्वा देवतार्पितम् । कामतस्तु चरेद्धर्मं चरेद्वेदमकामतः ॥ २७० ॥ अकामतः सकृज्जग्ध्वा चरेच्चान्द्रायणं व्रतम् । म्लेच्छचण्डालपतितपाषण्डान्नमकामतः ॥ २७१ ॥ उदक्या सह भुक्त्वा च चरेद्धर्मव्रतं द्विजः (?) । चण्डालकूपभाण्डस्थं मद्यभाण्डस्थमेव च ॥ २७२ ॥ पीत्वा समाचरेत्पादं कामतोऽर्धं समाचरेत् । मद्यगन्धं समाघ्राय कामतो व्रतमाचरेत् ॥ २७३ ॥ अकामतस्तु निष्ठीव्य चरेदाचमनं द्विजः । अभिमन्त्र्य जलं प्राश्य सावित्र्या च समन्वितम् ॥ २७४ ॥ वृथामांसाशनं चैव भावदुष्टादिभक्षणे । चरेत्सांतपनं कृच्छ्रं चान्द्रायणमथापि वा ॥ २७५ ॥ कामतस्तु चरेत्पादमभ्यासे पूर्णमाचरेत् । कामतस्तु सुरां पीत्वा सततं चाग्निसंनिभम् ॥ २७६ ॥ गोमूत्रमम्बु वा पीत्वा मरणाच्छुद्धिमृच्छति । सुरायाः प्रतिषेधस्तु द्विजानामेव कीर्तितः ॥२७७॥ विशिष्टस्यापि शूद्रस्य केचिदिच्छन्ति सूरयः । अनृतं मद्यमांसं च परस्त्रीस्वाप-हारणम् ॥ २७८ ॥ विशिष्टस्यापि शूद्रस्य पातित्यं मनुरब्रवीत् । सुरा वै मलम-न्नादेः पापाद्वै मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ २७९ ॥ चकाराद्विशिष्टस्य शूद्रस्यापि पूर्ववचनात् ॥ २८० ॥ यत्तु राजन्यवैश्ययोर्गवाज्या-दिमध(द्य)स्याप्रतिषेधस्तन्न मतं स्यान्नं च निषिद्धादीनां सतां मतं च, विशिष्टशूद्रस्य मद्यमांसनिषिद्धत्वात्, इज्याध्ययनादिश्रौतस्मार्तकर्मार्हक्षत्रविशिष्टस्यापि तद्वद्वैश्यस्यैव च प्रतिषेधान्न तु प्रायश्चित्तालपत्वप्रतिपादनपराण्येव न त्वप्रतिषिद्धपराणि ॥ २८१ ॥ ब्राह्मणस्य मरणान्तिकमुपदिष्टम् ॥ २८२ ॥ राजन्यवैश्यविशिष्टशूद्राणां पूर्णपादो-नार्धोनव्रतचर्या उक्ताः ॥ २८३ ॥ सुरायास्तु सर्वेषां द्विजानां मरणान्तिकमेवं, शूद्रस्य गोसहस्रदानं वा परिपूर्णव्रतं वाऽऽचरितव्यं न तु मरणान्तिकम् ॥ २८४ ॥

---

१ ख. °नं पादका° । २ ख. °युना ताडि° । ३ ख. तालपलाशं वा । ४ क. °णमेव च । ५ क. °पः पक्षन्नं मा° । ६ ख. °द्दिष्टमुच्छि° । ७ ख. °ण्डानाम° । ८ ख °दन्या स° । ९ क °न्न चानि° । १० ख. °र्हस्य क्ष° । ११ क. °स्य प्र° । १२ क. °व च । शूद्रस्यार्धनगो° ।

अग्निवर्णां सुरां पीत्वा सुरायास्तु द्विजातयः। मरणाच्छुद्धिमृच्छन्ति शूद्रस्तु व्रतमाच-
रेत् ॥ २८५ ॥ मद्यं पीत्वा राजन्यवैश्यौ चरेतां व्रतमेव च। शूद्रस्त्वर्धं चरेत्तद्ब्रा-
ह्मणो मरणाच्छुचिः। यक्षरक्षःपिशाचान्नं मद्यमांससुरासमम् ॥ २८६ ॥ नात्तव्यमेव
विप्रेण भुक्त्वा तु ज्वलनं विशेत्। मद्यं वाऽपि सुरां वाऽपि यः पिबेद्ब्राह्मणाधमः॥२८७॥
अग्निवर्णं तु गोमूत्रं पिबेदञ्जलिपञ्चकम्। मरणाच्छुद्धिमाप्नोति जीवेद्यदि विशुध्यति
॥ २८८ ॥ * मद्यस्य प्रतिषिद्धचर्थं घृतं क्षीरमथाम्बु वा। प्राशयित्वाऽग्निवर्णं तु
तद्वत्तां शुद्धिमाप्नुयात् ॥ २८९ ॥ दत्त्वा सुवर्णं विप्राय गां च दत्त्वा विशुध्यति।
क्षत्रविट्शूद्रजातीनां सुवर्णे तु यथाक्रमम् ॥ २९० ॥ पादोनमर्धं पादं वा चरेद्व्रतं
यथोक्तवत्। समेष्वर्धं प्रकुर्वीत कामतः पूर्णमाचरेत् ॥ २९१ ॥ कामतः स्वर्णहारी
तु राज्ञे मुशलमर्पयेत्। स्वकर्म ख्यापयंश्चैव हतो मुक्तोऽपि वा शुचिः ॥ २९२ ॥
राज्ञा यदि विमुक्तः स्यात्पूर्ववद्व्रतमाचरेत्। आत्मतुल्यसुवर्णं वा दद्याद्विप्रस्य तुष्टिकृत्
॥ २९३ ॥ तत्समव्यतिरिक्तेषु पादमेव व्रतं चरेत्। चान्द्रायणं पराकं वा कुर्यादल्पेषु
सर्वतः[1] ॥ २९४ ॥ द्रव्यप्रत्यर्पणं कर्तुस्तन्मूल्यं द्रव्यमेव वा। व्रतं समाचरेत्कृत्वा यथा
परिषदीरितम्[2] ॥ २९५ ॥ = बलाच्चौर्येण वा स्नेहाद्व्यवहारादिनाऽपि वा। समाहृ-
रति यद्द्रव्यं तत्सर्वं स्तेयमुच्यते ॥ २९६ ॥ देशः(शं) कालं वयः शक्तिं पापं
चावेक्ष्य सर्वतः। प्रायश्चित्तं प्रदातव्यं धर्मविद्भिर्मनीषिभिः ॥ २९७ ॥ भगिनीं
मातरं पुत्रीं स्नुषामाचार्ययोषितः[3]। अकामतः सकृद्गत्वा चरेत्पूर्णव्रतं नरः ॥ २९८॥
पश्चिमाभिमुखीं गङ्गां कालिन्द्या सह संगताम्। प्लक्षप्रस्रवणं पुण्यं द्वारकां सेतु-
मेव च ॥२९९॥ चन्द्रपुष्करणीं वाऽपि वेणीसागरसंगमम्। गोदावर्याः शवर्यां वा गत्वा
तत्राऽऽचरेद्व्रतम् ॥ ३०० ॥ पूर्ववद्द्वादशाब्दानि चरेद्व्रतमनुत्तमम्। कृष्णाय नम
इत्येष मन्त्रः सर्वाघनाशनः ॥ ३०१ ॥ इममेव जपन्मन्त्रं ध्यात्वा हृदि
सनातनम्। त्रिसंध्यास्वयुतं भक्त्या नित्यं द्वादशवत्सरम् ॥ ३०२ ॥
चान्द्रायणैः पराकैर्वा कृच्छ्रैर्वा शमयेत्समाः। जीवे क्षीणेऽथवा पुण्यकामी मण्डप-
पाटलैः ॥ ३०३ ॥ निवसित्वा बहिर्ग्रामात्क्षितिशायी जितेन्द्रियः। मनःसंतापकरण-
मुद्वहेच्छोकमन्ततः ॥ ३०४ ॥ सदा कृष्णं हरिं ध्यायञ्जपन्मन्त्रमनुत्तमम्। द्वादशा-
ब्दाद्विमुच्येत पापादस्मात्तपोबलात् ॥ ३०५ ॥ भगिन्यादिषु योषित्सु यो गच्छे-
त्कामतो नरः। प्रतप्तामायसीं नारीं समाश्लिष्य हुताशने[4] ॥ ३०६ ॥ शयित्वा सुम-

* इत आरभ्य पूर्णमाचरेदित्यन्तं न विद्यते क. पुस्तके। = एतद्वचनद्वयं न विद्यते क पुस्तके।

१ ङ. सर्वशः। २ ख °षितम्। अ°। ३ ख. °मुखा ग°। ४ ख. °प्तासमतोयेन स°।

हृद्व(हाव)ह्नौ दग्धः शुद्धिमवाप्नुयात् । एतासु मतिदुष्टासु कामतो बहुशो व्रजेत् ॥ २०७ ॥ एवमग्निं विशेद्धीमान्पापं विज्ञाप्य पर्षदि । अकामतः सकृद्गत्वा चरेद्धर्मव्रतं नरः ॥ २०८ ॥ [* अभ्यासे तु चरेत्पूर्णं कामतः सकृदेव च । कामतोऽभ्यासविषये तत्रापि मरणान्तिकम् ॥ २०९ ॥ समेष्वर्धं प्रकुर्वीत सकृदेव ह्यकामतः । कामतस्तु चरेत्पूर्णमभ्यासे मरणान्तिकम् ॥ २१० ॥ अकामतो वाऽभ्यासे तु पूर्णमेव व्रतं चरेत् । अन्यास्वपि च नारीषु सकृद्गत्वाऽप्यकामतः ॥ २११ ॥ पादमेवाऽऽचरेद्धीमानभ्यासे त्वर्धमाचरेत् । साधारणासु सर्वासु चरेच्चान्द्रायणव्रतम् कामतो द्विगुणं तासु अभ्यासे व्रतमाचरेत् ॥ २१२ ॥ स्वदारास्वास्यगमने पुंसि तिर्यक्षु कामतः । चान्द्रायणं पराकं वा प्राजापत्यमथापि वा ] ॥ २१३ ॥ उदक्यां सूतिकां गत्वा चरेत्सांतपनं व्रतम् । चान्द्रायणं तथाऽन्यासु कामतो द्विगुणं चरेत् ॥ २१४ ॥ अष्टम्यां च चतुर्दश्यां दिवा पर्वणि मैथुनम् । कृत्वा सचैलं स्नात्वा च वारुणीभिश्च मार्जयेत् ॥ २१५ ॥ चण्डालीं पुंश्चलीं म्लेच्छीं पाषण्डीं पतितामपि । रजकीं बुरण्डीं (बुरुडीं) व्याधां सर्वा ग्रामान्त्यजाः स्त्रियः ॥ २१६ ॥ अकामतः सकृद्गत्वा चरेच्चान्द्रायणं व्रतम् । अभ्यासे तु व्रतं पूर्णं ताभिश्च सह भोजने ॥२१७॥ कामतस्तु सकृद्गत्वा भुक्त्वा त्वर्धं समाचरेत् । तत्र भूयश्चरेत्पूर्णमभ्यासे मरणान्तिकम् ॥ २१८ ॥ + यो येन संवसेदेषां तत्पापं सोऽपि तत्समः । संलापस्पर्शनादेव शय्याशनासनादिभिः ॥ २१९ ॥ तद्वदेवाऽऽचरेत्सर्वं व्रतं द्वादशवार्षिकम् । अकामतश्चरेद्धर्मं षण्मासात्पादमाचरेत् ॥ २२० ॥ मासत्रये द्विवर्षं स्यान्मासमात्रे तु वत्सरम् । कामतो द्विगुणं तत्र चरेदब्दादिकं व्रतम् ॥ २२१ ॥ ऊर्ध्वं तु वत्सरात्पूर्णं द्वैगुण्याद्यमतः क्रमात् । कामतो वत्सरादूर्ध्वं द्विगुणव्रतमाचरेत् ॥ २२२ ॥ ऊर्ध्वं द्विवर्षात्तस्यापि मरणान्तिकमुच्यते । य(या)जनाध्यापनाद्दानात्पानाच्च सह भोजनात् । सद्य एव पतत्यस्मिन्पतितेन सहाऽऽचरन् ॥ २२३ ॥ तत्राप्यकामतस्त्वर्धं कामतः पूर्णमाचरेत् । षण्मासे वत्सरेऽप्यत्र द्विगुणं त्रिगुणं स्मृतम् ॥ २२४ ॥ ऊर्ध्वं तु निष्कृतिर्न स्याद्भृग्वग्निपतनं विना । द्वितीयस्य तृतीयस्य नेष्यते मरणान्तिकम् ॥ २२५ ॥ अर्धपादं समुद्दिष्टं कामतो द्विगुणं तथा । ब्रह्मकूर्चोपवासेन चतुर्थस्य विनिष्कृतिः ॥ २२६ ॥

---

* धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तक एवास्ति । + इत आरभ्य मरणान्तिकमुच्यत इत्यन्तग्रन्थः क. पुस्तके न विद्यते ।

---

१ ख. त्वर्धव्रतं च° ।

पञ्चमस्य न दोषः स्यादिति धर्मविदो विदुः ॥ ३२७ ॥ अन्येषामपि संसर्गात्प्रायश्चित्तं प्रकल्पयेत् । पतनीयेषु नारीणां मरणान्तिकमुच्यते ॥ ३२८ ॥ अकामतश्चरेद्धर्मव्रतं पृथु यथोदितम् । व्यभिचारे तु सर्वत्र कामतो मरणाच्छुचिः ॥ ३२९ ॥ अकामतश्चरेत्पूर्णं प्रातिलोम्यं गता सती । अर्धमेवाऽऽनुलोम्येषु तथैव भ्रूणहादिषु ॥ ३३० ॥ यतिस्तु ब्रह्मचारी च गत्वा स्त्रियमकामतः । गुरुतल्पगमु(मो)द्दिष्टं पूर्णमर्थं(र्धं) समाचरेत् ॥ ३३१ ॥ कामतो ब्रह्मचारी तु पूर्णमेवाऽऽचरेद्व्रतम् । यतेस्तु मरणाच्छुद्धिः शिश्नस्योत्कृन्तनेन वा ॥ ३३२ ॥ तयोस्तु रेतःस्खलने कृच्छ्रं चान्द्रायणं चरेत् । जप्त्वा सहस्रं गायत्र्या गृहस्थः शुद्धिमाप्नुयात् ॥ ३३३ ॥ द्विसहस्रं वनस्थस्तु जपेद्रेतोनिपातने । तत्रापि कामतस्तेषां द्विगुणत्रिगुणादिकम् ॥ ३३४ ॥ परिव्राजनकामस्तु नयनोत्पाटनं तथा । एवं समाचरेद्धीमान्प्रायश्चित्तमतन्द्रितः ॥ ३३५ ॥ प्रायश्चित्तमकुर्वाणः पापेषु निरतः सदा । कल्पायुतशतं गत्वा नरकं प्रतिपद्यते ॥ ३३६ ॥ धृत्वा गोचर्ममात्रं तु सममेकं निरन्तरम् । पञ्चगव्यं पिबन्गोघ्नो गुरुगामी विशुध्यति ॥ ३३७ ॥ गोमूत्रेणैव च स्नात्वा पीत्वा चाऽऽचम्य वारिभिः । विष्णोः सहस्रनामानि जपेन्नित्यं समाहितः ॥ ३३८ ॥ शयीत गोव्रजे रात्रौ गवां हितमनुस्मरन् । व्याघ्रादिभिर्गृहीतां गां पङ्के निपतितां तथा ॥ ३३९ ॥ मोचयेदथ वा प्राणांस्तदर्थे वै परित्यजेत् । तेनैव हि विशुद्धः स्यादसंपूर्णव्रतोऽपि वा ॥ ३४० ॥ व्रतान्ते गोप्रदो भूत्वा ततः शुद्धिमवाप्नुयात् । गोस्वामिने च गां दत्त्वा पश्चादेतद्व्रतं चरेत् ॥ ३४१ ॥ दद्यात्त्रिरात्रमुपोष्य वृषमेकं च गा दश । योक्त्रेण गृहदाहाद्यैर्वन्धनैर्वा हता यदि ॥ ३४२ ॥ मतिपूर्वेण गां हत्वा चरेत्त्रैवार्षिकं व्रतम् । द्विवर्षं पूर्ववद्वाऽपि चर्मणाऽऽर्द्रेण वाससा ॥ ३४३ ॥ कपिलां गर्भिणीं वाऽपि वृषं हत्वा च कामतः । व्रतं द्वादश वर्षाणि चरेद्ब्रह्मव्रतोदितम् ॥ ३४४ ॥ आचार्यदेवविप्राणां हत्वा तु द्विगुणं चरेत् । होमधेनुं प्रसूतां च दाने च समलंकृताम् ॥ ३४५ ॥ उपभुक्तां वृषेणापि तां च द्वादशवार्षिकम् । निष्पीडनं वाऽपि तेषु दोषेष्वल्पमतन्द्रितः ॥ ३४६ ॥ शरणागतबालस्त्रीघातुकैः संवसेन्न तु । चीर्णव्रतानपि चरन्कृतघ्नानपि सर्वदा ॥ ३४७ ॥ अग्निदां गरदां चण्डीं भर्तृघ्नीं लोकघातिनीम् । हिंसयंस्तु विधानस्त्रीं हत्वा पापं न गच्छति ॥ ३४८ ॥ गुरुं वा बालवृद्धान्वा श्रोत्रियं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥ ३४९ ॥ नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन । प्रख्यातदोषं कुर्वीत परिप(र्ष)दुक्तं यथोदितम् ॥ ३५० ॥ अनभिख्यातदोषस्तु रहस्य-

---

१ ख. °क्त्रे च गृ° । २ क. गृ(कृ)च्छति । ३ ख. °दोष. कु° । ४ ख. °रित्यक्तं ।

व्रतमाचरेत्। कण्ठमात्रजले स्थित्वा राममन्त्रं समाहितः ॥ ३५१ ॥ जपेद्द्वादशसाहस्रं ब्रह्महा शुद्धिमाप्नुयात्। सुरापः स्वर्णहारी तु जपेदष्टाक्षरं तथा ॥ ३५२ ॥ लक्षं जप्त्वा कृष्णमन्त्रं मुच्यते गुरुतल्पगात्। उपोष्यान्तर्जले स्थित्वा वासुदेवमनुं शुभम् ॥ ३५३ ॥ जपेद्द्वादशसाहस्रं गोघ्नः प्रयतमानसः। असंख्यानि च पापानि अनुक्तान्यपि यानि च ॥ ३५४ ॥ चित्तस्थो भगवान्कृष्णः सर्वं हरति तत्क्षणात्। एकादश्युपवासस्य फलं प्राप्नोति मानवः ॥३५५॥ आषाढादिचतुर्मासे कृते भुक्त्वा जितेन्द्रियः। दुग्धाब्धौ शेषपर्यङ्के शयानं कमलापतिम् ॥ ३५६ ॥ ध्यात्वा समर्चयेन्नित्यं महद्भिर्मुच्यते ह्यघैः ॥ ३५७ ॥

इति रहस्यप्रायश्चित्तम्।

रजस्वलां सूतिकां वा चण्डालं पतितं तथा। पाषण्डिनं विकर्मस्थं शैवं[1] स्पृष्ट्वाऽप्यकामतः ॥ ३५८ ॥ गोमयेनानुलिप्ताङ्गः सवासा जलमाविशेत्। गायत्र्यष्टशतं जप्त्वा घृतं प्राश्य विशुध्यति ॥ ३५९ ॥ स्पृष्ट्वा तु कामतः स्नात्वा चरेत्सांतपनं व्रतम्। श्वपचं पतितं स्पृष्ट्वा गोवालव्यजनादिभिः[2] ॥ ३६० ॥ विड्वराहं शुनं काकं गदर्भं यूपमेव च। मद्यं मांसं तथैवोष्ट्रं विण्मूत्रं शवमेव च ॥ ३६१ ॥ करकं जलफेनं च वृक्षनिर्यासमेव च। करञ्जं लशुनं चास्थि[3] कम्बलं शिग्रुमेव च ॥ ३६२ ॥ आरग्वधद्रुमं स्पृष्ट्वा सवासा जलमाविशेत्। कर्ममध्ये तु मार्जारं स्पृष्ट्वा स्नानं समाचरेत् ॥३६३॥ बौद्धशैवपिशाचानामालयं[4] योऽनुगच्छति। सचैलमवगाह्यापः सावित्रीं त्रिशतं जपेत् ॥ ३६४ ॥ तत्स्पृष्टस्पृष्टिनो स्पृष्ट्वा सवासा जलमाविशेत्। ऊर्ध्वमाचमनं प्रोक्तं धर्मविद्भिरकल्मषैः ॥ ३६५ ॥ उच्छिष्टकेशभस्मास्थिकपालं मलमेव च। स्नानार्द्रधरणीं स्पृष्ट्वा स्नानं चैव समाचरेत् ॥ ३६६ ॥ प्रक्षाल्य पादौ संक्रम्य तथैवाऽऽचम्य वारिणा। मन्त्रसंमार्जितजलं स्पृष्ट्वा[5] गां च विशुध्यति ॥ ३६७ ॥ विशिष्टानां च विप्राणां गुरूणां व्रतशालिनाम्। विनेतराणा[6]मुच्छिष्टं स्पृष्ट्वा स्नानं समाचरेत् ॥३६८॥ शैवानां पतितानां च बाह्यानां त्यक्तकर्मणाम्। उच्छिष्टस्पर्शनं कृत्वा[7] गां वा दद्यात्पयस्विनीम् ॥३६९॥ उच्छिष्टेन स्वयं चान्यमुच्छिष्टं यद्यकामतः। स्पृष्ट्वा सचैलं स्नात्वा च सावित्र्यष्टशतं जपेत् ॥ ३७० ॥ कामतश्चाऽऽचरेत्कृच्छ्रं ब्रह्मकूर्चं द्विजोत्तमः। राजानं च विशं शूद्रं चरेच्चान्द्रायणं द्विजः। तौ च स्नात्वा चरेत्कृच्छ्रं गां वा दद्यात्पयस्विनीम् ॥ ३७१ ॥ उच्छिष्टेन[8] स्पृशञ्शूद्रमुच्छिष्टं श्वानमेव च। सवासा जलमाप्लुत्य चरेत्सांतपनं व्रतम् ॥ ३७२ ॥ तत्रापि कामतः स्पृष्ट्वा पराकद्वयमाचरेत्। पञ्चगव्यं पिबेच्छूद्रः स्नात्वा नद्यां विधानतः ॥ ३७३ ॥

---

१ ख. शवं। २ ख गोपालव्यजनादृतम्। वि°। ३ ख. °त्रं दशमे°। ४ ख. चानुगच्छति स्वस्य शुद्धये। सचैलमेकवाह्या°। ५ ख. ता। ६ ख. विनीत°। ७ ख. °त्वा चरेच्चान्द्रायणं व्रतम्। ८ ख. उच्छिष्टिनं।

चण्डालं पतितं मद्यं सूतिकां च रजस्वलाम् । उच्छिष्टेन तु संस्पृष्टः पराकत्रयमाचरेत् ॥ ३७४ ॥ उच्छिष्टेन चिरं कालमुषित्वा स्नानमाचरेत् । उच्छिष्टाशौचमरणे चरेद(रन्त्व)ब्दं द्विजातयः ॥३७५॥ रजस्वला सूतिका वा पञ्चत्वं यदि चेद्गता । पञ्चगव्यैः स्नापयित्वा पावमान्यैर्द्विजातयः ॥ ३७६ ॥ प्रत्यृचं कलशैः स्नाप्य सपवित्रैर्जलैः शुभैः । शुभवस्त्रेण संवेष्ट्य दाहं कुर्याद्विधानतः ॥ ३७७ ॥ चण्डालाद्ब्राह्मणात्सर्पात्क्रव्यादादुदकादिभिः । हतानामपि कुर्वीत पूर्ववद्द्विजपुंगवः ॥ ३७८ ॥ तत्रापि कामतः कुर्यात्षडब्दं तस्य बान्धवाः । विषाद्यैर्घनशस्त्राद्यैरात्मानं यदि घातयेत् ॥ ३७९ ॥ गोशतं विप्रमुख्येभ्यो दद्यादेकं वृषं तथा । नारायणबलिं कृत्वा सर्वमप्यौर्ध्वदेहिकम् ॥ ३८० ॥ रजस्वला तु या नारी स्पृष्ट्वा चान्यां रजस्वलाम् । चण्डालं पतितं वाऽपि शुनं गर्दभमेव च ॥ ३८१ ॥ तावत्तिष्ठेन्निराहारा चरेत्सांतपनं व्रतम् । स्पृष्ट्वाऽप्यकामतः स्नात्वा पञ्चगव्यैः शुभैर्जलैः ॥ ३८२ ॥ चातुर्वर्ण्यस्य गेहेषु चण्डालः पतितोऽपि वा । अन्तर्वर्त्नी भवेत्सा चेत्कथं स्यात्तत्र निष्कृतिः ॥ ३८३ ॥ तद्गृहं तु परित्यक्त्वा(ज्य) दग्ध्वा वाऽन्यत्र संस्थितः । संसर्गोक्तप्रकारेण प्रायश्चित्तं समाचरेत् । ३८४ ॥ *पृथक्पृथक्प्रकुर्वीरन्सर्वे गृहनिवासिनः । दाराः पुत्राश्च सुहृदः प्रायश्चित्तं यथोदितम् ॥ ३८५ ॥ सभर्तृकाणां नारीणां वपनं तु विवर्जयेत् । सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलित्रयम् ॥ ३८६ ॥ केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् । प्रायश्चित्ते तु संपूर्णे कृत्वा सांतपनं व्रतम् ॥ ३८७ ॥ ब्रह्मकूर्चोपवासं वा विशुध्यति तदेनसः ॥ ३८८ ॥ अर्वाक्संवत्सरार्धात्तु गृहदाहं न चोदितम् (?) । यद्गृहे पातकोत्पत्तिस्तत्र(च) यत्नेन दाहयेत् ॥ ३८९ ॥ त्यजेद्वा संनिकृष्टाच्च शुद्धिं चैवाऽऽत्मनस्ततः । संबन्धाच्चैव संसर्गात्तुल्यमेव नृणामघम् ॥ ३९० ॥ तस्मात्संसर्गसंबन्धान्पतितेषु विवर्जयेत् ॥ ३९१ ॥ चण्डालपतितादीनां तोयं यस्तु पिबेन्नरः । पराकं कामतः कुर्याद्ब्रह्मकूर्चमकामतः ॥ ३९२ ॥ अभ्यासे तु षडब्दं स्याच्चान्द्रायणमकामतः । चण्डालानां तडागे वा नदीनां तीर्थ एव वा ॥ ३९३ ॥ स्नात्वा पीत्वा जलं विप्रः प्राजापत्यमकामतः । कामतस्तु पराकं वा चान्द्रायणमथापि वा ॥३९४॥ अभ्यासे तु व्रतं पूर्णं षडब्दं स्यादकामतः । सर्वेषां प्रतिलोमानां पीत्वा सांतपनं चरेत् ॥ ३९५ ॥ चान्द्रायणं पराकं वा त्र्यब्दं वाऽपि यथाक्रमम् । भोजने गमनेऽप्येवं प्रायश्चित्तं समाचरेत् ॥३९६॥ चाण्डालपतितादीनां गृहेष्वन्नमपि द्विजः । भुक्त्वाऽब्दमाचरेत्कृच्छ्रं चान्द्रायणमकामतः ॥ ३९७॥ चण्डालवाटिकायां तु सुप्त्वा भुक्त्वाऽ-

---

* एतद्वचनं न विद्यते क पुस्तके । + एतदाद्यर्धद्वयं न क. पुस्तके ।

---

१ ख. विशुध्यन्ति ।

प्यकामतः । चरेत्सांतपनं कृच्छ्रं चान्द्रायणमथापि वा ॥ ३९८ ॥ चण्डालवाटिकायां तु मृतस्याब्दं विशोधनम् । स्नापनं पञ्चगव्यैश्च पावमान्यैः शुभैर्जलैः ॥३९९॥ शूद्रान्नं सूतिकान्नं वा शुना स्पृष्टं च कामतः । भुक्त्वा चान्द्रायणं कृच्छ्रं पराकं वा समाचरेत् ॥ जलं पीत्वा तयोर्विप्रः पञ्चगव्यं पिबेद्द्र्यहम् ॥ ४००॥ चाण्डालः पतितो वाऽपि यस्मिन्गेहे समाविशेत् । त्यक्त्वा मृन्मयभाण्डानि गोभिः संक्रामयेत्त्र्यहम् ॥४०१॥ मासादूर्ध्वं दशाहं तु द्विमासं पक्षमेव च । षण्मासात्तु तथा मासं गवां वृन्दं निवेशयेत् ॥ ४०२ ॥ ऊर्ध्वं तु दहनं प्रोक्तं लाङ्गूलेन च खात(न)नम् । ब्रह्मकूर्चं तथा कृच्छ्रं चान्द्रायणमथापि वा ॥ ४०३ ॥ अतिकृच्छ्रं पराकं च त्र्यब्दं वाऽपि समाचरेत् । षडब्दमूर्ध्वं षण्मासात्प्रायश्चित्तं समाचरेत् ॥ ४०४॥ वत्सरादूर्ध्वं संपूर्णं व्रतमेवाऽऽचरेद्बुधः । अमेध्यशवचण्डालमद्यमांसादिदूषितात् ॥ ४०५ ॥ कूपादुद्धृत्य कलशैः सहस्रं रेचयेज्जलम् । निक्षिप्य पञ्च गव्यानि वारुणैरपि मन्त्रयेत् ॥ ४०६ ॥ तडागस्यापि शुद्ध्यर्थं गोभिः संक्रामयेज्जलम् । धान्यं(न्ये) तु क्षालनाच्छुद्धिर्बाहुल्यं प्रोक्षणादपि ॥ ४०७ ॥ रसानां तु परित्यागश्चाण्डालादिप्रदूषणात् । प्रासादद्देवहर्म्याणां चण्डालपतितादिषु ॥४०८॥ अन्तःप्रविष्टेषु तथा शुद्धिः स्यात्केन कर्मणा । गोभिः संक्रमणं कृत्वा गोमूत्रेणैव लेपयेत् ॥ ४०९ ॥ पुण्याहं वाचयित्वा तु तत्तोयैर्दर्भसंयुतैः । संप्रोक्ष्य सर्वतः पश्चादेवं समभिषेचयेत् ॥४१०॥ पञ्चामृतैः पञ्चगव्यैः स्नापयित्वाऽथ वैष्णवः । प्रत्यृचं पावमान्यैश्च वैष्णवैश्चाभिषेचयेत् ॥४११॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । चतुर्भिर्वैष्णवैर्मन्त्रैः स्नाप्य पुष्पाञ्जलिं तथा ॥ ४१२ ॥ श्रीसूक्तेन तदा दिव्यैर्दद्यान्नीराजनं द्विजः । अवैष्णवस्पर्शनेऽपि एवं कुर्वीत वैष्णवः ॥ ४१३ ॥ भिन्ने बिम्बे तथा दग्धे परित्यक्ते(ज्यै)व तं गृहे । वैदेहीं वैष्णवीमिष्ट्वा पुनः स्थापनमाचरेत् ॥ ४१४ ॥ चे.राद्यपहृते नष्टे वासुदेवं यजेच्चरुम् । स्थानान्तरगते बिम्बे पुनः स्थापनमाचरेत् ॥ ४१५ ॥ तोयाधिवासनं वेद्यामाधिरोपणमेव च । नयनोन्मीलनं दीक्षां वर्जयित्वाऽन्यमाचरेत् ॥ ४१६ ॥ पञ्चगव्यैः स्नापयित्वा पञ्चत्वक्पल्लवाञ्चितैः । मङ्गलद्रव्यसंयुक्तैरद्भिः समभिषेचयेत् ॥ ४१७ ॥ सूक्तैश्च ब्राह्मणस्पत्यै रविगैर्वैष्णवीस्तथा । चतुर्भिर्वैष्णवैर्मन्त्रैः पृथगष्टोत्तरं शतम् ॥ ४१८ ॥ वैष्णव्या चैव गायत्र्या शङ्खेन स्नापयेद्बुधः । ध्रुवसूक्तमृचं स्मृत्वा जपन्संस्थापयेद्धरिम् ॥ ४१९ ॥ ततस्तन्मूर्तिमन्त्रेण मूलमन्त्रेण वा द्विजः । दद्यात्पुष्पसहस्राणि देवतां समनुस्मरन् ॥ ४२० ॥ पश्चात्सावरणं विष्णोरर्चयित्वा विधानतः । इन्द्रसोमं सोमपतेरिति सूक्तमनुत्तमम् ॥ ४२१ ॥

१ ख. ततः । २ क. ग्रहेत् । ३ ख. °रोहण° ।

जपन्भक्त्याऽथ देवैस्तु दद्यान्नीराजनं द्विजः । प्रदक्षिणं नमस्कारं कृत्वा विप्रांस्तु भोजयेत् ॥ ४२२ ॥ अवैष्णवेन विप्रेण शूद्रेणैवार्चिते हरौ । सहस्रमभिषेकं च पुष्पाञ्जलिसहस्रकम् ॥ ४२३ ॥ महाभागवतो विप्रः कुर्यान्मन्त्रद्वयेन च । देवतोत्तरसंपर्क विना स्वाहरणं हरौ ॥ ४२४ ॥ अवैष्णवानां मन्त्राणां पक्वान्नस्य निवेदने । कृत्वा नारायणीमिष्टिं पुनः संस्कारमाचरेत् ॥ ४२५ ॥ देशान्तरगते बिम्बे चिरकालमनार्चिते । अधिवासादिकं सर्वं पूर्ववद्वैष्णवोत्तमः ॥ ४२६ ॥ विष्णोरुत्सवमध्ये तु विद्युत्स्तनितसंभवे । रथे भङ्गे ध्वजे भग्ने बिम्बे च पतिते भुवि ॥ ४२७ ॥ ग्रामदाहेऽश्मवर्षे च गुरावृत्विजि वै मृते । नालंकृतेषु विधिषु परिणीते जनार्दने ॥ ४२८ ॥ अवैदिकक्रियोपेते जपहोमादिवर्जिते । कुर्वीत महतीं शान्तिं वैष्णवीं वैष्णवोत्तमः ॥ ४२९ ॥ अग्निनाशे तु तन्मध्ये पुनराधानमाचरेत् । कुर्वीत वैनतेयेष्टिं वैष्वक्सेनीमथापि वा ॥ ४३० ॥ श्वसूकरादिसंपर्के पवित्रेष्टिं समाचरेत् । [* वैष्णवेष्टिं प्रकुर्वीत पाषण्डादिप्रदूषिते ॥ ४३१ ॥ अथास्य संप्लवे विष्णोर्यत्र यत्र च संकरम् । तत्र तत्र यजेदिष्टिं पावमानीं द्विजोत्तमः ॥ ४३२ ॥ स्वापचारैस्तथाऽन्यैर्वा मुच्यते सर्वकिल्बिषैः । अवैष्णवेन विप्रेण स्थापिते मधुसूदने ॥ ४३३ ॥ तद्राष्ट्रं वा भूपतिर्वा विनाशमुपयास्यति । कुर्वीत वासुदेवेष्टिं सर्वं पापं प्रशामयेत् ॥ ४३४ ॥ महाभागवतेनैव पुनः संस्कारमाचरेत् ] । सेनेशवैनतेयादिनित्यानां च दिवौकसाम् ॥ ४३५ ॥ मुक्तानामपि पूजार्थं बिम्बानि स्थापयेद्यदि । निवेश्याप्येकरात्रं तु गव्यैः स्नाप्याथ देशिकः ॥ ४३६ ॥ सर्वैश्च वैष्णवैः सूक्तैस्तद्गायत्र्या सहस्रकम् । कुम्भेनैवाभिषिच्याथ भगवत्पुरतो न्यसेत् ॥ ४३७ ॥ स्थण्डिलेऽग्निं प्रतिष्ठाप्य यजेच्च पुरतो हरेः । अस्य वामेति सूक्तेन पायसं मधुमिश्रितम् ॥ ४३८ ॥ अष्टोत्तरशतं पश्चादाज्यं मन्त्रचतुष्टयात् । सुपर्णताक्ष्यसूक्ताभ्यां पृषदाज्यं यजेत्ततः ॥ ४३९ ॥ तिलैर्व्याहृतिभिर्हुत्वा पश्चादष्टोत्तरं शतम् । वैकुण्ठं पार्षदं चैव होमशेषं समापयेत् ॥ ४४० ॥ अहमस्मीति सूक्तेन पीठे संस्थापयेद्बुधः । प्रणवादिचतुर्थ्यन्तनामभिस्तत्प्रकाशकैः ॥ ४४१ ॥ आवाह्य पूजयित्वाऽथ दद्यात्पुष्पाञ्जलिं ततः । द्वादशार्णेन मनुना सहस्रमथ वा शतम् ॥ ४४२ ॥ सोमरुद्रेति सूक्तेन दीपैर्नीराजयेत्ततः । भोजयित्वा ततो विप्रान्गुरुं सम्यक्प्रपूजयेत् ॥ ४४३ ॥ मत्स्यकूर्मादिमूर्तीनामेवं संस्थापनं चरेत् । तत्तत्प्रकाशकैर्मन्त्रैर्जपहोमादिकं चरेत् ॥ ४४४ ॥

* एतच्चिह्नान्तर्गतग्रन्थः क. पुस्तके न विद्यते ।

१ ख. °रादान° । २ ख °दि । सनिवेद्यैक° । ३ ख. °म् । शङ्खेनै° । ४ ख. सुवर्ण° ।

सहस्रनामभिर्दद्यात्पुष्पाणि सुरभीणि तु। वापीकूपतडागानां तरूणां स्थापने तथा ॥ ४४५ ॥ वारुणीभिश्च सौम्यैश्च जपहोमादिकं चरेत्। तरूणां स्थापने गोपकृष्णं मातरमेव च ॥ ४४६ ॥ ताभ्यामेव तु मन्त्राभ्यां सहस्रं जुहुयाद्धृतम्। वैनतेयाङ्कितं स्तम्भं मध्ये संस्थापयेद्बुधः ॥ ४४७ ॥ अवैष्णवान्वये जातः कृत्वेष्टिं वैष्णवीं द्विजः। वैष्णवैः पञ्चसंस्कारैः संस्कृतो वैष्णवो भवेत् ॥ ४४८ ॥ देवतान्तरशेषस्य भोजने स्पर्शने तथा। अनर्चिते पद्मनाभे तस्यानर्पितभोजने ॥ ४४९ ॥ अवैष्णवानां विप्राणां पूजने वन्दने तथा। याजनेऽध्यापने दाने श्राद्धे चैषां च भोजने ॥ ४५० ॥ अनर्चिते भागवते हरिवासरभोजने। प्रायश्चित्तं प्रकुर्वीत वैयूहीमिष्टिमुत्तमाम् ॥४५१॥ पश्चाद्भागवतानां च पिबेत्पादजलं शुभम्। एतत्समस्तपापानां प्रायश्चित्तं मनीषिभिः ॥ ४५२ ॥ निर्णीतं भगवद्भक्तपादामृतनिषेवणम्। अङ्गीकृतं महाभागैर्महाभागवतै-र्द्विजैः ॥ ५५३ ॥ सर्वापचारैर्मुच्येत परां वृत्तिं च विन्दति। प्रायश्चित्ते तथा चीर्णे महाभागवताद्द्विजात्। वैष्णवैः पञ्चसंस्कारैः संकृतो हरिमर्चयेत् ॥ ५५४ ॥

इति श्रीवृद्धहारीतस्मृतौ महापापादिप्रायश्चित्तप्रकरणं नाम नवमोऽध्यायः ॥ ९ ॥

---

( अथ दशमोऽध्यायः )।

---

अम्बरीष उवाच—भगवन्भवता प्रोक्ता विष्णोराराधनाक्रियाः। प्रायश्चित्तमकृत्यानामसतां दण्डमेव च ॥ १ ॥ अधुना श्रोतुमिच्छामि शाश्वतीं वृत्तिमुत्तमाम्। इष्टीनां च विधानानि विशेषांश्चोत्सवान्हरेः ॥ २ ॥ हारीत उवाच—शृणु राजन्प्रवक्ष्यामि सर्वं निरवशेषतः। इष्टीनां च विधानं च हरेरुत्सवकर्मणाम् ॥ ३ ॥ नारायणी वासुदेवी गारुडी वैष्णवी तथा। वैयूही वैभवी पाद्मी (१) पवित्री पावमानिका ॥ ४ ॥ सौदर्शि(र्श)नी च सेनेशी आनन्ती च शुभाह्वया। महाभागतीत्येताः सर्वपापहराः शुभाः ॥ ५ ॥ प्रायश्चित्तार्थमपि वा भोगार्थं वा समाचरेत्। पूर्वं विघनसे विष्णुः प्रोक्तवान्विघनसा भृगोः ॥ ६ ॥ प्रोक्तं मरीरितं तेन भृगुणा द्विव्यमुत्तमम्। गुह्यं तत्सर्ववेदेषु निश्चितं ते ब्रवीम्यहम् ॥ ७ ॥ अग्निर्वै देवानामवमो विष्णुरीश्वरः। तदन्तरेण वै सर्वा देवता इति वै श्रुतिः ॥ ८ ॥ निवसन्ति पुरोडाशमग्नौ वैष्णवमव्ययम्। देवाश्च ऋषयः सर्वे योगिनः सनकादयः ॥ ९ ॥ अग्नौ यद्धूयते हव्यं विष्णवे परमात्मने। तदग्नौ वैष्णवं प्रोक्तं सर्वदेवोपजीवनम् ॥ १० ॥

---

१ ख. ह्र।

एतदेव हि कुर्वन्ति सदा नित्या अपीश्वराः। विमुक्ता अपि भोगार्थमेतमेव मुमुक्षवः ॥ ११ ॥ एतदेव परं प्रीतिः सश्रियः परमात्मनः। एतद्विना न तुष्येत भगवान्पुरुषोत्तमः ॥ १२ ॥ यज्ञार्थमेव संसृष्टमात्मवर्गं चतुर्विधम्। यज्ञार्थात्कर्मणोऽन्यत्तु तदेषां कर्मबन्धनम् ॥१३॥ वह्निर्जिह्वा भगवतो वेदा अङ्गाः सदाऽध्वरे (?)। अस्थीनि समिधः प्रोक्ता रोमा दर्भाः प्रकीर्तिताः ॥ १४॥ स्वाहाकारः शिरः प्रोक्तं प्राणा एव हवींषि च। सर्ववेदक्रिया भोगा मन्त्राः पत्न्यः प्रकीर्तिताः ॥ १५ ॥ एवं यज्ञवपुर्विष्णुर्विदित्वैनं हुताशने। जुहुयाद्वै पुरोडाशमज्ञात्वैवं पतेदधः ॥ १६ ॥ यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः। यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ॥ १७ ॥ यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च। तस्मादेनं विदित्वैवं यज्ञं यज्ञेन पूजयेत् ॥१८॥ नायं लोकोऽस्त्ययज्ञस्य कुतः स्यात्परतः शुभः। द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा परे ॥ १९ ॥ स्वाध्यायज्ञानयज्ञाश्च सदा कुर्वन्ति योगिनः। [*हरेर्भोगतया कुर्यान्न साधनतया क्वचित् ॥ २० ॥ साधनं भगवान्विष्णुः साध्याः स्युर्वैदिकाः क्रियाः। शेषभूतस्य देहस्य तद्दास्यैकफलाः क्रियाः] ॥ २१ ॥ श्रुतिस्मृत्युदितं कर्म तद्दास्यं परिकीर्तितम्[2]। नैसर्गिकं तथा कुर्यात्तद्दास्यैकं विचक्षणः ॥ २२ ॥ वैदिकेनैव मार्गेण पूजयेत्परमेश्वरम्। अन्यथा नरकं याति कल्पकोटिशतत्रयम् ॥ २३ ॥ [*तस्माच्छ्रुत्युक्तमार्गेण यजेद्विष्णुं हि वैष्णवः। अर्चायामर्चयेत्पुष्पैरग्नौ च जुहुयाद्धविः। ध्यायेत्तु मनसा वाचा जपेन्मन्त्रान्सुवैदिकान् ] ॥ २४ ॥ एवं विदित्वा सत्कर्म भोगार्थं परमात्मनः। कुर्वीत परमैकान्ती पत्युः पत्नी यथा प्रिया ॥ २५ ॥ इदं प्रसङ्गेनोक्तं स्याद्विधानं तद्ब्रवीमि ते। पूर्वपक्षे दशम्यां तु स्नात्वा संपूज्य केशवम्[3] ॥२६॥ स्वस्तिवाचनपूर्वेण कुर्यादत्राङ्कुरार्पणम्॥ हरिं नारायणेष्ट्यर्थमिति+संकल्प्य पूजयेत् ॥ २७ ॥ विष्णुप्रकाशकैराज्यं भूसूक्ताभ्यां शतं ततः ×। वैकुण्ठं (ण्ठ)पार्षदं हुत्वा[4] होमशेषं समापयेत् ॥ २८ ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तके न विद्यते। + ध्यात्वेत्यर्थः। × एतदग्रे मन्त्रेण चैवेत्यधिकं विद्यते।

---

१ क. तृप्येत। २ ख. निकीर्तितम्। ३ क. °म्। नारयणेष्ट्या देवेशं पूजयित्वा च केशवम्। इति संकल्प्य। आचार्यत्वात्ततो देवमष्टाक्षरविधानतः। जुहुयादर्ध्यजपेतु विष्णुप्रकाशकैर्मन्त्रवित्। आचम्यान्त (तः परं) परः श्रीभू°। ४ ख °त्वा स°।

अयुतं तु जपेन्मन्त्र(न्त्रं) होमश्चाष्टोत्तरं शतम् । शेषं निवेद्य देवाय भुञ्जीयात्स्वयमेव च ॥ २९ ॥ ततो मौनी जपेन्मन्त्रं शयीत पुरतो हरेः । * ब्राह्मे मुहूर्त उत्थाय ध्यात्वा नारायणं शुचिः ॥ ३० ॥ प्रभाते च नदीं गत्वा स्नात्वा संतर्प्य देवताः । संध्यामुपास्य चाऽऽगत्य स्वगृहे समलंकृते ॥ ३१ ॥ वेद्यां संपूज्य देवेशं मन्त्ररत्नविधानतः । सप्तावरणसंयुक्तं महिषीभिः समन्वितम् ॥ ३२ ॥ अभ्यर्च्य गन्धपुष्पाद्यैर्धूपदीपनिवेदनैः । अर्चयित्वा विधानेन कुण्डं दक्षिणभागतः ॥३३॥ विस्तारायामनिम्नैश्च हस्तमात्रं त्रिमेखलम् । तत्र वह्निं प्रतिष्ठाप्य इध्माधानान्तमाचरेत् ॥ ३४ ॥ ॐकारः स्यात्परं ब्रह्म सर्वमन्त्रेषु नायकः । त्र्यक्षरं तत्त्रयाणां च वेदानां बीजमुच्यते ॥ ३५ ॥ अजायन्त ऋचः पूर्वंमकाराद्विष्णुवाचकात् । श्रीवाचकादुकारात्तु यजूंषि तदनन्तरम् ॥ ३६ ॥ अजायन्त तयोः सङ्गात्सामान्यन्यान्यनेकशः । अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते ॥ ३७ ॥ तयोर्दासो मकारेण प्रोच्यते सर्वदेहिनः । कारणं सर्ववर्णानामकारः प्रोच्यते बुधैः ॥ ३८ ॥ अकारो वै च सर्वा वाक्सैषा स्पर्शोष्मभिः सदा । वह्वी सा व्यज्यमानाऽपि नानारूपा इति श्रुतिः ॥ ३९ ॥ अकार एव लुप्यन्ति सर्वमन्त्राक्षराणि हि । अकारो वासुदेवः स्यात्तस्मिन्सर्वं प्रतिष्ठितम् ॥ ४० ॥ मन्त्रो हि वीजं सर्वत्र क्रिया तच्छक्तिरुच्यते । मन्त्रतन्त्रसमायुक्तो यज्ञ इत्यभिधीयते ॥ ४१ ॥ मन्त्रः पुमान्क्रिया स्त्री च तद्युक्तं मिथुनं स्मृतम् । तस्माद्यजूंषि तन्त्राणि ऋचो मन्त्राणि चा(स्तथाऽ)ध्वरे ॥ ४२ ॥ मन्त्रक्रियाजुष्टमेव मिथुनं यज्ञ उच्यते । मन्त्रतन्त्रांशमेते ऋग्यजुषी यज्ञकर्मणि ॥ ४३ ॥ उद्गीतं(थं) तु भवेत्साम तस्मात्तद्वैष्णवं त्रयम् । ऋग्भिरेव तमुद्दिश्य पुरोडाशं यजेद्बुधः ॥ ४४ ॥ ताभिरेव तु पुष्पाणि दद्यात्कर्मसु शार्ङ्गिणे । इन्द्राग्निवरुणादीनि नामान्युक्तानि तत्र तु ॥ ४५ ॥ ज्ञेयानि विष्णोस्तान्यत्र नान्येषां स्युः कथंचन । अकारे रूढ इत्यग्निरिन्द्रत्वं परमेश्वरे॥४६॥आत्मनां प्रसवे सूर्यः सौम्यत्वात्साम इत्यतः । वायुः स्याज्जगतः प्राणाद्वरुणः सर्वजीवनः ॥ ४७ ॥ मित्रः स्यात्सर्वमित्रत्वादात्मैकत्वाद्बृहस्पतिः। रोगनाशाद्भवेद्रुद्रो यमः स्यात्तु नियामकः ॥४८॥ हिरण्यत्वमिति प्रोक्तं नेति प्राप्यत्वमुच्यते । नित्यसत्त्वाद्धिरण्यः स्यात्तद्गर्भत्वाद्धिरण्मयः ॥ ४९ ॥ हिरण्य-

* एतदर्धं न विद्यते ख. पुस्तके ।

१ ख °ध्यामन्वास्य । २ क पूर्वे म° ३ क °त्सामत्यस्यान्यमेकश । ४ क. सह । ५ क. वा । ६ ख. °ग्निमिन्द्रत्वं वर ईश्व° । ७ क आत्मानं प्रसवे सूर्य सौम्यतत्सोम° । ८ क °स्याज्जीवतः । ९ क. °नाशो भवे° । १० क. °क. । हरिसंत्व° ।

गर्भ इत्युक्तः सत्त्वगर्भो जनार्दनः॥हिरण्मयः स भूतेभ्यो ददृशे इति वै श्रुतिः ॥५०॥ सर्वान्स त्राति सविता पिता च पितृतत्पिता । स्वर्भूर्भुव इति प्रोक्तो वेदवेद्येति चोच्यते ॥ ५१ ॥ यस्य च्छन्दांसि चाङ्गानि ससुपर्णमिहोच्यते । अत्राङ्गं वर्णमित्युक्तं छन्दोमयमुदाहृतम् ॥ ५२ ॥ गायत्र्युष्णिगनुष्टुप्च वृहती पङ्क्तिरेव च । त्रिष्टुप् च जगती चैव च्छन्दांस्येतान्यनुक्रमात् ॥ ५३ ॥ एतानि यस्य चाङ्गानि स सुपर्ण इहोच्यते । यस्माज्जातास्त्रयो वेदा जातवेदाः स उच्यते ॥ ५४ ॥ पावमानः पावयित्वा शिवः स्यात्सर्वदा शुभात् । सुजनैः सेव्यते यस्तु अतो वै शंभुरित्यजः ॥ ५५ ॥ अन्यान्यस्यैव नामानि वैदिकानि विवेचनात् । पुंनामानि यानि विष्णोः स्त्रीनामानि श्रियस्तथा ॥ ५६ ॥ परस्य वैदिकाः शब्दाः समाकृष्येतरेष्वपि । व्यवह्रियन्ते सततं लोकवेदानुसारतः ॥ ५७ ॥ न तु नारायणादीनि नामान्यन्यस्य कर्हिचित् । एतन्नाम्नां गतिर्विष्णुरेक एव प्रचक्षते ॥५८॥ शब्दब्रह्मत्रयी सर्वं वैष्णवं तदिहोच्यते । देवतान्तरशङ्का तु न कर्तव्या हि वैदिके ॥५९॥ वषट्कृतं तु यद्वेदे तदत्यन्तप्रियं हरेः । स्वाहास्वधाभ्यां मनसा हुतं तद्वैष्णवं स्मृतम् ॥ ६० ॥ समिदाज्यैर्या आहुतीर्ये वेदेनैव जुह्वति । यो मनसा स वर इत्यृचां प्रोक्तः सदाऽध्वरे॥६१॥ वेदेनैव हरिं तस्माद्यजेत द्विजसत्तमः। प्रसङ्गादेवमुक्तं स्याद्विधानं तद्ब्रवीमि ते ॥६२॥ ऋग्वेदसंहितायां तु मण्डलानि दश क्रमात् । एकैकमिष्ट्या होतव्यं चरुणा पायसेन वा ॥ ६३ ॥ घृतेन वा तिलैर्वाऽपि बिल्वपत्रैरथापि वा । अग्निमीळ इति पूर्वं मण्डलं प्रत्यृचं यजेत् ॥ ६४ ॥ पुष्पाणि च तथा दद्यात्सुगन्धीनि जनार्दने । विष्णुसूक्तैर्हविर्हुत्वा चतुर्मन्त्रैः शतं यजेत् ॥ ६५ ॥ वैकुण्ठपार्षदं होमं तर्पणं चापि पूर्ववत् । वैष्णवान्भोजयेन्नित्यमग्निं चापि सुसंग्रहेत् ॥ ६६ ॥ उपोषितो दीक्षितश्च यावदिष्टिः समाप्यते । अन्ते चावभृथेष्टिं च पुष्पयागं च पूर्ववत् ॥ ६७ ॥ आचार्यं ब्राह्मणांश्चापि दक्षिणाभिः प्रपूजयेत् । इमां नारायणेष्टिं च सकृद्वाऽपि यजेत्तु यः ॥ ६८ ॥ अनवद्या भवेच्चेष्टीम( ष्टिर )युतं मूलमन्त्रतः । होमं पुष्पाञ्जलिं वाऽपि तथैवायुतमाचरेत् ॥ ६९ ॥ पूजयित्वा ततो विप्रान्निष्ठा सम्यक्फलो भवेत् । अथवा पौरुषं सूक्तमष्टोत्तरशतं चरुम् ॥ ७० ॥ हुत्वा चतुर्भिर्मन्त्रैश्च लभेदिष्टिं न संशयः ॥ ७१ ॥

अथ वासुदेवेष्टिरुच्यते—

एकादश्यां कृष्णपक्षे समुपोष्य जनार्दनम् । समर्चयेद्विधानेन रात्रौ जागरणान्वितः

---

१ ख. °ज । सव्यात्र° । २ ख. °तं यद्वेदेन त° । ३ ख °नधीतवेदश्चेष्टिम° । ४ ख. °निष्ठया स° । ५ ख. °अवाक्यपौ° ।

॥ ७२ ॥ द्वादश्यां प्रातरुत्थाय स्नायान्नद्यां तिलैः सह । द्वादशार्णेन मनुना सिञ्चे- दष्टोत्तरं शतम् ॥ ७३ ॥ अभिमन्त्र्य जलं पश्चात्तुलसीमिश्रितं पिबेत् । सर्वकर्मस्व- भिहितमेतदेवाघमर्षणम् ॥ ७४ ॥ तत्तत्कर्मणि तन्मन्त्रं योजयेदघमर्षणे । स्नात्वा संतर्प्य देवर्षीन्कृतकृत्यः समाहितः ॥ ७५ ॥ गृहं गत्वाऽर्चयेद्देवं वासुदेवं सनात- नम् । द्वादशार्णविधानेन कस्तुरीचन्दनादिभिः ॥ ७६ ॥ जातीकेतककुन्दाद्यैः सुकृ- ष्णतुलसीदलैः । सुधाब्धौ शेषपर्यङ्के समासीनं श्रिया सह ॥ ७७ ॥ इन्दीवरदल- श्यामं शङ्खचक्रगदाधरम् । सर्वाभरणसंपन्नं सदायौवनमच्युतम् ॥ ७८ ॥ अनन्तं विहगाधीशं सेनेशाद्यैरुपासितम् । त्रिदशेन्द्रैर्विमानस्थैर्ब्रह्मरुद्रादिभिस्तथा ॥ ७९ ॥ स्तूयमानं हरिं ध्यात्वा अर्चयेत्प्रयतात्मवान् । सर्वमावरणं पश्चादर्चयेत्कुसुमादिभिः ॥ ८० ॥ प्रथमं महिषीसंघं लक्ष्मीभूम्यौ च नीलया । अनन्तरं च गरुडधर्मसेनादि- भिस्तथा ॥ ८१ ॥ ऐश्वर्यज्ञानवैराग्याः पूजनीया यथाक्रमम् । सनन्दनश्च सनकः सनत्कुमारः सनातनः ॥ ८२ ॥ औडुश्च सोमकपिलः पञ्चमो नारदस्तथा । भृगु- र्विघनसोऽत्रिश्च मरीचिः कश्यपोऽङ्गिराः ॥ ८३ ॥ पुलहः स्वयंभुवो दाल्भ्यो वसिष्ठाद्यास्ततः क्रमात् । वसिष्ठो वामदेवश्च हारि(री)तश्च पराशरः ॥८४॥ व्यासः शुकश्च प्रह्लादः शौनको जनकस्तथा। मार्कण्डेयो ध्रुवश्चैव पुण्डरीकश्च मारुतः॥८५॥ रुक्माङ्गदः शिवो ब्रह्मा पूजनीया यथाक्रमम् । तथा लोकेश्वराः पूज्याः शङ्खचक्रा- दिहेतयः ॥ ८६ ॥ वेदाश्च साङ्गाः स्मृतयः पुराणं धर्मसंहिताः । राशयो ग्रहनक्षत्राः (त्रैः)पूजनीयाः समन्ततः ॥ ८७ ॥ एवं संपूज्य देवेशमग्न्याधानादि पूर्ववत् । द्वितीयं मण्डलमृचा(चां) जुहुयात्सघृतं चरुम् ॥८८॥ ध्यात्वा वह्नौ वासुदेवं दद्यात्पुष्पाणि तत्र तु । वैष्णवांश्च यजेत्तत्रावभृथं पुष्पयागकम् ॥ ८९ ॥ ब्राह्मणान्भोजयेदन्ते गुरुं चापि प्रपूजयेत् । इमां च वासुदेवेष्टिं यः कुर्याद्वैष्णवोत्तमः ॥ ९० ॥ कुलकोटिं समु- द्धृत्य स गच्छेत्परमं पदम् । अथवा वासुदेवस्य मन्त्रेणैव द्विजोत्तमः ॥ ९१ ॥ जुहुयादयुतं वह्नौ वैष्णवैः प्रत्यृचं तथा । पुष्पाणि दत्त्वा देवेशे सम्यगिष्ट्या लभेत्फ- लम् ॥ ९२ ॥ अथ वक्ष्यामि राजर्षे वैष्णवेष्ट्या विधिं ततः । श्रवणर्क्षे तु पूर्वाह्णे पूर्ववच्च समारभेत् ॥ ९३ ॥ उपोष्य पूर्वदिवसे पूजयेज्जागरे हरिम् । प्रभाते पूर्वव- त्स्नात्वा तर्पयेज्जगतां पतिम् ॥ ९४ ॥ षडक्षरविधानेन परव्योम्नि स्थितं हरिम् । वह्न्यर्कसोमबिम्बाद्यैर्योगपीठे सुसंस्थितम् ॥ ९५ ॥

---

१ ख. °हित एत° । २ ख. र्षण. । त° । ३ ख. °कुमुदाद्यैः । ४ ख. °शं शौनकाद्यैः । ५ ख. °षीसङ्गं ङ° । ६ क °म्यै च नी° । ७ मेशेराद्यपास्तुश । ऐ° । ८ क. °नः । ओडुश्चमृगोमे° । ९ क. °श्चंजाना° । १० क. स्वयंभुवो । ११ क °द्यास्तु सर्वत । क्रमाद्वसि° । १२ ख. °र्वकम् । द्वि° । १३ ख. °केंद्दम° ।

चतुर्भुजं सुन्दराङ्गं सर्वाभरणभूषितम् । शङ्खचक्रगदाशार्ङ्गं[1] बिभ्राणं दोर्भिरायतैः ॥ ९६ ॥ वामाङ्कस्थश्रिया सार्धं गन्धपुष्पाक्षतादिभिः । नैवेद्यैश्च फलैर्भक्ष्यैर्दिव्यैर्भोज्यैः सुपानकैः ॥ ९७ ॥ अर्चयेद्देवदेवेशं सर्वाभरणसंयुतम् । श्रीर्लक्ष्मीः कमला पद्मा सीता सत्या च रुक्मिणी ॥९८॥ सावित्री परितः पूज्या ततस्तु[2] विमलादयः । अनन्ततार्क्ष्य[3]सेनेशसत्य[4]धर्मदमाः शमाः ॥ ९९ ॥ बुद्धिश्च पूजनीयास्ते दिक्षु सर्वास्वनुक्रमात् । ततो लोकेश्वराः पूज्यास्ततश्चक्रादिहेतयः ॥१००॥ महाभागवताः पूज्या होमकर्म समाचरेत् । चतुर्भिर्वैष्णवैः सूक्तैः प्रत्यृचं जुहुयाच्चरुम् ॥ १०१ ॥ व्यापका मन्त्ररत्नं च चतुर्मन्त्रा उदाहृताः । तैरप्यष्टोत्तरशतं पृथक्पृथगतो[5] यजेत् ॥ १०२ ॥ तृतीयमण्डलं पश्चाज्जुहुयात्प्रत्यृचं तथा । तथा पुष्पैश्च संपूज्य कुर्यादवभृथं ततः ॥ १०३ ॥ समाप्य[6] पुष्पयोगेन(ण) वैष्णवान्भोजयेत्ततः । एवं कर्तुमशक्तश्चेद्वैष्णवीं वैष्णवोत्तमः ॥ १०४ ॥ वैष्णव्या चैव गायत्र्या पुष्पाञ्जल्ययुतं चरेत् । त्रिसहस्रं चरुं हुत्वा वैष्णवेष्ट्या फलं लभेत् ॥ १०५ ॥ इमां तु वैष्णवीमिष्टिं यः कुर्याद्वैष्णवोत्तमः । × त्रिकोटिकुलमुद्धृत्य याति विष्णोः परं पदम् ॥ १०६ ॥ प्रायश्चित्तमिदं कुर्याद्वृत्तिभङ्गेषु वैष्णवः । शान्त्यर्थं देवकार्येषु पापेषु च महत्स्वपि ॥ १०७ ॥ अथ वैयूहीष्टिरुच्यते—शुक्ले पक्षे तु द्वादश्यां संक्रान्त्यां ग्रहणेऽपि वा । उपोष्य विधिवद्विष्णुं पूजयित्वा विधानतः ॥ १०८ ॥ अभ्यर्चयेद्गन्धपुष्पैः केशवादीन्पृथक्पृथक् । संकर्षणादीनापि च पूजयेत्प्रयतात्मवान् ॥ १०९ ॥ तत्तन्मूर्तिं पृथग्ध्यात्वा पृथगेव समर्चयेत् । केशवस्तु सुवर्णाभः श्यामो नारायणोऽव्ययः ॥ ११० ॥ माधवः स्यादुत्पलाभो गोविन्दः शशिसंनिभः । गौरवर्णस्तथा विष्णुः शोणो मधुजिदव्ययः ॥ १११ ॥ त्रिविक्रमोऽग्निसंकाशो वामनः स्फटिकप्रभः । श्रीधरस्तु हरिद्राभो हृषीकेशोंऽशुमान्यथा ॥ ११२ ॥ पद्मनाभो घनश्यामो हैमो दामोदरः प्रभुः । संकर्षणस्तु मुक्ताभो वासुदेवो घनद्युतिः ॥ ११३ ॥ प्रद्युम्नो रक्तवर्णः स्यादनिरुद्धो यथोत्पलम् । अधोक्षजः शाद्वलाभो रक्ताङ्गः पुरुषोत्तमः ॥ ११४ ॥ नृसिंहो मणिवर्णः स्यादच्युतोऽर्कसमप्रभः । जनार्दनः कुन्दवर्ण उपेन्द्रो विद्रुमद्युतिः ॥ ११५ ॥ हरिर्वै सूर्यसंकाशः कृष्णो भिन्नाञ्जनद्युतिः। आयुधानि ब्रुवे चैषां दक्षिणाधःकरादितः॥११६॥ पद्मं शङ्खं तथा चक्रं गदां दधाति केशवः। शङ्खं पद्मं गदां चक्रं धत्ते नारायणोऽव्ययः

× एतदाद्यर्धद्वयं न विद्यते क. पुस्तके ।

१ ख. शार्ङ्गान्बिभ्रा° । २ ख. °स्तु ते नला° । ३ ख. °क्ष्यदेवेश° । ४ क. °त्यप्रमद° । ५ ख. ततः ।
६ ख. समाप्यं ।

॥ ११७ ॥ माधवस्तु गदां चक्रं शङ्खं पद्मं बिभर्ति हि । चक्रं गदां तथा पद्मं शङ्खं गोविन्द एव च ॥ ११८ ॥ गदां पद्मं तथा शङ्खं चक्रं विष्णुर्बिभर्ति हि । चक्रं शङ्खं तथा पद्मं गदां च मधुसूदनः ॥ ११९ ॥ पद्मं गदां तथा चक्रं शङ्खं चैव त्रिविक्रमः । शङ्खं चक्रं गदां पद्मं वामनो बिभृयात्तथा ॥ १२० ॥ पद्मं चक्रं गदां शङ्खं श्रीपतिः श्रीधरो दधत् । गदां चक्रं हृषीकेशः पद्मं शङ्खं बिभर्ति हि ॥ १२१ ॥ पद्मनाभस्तथा शङ्खं पद्मं चक्रं गदां धरेत् । पद्मं शङ्खं गदा चक्रं धत्ते दामोदरस्तथा ॥ १२२ ॥ संकर्षणो गदा शङ्खं पद्मं चक्रं दधाति हि । वासुदेवो गदां शङ्खं चक्रं पद्मं बिभर्ति हि ॥ १२३ ॥ चक्रं शङ्खं गदा पद्मं प्रद्युम्नो बिभृयात्तथा । अनिरुद्धस्तथा चक्रं गदां शङ्खं च पङ्कजम् ॥ १२४ ॥ चक्रं पद्मं तथा शङ्खं गदा च पुरुषोत्तमः । पद्मं गदां तथा शङ्खं चक्रं चाधोक्षजो धरेत् ॥ १२५ ॥ चक्रं पद्मं गदां शङ्खं नरसिंहो बिभर्ति हि । अच्युतश्च गदां पद्मं चक्रं शङ्खं बिभर्ति हि ॥ १२६ ॥ जनार्दनस्तथा पद्मं शङ्खं चक्रं गदां धरेत् । उपेन्द्रस्तु तथा शङ्खं गदां चक्रं च पङ्कजम् ॥ १२७ ॥ हरिस्तु शङ्खं चक्रं च पद्मं चैव गदां धरेत् । शङ्खं गदा पङ्कजं च चक्रं विष्णुर्बि(कृष्णो बि)भर्ति हि ॥ १२८ ॥ एवं चतुर्विंशति तु मूर्तीर्ध्यात्वा समर्चयेत् । तत्ताद्बिम्बेषु वा राजञ्शालग्रामशिलासु वा ॥ १२९ ॥ गन्धैः पुष्पैश्च ताम्बूलैर्धूपैर्दीपैर्निवेदनैः । फलैश्च भक्ष्यभोज्यैश्च पानीयैः शर्करान्वितैः ॥ १३० ॥ नामभिस्तैश्चतुर्थ्यन्तैर्मूलमन्त्रेण वा यजेत् । देवानावरणीयांश्च पूजयेत्परितः क्रमात्[४] ॥ १३१ ॥ वह्नी त्वा नेति सूक्तेन कुर्यान्नीराजनं शुभम् । पुरतोऽग्निं प्रतिष्ठाप्य स्वगृह्योक्तविधानतः ॥ १३२ ॥ मण्डलेन चतुर्थेन प्रत्यृचं जुहुयाच्चरुम् । पुष्पैः संपूजयेद्भक्त्या कुर्यादवभृथं नरः ॥ १३३ ॥ इमां वैयूहिकीमिष्टिं सम्यक्प्राहुर्महर्षयः । प्रायश्चित्तमिदं प्रोक्तं पातकेषु महत्स्वपि ॥ १३४ ॥ अन्येष्वपि वह्नीना शान्त्यर्थं वा समाचरेत् । प्रायश्चित्तं विशिष्टं स्याद्देयं प्रत्यृचकर्मसु ॥ १३५ ॥ अनधीतः कथं कुर्याद्वैयूहीं वैष्णवीं द्विजः । प्रत्येकं शतमष्टौ च मन्त्रैस्तेषां यजेद्बुधः ॥ १३६ ॥ सर्वत्रात्रभृथेष्टिं च पुष्पयागं च वैष्णवः । द्वयेन मूलमन्त्रेण कुर्वीत सुसमाहितः ॥ १३७ ॥ वैष्णवान्भोजयेद्भक्त्या कर्मान्ते सर्वसिद्धये । चतुर्विंशतिसंख्यान्वै महाभागवतान्द्विजान् ॥ १३८ ॥ एकं वा भोजयेद्विप्रं महाभागवतोत्तमम् । सर्वं संपूर्णतामेति तस्मिन्संपूजिते द्विजे ॥ १३९ ॥ यः करोति शुभामिष्टिं वैयूहीं वैष्णवोत्तमः । अनन्तस्याच्युतानां च विशिष्टोऽन्यतमो भवेत् ॥ १४० ॥

---

१ क. °ख पद्मं चक्रं वि° । २ स हरि. । ३ ख °येत्प्रहितः । ४ ख. °त् । यं हेत्वाद्दति° । ५ ख. °नुष्वपि च विम्वाना । ६ क. °ष्णवान् । द्व° । ७ ख. सस्वसि° ।

वैभवीमथ वक्ष्यामि सर्वपापप्रणाशिनीम् । पावनीं सर्वलोकानां सर्वकामप्रदां शुभाम् ॥ १४१ ॥ भगवज्जन्मदिवसे वारे सूर्यसुतस्य वा । स्वजन्मर्क्षेऽपि वा कुर्याद्वैभवीं मङ्गलाह्वयाम् ॥ १४२ ॥ पूर्वेऽह्न्यभ्युदयं कुर्यादङ्कुरार्पणपूर्वकम् । उपोष्य पूजयेद्विष्णुमग्न्याधानं समाचरेत् ॥ १४३ ॥ स्नात्वा परेऽह्नि विधिना संतर्प्य पितृदेवताः । विशिष्टैर्ब्राह्मणैः सार्धं त्वर्चयित्वा जनार्दनम् ॥ १४४ ॥ मत्स्यं कूर्मं च वाराहं नारसिंहं च वामनम् । श्रीरामं बलभद्रं च कृष्णं कल्किनमव्ययम् ॥ १४५ ॥ हयग्रीवं जगद्योनिं पूजयेद्वैष्णवोत्तमः । नार्चयेद्भार्गवं बुद्धं सर्वत्रापि च कर्मसु ॥ १४६ ॥ कुशग्रन्थिषु बिम्बेषु शालग्रामशिलासु वा । अर्चयेद्गन्धपुष्पाद्यैः प्रागुदक्प्रवणेन च ॥ १४७ ॥ पृथक्पृथक्च नैवेद्यं विविधं वै समर्पयेत् । मोदकान्पृथुकान्सक्तूनपूपान्पायसांस्तथा ॥ १४८ ॥ हविष्यमन्नमुद्रान्नं मण्डकान्मधुसंयुतान् । दध्यन्नं च गुडान्नं च भक्त्या तेभ्यो निवेदयेत् ॥ १४९ ॥ कर्पूरसंयुतं दिव्यं ताम्बूलं च निवेदयेत् । इमा विश्वेति सूक्तेन दद्यान्नीराजनं तथा ॥ १५० ॥ सहस्रनामभिः स्तुत्वा भक्त्या च प्रणमेद्बुधः । इध्माधानादिपर्यन्तं कृत्वा होमं समाचरेत् ॥ १५१ ॥ सर्वैस्तु वैष्णवैः सूक्तैर्हुत्वा पूर्वं शुभं हविः । पञ्चमं मण्डलं पश्चात्प्रत्यृचं जुहुयाद्द्विजः ॥ १५२ ॥ * तथा पुष्पाञ्जलिं चैव दद्यात्तेवै( नै )व स द्विज ( द्विजः ) । यजेदवभृथेष्टिं च पुण्ययागं च पूर्ववत् ॥ १५३ ॥ अन्ते च वैष्णवान्विप्रान्भोजयेद्दश संख्यया । आचार्यमृत्विजं चैव पूजयेच्च विशेषतः ॥ १५४ ॥ इमां तु वैभवीमिष्टिं कुर्याद्विष्णुपरायणः । अकृत्वा वैभवीमन्त्रं योऽध्यापयति देशिकः ॥ १५५ ॥ रौरवं नरकं याति यावदाभूतसंप्लवम् । होमं विना सं शूद्राणां कुर्यात्सर्वमशेषतः ॥ १५६ ॥ मन्त्रैर्वा जुहुयादाज्यं तत्तन्मूर्तिप्रकाशकैः । पूजयित्वा द्विजवरान्पश्चान्मन्त्रं प्रदापयेत् ॥ १५७ ॥ अशक्तो यस्तु वेदेन कर्तुमिष्टिं द्विजोत्तमः । तत्तन्मूर्तिमयैर्मन्त्रैः पृथगष्टोत्तरं शतम् ॥ १५८ ॥ हुत्वा चरुं घृतयुतं सम्यगिष्ट्याः फलं लभेत् । वैष्णवत्वाच्च्युतस्यापि कारयेदिष्टिमुत्तमाम् ॥ १५९ ॥ उद्दिश्य वैष्णवान्स्वस्वापितॄनपि च वैष्णवः । यः कुर्याद्वैष्णवीमिष्टिं भक्त्या परमया युतः ॥१६१॥ वैष्णवत्वं कुलं सर्वं लभेत( तास्य ) न संशयः । अत ऊर्ध्वं प्रवक्ष्यामि आनन्तीमघनाशिनीम् ॥ १६१ ॥ पौर्णमास्यां प्रकुर्वीत पूर्वोक्तविधिना नृप । आधानं पूर्ववत्कृत्वा अङ्कुरार्पणपूर्वकम् ॥ १६२ ॥ उपोष्याभ्यर्चयेद्देवमनन्तं पुरुषोत्तमम् । सहस्रशीर्षं विश्वेशं सहस्रकरलोचनम् ॥ १६३ ॥ सहस्रकिरणं श्रीशं सदैवाश्रितवत्सलम् । पौरुषेण विधानेन पूजयेत्पुरुषोत्तमम् ॥ १६४ ॥ गन्धपुष्पैश्च धूपैश्च दीपैश्चापि निवेदनैः । पूजयित्वा जगन्नाथं पश्चादावरण यजेत् ॥ १६५ ॥

* इत आरभ्य विशेषत इत्यन्तं न विद्यते ख पुस्तके ।

१ क. वा । २ क. नृप. । ३ ख. आदान ।

पार्श्वयोश्च श्रियं भूमिं नीलां च शुभलोचनाम् । हिरण्यवर्णां हरिणी जातवेदा हिरण्मयी ॥ १६६ ॥ चन्द्रा सूर्या च दुर्धर्षा गन्धद्वारा महेश्वरी । नित्यपुष्टा सहस्राक्षी महालक्ष्मीः सनातनी ॥ १६७ ॥ पूजनीया समस्तैश्च गन्धपुष्पाक्षतादिभिः । संकर्षणस्तथाऽनन्तः शेषो भूधर एव च ॥ १६८ ॥ लक्ष्मणो नागराजश्च बलभद्रो हलायुधः । तच्छक्तयः पूजनीयाः प्रागादिषु यथाक्रमम् ॥ १६९ ॥ रेवती वारुणी कान्तिरैश्वर्या च इला तथा । भद्रा सुमङ्गला गौरी शक्तयः परिकीर्तिताः ॥ १७० ॥ अस्त्राल्लोकेश्वरान्पूज्य पश्चाद्धोमं समाचरेत् । पश्चात्तु मण्डलं षष्ठं प्रत्यृचं जुहुयाच्चरुम् ॥ १७१ ॥ पुष्पाणि च तथा दत्त्वा कुर्यादवभृथादिकम् । अशक्तश्चेन्नृसूक्तेन शतमष्टोत्तरं चरुम् ॥ १७२ ॥ इष्टैवेष्ट्याः फलं सम्यगाप्नोत्येव न संशयः । आनन्तीयामिमामिष्टिं वैकुण्ठपदमाप्नुयात् ॥ १७३ ॥ न दास्यमीशस्य भवेद्यस्य दास्यं नृणामसत् । तत्र कुर्यादिमामिष्टिं दास्यैकफलसिद्धये ॥ १७४ ॥ अधुना वैनतेयेष्टिं वक्ष्यामि नृपसत्तम । पञ्चम्यां भानुवारे वा कस्मिंश्चिच्छुभवासरे ॥ १७५ ॥ उपोष्य पूर्ववत्सर्वं कुर्यादभ्युदयादिकम् । स्नात्वाऽर्चयित्वा देवेशं गन्धपुष्पाक्षतादिभिः ॥ १७६ ॥ लक्ष्म्या सह समासीनं वैकुण्ठेभवने शुभे । सर्वमन्त्रमये दिव्ये वाङ्मये परमासने ॥ १७७ ॥ मन्त्रस्वरैरक्षरैश्च साङ्गैर्वेदैः समन्वितः । तारेण सह सावित्र्या संस्तीर्णे शुभवर्चसि ॥ १७८ ॥ ईश्वर्या च समासीनं सहस्रार्कसमद्युतिम् । चतुर्भुजमुदाराङ्गं कन्दर्पशतसंनिभम् ॥ १७९ ॥ युवानं पद्मपत्राक्षं शङ्खचक्रगदाब्जिनम् । वैष्णव्या चैव गायत्र्या पूजयेद्धरिमव्ययम् ॥ १८० ॥ श्रियं देवीं नित्यपुष्टां सुभगां च सुलक्षणाम् । ऐरावतीं वेदवतीं सुकेशीं च सुमङ्गलाम् ॥ १८१ ॥ अर्चयेत्परितो देवीः सुरूपा नित्ययौवनाः । ततः समर्चयेत्तार्क्ष्यं गरुडं विनतासुतम् ॥ १८२ ॥ सुपर्णं च चतुर्दिक्षु विदिक्षु शक्तयस्तथा । श्रुतिस्मृतीतिहासाश्च पुराणानीति शक्तयः ॥ १८३ अस्त्रादीनीश्वरान्पश्चादर्चयेत्कुसुमाक्षतैः । धूपं दीपं च नैवेद्यं ताम्बूलं च समर्चयेत् ॥ १८४ ॥ अहं यं हेति मत्येति दद्यान्नीराजनं शुभम् (?) । प्रदक्षिणं नमस्कारं कृत्वा होमं समाचरेत् ॥ १८५ ॥ वशि(सि)ष्ठेन च संदृष्टं सप्तमं मण्डलं धु(हु)नेत् । पुष्पाणि च ततो दत्त्वा कुर्यादवभृथादिकम् ॥ १८६ ॥ रथयानादिभङ्गे च वाहनध्वंसने तथा । अवैदिकक्रियाजुष्टे कुर्यादिष्टिमिमां शुभाम् ॥ १८७ ॥ अरिष्टे चोपपातेषु शान्त्यर्थमपि वा यजेत् । इष्ट्याऽनया पूजितेशे रोगसर्पाग्निभिः शमेत् ॥ १८८ ॥ वैनतेयसमो भूत्वा भवेदनुचरो हरेः । वैष्वक्सेनीं ततो वक्ष्ये सर्वपापप्रणाशिनीम् ॥ १८९ ॥

---

१ क. °न्द्रा सह च वर्या च दु° । २ ख. °मस्ताश्च । ३ क °मीशः स भ° । ४ क °त्तमः । प° । ५ क. °ण्ठभुव° । ६ ख. अयं हि ते चार्थीति द° । ७ क. °त् । यदि शिष्ठेन सं° । ८ क. भवेत् । ९ ख. ° रदया° ।

उपोष्यैकादशीं शुद्धां पूर्ववत्पूजयेद्धरिम्। तद्विष्णोरिति मन्त्राभ्यामुपचारैः समर्चयेत् ॥१९० विष्वक्सेनं च सेनेशं सेनान्यं च चमूपतिम्। अर्चयित्वा चतुर्दिक्षु शक्तयश्च विदिक्षु च ॥ १९१ ॥ त्रयीं सूत्रवतीं सौम्यां सावित्रीं चार्चयेद्द्विजः। अस्त्रान्दिगीशान्संपूज्य होमं पश्चात्समाचरेत् ॥ १९२ ॥ कृत्वेध्माधानपर्यन्तमष्टमं मण्डलं यजेत्। पायसेनाथ पुष्पाणि दद्यात्प्रयतमानसः ॥ १९३ ॥ अन्ते चावभृथेष्टिं च प्रसूनयजनं तथा। ब्राह्मणान्भोजयेद्भक्त्या दक्षिणाभिश्च तोषयेत् ॥ १९४॥ अशक्तो यस्तु वेदेन कर्तुमिष्टिं च वैष्णवः। तद्विष्णोरिति मन्त्राभ्यां सहस्रं जुहुयाच्चरुम् ॥ १९५ ॥ कृत्वा पुष्पाञ्जलिं चापि सम्यगिष्टिं लभेन्नरः। वैष्वक्सेनीमिमां हुत्वा विष्वक्सेनसमो भवेत् ॥ १९६ ॥ प्रभूतधनधान्याढ्यमैश्वर्यं चैव विन्दाति। यक्षराक्षसभूतानां तामसानां दिवौकसाम् ॥ १९७ ॥ अभ्यर्चनेन दोषस्य विशुद्ध्यर्थमिदं यजेत्। सौदर्शनीं प्रवक्ष्यामि सर्वपापप्रणाशिनीम् ॥ १९८ ॥ व्यतीपाते वैधृतौ वा समुपोष्यार्चयेद्धरिम्। अखण्डबिल्वपत्रैर्वा कोमलैस्तुलसीदलैः॥ १९९ ॥ अर्चयित्वा हृषीकेशं गन्धपुष्पाक्षतादिभिः। पश्चात्समर्चनीयाः स्युः श्रीभूनीलादिमातरः॥२००॥ सुदर्शनसहस्रारं पवित्रं ब्रह्मणस्पतिम्। सहस्रार्कं शतोद्यामं लोकद्वारं हिरण्मयम् ॥ २०१ ॥ अभ्यर्चयेत्क्रमादिक्षु तथा शक्तीः समर्चयेत्। अरिष्टध्वंसिनी माया लज्जा पुष्टिः सरस्वती ॥ २०२ ॥ प्रकृतिर्जगदाधारा कामधुक्चाष्ट शक्तयः। तथा ताश्चैव लोकेशाः पूज्या दिक्षु यथाक्रमात् ॥ २०३ ॥ अभ्यर्च्य गन्धपुष्पाद्यैर्नैवेद्यैर्विविधैरपि। ऋग्वेदोक्तस्य सूक्तेन ततो नीराजनं हरेः ॥२०४॥ नवमं मण्डलं पश्चाद्धोतव्यं चरुणा नृप। आज्येन वा तिलैर्वाऽपि बिल्वैर्वाऽपि सरोरुहैः हुत्वा पुष्पाञ्जलिं दत्त्वा कुर्यादवभृथादिकम् ॥ २०५ ॥ ब्राह्मणान्भोजयेत्पश्चाद्गुरुं चापि समर्चयेत्। उद्वाह्य वैष्णवीं कन्यां याचित्वा वैष्णवीं तथा ॥ २०६ ॥ हुत्वा वा वैष्णवेनैव तथैवाऽऽदित्यभुज्यपि(?)। अन्यो लिङ्गधृतौ चापि कुर्यादिष्टिमिमां द्विजः॥२०७॥

---

१ ख. °नान्पश्च चमू°। २ क. °त्रीं वाचयेद्द्विज। अ°। ३ ख. °स्त्रान्दीपाश्च संपू°। ४ ख. °येच्छक्त्या। ५ क. देवेश। ६ ख. °ने तद्दोष°। ७ क. °स्राभं प°। ८ °स्पतिः। स°। ९ क. °स्रारं शतोध्यानं लो°। १० ख. अनिष्ट°। ११ ख. °धुक्काष्ठशक्तिका। त°। १२ क. °पि। ऋकिद्रप्सस्य। १३ क. °त्यभजयत्। अ°। १४ ख. अन्यलि°।

सौदर्शनेन मन्त्रेण सहस्रं जुहुयाच्चरुम्। पुष्पाणि दत्त्वा साहस्रं सम्यगिष्टयाः फलं भवेत्[1] ॥ २०८ ॥ अथ भागवतीमिष्टिं प्रवक्ष्यामि नृपोत्तम। उपोष्यैकादशीं शुद्धां द्वादश्यां पूर्ववद्धरिम् ॥ २०९ ॥ अर्चयित्वा विधानेन गन्धपुष्पाक्षतादिभिः। पौरुषेण तु सूक्तेन श्रीमदष्टाक्षरेण वा ॥२१०॥ अर्चयेज्जगतामीशं सर्वाभरणसंयुतम्[2] ॥२११॥ ततो भागवतान्सर्वानर्चयेत्परितो द्विजः। पुष्पैर्वा तुलसीपत्रैः सलिलैरक्षतैरपि ॥ २१२ ॥ प्रह्लादं नारदं चैव पुण्डरीकं विभीषणम्। रुक्माङ्गदं तत्सुतं च हनुमन्तं[3] शिवं भृगुम् ॥ २१३ ॥ वाशि(सि)ष्ठं वामदेवं च व्यासं शौनकमेव च। मार्कण्डेयं चाम्बरीषं दत्तात्रेयं पराशरम् ॥ २१४ ॥ रुक्मदाल्भ्यौ कश्यपं च हारीतं चात्रिमेव च। भारद्वाजं[4] वलिं भीष्ममुद्धवाक्रूरपुष्करान् ॥ २१५ ॥ गुहं सूतं च वाल्मीकं स्वायंभुवमनुं तथा। वैणं[5] च रोमकं[6] चैव मातङ्गं शबरीं तथा ॥ २१६ ॥ सनन्दनं च सनकं विघनं च सनातनम्। बोधुं[7] पञ्चशिखं चैव गजेन्द्रं च जटायुषम् ॥ २१७ ॥ सुशीलां त्रिजटां गौरीं शुभां संध्यावलिं तथा। अनसूयां द्रौपदीं च यशोदां देवकीं तथा ॥ २१८ ॥ सुभद्रां चैव गोपीश्च शुभा नन्दव्रजे स्थिताः। नन्दं च वसुदेवं च दिलीपं दशरथं तथा ॥ २१९ ॥ कौसल्यां चैव जनकमन्यानपि[8] च वैष्णवान्। अर्चयेद्गन्धपुष्पाद्यैर्धूपैर्दीपनिवेदनैः ॥ २२० ॥ ताम्बूलैर्भक्ष्यभोज्यैश्च धूपैर्नीराजनैरपि। अहंभुवेति सूक्तेन दद्यान्नीराजनं हरेः। पश्चाद्धोमं प्रकुर्वीत अग्न्याधानादि पूर्ववत् ॥ २२१ ॥ दशमं मण्डलं[9] सर्वं प्रत्यृचं जुहुयाद्धविः। तिलमिश्रेण साज्येन चरुणा गोघृतेन वा ॥ २२२ ॥ सर्वैश्च वैष्णवैः सूक्तैश्चतुर्भिश्चाष्टोत्तरं शतम्। नाम-भिस्तैश्चतुर्थ्यन्तैस्तान्सर्वान्वैष्णवान्यजेत्[10] ॥ २२३ ॥ पुष्पैरिष्ट्वा चावभृथं प्रसूनेष्टिं च कारयेत्। होमं कर्तुमशक्तश्चेद्वेदेन नृपनन्दन ॥ २२४ ॥ चतुर्भिर्वैष्णवैर्मन्त्रैः सहस्रं वा पृथक्पृथक्। इमां भागवतीमिष्टिं [ *यः कुर्याद्वैष्णवोत्तमः ॥ २२५ ॥ अनन्त-गरुडादीनामयमन्यतमो भवेत् ॥ २२६ ॥ पावमानैर्यदा ऋग्भिरिज्यते मधुसूदनः। तत्त्वावमानी मुनिभिः प्रोच्यते मधुसूदनः ॥ २२७ ॥ यदा तु द्वादशी शुक्ला भृगुवासरसंयुता ]। तस्यामेव प्रकुर्वीत पाञ्चीमिष्टिं द्विजोत्तमः ॥२२८ ॥ महाभीतिकरं विष्णोः सद्यो मुक्तिप्रदायकम्। तस्यां कृतायामिष्टयां तु लक्ष्मीभर्ता जनार्दनः ॥ २२९ ॥ प्रत्यक्षो हि भवेत्तत्र सर्वकामफलप्रदः।

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. पुस्तके–"कुर्याद्भागवतोत्तम। अपचारविमुक्त्यर्थं वैष्णवानां हरेरपि। मृतस्यापि प्रकुर्वीत पुत्रा" इति।

१ ख. लभेत्। २ ख. °र्वांवर °। ३ ख. हनूम°। ४ ख भरद्वाजं। ५ क वैण्यं च। ६ ख. रोमशं। ७ ख. वोट्टुं। ८ ख. °ककन्यामपि। ९ क मण्डले। १० ख. °भिश्च चतु°।

श्रीधरं पूजयेत्तत्र तन्मन्त्रेणैव वैष्णवः ॥ २३० ॥ सुवर्णमण्डपे दिव्ये नानारत्नप्रदीपिते । उदयादित्यसंकाशे हिरण्ये पङ्कजे शुभे ॥ २३१ ॥ लक्ष्म्या सह समासीनं कोटिशीतांशुसंनिभम् । चक्रशङ्खगदापद्मपाणिनं श्रीधरं तथा ॥ २३२ ॥ पीताम्बरधरं विष्णुं वनमालाविराजितम् । अर्चयेज्जगतामीशं सर्वाभरणभूषितम् ॥ २३३ ॥ पद्मां पद्मालयां लक्ष्मीं कमलां पद्मसंभवाम् । पद्ममालयां पद्महस्तां पद्मनाभीं सनातनीम् ॥ २३४ ॥ प्रागादिषु तथा दिक्षु पूजयेत्कुसुमादिभिः । अस्त्रादीनीश्वरान्पूज्य नमस्कुर्वीत भक्तितः ॥ २३५ ॥ ततो नीराजनं दत्त्वा श्रीसूक्तेन तु वैष्णवः । पुरतो जुहुयादग्नौ पायसं घृतमिश्रितम् ॥ २३६ ॥ तन्मन्त्रेणैव साहस्रं सूक्ताभ्यां सकृदेव हि । हुत्वा मन्त्रेण साहस्रं दद्यात्पुष्पाणि शार्ङ्गिणे ॥ २३७ ॥ वैष्णवं विप्रमिथुनं पूजयेद्भोजयेत्तथा । इमां पाद्मीं शुभामिष्टिं यः कुर्याद्वैष्णवोत्तमः ॥ २३८ ॥ प्रभूतधनधान्याढ्यो महाश्रियमवाप्नुयात् । सर्वान्कामानवाप्नोति विष्णुलोकं स गच्छति ॥ ॥ २३९ ॥ लक्ष्म्या युक्तो जगन्नाथः प्रत्यक्षः समभूद्ध ( स्यात्तदा ह)रिः । ददाति सकलान्कामानिह लोके परत्र च ॥ २४० ॥ पुण्यैः पवित्रदै(दे)वत्यैरिज्यते यत्र केशवः । तां पवित्रेष्टिमित्याहुः सर्वपापप्रणाशिनीम् ॥ २४१ ॥ यत्ते पवित्रमित्यादिऋग्भिर्यत्र यजेद्द्विजः । प्रायश्चित्तार्थं सहसा शान्त्यर्थं वा समाचरेत् ॥ २४२ ॥ एवं विधानमिष्टीनां सम्यगुक्तं महर्षिभिः । वैदिकेनैव विधिना यथाशक्त्या(क्ति)समाचरेत् ॥ २४३ ॥ अवैदिकक्रियाजुष्टं प्रयत्नेन विवर्जयेत् । क्षीराब्धौ शेषपर्यङ्के बुध्यमाने सनातने ॥ २४४ ॥ अत्रोत्सवं प्रकुर्वीत पञ्चरात्रं निरन्तरम् । नद्याश्च पुष्करिण्या वा तीरे रम्यतले शुचौ ॥ २४५ ॥ मण्डपं तत्र कुर्वीत चतुर्भिस्तोरणैर्युतम् । वितानपुष्पमालादिपताकाध्वजशोभितम् ॥ २४६ ॥ अङ्कुरार्पणपूर्वेण यज्ञवेदिं च कल्पयेत् । ऋत्विग्भिः सार्धमाचार्यो दीक्षितो मङ्गलस्वनैः ॥ २४७ ॥ रथमारोप्य देवेशं छत्रचामरसंयुतम् । पठन्वै शाकुनान्मन्त्रान्यज्ञशालां प्रवेशयेत् ॥ २४८ ॥ स्वस्तिवाचनपूर्वेण कुर्यात्कौतुकबन्धनम् । पूर्णकुम्भाञ्शस्ययुतान्पालिकाः परितः क्षिपेत् ॥ २४९ ॥ अभ्यर्च्य गन्धपुष्पाद्यैः पश्चादावरणं यजेत् । वासुदेवमनन्तं च सत्यं यज्ञं तथाऽच्युतम् ॥ २५० ॥ महेन्द्रं श्रीपतिं विश्वं पूर्णकुम्भेषु पूजयेत् । पालिकाः सदिगीशांश्च दीपिकास्वथ हेतयः । तोरणेषु च चण्डाद्याः पूजनीया यथाक्रमम् ॥ २५१ ॥ वेद्याश्च दक्षिणे भागे कुण्डं कुर्यात्सलक्षणम् । निक्षिप्याग्निं विधानेन इध्माधानान्तमाचरेत् ॥ २५२ ॥ * आचार्योपासनाग्नौ वा लौकिके वा नृपोत्तम । आधानं पूर्ववत्कृत्वा पश्चात्कर्म समाचरेत् ॥ २५३ ॥ प्रातः स्नात्वा विधानेन पूजयित्वा सनातनम् । प्रत्यृचं पावमानीभिर्जुहुयात्पायसं शुभम् ॥ २५४ ॥ वैष्ण-

* संविरार्प ।

१ ख. विभुम् । २ क. °माला प° ।

वैरतु वाकैश्च मन्त्रैः शक्त्या पृथक्पृथक् । चतुर्भिर्व्यापकैश्चान्यैः प्रत्येकं जुहुयाद्घृतम् ॥२५५॥ वैकुण्ठं पार्षदं हुत्वा होमशेषं समाचरेत् । ताभिरेव च पुष्पाणि दद्याच्च जगतां पतेः ॥ २५६ ॥ उद्बोधयित्वा शयने देवदेवं जनार्दनम् । पश्चात्सर्वमिदं कुर्यादुत्सवार्थं द्विजोत्तमः ॥ २५७ ॥ अथ नावं सुविस्तीर्णां कृत्वा तस्मिञ्जले शुभे । पुष्पमण्डपचिह्नादिसमास्तीर्णसमन्विताम् ॥ २५८ ॥ सुतोरणवितानाढ्यां पताकाध्वजशोभिताम् । तस्मिन्कनकपर्यङ्के निवेश्य कमलापतिम् ॥ २५९ ॥ अर्चयित्वा विधानेन लक्ष्म्या सार्धं सनातनम् । पुष्पाञ्जलिशतं तत्र मन्त्ररत्नेन कारयेत् ॥ २६० ॥ श्रीपौरुषाभ्यां सूक्ताभ्यां दद्यात्पुष्पाञ्जलिं ततः । परितः शक्तयः पूज्यास्तथाऽऽवरणदेवताः ॥ २६१ ॥ दीपैर्नीराजनं कृत्वा बलिं दद्यात्समन्ततः । नौभिः समन्ताद्बहुभिर्गीतवादित्रसंयुतम् ॥ २६२ ॥ दीपिकाभिरनेकाभिस्तोत्रैरपि मनोरमैः । प्लावयन्तो जगन्नाथं तत्र तत्र जलाशये ॥ २६३ ॥ फलैर्भक्ष्यैश्च ताम्बूलैः कलशैर्दधिमिश्रितैः । कुङ्कुमैः कुसुमैर्लाजैर्विकिरन्तः परस्परम् ॥ २६४ ॥ गानैर्वेदैः पुराणैश्च सेवेत निशि केशवम् । ऋत्विजो वारुणान्सूक्ताञ्जपेयुस्तत्र भक्तितः ॥ २६५ ॥ जपेच्च भगवन्मन्त्राञ्शान्तिपाठं चरेत्तथा । एवं संसेव्य बहुधा रात्रावस्मिञ्जलाशये ॥२६६॥ प्रदेवत्रेति सूक्तेन यज्ञशालां प्रवेशयेत् । तत्र नीराजनं दत्त्वा कुर्यादर्घ्यादिपूजनम् ॥ २६७ ॥ धृतव्रतेति सूक्तेन तत्र नीराजनं द्विजः । स्नात्वा पूर्ववदभ्यर्च्य हुत्वा पुष्पाञ्जलिं तथा ॥ २६८ ॥ आशिषो वाचनं कृत्वा भोजयेद्ब्राह्मणाञ्शुभान् । शाययित्वाऽथ देवेशं भुञ्जीयाद्वाग्यतः स्वयम् ॥ २६९ ॥ एवं प्रतिदिनं कुर्यादुत्सवं पञ्चवासरम् । अन्ते चावभृथेष्टिं च पुष्पयागं च कारयेत् ॥ २७० ॥ आचार्यमृत्विजो विप्रान्पूजयेद्दक्षिणादिभिः । एवं क्षीराब्धियजनं प्रत्यब्दं कारयेन्नृपः ॥ २७१ ॥ स्वसंस्थगर्थवृद्ध्यर्थं भोगाय कमलापतेः । वृद्ध्यर्थमपि राष्ट्रस्य शत्रूणां नाशनाय च ॥ २७२ ॥ सर्वधर्मविवृद्ध्यर्थं क्षीराब्धियजनं चरेत् । तत्र दुर्भिक्षरोगाग्निपापबाधा न सन्ति हि ॥२७३॥ गावः पूर्णदुघा नित्यं बहुसस्यफला धरा । पुष्पिताः फलिता वृक्षा नार्यो भर्तृपरायणाः ॥ २७४ ॥ आयुष्मन्तश्च शिशवो जायते भक्तिरच्युते । यः करोति विधानेन यजनं जलशायिनः ॥ २७५ ॥ क्रतुकोटिफलं तत्र प्राप्नोत्येव न संशयः । यस्त्विदं शृणुयान्नित्यं क्षीराब्धियजनं हरेः ॥ २७६ ॥ सर्वान्कामानवाप्नोति विष्णुलोकं च विन्दति । पुष्पिते तु रसाले तु तत्राप्युत्सवमात्मनः ॥२७७॥ त्रिवासरं प्रकुर्वीत दोलानाममहोत्सवम् । उपोषितः संयतात्मा दीक्षितो माधवं हरिम् ॥ २७८ ॥ छत्रचामरवादित्रैः पताकैः शिबिकां शुभाम् । आरोप्यालंकृतं विष्णुं स्वयं च समलंकृतः ॥ २७९ ॥

---

१ ख. °नृप° । २ क. °सप्ताङ्ग्यगर्थ° । ३ क °स्तवान् । उ° । ४ क. °दित्रैर्गन्धाद्यैरधिकां । ५ क° °कृताम् । ह° ।

हरिद्रां विकिरन्तो वै गायन्तः परमेश्वरम्। गच्छेयुराद्रुमं प्रातर्नरनारीजनैः सह॥२८०॥ तत्राऽऽम्रवृक्षच्छायायां वेद्यां संपूजयेद्धरिम्। चूतपुष्पैः सुगन्धीभिर्माधवीभिश्च यूथिकैः॥ २८१॥ मरीचिमिश्रं दध्यन्नं मोदकं च समर्पयेत्। शष्कुल्यादीनि भक्ष्याणि पानकं च निवेदयेत्॥ २८२॥ सकर्पूरं च ताम्बूलं पूगीफलसमन्वितम्। सर्वमावरणं पूज्यं होमं पश्चात्समाचरेत्॥२८३॥ कृत्वेध्माधानपर्यन्तं विष्णुसूक्तैश्चरुं यजेत्। माधवेनैव मनुना तिलाञ्शर्करसंयुतान्॥२८४॥ सहस्रं जुहुयाद्वह्नौ भक्त्या वैष्णवसत्तमः। वैकुण्ठपार्षदं हुत्वा होमशेषं समापयेत्॥ २८५॥ प्रत्यृचं पावमानीभिर्दद्यात्पुष्पाञ्जलिं हरेः। अथ दोलां शुभाकारां बद्ध्वाऽस्मिन्समलंकृताम्॥२८६॥ वज्रवैदूर्यमाणिक्यमुक्ताविद्रुमभूषिताम्। तस्यां निवेश्य देवेशं लक्ष्म्या सार्धं प्रपूजयेत्॥ २८७॥ गन्धैः पुष्पैर्धूपदीपैः फलैर्भक्ष्यैर्निवेदनैः। कुसुमाक्षतदूर्वाग्रतिलसर्पिर्मधूदकम्॥ २८८॥ सर्षपाणि च निक्षिप्य अष्टाङ्गार्घ्यं निवेदयेत्। पादेषु चतुरो वेदान्मन्त्राण्योक्तेषु चास्तरे (?)॥ २८९॥ नागराजं च दोलायां पीठे सर्वस्वरानपि। व्यजने वैनतेयं च सावित्रीं चामरे तथा॥ २९०॥ दिगीशानर्चयेद्दिक्षु ऊर्ध्वं ब्रह्मा बृहस्पतिः। अधस्ताच्चण्डिकां रुद्रं क्षेत्रपालविनायकौ॥ २९१॥ विताने चन्द्रसूर्यौ च नक्षत्राणि ग्रहांस्तथा। वेदाश्च सेतिहासाश्च पुराणं देवतागणाः॥२९२॥ भूधराः सागराः सर्वे पूजनीयाः समन्ततः। एवं संपूज्य दोलायां लक्ष्म्या सह जनार्दनम्॥ २९३॥ दोलयेच्च ततो दोलां चतुर्वेदैश्चतुर्दिनम्। सूक्तैश्च ब्र(ब्रा)ह्मणस्पत्यैः सामगानैः भवन्धकैः॥ २९४॥ नामभिः कीर्तयन्देवं मन्दं मन्दं प्रदोलयेत्। स्त्रियः स्वलंकृताः सर्वा गायन्त्यो विभुमच्युतम्॥ २९५॥ चरितं रघुनाथस्य कृष्णस्य चरितं तथा। × दोलयेयुर्मुदा भक्त्या दोलायां परमेश्वरम्॥ २९६॥ दोलाया दर्शनं विष्णोर्महापातकनाशनम्। भक्तिप्रसाधनं नृणां जन्ममृत्युनिकृन्तनम्॥२९७॥ देवाः सर्वे विमानस्था दोलायामर्चितं हरिम्। दर्शयन्ति ततः पुण्यं दोलानामोत्सवं हरेः॥ २९८॥ भक्त्या नीराजनं दद्याच्छ्रीसूक्तेनैव वैष्णवः। ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत्॥ २९९॥ एवं त्रिवासरं कुर्यादुत्सवं वैष्णवोत्तमः। प्रद्युम्नमेव कुर्वीत तत्तत्काले तु वैष्णवः॥ ३००॥ श्रौतेनैव तु मार्गेण जपहोमपुरःसरम्। उत्सवं वासुदेवस्य यथाशक्त्या(क्ति) समाचरेत्॥ ३०१॥

---

× एतदर्धं न विद्यते क. पुस्तके।

---

१ क. °ध्यन्नमार्द्रकं। २ क. युज्य। ३ ख. °ना शर्करासंयुतास्तिलान्। ४ ख. °कुण्ठं पा°। ५ ख. ब्रह्मा बृहस्पती। अ°। ६ ख. °सादनं।

यत्र यत्रोत्सवं विष्णोः कर्तुमिच्छति वैष्णवः। होमं कुर्यात्तत्र तत्र मन्त्रैर्विष्णुप्रकाशकैः ॥ ३०२ ॥ अतो देवेति सूक्तेन तथा विष्णोर्नुकेन च। परो मात्रेति सूक्ताभ्यां पौरुषेण च वैष्णवः ॥ ३०३ ॥ नारायणानुवाकेन श्रीसूक्तेनापि वैष्णवः। प्रत्यृचं जुहुयाद्वह्नौ चरुणा पायसेन च ॥ ३०४ ॥ चतुर्भिर्वैष्णवैर्मन्त्रैः पृथगष्टोत्तरं शतम्। आज्यहोमं प्रकुर्वीत गायत्र्या विष्णुसंज्ञया ॥ ३०५ ॥ वैकुण्ठपार्षदं हुत्वा शेषं पूर्ववदाचरेत्। अनादिष्टेषु सर्वेषु कुर्यादेवं विधानतः ॥ ३०६ ॥ ब्राह्मणान्भोजयेद्विप्रान्सर्वं संपूर्णतां व्रजेत् ॥ ३०७ ॥ अथवा मन्त्ररत्नेन सहस्रं प्रतिवासरम्। हुत्वा पुष्पाणि दत्त्वा च शेषं पूर्ववदाचरेत् ॥ ३०८ ॥ होमं विना न कर्तव्यमुत्सवं (उत्सवः) परमात्मनः। जपहोमविहीनं तु न गृह्णाति जनार्दनः ॥ ३०९ ॥ तस्माच्छ्रौतं प्रवक्ष्यामि विष्णोराराधनं नृप। आश्वयुक्कृष्णपक्षे तु सम्यगभ्युदिते रवौ ॥ ३१० ॥ आदर्शात्सप्तरात्रं तु पूजयेत्प्रभुमव्ययम्। स्नात्वा नद्यां विधानेन कृतकृत्यः समाहितः ॥ ३११ ॥ गृहीत्वा जलकुम्भं तु वारुणान्प्रवरान्व्रजेत्। पञ्चत्वक्पल्लवान्पुष्पाण्यभिमन्त्र्य विनिक्षिपेत् ॥ ३१२ ॥ सौरभेयीं तथा मुद्रां दर्शयित्वा च पूजयेत्। त्रिवारं वैष्णवैर्मन्त्रैः शङ्खेनैवाभिषेचयेत् ॥ ३१३ ॥ पूजयित्वा विधानेन गन्धपुष्पाक्षतादिभिः। * अपूपान्पायसं सक्तून्कृसरं च निवेदयेत् ॥ ३१४ ॥ मन्त्रैरष्टोत्तरशतं दत्त्वा पुष्पाणि चक्रिणः। पश्चाद्धोमं प्रकुर्वीत साज्येन चरुणा ततः ॥ ३१५ ॥ कश्यपानेति सूक्तेन वैष्णवैरपि वैष्णवः। हुत्वा तु मन्त्ररत्नेन घृतमष्टोत्तरं शतम् ॥ ३१६ ॥ वैकुण्ठं पार्षदं हुत्वा वैष्णवान्भोजयेत्ततः। सकृद्भोजनसंयुक्तः क्षितिशायी भवेन्निशि ॥ ३१७ ॥ सायाह्नेऽपि समभ्यर्च्य जातीपुष्पैः सुगन्धिभिः। बहुभिर्दीपदण्डैश्च सेवेरन्पुरवासिनः ॥ ३१८ ॥ एवं महोत्सवं कृत्वा धनधान्ययुतो भवेत्। तत्तत्कालोचितं विष्णोरुत्सवं परमात्मनः। = द्रव्यहीनोऽपि कुर्वीत पत्रपुष्पैः फलादिभिः। समिद्भिर्बिल्वपत्रैर्वा होमं कुर्वीत वैष्णवः ॥ ३१९ ॥ संतर्पयेच्च विप्रांस्तु कोमलैरतुलसीदलैः ॥ ३२० ॥ भक्त्या वै देवदेवेशः परितुष्टो भवेद्ध्रुवम्। आस्तिक्यः(कः) श्रद्धधानश्च वियुक्तमदमत्सरः ॥३२१॥ पूजयित्वा जगन्नाथं यावज्जीवमतन्द्रितः। इह भुक्त्वा मनोरम्यान्भोगान्सर्वान्यथेप्सितान् ॥३२२॥ सुखेन देहमुत्सृज्य जीर्णत्वचमिवोरगः। स्थूलसूक्ष्मात्मिकां चेमां विहाय प्रकृतिं द्रुतम् ॥३२३॥

---

* एतद्वचनं न विद्यते क पुस्तके। = इत आरभ्य जातिपुष्पै॰ सुगन्धिभिरित्यन्तग्रन्थः क॰ पुस्तके न विद्यते।

---

१ ख॰ 'त्र मन्त्रैस्तथा विष्णु॰'। २ क॰ '॰कृत्यसमो भवेत्। गृ॰'।

सारूप्यमीश्वरस्याऽऽशु गत्वा तु स्वजनैः सह। दिव्यं विमानमारुह्य वैकुण्ठं नाम भास्वरम् ॥ ३२४ ॥ दिव्याप्सरोगणैर्युक्तो दिव्यभूषणभूषितः। स्तूयमानः सुरगणैर्गीयमानश्च किंनरैः ॥ ३२५ ॥ ब्रह्मलोकमतिक्रम्य भित्त्वा ब्रह्माण्डमण्डलम्। विष्णुचक्रेण वै भित्त्वा सर्वानावरणान्घनान् ॥ ३२६ ॥ अतीत्य विरजामाशु सर्ववेदस्रवां नदीम्। अभ्युद्गच्छाद्भिरव्यग्रैः पूज्यमानः सुरोत्तमैः ॥ ३२७ ॥ संप्राप्य परमं धाम योगिगम्यं सनातनम्। यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः ॥ ३२८ ॥ तद्विष्णोः परमं धाम सदा पश्यन्ति योगिनः। शीतांशुकोटिसंकाशैः सर्वैश्च भवनैर्युतम् ॥ ३२९ ॥ × आरूढयौवनैर्दिव्यैः पुंभिः स्त्रीभिश्च संकुलम्। सर्वलक्षणसंपन्नैर्दिव्यभूषणभूषितैः ॥ ३३० ॥ अक्षरं परमं व्योम यस्मिन्देवा अधिष्ठिताः। इरावती धेनुमती व्यस्तभ्ना सूयवासिनी ॥ ३३१ ॥ यत्र गावो भूरिशृङ्गाः साऽयोध्या देवपूजिता। अनन्तव्यूहलोकैश्च तया तुल्यशुभावहैः ॥ ३३२ ॥ सर्ववेदमयं तत्र मण्डपं सुमनोहरम्। सहस्रस्थूणसदसि ध्रुवे रम्योत्तरे शुभे ॥ ३३३ ॥ तस्मिन्मनोरमे पीठे धर्माद्यैः सूरिभिर्वृते। सहाऽऽसीनं कमलया दृष्ट्वा देवं सनातनम् ॥ ३३४ ॥ स्तुतिभिः पुष्कलाभिश्च प्रणम्य च पुनः पुनः। प्रहर्षपुलको भूत्वा तेन वाऽऽलिङ्गितः क्रमात् ॥ ३३५ ॥ पूजितः सकलैर्भोगैः श्रिया चापि प्रपूजितः। अनन्तविहगेशाद्यैरर्चितः सर्वदैवतैः ॥ ३३६ ॥ तेषामन्यतमो भूत्वा मोदते तत्र देववत्। येषु केषु च लोकेषु तिष्ठते कमलापतिः ॥ ३३७ ॥ तेषु तेष्वपि देवस्य नित्यदासो भवेत्सदा। दासवत्पुत्रवत्तस्य मित्रवद्बन्धुवत्सदा ॥ ३३८ ॥ अश्नुते सकलान्कामान्सह तेन विपश्चिता। इमाँल्लोकान्कामभोगः कामरूप्यनुसंचरन् ॥ ३३९ ॥ सर्वदा दूरविध्वस्तदुःखलेशलवांशकः। गुणानुभवजप्रीत्या कुर्याद्दास्यमशेषतः ॥ ३४० ॥ इद(म)मेव परं मोक्षं विदुः परमयोगिनः(णः)। काङ्क्षन्ति परमं दास्यमुक्तमेवं महर्षयः ॥ ३४१ ॥ हरेर्दास्यैकपरमां भक्तिमालम्ब्य मानवः। इहैव मुक्तो राजर्षे सर्वकर्मनिबन्धनैः ॥ ३४२ ॥

इति श्रीवृद्धहारीतस्मृतौ विशिष्टपरमधर्मशास्त्रे नानाविधोत्सवविधानं नाम दशमोऽध्यायः ॥ १० ॥

---

× एतद्वचनं न विद्यते क. पुस्तके।

१ ख. भास्करम्। २ ख. गत्वा। ३ ख. °ण्डपम्। ४ क. °नाचरणानघवत्। अ°। ५ ख. °त्यवीर°। ६ क. तन्त्रं। ७ क. °स्थूलस°। ८ क. श्रियात्। ९ क. °भोगकर्मरु°। १० क. °णानतुभवप्री°। ११ ख. °द्वानम°। १२ ख. °दासामुक्तमेकं म°।

( अथैकादशोऽध्यायः । )

---

हारीत उवाच—

अथ वक्ष्यामि राजेन्द्र विष्णुपूजाविधिं परम् । श्रौतं महर्षिभिः प्रोक्तं वाशि( सि )-ष्ठाद्यैः पुरातनैः ॥ १ ॥ वैखानसैश्च भृग्वाद्यैः सनकाद्यैश्च योगिभिः । वैष्णवैर्वैदिकैः पूर्वैर्यद्यदाचरितं पुरा ॥ २ ॥ तत्ते वक्ष्यामि राजेन्द्र महाप्रियतमं हरेः । ब्राह्मे मुहूर्ते चोत्थाय सम्यगाचम्य वारिणा ॥ ३ ॥ ध्यात्वा हृत्कमले विष्णुं पूजयेन्मनसैव तु । × तं मत्तेवेति सूक्तेन बोधयेत्कमलापतिम् ॥ ४ ॥ वनस्प-तेति सूक्तेन तूर्यघोषं निनादयेत् । कुर्यात्प्रदक्षिणं विष्णोरतो देवेत्यनेन तु । तद्विष्णो-रिति मन्त्राभ्यां त्रिः प्रणम्याथ वाग्यतः ॥ ५ ॥ कृतशौचस्तथाऽऽचान्तो दन्तधा-वनपूर्वकम् । स्नानं कुर्याद्विधानेन धात्रीश्रीतुलसीयुतम् ॥ ६ ॥ नारायणानुवाकेन कृत्वा तत्राघमर्षणम् । कृतकृत्यः शुचिर्भूत्वा तर्पयित्वा च पूर्ववत् ॥ ७ ॥ धृतोर्ध्व-पुण्ड्रदेहश्च पवित्रकर एव च । प्रविश्य मन्दिरं विष्णोः संमार्जन्या विशोधयेत् ॥ ८ ॥ वास्तोष्पतेति वै सूक्तं जपन्संमार्जयेद्गृहम् । आगाव इति सूक्तेन गोमयेनानुलेपयेत् ॥ ९ ॥ आ नो भद्रेति सूक्तेन रङ्गवल्लिं च निक्षिपेत् । ततः कलशमादाय जपन्वै शाकुनो-(नी)ऋचः ॥ १० ॥ गत्वा जलाशयं रम्यं निर्मलं शुचि पाण्डुरम् । इमं मे गङ्गेति ऋचा जलं भक्त्याऽभिमन्त्रयेत् ॥ ११ ॥ आपो अस्मानिति ऋचा कलशं क्षालयेद्द्विजः । समुद्रज्येष्ट(ष्ठा)मन्त्रेण गृह्णीयात्प्रयतो जलम् ॥ १२ ॥ उतस्मैनं वस्तुभिरिति(?) वस्त्रे-णाऽऽच्छाद्य वैष्णवः । प्रसम्राजेति सूक्तं वै जपन्संप्रविशेद्गृहम् ॥ १३ ॥ धान्योपरि तथा कुम्भं न्यसेद्दक्षिणतो हरेः । इमं मे वरुणेत्यृचा मङ्गलद्रव्यसंयुतम् ॥ १४ ॥ अञ्जन्ति (=मित्र) त्वेति सूक्तेन कुर्यात्पुष्पस्य संचयम् । अर्वाञ्चि सुभगे द्वाभ्यां गन्धांश्च पेषयेत्तथा ॥ १५ ॥ वाग्यतः प्रयतो भूत्वा श्रीसूक्तेनैव वैष्णवः । विश्वानि न इति ऋचा दीपं दद्यात्सुदीपितम् ॥ १६ ॥ तत्तत्पात्रेषु सलिलं दत्त्वा गन्धांस्तु निक्षिपेत् । शं नो देव्या च सलिलं गायत्र्या च कुशांस्तथा ॥ १७ ॥

---

× एतदाद्यर्धत्रयं न विद्यते क पुस्तके । = मित्रेत्यधिकम् ।

---

१ ख. हृत्पङ्कजे वि° । २ ख. °म्याऽऽचरेत्ततः ।

आयनेति च पुष्पाणि यवोऽसीति ऋचाऽक्षतान्। गन्धद्वारेति वै गन्धानोषध्या तिलसर्षपान् ॥ १८ ॥ काण्डात्काण्डेति दूर्वाग्रान्सहिरण्येति रत्नकम्। हिरण्यरूपेति ऋचा हिरण्यं निक्षिपेत्तथा ॥ १९ ॥ एवं द्रव्याणि निक्षिप्य तुलस्या च समर्पयेत्। सवितुश्चेत्यादि ऋचा दद्यादर्घ्योदकं हरेः ॥ २० ॥ श्रियेति पादेति ऋचा दद्यात्पादजलं तथा। भद्रं ते हस्तेत्यनेन हस्तप्रक्षालनं चरेत् ॥ २१ ॥ वयः सुपर्णेति ऋचा मुखसंमार्जनं तथा। आपो अस्मानिति ऋचा वक्त्रगण्डूषमेव च ॥ २२ ॥ हिरण्यदन्तेत्यनेन दन्तकाष्ठं निवेदयेत्। बृहस्पते प्रथमेति जिह्वालेखनमेव च ॥ २३ ॥ आप इद्वा उ भेषजीरिति गण्डूषमाचरेत्। आपो हि ष्ठा इत्यनेन कुर्यादाचमनीयकम् ॥ २४ ॥मूर्धामव इत्यनेन तैलाभ्यङ्गं समाचरेत्। मूर्धानं दिव इत्यनेन गन्धान्केशेषु लेपयेत् ॥ २५ ॥ ताद्धियस्तस्थौ केशवं ते केशान्वै क्षालयेत्पुनः। श्रिये पृश्न [इ]ति ऋचा तद्वर्चो(च्चो)द्वर्तनादिकम्(?) ॥ २६ ॥ आपो यम्वः प्रथममिति सूक्तेनाभ्यङ्गसूचनम्। कृत्वाऽदः स्नापयेत्सूक्तैर्वैष्णवैर्गन्धवारिणा ॥ २७ ॥ ततः पञ्चामृतैर्गव्यैः स्नापयेत्तत्प्रकाशकैः। आप्यायस्वेत्यृचा क्षीरं दधिक्राव्णेति वै दधि ॥ २८ ॥ घृतं मिमिक्षेति घृतं मधु वातेति वै मधु। तत्ते वयं यथा गोभिरित्यृचेक्षुरसं शुभम् ॥ २९ ॥ एभिः पञ्चामृतैः स्नाप्य चन्दनं च निवेदयेत्। श्रीसूक्तपुरुषसूक्ताभ्यां पुनः संस्थापयेद्धरिम् ॥ ३० ॥ वनस्पतेति सूक्तेन कुर्याद्धोषसमन्वितम्। श्रिये जात इति ऋचा दद्यान्नीराजनं ततः ॥ ३१ ॥ युवा सुवासेति ऋचा वस्त्रेणाङ्गं प्रमार्जयेत्। प्रसेनानेति मन्त्रेण वस्त्रं संवेष्टयेत्ततः ॥ ३२ ॥ युवं वस्त्राणीति ऋचा उत्तरीयं तथैव च। सर्वत्राऽऽचमनं दद्याच्छं नो देवीत्यृचा च तु ॥ ३३ ॥ उपवीतं ततो दद्याद्ब्राह्मणानिति वै ऋचा। ऋतस्य तन्तुर्वितते दद्यात्कुशपवित्रकम् ॥ ३४ ॥ पश्चादाचमनं दद्याद्भूषणैर्भूषयेद्धरिम्। विश्वजित्सूक्तेन दद्याद्भूषणानि शुभानि वै ॥३५॥ हिरण्यकेशीति ऋचा केशान्संशोधयेत्तथा। सुपुष्पैः कवरीं दद्याद्विहिंसोतेत्यनेन तु ॥३६॥ कृपायमिन्दतेरथ इत्यृचा(?) तिलकं शुभम्। गन्धं च लेपयेद्गात्रे गन्धद्वारेति वै ऋचा ॥ ३७ ॥ त्रातारमिन्द्र इत्यृचा पुष्पमालां समर्पयेत्। चक्षुषः पितेति ऋचा चक्षुषोरञ्जनं शुभम् ॥ ३८ ॥ सहस्रशीर्षेति ऋचा किरीटं शिरसि क्षिपेत्। ऋक्सामाभ्यामिति श्रोत्रे कुण्डले माकरेऽर्पयेत् ॥ ३९ ॥ दमूनसौ अपस इति केयूरादिविभूषणम्। आश्वेते यस्येति ऋचा हाराणि विमलानि च ॥ ४० ॥ हस्ताभ्यां दश शाखाभ्यामित्यृचा चाङ्गुलीयकम्। यस्य त्रीपूर्णामधुना सूर्याके(?)विन्यसेच्छुभे ॥४१॥

इन्द्रं त्वदुत्तर इति कटिसूत्रं सुरोचिषम् । स्वस्तिदा विशस्पतिरित्यायुधानि समर्पयेत् ॥ ४२ ॥ द्यौर्नय इन्द्रेति दद्याच्छत्रं सुविमलं तथा । सोमः पवतेति ऋचा चामरं हैममुत्तमम् ॥ ४३ ॥ सोमापूषणेति ऋचा तालवृन्तौ सुवर्चसौ । रूपं रूपमिति ऋचा दद्यादादर्शकं शुभम् ॥ ४४ ॥ इन्द्रमेव धिषणेत्यृचाऽऽसने विनिवेशयेत् । इहैवास्तमेति ऋचा दद्याच्च कुशविष्टरम् ॥ ४५ ॥ आप्स्वन्तरिति(च) ऋचा पाद्यं दद्याच्च भक्तितः । गौरीर्मिमायसूक्तेन अर्घ्यं हस्ते निवेदयेत् ॥ ४६ ॥ नतमंहो न दुरितमित्याचमनं समर्पयेत् । पिबासोममित्यनेन मधुपर्कं च प्राशयेत् ॥ ४७ ॥ अप्स्वग्ने सधिष्टवेति पुनराचमनं चरेत् । अर्चन्तस्त्वा हवामहेत्यक्षतैरर्चयेच्छुभैः ॥ ४८ ॥ तण्डुलाः सहरिद्रास्तु अक्षता इति कीर्तिताः । विष्णोर्नुकमिति सूक्तेन धूपं दद्याद्घृतान्वितम्(तान्) ॥ ४९ ॥ भावामितेति(?) सूक्तेन दीपान्नीराजयेच्छुभान् । इदं ते पात्रमिति [ च ] भाजनं विन्यसेच्छुभम् ॥ ५० ॥ तस्मा अरङ्गमामेति पात्रप्रक्षालनं चरेत् । अस्मिन्पदे पर( * मेतच्छिवांस)मिति गवाज्येनाभिपूरयेत् ॥ ५१ ॥ पितुं नुस्तोषमिति सूक्तेन दद्यादन्नादिकं हविः । तदस्यानिकमित्यृचा सहिरण्यं घृतं तथा ॥ ५२ ॥ तस्मिन्रायवतय इति दद्यादापोशने घृतम् (?) । ततः प्राणाद्याहुतयो होतव्याः परमात्मनि ॥५३॥ अग्ने विवस्वदुषसः ( * इति ) पञ्चभिश्च यथाक्रमम् । समुद्रादूर्मीति सूक्तेन घृतधाराः समाचरेत् ॥ ५४ ॥ परोमात्रेति सूक्तेन भोजयेत्सश्रियं हरिम् । तुभ्यं हिन्वान इत्यनेन यथासर्वं निवेदयेत् ॥ ५५ ॥ इन्द्रापिवा इत्यनेन दद्यादापोशनं पुनः । प्रत आश्विनी पवमानेत्यृ(नेति ऋ)चा हस्तप्रक्षालनं चरेत् ॥ ५६ ॥ सरस्वतीं देवयन्त इति (*तिसृभिः) गण्डूषमेव च । वृष्टिं दिवीशस्तद्धारेति (* द्वाभ्यां) दद्यादाचमनं ततः ॥ ५७ ॥ शिशुं जज्ञानमित्यृचा मुखहस्तौ च मार्जयेत् । दक्षिणावतामित्यृचा दद्यात्ताम्बूलमुत्तमम् ॥ ५८ ॥ स्वादुः पवस्वेति ऋचा दद्यादाचमनं पुनः । आऽयं गौरिति सूक्ताभ्यां दद्यात्पुष्पाञ्जलिं ततः ॥ ५९ ॥ दीपान्नीराजयेत्पश्चाद्घृतसूक्तेन वैष्णवः । यत इन्द्रेत्यादिषड्भिर्दिक्षु रक्षां प्रदापयेत् ॥ ६० ॥ यज्ञो देवानां (इति) सूक्तेन उपस्थानजपं चरेत् । तद्विष्णोरिति [च] द्वाभ्यां प्रणमेच्चैव भक्तितः ॥ ६१ ॥

---

* एतच्चिह्नान्तर्गतमधिकम् ।

---

१ ख. °न वय. स° ।

गौरीर्मिमायेति ऋचा दद्यादाचमनं ततः । सहस्रनामभिः स्तुत्वा पश्चाद्धोमं समाचरेत् ॥ ६२ ॥ प्रातरौपासनं हुत्वा तस्मिन्नग्नौ जनार्दनम् । ध्यात्वा संपूज्य जुहुयाद्वैष्णवैः प्रत्यृचं हविः ॥ ६३ ॥ श्रीभूसूक्ताभ्यामपि च हुत्वा घृतयुतं हविः । याभिः सोमो मोदतेत्यनेन(ति) मातृभ्यां जुहुयाद्धविः ॥ ६४ ॥ किंस्विद्वनमित्या(ति ऋचा अ)नन्तं जुहुयाद्धविः । सुपर्णं विप्रा इत्यृचा सुपर्णाय महात्मने ॥ ६५ ॥ चमूषच्छ्येन इति च सेनेशायापि हूयताम् । पवित्रं त इति द्वाभ्यां चक्रायामिततेजसे ॥ ६६ ॥ स्वादुषं स इति ऋचा हेतिभ्यो जुहुयाद्धविः । इन्द्रश्रेष्ठानितीन्द्राय अग्निर्मूर्धेति पावकम् ॥ ६७ ॥ यमाय सोमेति यमं नैर्ऋतं मोषुणेत्यृचा । यच्चिद्धितेति वरुणं वायवायाहीति मारुतम् ॥ ६८ ॥ द्रविणोदा ददातु नाद्रविणाद्याशमेव च । त्र्यम्बकऋ( कमित्यृ )चा रुद्रमानः प्रजां प्रजापतिम् ॥ ६९ ॥ यज्ञेनेत्यृचा साध्येभ्यो मरुतो यद्धवेति च । यो नः सपत्नेति ऋचा वसुरुद्रेभ्य एव च ॥ ७० ॥ विश्वेदेवाः स च( वाश्च )तस्रभिर्ये देवास ऋचा तथा । सर्वेभ्यश्चैव देवेभ्यो जुहुयादन्नमुत्तमम् ॥ ७१ ॥ नासत्याभ्यामिति ऋचा अश्विच्छन्दोभ्य एव च । सोम( मा )पूषे(षणे)ति ऋचा सूर्याचन्द्रमसोस्तथा ॥ ७२ ॥ संसमिद्युद(व)सूक्तेन वैष्णवेभ्यतस्था पुनः । ततः स्विष्टकृतं हुत्वा भुक्तेभ्यश्च बलिं क्षिपेत् ॥ ७३ ॥ नमो महभ्य ऋ( इत्यृ )चा बलिं भुवि विनिक्षिपेत् । आचम्य वारिणा पश्चान्मन्त्रयागं समाचरेत् ॥ ७४ ॥ एतच्छ्रौतं नृपश्रेष्ठ मुनिभिः संप्रकीर्तितम् । सम्यगुक्तं मया तेऽद्य निश्चितं मतमुत्तमम् ॥७५॥ एतत्प्रियतमं विष्णोस्त्रि( ष्णोः श्रि )यो नाथस्य सर्वदा । श्रौतेनैव हरिं देवमर्चयन्ति मनीषिणः ॥ ७६ ॥ श्रौतस्मार्तागमैर्विष्णोस्त्रिविधं पूजनं स्मृतम् । एतच्छ्रौतं ततः स्मार्तं पौरुषेण च यत्स्मृतम् ॥ ७७ ॥ मन्त्रैरष्टाक्षराद्यैस्तु तद्दिव्यागममुच्यते । श्रौतमेव विशिष्टं स्यात्तेषां नृपवरोत्तम ॥ ७८ ॥ श्रौतमेव तथा विप्राः प्रकुर्वन्ति जनार्दने । यजन्ति केचित्त्रितयं त्रिसंध्यासु च देशिकाः ॥ ७९ ॥ यजन्ति केचित्त्रितयं त्रयो वर्णा द्विजोत्तमाः । शुश्रूषा च तथा नामकीर्तनं शूद्रजन्मनः ॥ ८० ॥ अपि परमे( म )कान्तिवालकृष्णवपुं हरिम् ( पुर्हरिः ) । स्त्रीणामप्यर्चनीयः स्यात्स्ववर्णस्याऽऽनुरूप( प्य )तः ॥ ८१ ॥ मन्त्ररत्नेन वै पूज्यो हित्वा श्रौतं विधानतः । एवमभ्यर्चनं विष्णोर्मुनिभिः संप्रकीर्तितम् ॥८२॥ श्रौतस्मार्तागमोक्ताश्च नित्यनैमित्तिकाः क्रियाः । प्रायश्चित्तमकृत्यानां दण्डमप्याततायिनाम् ॥८३॥

---

× धनुश्चिह्नान्तर्गतमधिकम् ।

अधुना संप्रवक्ष्यामि वृत्तिमै(मे)कान्ति(न्त)लक्षणाम् । नारीणामपि कर्तव्यामहन्यहनि शाश्वतीम् ॥ ८४ ॥ उत्थाय पश्चिमे यामे भर्तुः पूर्वमतन्द्रिता । कृत्वा शौचं विधानेन दन्तधावनमाचरेत् ॥ ८५ ॥ कृत्वाऽथ मङ्गलस्नानं धृत्वा शुक्लाम्बरं तथा। आचम्य धारयेदूर्ध्वपुण्ड्रं शुभ्रं मृदैव तु ॥ ८६ ॥ चन्दनेनापि कस्तूर्या कुङ्कुमेनापि वाऽसति । जप्त्वा मन्त्रं गुरुं पश्चादभिवन्द्य च वैष्णवान् ॥ ८७ ॥ नमस्कृत्वा(त्य) जगन्नाथं जप्त्वा च शरणागतिम् । आत्मानं समलंकृत्य चिन्तयेन्मधुसूदनम् ॥८८॥ गृहभाण्डादिकं सर्वं वाग्यता नियतेन्द्रिया । संशोधयेत्प्रतिदिनं यज्ञार्थं परमात्मनः ॥ ८९ ॥ मार्जयित्वा गृहं पश्चाद्गोमयेनानुलिप्य च । रङ्गवल्ल्यादिभिः पश्चादलंकृत्य समन्ततः ॥ ९० ॥ चतुर्विधानां भाण्डानां क्षालनं च समाचरेत् । पाचकानि बहिःष्ठानि जलस्याऽऽनयनानि च ॥ ९१ ॥ स्थापनानि जलार्थं वा चतुर्विधमुदाहृतम् । पृथक्पृथगुदश्चानि तेषु तेष्वपि विन्यसेत् ॥ ९२ ॥ नान्योन्यं संकरं कुर्याद्भाण्डानां सर्वकर्मसु । तानि तानि स्पृशेत्पाणिं प्रक्षाल्यैव पुनः पुनः ॥ ९३ ॥ सम्यक्प्रक्षाल्य भाण्डानि दाहयेद्यज्ञियैस्तृणैः । पुनः प्रक्षाल्य संतप्त्वा(प्य) पश्चात्पचनमाचरेत् ॥९४॥ रसभाण्डानि सर्वाणि क्षालयेदुष्णवारिणा । चतुर्भिः पञ्चभिर्ध्यात्वा स्रुक्स्रुवौ क्षालयेत्तथा ॥ ९५ ॥ वहिर्न निष्क्रामयति पाचकानि गृहान्तिकात् । ताभिरेव तु दद्यात्तु भुञ्जीत हि कदाचन ॥ ९६ ॥ दत्त्वा पात्रान्तरे दद्यात्कांस्ये वा मृन्मयेऽपि वा । पुटे पर्णमये वाऽपि दद्यादत्र तु वैणवे ॥ ९७ ॥ स्रुवं दारुमयं कास्यं कुर्वीतायोमयं न तु । न दद्यादारनालस्य घटं तस्मिन्महानसे ॥ ९८ ॥ आरनालस्य यत्कुम्भं त्यजेन्मद्यघटं यथा । आरनालं कोलशाकं करञ्जं तिलपिष्टकम् ॥ ९९ ॥ लशुनं मूलकं शिग्रुं छत्रां(त्रं) कोशातकीफलम् । अलाबुं चान्त्रं शाकं च करनिर्मथितं दधि ॥१००॥ × विम्वं विड्जं च निर्यासं पीलु श्लेष्मातकं फलम् । आरग्वधं च पिण्याकं श्वेतवृन्ताकमेव च ॥ १०१ ॥ उष्ट्राविमानुषीक्षीरमवत्सानिर्दशाहगोः । एतान्यकामतः स्पृष्ट्वा सवासा जलमाविशेत् ॥ १०२ ॥ + मत्या जग्ध्वा व्रतं कुर्यान्मुर्जं( र्जे ? ) जग्ध्वा पतेदधः । केशानां रञ्जनार्थं वा न स्पृशेदारनालकम् ॥ १०३ ॥ चन्दनं घनसारं वा मकरन्दमथापि वा । माषमुद्गादिचूर्णं वा तक्रं जाम्बीरमेवं वा ॥१०४॥

---

× एतदर्धं न विद्यते क. पुस्तके । + एतद्वचनं न विद्यते क पुस्तके ।

---

१ ख. °त्तदा । २ ख. भुञ्जता हि कथं च । ३ ख. °द्दावने । आ° । ४ ख. कारक्ता° । ५ ख. च निर्गुण्डी कालिङ्कं नालिका तथा । नालिकेर्याख्यशाकं च श्वे° । ६ क. °व च । ड° ।

तिन्तिडं च कलायं वा केशरञ्जनमाचरेत् ॥१०४॥ ऊर्ध्वं मासात्त्यजेत्सर्वं मृद्भाण्डं वैष्णवोत्तमः। न त्यजेल्लोहभाण्डानि तापयेच्च हुताशने॥ १०५॥ दारूणां संत्यजेद्वापि तक्षणं वा समाचरेत्। अश्मनामश्मभिर्ध्यात्वा गोवालैर्घर्षयेत्तथा ॥ १०६॥ सूतके मृतके वाऽपि शुनादिस्पर्शने तथा। स्पर्शने वाऽप्यभक्ष्याणां सद्य एव परित्यजेत् ॥ १०७॥ एवं संशोध्य भाण्डानि यज्ञार्थं याचयेद्धविः। संप्रोक्ष्याद्भिः शुचौ देशे धान्यं संशोषयेद्बुधः ॥१०८॥ अवहन्याच्छुभतरं गायन्ती मधुसूदनम्। संशोध्य तण्डुलान्पश्चादद्भिः संक्षालयेत्त्रिभिः॥ १०९॥ अम्भस्त्रिवारं वस्त्रेण शोधयित्वा घटान्तरे। कुशेनैव पवित्रेण तण्डुलान्निर्वपेच्छुभान्॥ ११०॥ अन्तर्धाय कुशं तत्र मन्त्ररत्नमनुस्मरन्। पाचयेत्सपवित्रेण वाग्यतो नियतेन्द्रियः॥ १११॥ उपविश्य शुभे कुण्डे वह्निं प्रज्वालयेत्ततः। अवैष्णवस्य[१] शैवस्य शूद्रस्य पतितस्य च ॥ ११२॥ पाषण्डस्याप्यशुद्धस्य गृहेष्वग्निं विवर्जयेत्। संप्रोक्ष्य मन्त्ररत्नेन वह्निं कुशजलैस्त्रिभिः॥ ११३॥ यज्ञियैर्विमलैः काष्ठैर्व्यजनेन प्रदीपयेत्। सान्तर्धानमुखेनापि धमयित्वा प्रदीपयेत्॥ ११४॥ पालाशैः खादिरैर्बिल्वैर्गोशकृत्पिटकैरपि। अन्यैर्वा यज्ञियैः काष्ठैस्तृणैर्वा यज्ञियैः शुभैः॥ ११५॥ वर्जयेन्मद्यदिग्धानि तथा वैभीतकानि च। आरग्वधानि शिग्रूणि तथा नैर्गुण्डिकानि च॥ ११६॥ नैपानि च कपित्थानि कार्पासैरण्डकानि च। अमेध्यानि सकीटानि दौर्गन्धानि तथैव च ॥ ११७॥* असद्वाहानि चैत्यानि काकखट्वासनानि च। देवालयानि यौप्यानि तथोपकरणानि च॥ ११८॥ महिषोष्ट्रखरादीनां कारीषपिटकानि च। अन्यानां पाकशेषाणि वर्जयेद्यज्ञकर्मणि ॥ ११९॥ प्रदीप्याग्निं ततोऽन्नाद्यं पच्यान्नियतमानसः। चिन्तयेत्परमात्मानं जपन्मन्त्रद्वयं तथा ॥ १२०॥ शुद्धं हृद्यं तथा रुच्यं पश्चादभ्यन्तरं शुभम्। निषिद्धानि च शाकानि फलमूलानि वर्जयेत्॥ १२१॥ अतिरूक्ष्यं(क्षं) चातिदुष्टमतिरक्तं च वर्जयेत्। भावदुष्टं क्रियादुष्टं कालदुष्टं तथैव च॥ १२२॥ संसर्गदुष्टं च तथा वर्जयेद्यज्ञकर्मणि। रूपतो गन्धतो वाऽपि यच्चाभक्ष्यैः समं भवेत्॥ १२३॥ भावदुष्टं च तत्प्रोक्तं मुनिभिर्धर्मपारगैः। आरनालं च मद्यं च करानिर्मथितं दधि ॥ १२४॥ हस्तदत्तं च लवणं क्षीरं घृतपयांसि च। हस्तेनोद्धृत्य तोयं च पीतं वक्त्रेण वैकदा॥ १२५॥ शब्देन पीतं शुक्तं च गव्यं ताम्रेण संयुतम्। क्षीरं च लवणोन्मिश्रं क्रियादुष्टमिहोच्यते॥ १२६॥ एकादश्यां तु यच्चान्नं यच्चान्नं राहुदर्शने। सूतके मृतके चान्नं शुष्कं पर्युषितं तथा ॥ १२७॥ अनिर्दशाहगोः क्षीरं षष्ठ्यां तैलं तथाऽपि च। नदीष्वसमुद्रगासु सिंह-

* एतद्वचनं न विद्यते क. पुस्तके।

१ ख. °शोधयेद्धवि।अ°। २ क. °रे।उ°। ३ ख. °स्य शूद्रस्य पतितस्य तथैव च। ४ क. °न्तर्धेन। ५ ख. °मयन्वा प्र°। ६ ख. °ना करीषपीठका°। ७ ख. °न्तयन्पर°।

कर्कटयोर्जलम् ॥ १२८ ॥ निःशेषजलवाप्यादौ यत्प्रविष्टं नवोदकम् । नातीतपञ्च-रात्रं[1] तत्कालदुष्टमिहोच्यते ॥ १२९ ॥ शैवपाषण्डपतितैर्विकर्मस्थैर्निरीश्वरैः । अवैष्णवैर्द्विजैः शूद्रैर्हरिवासरभोक्तृभिः[2] ॥ १३० ॥ श्वकाकसूकरोष्ट्राद्यैरुदक्यासूतिकादिभिः। पुंश्चलीभिश्च नारीभिर्वृषलीपतिभिस्तथा ॥ १३१ ॥ दृष्टं स्पृष्टं च दत्तं च[3] भुक्तशेषं तथैव च । अभक्ष्याणां च संयुक्तं संसर्गदुष्टमुच्यते ॥ १३२ ॥ बिम्बं शिग्रु च का-लिङ्गं तिलपिष्टं च मूलकम् । कोशातकीमलाबुं च[4] तथा कट्फलमेव च[5] ॥ १३३ ॥ वालीकानारिकेल्यादिजातिदुष्टमिहोच्यते(?) । एवं सर्वाण्यभक्ष्याणि तत्सङ्गान्यपि संत्यजेत् ॥१३४॥ तथैवाभक्ष्यभोक्तॄणां हरिवासरभोजिनाम् । लोकायतिकविप्राणां देवतान्तरसेविनाम् ॥ १३५ ॥ अवैष्णवानामपि च संसर्गं दूरतस्त्यजेत् । पक्वान्नाद्यं यथा पक्वं वाग्यतो नियतेन्द्रियः ॥ १३६ ॥ संमार्जयेच्छुभतरं वारिणा वाससैव[6] च। करकैरपिधायाथ चक्रेणैवाङ्कयेत्तथा[7] ॥ १३७ ॥ गन्धेन वा हरिद्रेण जलेनाप्यथवा लिखेत् । सुदर्शनं पाञ्चजन्यं भाण्डानां यज्ञयोगिनाम् ॥ १३८ ॥ कुशोत्तरे शुचौ देशे विन्यस्य कुशवारिणा । संप्रोक्ष्य मन्त्ररत्नेन वस्त्रेणाऽऽच्छाद्य[8] तत्परम् ॥ १३९ ॥ क्षालयित्वाऽथ देवस्य भाजनानि शुभैर्जलैः[9] । अभिपूर्य ततो दद्याद्भोजयेच्च विशेषतः ॥ १४० ॥ भोजयेदागतान्काले सखिसंबन्धिबान्धवान् । बालान्वृद्धान्भोजयित्वा भर्तारं भोजयेत्ततः ॥ १४१ ॥ स्वयं हृष्टा ततोऽश्नीयाद्भर्तुर्भुक्तावशेषितम् । पैशाचि-कानां यक्षाणां शाक्तानां लिङ्गधारिणाम् ॥ १४२ ॥ द्वादशीविमुखानां च संला-पादि विवर्जयेत् । शैवबौद्धस्कान्दशाक्तस्थानानि न विशेत्कचित् ॥ १४३ ॥ वर्ज-येत्तत्समीपस्थं जलपुष्पफलादि च । न निरीक्षेत देवे(वा)नामुत्सवादि[10] कदा-चन ॥ १४४ ॥ स्तुतिं[11] वाऽप्यन्यदेवानां न कुर्याच्छृणुयान्न च । कामप्रसङ्गसंला-पान्परिहासादि वर्जयेत् ॥ १४५ ॥ अन्यचिह्नाङ्कितं वस्त्रं भूषणासनभाजनम् । वृक्षं पशुं कूपगृहान्भाण्डं चैव विवर्जयेत् ॥ १४६ ॥ अन्यालये हरिं दृष्ट्वा देवतान्त-रसंसदि । नार्चयेन्न प्रणमेच्च तीर्थसेवां विवर्जयेत् ॥ १४७ ॥ अवैष्णवस्य हस्तात्तु दिव्यदेशादुपागतम् । हरेः प्रसादतीर्थाद्यं यत्नेन परिवर्जयेत् ॥ १४८ ॥ आकारत्र-यसंपन्नो नवेज्याकर्मणि स्थितः । विष्णोरनन्यशेषत्वं[12] तथैवानन्यसाधनम् ॥१४९॥

---

१ क. °त्रं तु काल° । २ क. °भोजनैः । श्व° । ३ क. च मुक्तकेशे त° । ४ क. च पिचुश्लेष्मातकं फलम् । वा° । ५ ख. च । नालिकानालिके° । ६ क. °सनैव । ७ ख. °त्ततः । ग° । ८ ख. °च्छादयेत्ततः । क्षा° । ९ ख. °वामिकै° । १० क °दि विवर्जयेत् । स्तु° । ११ क. °तिं चापि विशेषेण श्रोत्राभ्यां शृणु° । १२ क. °शेषित्वं ।

तथैवानन्यभोग्यत्वमाकारत्रयमुच्यते । अर्चनं मन्त्रपठनं ध्यानं होमश्च वन्दनम् ॥ १५० ॥ स्तुतिर्योगः समाधिश्च तथा मन्त्रार्थचिन्तनम् । एवं नवविधा प्रोक्ता चेज्या वैष्णवसत्तमैः ॥ १५१ ॥ प्राप्यस्य ब्रह्मणो रूपं प्राप्यं च प्रत्यगात्मनः । प्राप्त्युपायं फलं चैव तथा प्राप्तिविरोधि च ॥ १५२ ॥ ज्ञातव्यमेतदर्थस्य पञ्चकं मन्त्रवित्तमैः । जगतः कारणत्वं च तथा स्वामित्वमेव च ॥ १५३ ॥ श्रीशत्वं सगुरुत्वं च ब्रह्मणो रूपमुच्यते । देहेन्द्रियादिभ्योऽन्यत्वं नित्यत्वादिगुणौघता ॥ १५४॥ श्रीहरेर्दास्यधर्मत्वं स्वरूपं प्रत्यगात्मनः । उपायाध्यवसायेन त्यक्त्वा कर्मौघमात्मनः ॥ १५५ ॥ हरेः कृपावलम्बित्वं प्राप्त्युपायमि( इ )होच्यते । सर्वैश्वर्यफलं त्यक्त्वा शब्दादिविषयानपि ॥ १५६ ॥ दास्यैकसुखसङ्गित्वं विष्णोः फलमिहोच्यते । तज्जनस्यापराधित्वं शब्दादिष्वनुरक्तता ॥ १५७ ॥ कृत्यस्य च परित्यागो ह्यकृत्यकरणं तथा । द्वादशीविमुखत्वं च विरोधि स्यात्फलस्य हि ॥ १५८ ॥ अर्थपञ्चकमेतद्धि ज्ञातव्यं स्यान्मुमुक्षुभिः । विहितं सकलं कर्म विष्णोराराधनं परम् ॥ १५९ ॥ निबोध तन्नृपश्रेष्ठ भोगार्थं परमात्मनः । वृत्त्याख्यस्य तरोरस्य सुदृढं मूलमुच्यते ॥ १६० ॥ त्यागेन चैव धर्मस्य निषिद्धाचरणेन च । आज्ञातिक्रमणं( णे ) विष्णोः पतत्येव न संशयः ॥ १६१ ॥ ज्योतिष्टोमादयः सर्वे यज्ञा वेदेषु कीर्तिताः । पुण्यव्रताः पुराणोक्ता दाना नैमित्तिकादिषु विष्णोर्भोगतया सर्वाः कर्तव्या वैष्णवोत्तमैः ॥ १६२ ॥ यस्तूपायतया कृत्यं नित्यनैमित्तिकादिकम् । सत्कृत्यं कुरुते विष्णोर्वैष्णवः स उदीरितः ॥ १६३ ॥ विष्णोरज्ञतया यस्तु सत्कृत्यं कुरुते बुधः । स एकान्तीति मुनिभिः प्रोच्यते वैष्णवोत्तमः ॥ १६४ ॥ * यस्तु भोगतया विष्णोः सत्कृत्यं कुरुते सदा । स भवेत्परमैकान्ती महाभागवतोत्तमः ॥ १६५ ॥ वर्जनीयमकृत्यं तु सर्वेषां करणैस्त्रिभिः । अकामतस्तु यत्प्राप्तं प्रायश्चित्ताद्विनश्यति ॥ १६६ ॥ अकृत्यं वैष्णवः पापबुद्ध्या शास्त्रविरोधतः । एकान्तपरमैकान्तिरुच्यभावाच्च संत्यजेत् ॥ १६७ ॥ श्रुतिस्मृत्युद्भवं धर्मं यस्त्यजेद्वैष्णवाधमः । स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः ॥ १६८ ॥ अकृत्यकरणाद्वाऽपि कृत्यस्याकरणादपि । द्वादशीविमुखत्वेन पतत्येव न संशयः ॥ १६९ ॥ तस्मात्सर्वप्रयत्नेन सत्कृत्यं सर्वदा चरेत् । आज्ञातिक्रमणाद्विष्णोर्मुक्तोऽपि विनिबध्यते ॥ १७० ॥ समस्तयज्ञभोक्तारं ज्ञात्वा विष्णुं सनातनम् । दैवं पित्र्यं तथा यज्ञं कुर्यान्न तु परित्यजेत् ॥ १७१ ॥ त्रिदण्डमवलम्बन्ते यतयो ये महाधियः । तेषामपि च कर्तव्यं

* एतद्वचनं न विद्यते क पुस्तके ।

१ क. °गुणान्विता । २ क. कर्मौघनात्म° । ३ क °त्यस्य च कारणम् । द्वा° । ४ ख. °मणाद्विष्णः र° । ५ क. °ष्णोराज्ञ° । ६ ख. वैष्णवैः । ७ ख. °रोधितः । एकान्तिप° । ८ ख. °त्युदितं ध° ।

सत्कृत्यमितरेषु किम् ॥ १७२ ॥ ब्रह्म ब्रह्मा ब्राह्मणाश्च त्रितयं ब्राह्ममुच्यते। तस्माद्ब्राह्मेण विधिना परं ब्रह्माणमर्चयेत् ॥ १७३ ॥ समस्तयज्ञभोक्तारमज्ञात्वा विष्णुमव्ययम् । वेदोदितं यः कुरुते स लोकायतिकः स्मृतः ॥ १७४ ॥ यस्तु वेदोदितं धर्मं त्यक्त्वा विष्णुं समर्चयेत् । स पाषण्डीति विज्ञेयो नरकं चाधिगच्छति ॥ १७५ ॥ वेदाः प्राणा भगवतो वासुदेवस्य सर्वदा । तदुक्तकर्माकुर्वाणः प्राणहर्ता भवेद्धरेः ॥१७६ ॥ विष्णोराराधनाद्वेदं विना यस्त्वन्यकर्मणि प्रयुञ्जीत विमूढात्मा वेदहन्ता न संशयः॥ १७७॥ वत्सं माता लेढि तथा यथा लेढि स मातरम् । श्रुतिं[1] विष्णोः प्रियं(यां) ज्ञात्वा विष्णुं वेदेन वै यजेत् ॥ १७८ ॥ तस्माद्वेदस्य विष्णोश्च संयोगो यस्तु दृश्यते । स एव परमो धर्मो वैष्णवानां[2] यथा नृप[3] ॥ १७९ ॥ कश्चित्पुरा नृपश्रेष्ठ काश्यपो ब्राह्मणोत्तमः । शाण्डिल्य इति विख्यातः सर्वशास्त्रविशारदः ॥ १८० ॥ स तु धर्मप्रसङ्गेन विष्णोराराधनं प्रति । अवैदिकेन विधिना कृतवान्धर्मसंहिताम् ॥ १८१ ॥ अवलम्ब्य मतं तस्य केचिदत्र महर्षयः। अवैदिकेन मार्गेण पूजयन्ति स्म केशवम् ॥१८२॥ अशास्त्रविहितं धर्मं सर्वे कुर्वन्ति मानवाः । स्वाहास्वधावषट्कारवर्जितं स्यान्महीतलम् ॥ १८३ ॥ ततः क्रुद्धो जगन्नाथः शङ्खचक्रगदाधरः । इदमाह मुनिश्रेष्ठं शाण्डिल्यममितौजसम् ॥ १८४ ॥ दुर्बुद्धे मामकं धर्मं परमं वैदिकं महत् । अवैदिकक्रियाजुष्टं प्रागल्भ्यात्कृतवानसि ॥ १८५ ॥ यस्मादवैदिकं धर्मं प्रवर्तयासि मां(त्वं) द्विज। तस्मादवैदिकं लोकं निरयं गच्छ दारुणम् ॥ १८६ ॥ तस्य[4] देवस्य वाक्यात्तु शाण्डिल्योऽभूद्भयाकुलः। स्तुवन्प्राह जगन्नाथं प्रणिपत्य पुनः पुनः ॥ १८७ ॥ त्राहि त्राहीति लोकेश मां विभो सा(स्वा)पराधिनम् । ततः स कृपया विष्णुर्भगवान्भूतभावनः ॥ १८८ ॥ दिव्यं वर्षशतं विप्र भुक्त्वा निरययातनाम् । उत्पत्स्यसे भृगोर्वंशे जमदग्निरितीरितः ॥ १८९ ॥ तत्राऽऽराध्य पुनर्मां तु वैदिकेनैव धर्मतः । गच्छ तस्मिन्मुनिश्रेष्ठ मम लोकं सुनिर्मलम् ॥ १९० ॥ इत्युक्त्वा भगवान्विष्णुस्तत्रैवान्तरधीयत । शाण्डिल्यो निरयं प्राप्य पुनरुत्पद्य भूतले ॥ १९१ ॥ वेदोक्तविधिना विष्णुमर्चयित्वा सनातनम् । विशुद्धभावात्संप्राप्तस्तद्धाम परमं हरेः ॥ १९२ ॥ तस्मादवैदिकं धर्मं दूरतः परिवर्जयेत् । वैदिकेनैव विधिना भक्त्या संपूजयेद्धरिम् ॥ १९३ ॥ श्रौतेन विधिना चक्रं धृत्वा वै बाहुमूलयोः । धृतोर्ध्वपुण्ड्रः शुद्धात्मा विधिनैवार्चयेद्धरिम् ॥ १९४ ॥ कर्मणा मनसा वाचा न प्रमाद्येत्सनातनम् । न प्रमाद्येत्परं धर्माच्छ्रुतिस्मृत्युक्तगौरवात् ॥ १९५ ॥ सुशीलं तु परं धर्मं नारीणां नृपसत्तम । शीलभङ्गेन नारीणां यमलोकः[5] सुदारुणः ॥ १९६ ॥

१ ख. श्रुतं । २ क. °ष्णवो नान्यथा । ३ क. नृपः । ४ ख. तद्वाक्याद्देवदेवस्य शा° । ५ क, °लोकाः सुदारुणाः । मृ° ।

मृते जीवति वा पत्यौ या नान्यमुपगच्छति[1]। सेह कीर्तिमवाप्नोति मोदते रमया सह ॥ १९७ ॥ पतिं या नातिचरति मनोवाक्कायकर्मभिः। सा भर्तृलोकमाप्नोति यथैवारुन्धती तथा ॥ १९८ ॥ आर्ताऽऽर्ते मुदिता हृष्टे प्रोषिते मलिनाम्बरा। मृते म्रियेत या[2] पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥ १९९ ॥ या स्त्री मृतं परिष्वज्य दग्धा चेद्धव्यवाहने। सा भर्तृलोकमाप्नोति हरिणा कमला यथा ॥ २०० ॥ ब्रह्मघ्नं वा सुरापं वा कृतघ्नं वाऽपि मानवम्। यमादाय मृता नारी तं भर्तारं पुनाति हि ॥ २०१ ॥ साध्वीनामिह नारीणामग्निप्रपतनादृते। नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्तरि कुत्रचित् ॥ २०२ ॥ वैष्णवं पतिमादाय या दग्धा हव्यवाहने। सा वैष्णवपदं याति यत्र गच्छन्ति योगिनः ॥ २०३ ॥ मृते भर्तरि या नारी भवेद्यदि रजस्वला ॥ चिताग्निं संग्रहेत्तावत्स्नात्वा तस्मिन्प्रवेशयेत् ॥ २०४ ॥ गर्भिणी नानुगन्तव्या (च्छेत्तु) मृतं भर्तारमव्ययम्[3]। ब्रह्मचर्यव्रतं कुर्याद्यावज्जीवमतन्द्रिता ॥ २०५ ॥ केशरञ्जनताम्बूलगन्धपुष्पादिसेवनम्। भूषणं[4] रङ्गवस्त्रं च कांस्यपात्रेषु भोजनम् ॥ २०६ द्विवारभोजनं चाक्ष्णोरञ्जनं वर्जयेत्सदा। स्नात्वा शुक्लाम्बरधरा जितक्रोधा जितेन्द्रिया ॥ २०७ ॥ नकल्ककुहका[5] साध्वी तन्द्रालस्यविवर्जिता। सुनिर्मला शुभाचारा नित्यं संपूजयेद्धरिम् ॥ २०८ ॥ क्षितिशायी भवेद्रात्रौ शुचौ देशे कुशोत्तरे। ध्यानयोगपरा नित्यं सतां सङ्गे व्यवस्थिता ॥ २०९ ॥ तपश्चरणसंयुक्ता यावज्जीवं समाचरेत्[6]। तावत्तिष्ठेन्निराहारा भवेद्यदि रजस्वला ॥ २१० ॥ सभर्तृका सती वाऽपि पाणिपु(पू)रान्नभोजना[7]। एकवारं समश्नीयाद्रजसा च परिप्लुता ॥ २११ ॥ एवं सुनियताहारा सम्यग्व्रतपरायणा। भर्त्रा सह समाप्नोति वैकुण्ठपदमव्ययम् ॥ २१२ ॥ दग्धव्या साऽग्निहोत्रेण भर्तुः पूर्वं मृता तु या। स्वांशमग्निं समादाय भर्ता पूर्ववदाचरेत् ॥ २१३ ॥ कृत्वा कुशमयीं पत्नीं यावज्जीवमतन्द्रितः। जुहुयादग्निहोत्रं तु पञ्चयज्ञादिकं तथा ॥ २१४ ॥ अथ च प्रव्रजेद्विद्वान्कन्यां वाऽपि समुद्वहेत्। प्रव्रज्यापि[8] च कुर्वीत कर्म वेदोदितं महत् ॥ २१५ ॥ आत्मन्यग्निं समारोप्य जुहुयादात्मवान्सदा। मनसा वा प्रकुर्वीत नित्यनैमित्तिकक्रियाः ॥ २१६ ॥ गृहस्थो वा वनस्थो वा यतिर्वाऽपि भवेद्द्विजः। अनाश्रमी न तिष्ठेत यावज्जीवं द्विजोत्तमः ॥ २१७ ॥ वर्णाश्रमेषु सर्वेषां पूजनीयो जनार्दनः। सव्यापकेन मन्त्रेण सदैव च महीपते ॥ व्यापकानां च सर्वेषां ज्यायानष्टाक्षरो मनुः ॥ २१८ ॥ अष्टाक्षरस्य जप्ता तु साक्षान्नारायणः स्वयम्। सन्यासं च समुद्रं च सर्षिच्छन्दोधिदैवतम्[9] ॥ २१९ ॥ सदीक्ष्य(क्षा)विधिं सध्यानं सार्थं मन्त्रमुदाहृतम्[10]। स्नात्वा शुद्धः प्रसन्नात्मा कृतकृत्यो जनार्दनम् ॥ २२० ॥ मनसाऽप्यर्चयित्वा वा जपेन्मन्त्रं सदा बुधः। दानप्रतिग्रहौ यागं स्वाध्यायं पितृतर्पणम् ॥ २२१ ॥ पितृ-

---

१ ख. °ति। सैव की°। २ ख. °ना कृशा। मृ°। ३ क या नारी सा विज्ञे°। ४ ख. °व्यया। ब्र°। ५ ख. भूषितं। ६ क. °कुहुना कुर्यात्तन्द्रा°। ७ ख °जनम्। ए°। ८ ख. °ज्यामपि कु°। ९ ख. °न. । न व्या°। १० ख. °म्। नदीक्षाविधि न ध्यानं सा°।

क्रियाष्टाक्षरस्य* जप्त्वा कुर्यादतन्द्रितः । धृतोर्ध्वपुण्ड्रदेहश्च चक्राङ्कितभुजस्तथा ॥ २२२ ॥ अष्टाक्षरं जपन्नित्यं पुनाति भुवनत्रयम् । जपेद्योगतया मन्त्रं सततं वैष्णवोत्तमः[1] ॥ २२३ ॥ ससाधनतया जप्यं कर्तव्यं विष्णुतत्परैः । अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥ २२४ ॥ त्रिसंध्यासु जपेन्मन्त्रं तदर्थमनुचिन्तयन् । उपोष्य पूर्वदिवसे नद्यां स्नात्वा विधानतः ॥ २२५ ॥ आचार्यं संश्रयेत्पूर्वं महाभागवतं द्विजः । आचार्यो विष्णुमभ्यर्च्य पवित्रं[2] वाऽपि पूजयेत् ॥ २२६ ॥ पुरतो वासुदेवस्य इध्माधानान्तमाचरेत्[3] । स्रक्केद्रप्सस्य सूक्तेन पवित्रं ते विततेत्यृचा[4] ॥ २२७ ॥ पवमानस्य आद्येन ऋग्भिश्चतसृभिः क्रमात् । आज्यं हुत्वा ततश्चक्रं तदग्नौ प्रतपेद्गुरुः ॥ २२८ ॥ चरणं पवित्रमिति (= यजुषा) तच्चक्रेणाङ्कयेद्भुजम् । वामांसं प्रतपेत्पश्चात्पाञ्चजन्येन देशिकः ॥ २२९ ॥ अग्निर्मन्वेति यजुषा तद्धोमाग्नौ प्रतप्य वै । ततस्तु पार्थिवैर्ऋग्भिर्हुत्वा पुंड्रादि[5] धारयेत् ॥ २३० ॥ अतो देवेति सूक्तेन विष्णोर्नुकमनेन[6] च । पूजयेद्द्वादशभिर्वै केशवादीननुक्रमात् ॥ २३१ ॥ कुशग्रन्थिषु संपूज्य जुहुयात्ताभिरेव तु । हुत्वाऽथ चरुणा सम्यङ्मृदा शुभ्रेण देशिकः ॥ २३२ ॥ ललाटादिषु चाङ्गेषु ऋग्भिस्ताभिः क्रमेण वै । नामभिः केशवाद्यैस्तु सच्छिद्राण्येव धारयेत् ॥ २३३ ॥ श्रिये जात इति ऋचा कुङ्कुमं[7] तेषु धारयेत् । परो मात्रेति सूक्तेन उपस्थाय जनार्दनम् ॥ २३४ ॥ होमशेषं समाप्याथ मूर्त्युद्वासनमाचरेत् । एवं पुण्ड्रक्रियां कृत्वा नाम[8] कुर्यात्ततः परम् ॥ २३५ ॥ प्रवःपान्तमिति सूक्तेन नाममूर्तिं समर्चयेत् । गवाज्यं प्रत्यृचं हुत्वा नाम[9] कुर्याच्च वैष्णवम् ॥ २३६ ॥ अभिप्रियाणीति सूक्तेनोपस्थाय जनार्दनम् । प्रदक्षिणनमस्कारौ कृत्वा शेषं समापयेत्[10] ॥ २३७ ॥ मन्त्रदीक्षाविधानं तु श्रौतं मुनिभिरीरितम् । नैवाहिता भवेद्दीक्षा न पृथक्त्वेन वक्ष्यते ॥ २३८ ॥ अदीक्षितो भवेद्यस्तु मन्त्रं वैष्णवमुत्तमम् । अर्चनं वाऽपि कुरुते न संसिद्धिमवाप्नुयात् ॥ २३९ ॥ नादीक्षितः प्रकुर्वीत विष्णोराराधनक्रियाम् । श्रौतं वा यदि वा[11] स्मार्तं दिव्यागममथापि वा ॥ २४० ॥ तत्राप्युक्तप्रकारेण[12] दीक्षितो हरिमर्चयेत् । पूर्वेऽह्न्युपोष्य गुरुणा नद्यां स्नात्वा कृतक्रियः ॥ २४१ ॥ आचार्यः पूजयेद्विष्णुं गन्धपुष्पाक्षतादिभिः । ईशान्यादिचतुर्दिक्षु संस्थाप्य कलशान्[13] नववान् ॥ २४२ ॥ तेषु गव्यानि निक्षिप्य चतुर्मूर्तीन्समर्चयेत् । वाराहं नारसिंहं च

* संधिरार्ष शेषत्वविवक्षया च षष्ठी । = एतच्चिह्नान्तर्गतमधिकम् ।

१ ख. °मः । न सा । २ ख. °त्रं चापि । ३ ख °त् । प्रजपेहस्य सू° । ४ क. °तेति ऋचा । ५ ख. पुण्ड्राणि धा° । ६ ख. °नुक्रमणेन । ७ ख °ङ्कुमङ्केषु । ८ ख. °म दद्यात्त° । ९ ख. °म दद्याच्च वैष्णवः । अ° । १० ख. °माचरेत् । ११ क वा कुर्याद्दिव्या° । १२ ख. तस्मादुक्त° । १३ ख. °शाञ्छुभान् ।

वामनं कृष्णमेव च ॥ २४३ ॥ तद्विष्णोरिति च द्वाभ्यां वाराहं पूजयेत्ततः । प्रतद्विष्णुरिति ऋचा नारसिंहमनामयम् ॥ २४४ ॥ न ते विष्णोरित्यनेन वामनं पूजयेत्तथा । वषट्ते विष्णविति [ च ] कृष्णं संपूजयेत्ततः ॥ २४५ ॥ संपूज्याऽऽवरणं सर्वं गन्धपुष्पैर्विधानतः । प्रतिष्ठाप्य ततो वह्निमिध्माधानान्तमाचरेत् ॥ २४६ ॥ चतुर्भिर्वैष्णवैः सूक्तैः पायसं मधुमिश्रितम् । हुत्वाऽऽज्यं जुहुयात्पश्चाच्छ्रीसूक्तेन समाहितः ॥ २४७ ॥ अग्निमीळ इत्यनु( ळेनु )वाकेन सावित्र्या वैष्णवेन च । सर्वैश्च वैष्णवैर्मन्त्रैः पृथगष्टोत्तरं शतम् ॥ २४८ ॥ हुत्वा वेदसमाप्तिं च जुहुयाद्देशिकोत्तमः। ततो भद्रासने शिष्यमुपवि( वे )श्याभिषेचयेत् ॥ २४९ ॥ चतुर्भिर्वैष्णवैर्मन्त्रैः सूक्तैस्तत्कलशोदकैः । ऋत्विग्भिर्ब्राह्मणैः शिष्यमभिषिच्याथ देशिकः ॥२५०॥ कौपीनं कटिसूत्रं च वस्त्रयुग्मं च दापयेत् । ऊर्ध्वपुण्ड्राणि पद्माक्षतुलसीमालिके अपि ॥२५१॥ कुशोत्तरे समासीनमाचान्तं विनयान्वितम् । अध्यापयेद्वैष्णवानि सूक्तानि विविधानि च ॥ २५२ ॥ व्यापकान्वैष्णवान्मन्त्रानन्यांश्चापि विधानतः । तदर्थन्याससुद्रादि सर्षिच्छन्दोधिदैवतम् ॥ २५३ ॥ तस्मिन्निवेश्य सद्वृत्तौ शासयेच्छासनाच्छ्रुतेः । शासितो गुरुणा शिष्यः सद्वृत्तौ सत्पथे स्थितः ॥ २५४ ॥ अर्चयेत्प(त्पा)रमैकान्त्यसिद्धये हरिमव्ययम् । आचार्यात्समनुप्राप्तं विग्रहं सुमनोहरम् ॥ २५५ ॥ लब्ध्वाऽथ विधिना विष्णोः पूजयेत्तदनुज्ञया । पूर्वेऽह्नि पूर्ववत्पूज्यः श्रौतेनैवोपचारकैः ॥ २५६ ॥ ताभिरेव च हुत्वाऽथ ऋग्भिराज्यं तथा क्रमात् । शय्यासूक्तान्तमाज्येन हुत्वाऽग्निं वैष्णवोत्तमः ॥२५७॥ अध्यापयित्वा+तान्मन्त्रावैदिकान्वैदिकोत्तमः । पूजाविधानं त्रिविधं तस्मै होमान्तमादिशेत् ॥ २५८ ॥ स्नानतर्पणहोमाद्या जपाद्या विविधाः क्रियाः । ×वैशिष्येण( ष्ट्येन ) गुरोर्ज्ञात्वा शक्त्या सर्वं समाचरेत्॥२५९॥ परमापद्गतो वाऽपि न भुञ्जीत हरेर्दिने । न तिर्यग्धारयेत्पुण्ड्रं नान्यं देवं प्रपूजयेत् ॥२६०॥

---

+ ल्यबभाव आर्षः । × एतदाद्यर्धद्वयं न विद्यते ख. पुस्तके ।

---

१ ख. °येद्द्विजः । सं° । २ ख. च तथा षत्रं च धारये° । ३ ख. विमलानि । ४ क. सत्त्वधीः स्थि° । ५ क. °कान्त्या सि° । ६ ख. °माविशे° । ७ ख. °मार्चा जप्याद्या ।

वैष्णवः पुरुषो यस्तु शिवब्रह्मादिदेवतान्( ताः ) । प्रणमेता( द )र्चयेद्वाऽपि विष्ठायां जायते क्रिमिः ॥ २६१ ॥ रजस्तमोभिभूतानां देवतानां निरीक्षणात् । पूजनाद्वन्दनाद्वाऽपि वैष्णवो यात्यधोगतिम् ॥२६२॥ शुद्धसत्त्वमयो विष्णुः पूजनीयो जगत्पतिः । अनर्चनीया रुद्राद्या विष्णोरावरणं विना ॥ २६३ ॥ यस्तु स्वात्मेश्वरं विष्णुमतीत्यान्यं यजेत हि । स्वात्मेश्वराय हरये च्यवते नात्र संशयः ॥२६४॥ यज्ञाध्ययनकाले तु नमस्यानि वषट्कृता । तानि वै यज्ञियान्यत्र यज्ञो वै विष्णुरव्ययः ॥ २६५ ॥ तस्यैवाऽऽवरणं प्रोक्तं यज्ञाध्ययनकर्मसु । स्तुवन्ति वेदास्तस्यात्र गुणरूपविभूतयः ॥२६६॥ तस्मादावरणं हित्वा ये यजन्ति परान्सुरान् । ते यान्ति निरयं घोरं कल्पकोटिशतानि वै ॥ २६७ ॥ रुद्रः काली गणेशश्च कूष्माण्डा भैरवादयः । मद्यमांसाशिनश्चान्ये तामसाः परिकीर्तिताः ॥२६८॥ शुद्धानामपि देवानां या स्वतन्त्राऽर्चनाक्रिया । सा दुर्गतिं नयत्येव वैष्णवं वीतकल्मषम् ॥ २६९ ॥ अर्चयित्वा जगन्नाथं वैष्णवः पुरुषोत्तमम् । तदावरणरूपेण यजेद्देवान्समन्ततः ॥ २७० ॥ अन्यथा नरकं याति यावदाभूतसंप्लवम् । वासुदेवं जगन्नाथमर्चयित्वैव मानवः ॥ २७१ ॥ प्राप्नोति महदैश्वर्यं ब्रह्मेन्द्रत्वादिकं क्षणात् । मनसाऽपि जलेनापि जगन्नाथं जनार्दनम् ॥२७२॥ संप्राप्नोत्यमलां सिद्धिं जगत्सर्वं समाश्रितम् । हृषीकेशं त्रयीनाथं लक्ष्मीशं सर्वदं हरिम् ॥२७३ ॥ तं विना पुण्डरीकाक्षं कोऽर्चयेदितरान्सुरान् । नारायणं परित्यज्य योऽन्यं देवमुपासते* ॥२७४॥ स्वपतिं नृपतिं हित्वा यथा स्त्री पुरुषाधमम् । विष्णोर्निवेदितं हव्यं देवेभ्यो जुहुयात्सदा ॥ २७५ ॥ पितृभ्यश्चैव तद्द्यात्सर्वमानन्त्यमश्नुते । निर्माल्यमितरेषां तु यदन्नाद्यं दिवौकसाम् ॥२७६॥ उपभो(भु)ज्य नरो याति ब्रह्महत्यां न संशयः । नैवेद्यभोजनं विष्णोस्तत्पादाम्बुनिषेवणम् ॥ २७७ ॥ तुलसीखादनं नृणां पापिनामपि मुक्तिदम् । एकादश्युपवासश्च शङ्खचक्रादिधारणम् । तुलस्या पूजनं विष्णोस्त्रितयं वैष्णवं स्मृतम् ॥ २७८ ॥ अवैष्णवः स्याद्यो विप्रो बहुशास्त्रश्रुतोऽपि वा । स जीवन्नेव चण्डालो मृतः श्वानोऽभिजायते ॥२७९॥ क्रतुसाहस्रिणं वाऽपि लोके विप्रमवैष्णवम् । चण्डालमिव नेक्षेत वर्जयेत्सर्वकर्मसु ॥ २८० ॥ भगवद्भक्तिदीप्ताग्निदग्धदुर्जातिकल्मषः । चण्डालोऽपि बुधैः श्लाघ्यो न तु पूज्यो ह्यवैष्णवः ॥ २८१॥

---

* इदमार्षम् ।

---

१ क. °ज्ञाध्यापन° । २ क. जयेना° । ३ क. निरम् । ४ ख. °यात्तथा । पि° । ५ क. °सी शोधनं ।

शङ्खचक्रोर्ध्वपुण्ड्रादिरहितं ब्राह्मणाधमम् । पूजयिष्यति यः श्राद्धे सर्वकर्मास्य निष्फलम् ॥ २८२ ॥ तिर्यक्पुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति । पितरस्तस्य यान्त्येव कालसूत्रं सुदारुणम् ॥ २८३ ॥ ऊर्ध्वपुण्ड्रधरं विप्रं चक्राङ्कितभुजं तथा । पूजयिष्यति यः श्राद्धे गयाश्राद्धायुतं लभेत् ॥ २८४ ॥ शङ्खचक्रोर्ध्वपुण्ड्रा[1]दिधारिणं वैष्णवं द्विजम् । भक्त्या संपूजयेद्यस्तु दैवे पित्र्ये च कर्मणि ॥२८५॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च । प्रयान्ति[2] पितरस्तस्य विष्णुलोकं सुनिर्मलम् ॥ २८६ ॥ ऊर्ध्वपुण्ड्रधरं विप्रं तप्तचक्राङ्कितांसकम् । श्राद्धे संपूजयेद्यस्तु गयाश्राद्धायुतं लभेत् ॥२८७॥ तप्तचक्रेण विधिना बाहुमूलेन लाञ्छितः । पुनाति सकलं लोकं नारायण इवाघभित् ॥ २८८ ॥ अविद्यो वा सविद्यो वा चक्रशङ्खोर्ध्वपुण्ड्रधृक्(त्) । ब्राह्मणः सर्वलोकेषु पूज्यमानो हरिर्यथा ॥ २८९ ॥ दु[3]रन्नाशी दुराचारी शङ्खचक्रोर्ध्वपुण्ड्रधृ[4]त् । नृणां हन्ति समस्ताघं तमः सूर्योदये यथा ॥२९०॥ चक्राङ्कितस्य विप्रस्य पादप्रक्षालितं जलम् । * पुनाति सकलं लोकं यथा त्रिपथगा नदी ॥२९१॥ तिस्रः कोट्य(ट्यो)ऽर्धकोटी च तीर्थानि भुवनत्रये । चक्राङ्कितस्य विप्रस्य पादे तिष्ठन्त्यसंशयम् ॥२९२॥ चक्राङ्कितस्य विप्रस्य पादप्रक्षालितं जलम् । पीत्वा पातकसाहस्रैर्मुच्यन्ते नात्र संशयः ॥ २९३ ॥ श्राद्धे दाने व्रते यज्ञे विवाहे चोपनायने । चक्राङ्कितं विप्रमेव पूजयेदितरान्न तु ॥ २९४ ॥ विष्णुचक्राङ्कितो विप्रो भुञ्जानोऽपि यतस्ततः । न लिप्यते स पापेन तमसेव प्रभाकरः ॥ २९५ ॥ चक्राङ्कितभुजो विप्रः पङ्क्तिमध्ये तु भोज[5]येत् । पुनाति सकलां पङ्क्तिं ग[6]ङ्गेवोत्तरवाहिनि(नी) ॥ २९६ ॥ चक्राङ्कितभुजं विप्रं यो भूम्यामभिवादयेत् । ललाटे पांसुसंख्यानि विष्णुलोके महीयते ॥ २९७ ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा वैष्णवः पुमान् । अर्चयित्वेतरान्देवान्निरयं यान्त्य(त्य)संशयम् ॥ २९८ ॥ विष्णोरावरणं हित्वा पूजयित्वेतरान्सुरान् । वैष्णवः पुरुषो याति कालरात्रमधोमुखः ॥ २९९ ॥ महापा[7]पोपपापाद्यैरन्वितो यदि वैष्णवः । मन्वादिधर्मशास्त्रोक्तं प्रायश्चित्तं समाचरेत् ॥ ३०० ॥ प्रायश्चित्तविशेषं तु पश्चात्कुर्वीत वैष्णवः । वैयासकीं वैष्णवीं च पवित्रीं च समाचरेत् ॥ ३०१ ॥ वैष्णवानां तु विप्राणां पश्चात्पादजलं पिबेत् । वृत्तौ न परिपूर्णोऽथ कर्मस्वधिकृतो भवेत् ॥३०२॥ मन्त्ररत्नार्थविच्छान्तो नवेज्याकर्मसंयुतः । द्वादशीनियतो विप्रः स एव पुरुषोत्तमः॥३०३॥

* एतदाद्यर्धचतुष्टयं न विद्यते क. पुस्तके ।

१ ख. °ण्ड्राद्यैरन्वितं वै°। २ यास्यन्ति । ३ ख. दुराशी वा दु° । ४ क. °धक् । नृ° । ५ ख. भुञ्जते । ६ ख. °ङ्गेवेतरवाहिनीम् । च° । ७ ख. °पापी महापापैर्° ।

किमत्र बहुनोक्तेन सारं वक्ष्यामि ते नृप। एकादश्युपवासश्च शङ्खचक्रादिधारणम् ॥ ३०४ ॥ तदीयानां पूजनं च वैष्णवं त्रितयं स्मृतम्। पुण्याद्विष्णुदिनादन्यन्नोपोष्यं वैष्णवैः सदा ॥ ३०५ ॥ तथा भागवतादन्यो नार्चनीयो हि कुत्रचित्। भगवन्तमनुद्दिश्य न दद्यान्न यजेत्क्वचित् ॥ ३०६ ॥ नावैष्णवान्नं भुञ्जीत दद्यान्नावैष्णवाय च। नार्चयेदितरान्देवान्न तिर्यग्धारयेत्तथा ॥३०७॥ एकादश्यां न भुञ्जीत वसेन्नावैष्णवैः सह। अष्टाक्षरस्य जप्तारं शङ्खचक्रधरं द्विजः ॥ ३०८ ॥ अवमत्य विमूढात्मा सद्यश्चण्डालतां व्रजेत्। वैष्णवं ब्राह्मणं गां च तुलसीं द्वादशीं तथा ॥३०९॥ अनर्चयित्वा मूढात्मा निरयं दुर्गतिं व्रजेत्। विष्णोः प्रधानतनवो विप्रा गावश्च वैष्णवाः ॥ ३१० ॥ शक्त्या संपूज्य तानेव याति विष्णोः परं पदम्। एकादश्युपवासश्च द्वादश्यां विप्रपूजनम् ॥ ३११ ॥ नित्यमामलकस्नानं पापिनामपि मुक्तिदम्। पक्षे पक्षे हरिदिने चक्राङ्कितभुजे नृप ॥ ३१२ ॥ संपूज्यमाने विप्रेन्द्रे हरिस्तेषां प्रसीदति ॥ ३१३ ॥ अभावे वैष्णवे विप्रे संप्राप्ते हरिवासरे। तद्वत्संपूजयेद्गां तु तुलसीं वाऽपि भक्तितः ॥ ३१४ ॥ अग्निहोत्रं तु जुहुयात्सायं प्रातर्द्विजोत्तमः। पञ्च यज्ञान्प्रकुर्वीत वैष्णवान्विष्णुमर्चयेत् ॥ ३१५ ॥ तदर्पितं वै भुञ्जीत पिबेत्तत्पादवारि वै। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ ३१६ ॥ पूजयेद्वैष्णवं विप्रं द्वादश्यामपि वैष्णवः। विष्णोः प्रसादतुलसीं तीर्थं वाऽपि द्विजोत्तमः ॥ ३१७ ॥ उपवासदिने वाऽपि प्राशयेदविचारतः[3]। उपवासादिने यस्तु तीर्थं वा तुलसीमपि[4] ॥ ३१८ ॥ न प्राशयेद्विमूढात्मा रौरवं नरकं व्रजेत् ॥ ३१९ ॥ हर्यर्पितं तु यच्चान्नं तीर्थं वा पितृकर्मणि। दद्यात्पितॄणां यद्भक्ष्यं गयाश्राद्धायुतं लभेत् ॥ ३२० ॥ हरेर्निवेदितं भक्त्या यो दद्याच्छ्राद्धकर्मणि। पितरस्तस्य यान्त्येव तद्विष्णोः परमं पदम् ॥ ३२१ ॥ तीर्थं वा तुलसीपत्रं यो दद्यात्पितृदैवतम्। आकल्पकोटि पितरः परितृप्ता न संशयः ॥ ३२२ ॥ यः श्राद्धकाले मूढात्मा पितॄणां च दिवौकसाम्। न ददाति हरेर्भुक्तं तस्य वै नारकी गतिः ॥ ३२३ ॥ हर्यर्पितं तु यच्चान्नं यच्च पादोदकं हरेः। तुलसीं वा पितॄणां च दत्त्वा श्राद्धायुतं लभेत् ॥ ३२४ ॥ सर्वयज्ञमयं विष्णुं मत्वा देवं जनार्दनम्। आमन्त्र्य वैष्णवान्विप्रान्कुर्याच्छ्राद्धमतन्द्रितः ॥ ३२५ ॥ प्रत्यब्दं पार्वणश्राद्धं कुर्यात्पित्रोर्मृतेऽहनि। अन्यथा वैष्णवो याति ब्रह्महत्यां न संशयः ॥ ३२६ ॥

---

१ क. °रं चक्रशङ्खादिधार(रि)णम्। अ°। २ ख. वैष्णवः। ३ ख. °रयन्। उ°। ४ ख. °सीदलम्। न।

अमायां कृष्णपक्षे च पित्र्ये वाऽभ्युदये तथा । कुर्याच्छ्राद्धं विधानेन विष्णोरा-
ज्ञामनुस्मरन् ॥ ३२७ ॥ न कुर्याद्यो विधानेन पितृयज्ञं नराधमः । आज्ञातिक्रमणा-
द्विष्णोः पतत्येव न संशयः ॥ ३२८ ॥ शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः ।
अन्वितान्ब्राह्मणानेव पूजयेत्सर्वकर्मसु ॥ ३२९ ॥ अश्राद्धिनोऽप्ययज्ञस्य कर्मत्या-
गिन एव च । वेदस्याप्यनधीतस्य संसर्गं दूरतस्त्यजेत् ॥ ३३० ॥ पित्रोः श्राद्धं
प्रकुर्वीत नैकादश्यां द्विजोत्तमः । द्वादश्यां तत्प्रकुर्वीत नोपवासदिने क्वचित् ॥ ३३१ ॥
विष्णोर्जन्मदिने वाऽपि गुरूणां च मृतेऽहनि । वैष्णवेष्टिं प्रकुर्वीत वैदिकं( कीं )
वैष्णवोत्तमः ॥ ३३२ ॥ अगम्यागमनं हिंसामभक्ष्याणां च भक्षणम् । असत्यक-
थनं स्तेयं मनसाऽपि विवर्जयेत् ॥ ३३३ ॥ तप्तचक्राङ्कनं विष्णोरेकादश्यामुपोष-
णम् । धृतोर्ध्वपुण्ड्रदेहत्वं तन्मन्त्राणां परिग्रहः ॥ ३३४ ॥ नित्यमामलकस्नानं
देवतान्तरवर्जनम् । ध्यानं मन्त्रं( न्त्रो ) जपो होमस्तुलसीपूजनं हरेः ॥ ३३५ ॥
प्रसादतीर्थसेवा च तदीयानां च पूजनम् । उपायान्तरसंत्यागस्तथा मन्त्रार्थचिन्त-
नम् ॥ ३३६ ॥ श्रवणं कीर्तनं सेवा सत्कृत्यकरणं तथा । असत्कृत्यपरित्यागो
विषयान्तरवर्जनम् ॥ ३३७ ॥ दानं दमस्तपः शौचमार्जवं क्षान्तिरेव च । आनृ-
शंस्यं सतां सङ्गः पारमैकान्त्यहेतवः ॥ ३३८ ॥ वैष्णवः परमैकान्ती नेतरो
वैष्णवः स्मृतः । नावैष्णवो व्रजेन्मुक्तिं बहुशास्त्रश्रुतोऽपि वा ॥ ३३९ ॥ वैष्णवो
वर्णबाह्योऽपि याति विष्णोः परं पदम् । एतत्ते कथितं राजन्प( न्पा )रमैकान्त्य-
सिद्धिदम् ॥ ३४० ॥ वैशिष्ट्यं ( विशिष्टं ) वैष्णवं धर्मशास्त्रं वेदोपबृंहितम् । विष्व-
क्सेनाय धात्रे च संप्रोक्तं परमात्मना ॥ ३४१ ॥ विष्वक्सेनाय संप्रोक्तमेतद्विघनसे
पुरा । भृगोः प्रोक्तं विघनसा भृगुणा च महर्षिणा ॥ ३४२ ॥ वैवस्वतमनोः प्रोक्तं
मनुना च ममेरितम् । मनुस्तु धर्मशास्त्रं तु सामान्येनोक्तवान्स्वयम् ॥ ३४३ ॥
तदेव हि मया राजन्वैशिष्ट्येन तवेरितम् । विशिष्टं परमं धर्मशास्त्रं वैष्णवमुत्तमम्
॥ ३४४ ॥ य इदं शृणुयाद्भक्त्या कथयेद्वा समाहितः । पारमैकान्त्यसंसिद्धिं प्राप्नो-
त्येव न संशयः ॥ ३४५ ॥ सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ॥ ३४६ ॥
यस्त्विदं शृणुयाद्भक्त्या नित्यं विष्णोश्च संनिधौ । अश्वमेधसहस्रस्य फलं प्राप्नो-
त्यसंशयः ॥ ३४७ ॥ हारीतमेतच्छास्त्रं तु परमां धर्मसंहिताम् । आलोक्य पूजये-
द्विष्णुं पारमैकान्त्यमश्नुते ॥ ३४८ ॥ एतच्छ्रुत्वाऽम्बरीषस्तु हारीतोक्तिं-
( क्तं ) नृपोत्तमः । ववन्दे परया भक्त्या तमृषिं वैष्णवोत्तमः ॥ ३४९ ॥

---

१ ख. °लस्या पू° । २ ख. °जयन्विष्णुं ।

त्वमेव परमो धर्मस्त्वमेव परमं तपः। त्वदङ्घ्रियुगुलं प्राप्य सर्वसिद्धिमवाप्नुयाम् ॥ ३५० ॥ महामुनिमिति स्तुत्वा राजर्षिः स महातपाः। प्राप्तवान्प(न्पा)रमैकान्त्यं तत्प्रसादात्सुसिद्धिदम् ॥ ३५१ ॥ वैशिष्ट्यं प(पा)रमैकान्त्यमेतच्छास्त्रं प्रमाण्ययम्। भारद्वाजादयः सर्वे नृपाश्च जनकादयः ॥ ३५२ ॥ योगिनः सनकाद्याश्च नारदाद्याः सुरर्षयः। वशि(सि)ष्ठाद्या वैष्णवाश्च विष्वक्सेनादयः सुराः ॥ ३५३ ॥ एतच्छास्त्रानुसारेण पूजयामासुरीश्वरम्। परमं वैदिकं शास्त्रमेतद्वैष्णवमुत्तमम्। ज्ञात्वैव परमैकान्ती पूजयेद्विष्णुमीश्वरम् ॥ ३५४ ॥

इति श्रीवृद्धहारीतस्मृतौ विशिष्टपरमधर्मशास्त्रे वृत्त्यधिकारो नामैकादशोऽध्यायः ॥ ११ ॥

---

समाप्तेयं वृद्धहारीतस्मृतिः।

---

१ क. °ल्ययः। भा°। २ ख. °सुरच्युतम्।

ॐ तत्सद्ब्रह्मणे नमः ।

# वेदव्यासस्मृतिः ।

(तत्र प्रथमोऽध्यायः ।)

वाराणस्यां सुखासीनं वेदव्यासं तपोनिधिम् । पप्रच्छुर्मुनयोऽभ्येत्य धर्मान्वर्णव्यवस्थितान् ॥ १ ॥ स पृष्टः स्मृतिमान्स्मृत्वा स्मृतिं वेदार्थगर्भिताम् । उवाचाथ प्रसन्नात्मा मुनयः श्रूयतामिति ॥ २ ॥ यत्र यत्र स्वभावेन कृष्णसारो मृगः सदा । [1]चरते तत्र वेदोक्तो धर्मो भवितुमर्हति ॥ ३ ॥ श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते । तत्र श्रौतं प्रमाणं स्यात्तयोर्द्वैधे स्मृतिर्वरा ॥ ४ ॥ ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु ते नराः ॥ ५ ॥ शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति । वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥ ६ ॥ विप्रवद्विप्रविन्नासु[4] क्षत्रविन्नासु विप्रवत् । जातकर्माणि कुर्वीत ततः शूद्रासु शूद्रवत् ॥ ७ ॥ वैश्यासु विप्रक्षत्राभ्यां ततः शूद्रासु शूद्रवत् । अधर्मादुत्तमायां तु जातः शूद्राधमः स्मृतः ॥ ८ ॥ ब्राह्मण्यां शूद्रजनितश्चण्डालो धर्मवर्जितः । कुमारीसंभवस्त्वेकः सगोत्रायां द्वितीयकः ॥ ९ ॥ ब्राह्मण्यां शूद्रजनितश्चण्डालस्त्रिविधः स्मृतः । वर्धकी नापितो गोप आशापः कुम्भकारकः ॥ १० ॥ [10]वणिक्किरातकायस्थमालाकारकुटुम्बिनः । × एते चान्ये च बहवः शूद्रा भिन्नाः स्वकर्मभिः ॥ ११ ॥ चर्मकारो [11]भैंटो भिल्लो रजकः पुष्करो नटः । [12]वैराटो मेदचाण्डालौ [13]दाशः श्वपचकोलिकाः[14] ॥ १२ ॥ एतेऽन्त्यजाः समाख्याता ये चान्ये च गवाशनाः । एषां संभाषणात्स्नानं दर्शनादर्कवीक्षणम् ॥ १३ ॥ गर्भाधानं पुंसवनं सीमन्तो[15] जातकर्म च । नामक्रिया [16]निष्क्रमोऽन्नप्राशनं वपनक्रिया ॥ १४ ॥

---

× एतदाद्यर्धद्वयं न विद्यते ख. ग. पुस्तकयोः ।

---

१ क. घ. ङ. मृग्यते । २ ख. ग. °ह्मणक्षत्रियविशस्त्र° । ३ क °स्तु नेतराः । शू° । ख. ग. °स्तु नेतरे । शू° । ४ क. ङ. °वित्तास्तु क्षत्रविप्रासु विप्रतः । जा° । ५ घ. °न्नास्तु क्षत्रविप्रत । जा° । ६ घ. °द्रास्तु शू° । ७ घ. °द्रास्तु शू° । ८ ख. °मायास्तु जा° । ९ क गोपो याशा यः कु° । घ. ङ. गोपा या° । १० घ. °णिग्धूतकराकायमा° । ११ घ. नरो । ङ घटो । १२ ख. ग. घ. वरटो । १३ ख. ग. दासः । १४ ख. ग. °कोलकाः । १५ क. ङ. °न्तो नामक° । १६ ख. ग. °निष्क्रमणेऽन्नाश° ।

कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः । केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥ १५ ॥ त्रेताग्निसंग्रहश्चेति संस्काराः षोडश स्मृताः । नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः ॥ १६ ॥ विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश । गर्भाधानं प्रथमतस्तृतीये मासि पुंसवः ॥ १७ ॥ सीमन्तश्चाष्टमे मासि जाते जातक्रिया भवेत् । एकादशेऽह्नि नामार्कस्येक्षा[1] मासि चतुर्थके ॥ १८ ॥ षष्ठे मास्यन्नमश्नीयाच्चूडाकर्म कुलोचितम् । कृतचूडे च बाले च कर्णवेधो विधीयते ॥ १९ ॥ विप्रो गर्भाष्टमे वर्षे क्षत्रमेकादशे तथा । द्वादशे वैश्यजातीनां[2] व्रतोपनयनक्रिया ॥ २० ॥ तस्य प्राप्तव्रतस्यायं कालः स्याद्द्विगुणाधिकः । वेदव्रतच्युतो[3] व्रात्यः स व्रात्यस्तोममर्हति ॥ २१ ॥ द्वे जन्मनी द्विजातीनां मातुः स्यात्प्रथमं तयोः । द्वितीयं छन्दसां मातुर्ग्रहणाद्विधिवद्गुरोः ॥ २२ ॥ एवं द्विजातिमापन्नो विमुक्तो बाल्यदोषतः । श्रुतिस्मृतिपुराणानां भवेदध्ययनक्षमः ॥ २३ ॥ उपनीतो गुरुकुले वसेन्नित्यं समाहितः[4] । बिभृयाद्दण्डकौपीनोपवीताजिनमेखलाः ॥ २४ ॥ पुण्येऽह्नि गुर्वनुज्ञातः कृतमन्त्राहुतिक्रियः । स्मृत्वोंकारं च गायत्रीमारभेद्वेदमादितः ॥ २५ ॥ शौचाचारविचारार्थं धर्मशास्त्रमपि द्विजः । पठेत गुरुतः सम्यक्कर्म तद्दिष्टमाचरेत्[5] ॥ २६ ॥ ततोऽभिवाद्य स्थविरान्गुरुं चैव समाश्रयेत् । स्वाध्यायार्थं तदायत्तः[6] सर्वदा हितमाचरेत् ॥ २७ ॥ नाऽऽक्षिप्तोऽपि विरज्येत नो व्रजेत्ताडितोऽपि वा[7] । विद्वेषामर्षपैशुन्यं हिंसानामर्कवीक्षणम्[8] ॥ २८ ॥ तौर्यत्रिकानृतोन्मादपरीवादानलंक्रियाम्[9] । अञ्जनोद्वर्तनादर्शस्रग्विलेपनयोषितः ॥ २९ ॥ वृथाटनमसंतोषं ब्रह्मचारी विवर्जयेत् । ईषज्ज्वलितमध्याह्नेऽनुज्ञातो गुरुणा स्वयम् ॥ ३० ॥ अलोलुपश्चरेद्भैक्ष्यं(क्षं) व्रतेषूत्तमवृत्तिषु[10] । सद्यो भिक्षान्नमादाय वित्तवत्तदुपस्पृशेत् ॥ ३१ ॥ कृतमाध्याह्निकोऽश्नीयादनुज्ञातो यथाविधि । नाद्यादेकान्नमुच्छिष्टं भुक्त्वा चाऽऽमिषतामियात्[11] ॥ ३२ ॥ नान्यद्भिक्षितमाद्याद्यादापन्नो द्रविणादिकम्[12] । अनिन्द्यामन्त्रितः श्राद्धे पित्र्येऽद्याद्गुरुचोदितः ॥ ३३ ॥ एकान्नमविरोधेन[13] व्रतानां प्रथमाश्रमी । भुक्त्वा गुरुमुपासीत कृत्वा संधुक्षणादिकम्[14] ॥ ३४ ॥ समिधोऽग्नावादधीत ततः परिचरेद्गुरुम् । शयीत गुर्वनुज्ञातः प्रबुद्धः[15] प्रथमं गुरोः ॥ ३५ ॥ एवमन्वहमभ्यासी[16] ब्रह्मचारी व्रतं चरेत् । हितोपवादः प्रियवाक्सम्यग्गुर्वर्थसाधकः ॥ ३६ ॥

---

१ क. ङ. °र्कमीक्ष्यं मा° । २ ख. ग. °जातिस्तु व्रतोपनयमर्हति । त° । ३ ख ग. °च्चो वाऽन्यदो° । ४ ग. °माहितः । ५ क. तद्दृष्ट° । ६ ख. ग. °यत्न. स° । ७ ख. ग नापक्षिप्तोऽपि भाषेत न व्र° । ८ ख. °द्वेषमथ पैशुन्यं हिंसनं चार्क° । ९ ख. ग. परिवा° । १० ग व्रतिपू° । ११ ख. ग. चाऽऽचामिता° । १२ क. ङ. नान्यं भिक्षुकमादायमापन्नं द्र° । १३ ख. ग °मत्यविरोधे व्र° । १४ क. ङ. संभुक्ष° । १५ ख. ग. प्रह्वश्च प्र° । १६ । क. °मन्यामो व्र° ।

नित्यमाराधयेदेनमा समाप्तेः श्रुतिग्रहात् । अनेन विधिनाऽधीतो वेदमन्त्रो द्विजं नयेत्
॥ ३७ ॥ शापानुग्रहसामर्थ्यमृषीणां च सलोकताम् । पयोमृताभ्यां मधुभिः साज्यैः
प्रीणन्ति देवताः ॥ ३८ ॥ तस्मादहरहर्वेदमनध्यायमृते पठेत् । यदङ्गं तदनध्याये
गुरोर्वचनमाचरेत् ॥ ३९ ॥ व्यतिक्रमादसंपूर्णमनहंकृतिना च यत् । परत्रेह च
तद्ब्रह्म अनधीतमपि द्विजम् ॥ ४० ॥ यस्तूपनयनादेतदा मृत्योर्व्रतमाचरेत् । स
नैष्ठिको ब्रह्मचारी ब्रह्मसायुज्यमाप्नुयात् ॥ ४१ ॥ गुरुवेऽपि वसेन्न्याय्यो(य्यो) द्विजः
षोडशवार्षिकः । केशान्तकर्मणा विप्रात(स्त)द्व्रतान्यप्यनघ्नता ॥ ४२ ॥ समाप्य
वेदान्वेदौ वा वेदं वा संततं द्विजः । स्नायीत गुर्वनुज्ञातः प्रद्व(द)त्तोदितदक्षिणः ॥४३॥

इति श्रीवेदव्यासीये [ धर्मशास्त्रे ] ब्रह्मचार्यधिकारो नाम
प्रथमोऽध्यायः ॥ १ ॥

---

(अथ द्वितीयोऽध्यायः ।)

---

एवं स्नातकतां प्राप्तो द्वितीयाश्रमकाङ्क्षया । प्रतीक्षेत विवाहार्थमनिन्द्यान्वयसंभवाम्
॥ १ ॥ अरोगादुष्टवंशोत्थामशुल्कादानदूषिताम् । सवर्णामसमानार्षाममातृपितृगोत्र-
जाम् ॥ २ ॥ अनन्यदत्तवागाप्तां शुभलक्षणसंयुताम् । धृताधोवसनां गौरीं विख्यां-
तदशपूरुषाम् ॥ ३ ॥ ख्यातनाम्नः पुत्रवतः सदाचारवतः सतः । दातुमिच्छोर्दुहि-
तरं प्राप्य धर्मेण चोद्वहेत् ॥ ४ ॥ ब्राह्मोद्वाहविधानेन तदभावेऽपरो विधिः । दात-
व्यैषा सदृक्षाय वयोविद्यान्वयादिभिः ॥ ५ ॥ पितृतत्पितृभ्रातृषु पितृव्यज्ञातिमातृषु ।
पूर्वाभावे परो दद्यात्सर्वाभावे स्वयं व्रजेत् ॥ ६ ॥ यदि सा दातृवैकल्याद्रजः पश्ये-
त्कुमारिका । भ्रूणहत्याश्च यावत्यः पतितः स्यात्तदप्रदः ॥ ७ ॥ तुभ्यं दास्याम्यह-
मिति ग्रहीष्यामीति यस्तयोः । कृत्वा समयमन्योन्यं भजते न स दण्डभाक् ॥ ८ ॥
त्यजन्नदुष्टां दण्ड्यः स्याद्दूषयंश्चाप्यदूषिताम् । * तावन्न दुष्टं दुष्टं च स्वार्थेभ्यो
भेदयंश्च तत् ॥ ९ ॥ ऊढायां हि सवर्णायामन्यां वा काममुद्वहेत् । तस्यामुत्पादितः

---

* एतदर्धं न. ख. ग. पुस्तकयोः ।

---

१ क. ङ. °मृतेक्षुमेदोभिः । २ क. ङ. °दङ्गास्तमन° । ३ ख. ग. °तिराचरेत् । ४ ख. ग. °त् । उपकुर्वाणको यस्तु द्विज. षड्विंश° । ५ ख. ग. °णा तत्र यथोक्तचरितव्रतः स° । ६ ख. ग. प्रसभं । ७ क. °वृत्ताविंत्तद° । ८ ख. ग. °न्यपूर्विका लब्ध्वां शु° । ९ क ङ. °म् । स्मृता° । १० क. ङ. °ख्यातां दशपौरु° । ११ क. ङ. सदक्षा° । १२ क. घ. °दि स्याद्दातृ° । १३ क. ङ. तुल्यं दास्याम्यहं दत्तो म° । १४ क. ङ. °न्यं विभज्येत स । घ. न्यवि° ।

पुत्रो न[1] स्ववर्णात्प्रहीयते ॥ १० ॥ उद्वहेत्क्षत्रियां विप्रो वैश्यां च क्षत्रियो[2]ऽपि ताम् । न तु शूद्रां द्विजः कश्चिन्नाधमः[3] पूर्ववर्णजाम् ॥ ११ ॥ नानावर्णासु भार्यासु सवर्णा सहचारिणी । धर्मे[4] धर्मेण धर्मिष्ठा ज्येष्ठता[5] तु सजातिषु ॥ १२ ॥ पाटितोऽयं द्विजाः पूर्वमेकदेहः स्वयंभुवा । पतयोऽर्धेन[6] चार्धेन पत्न्यो[7]ऽभूवन्निति श्रुतिः ॥ १३ ॥ यावन्न विन्दते जायां तावदर्धो भवेत्पुमान् । नार्धं प्रजायते सर्वं प्रजायेतेत्यपि श्रुतिः ॥१४॥ गुर्व्येषा[8] भूस्त्रिवर्गस्य वोढुं नान्येन शक्यते । यतस्ततोऽन्वहं भूत्वा[9] संवासा[10] बिभृयात्तया ॥१५॥ कृतदारोऽग्निपत्नीभ्यां कृतवेश्मा गृहं वसेत् । स्वकृतं वित्तमासाद्य वैताना[11]ग्निं न हापयेत् ॥१६॥ स्मार्तं वैवाहिके वह्नौ श्रौतं वैतानिकाग्निषु । कर्म कुर्यात्प्रतिदिनं विधिवत्[12]प्रतिपर्व च ॥ १७ ॥ सम्यग्धर्मार्थकामेषु दंपतिभ्यामहर्निशम् । एकचित्ततया भाव्यं समानव्रत[13]वृत्तया ॥ १८ ॥ न पृथग्विद्यते स्त्रीणां त्रिवर्गविधिसाधनम्[14] । भावतो ह्यतिदेशाद्वा इति शास्त्रविधिः परः ॥ १९ ॥[15] पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च । उत्थाप्य शयनाद्यानि कृत्वा वेश्मविशोधनम् ॥ २० ॥ मार्जनैर्लेपनैः प्राप्य साग्नि[16]शालं स्वमङ्गनम् । शोधयेदग्निकार्याणि स्निग्धान्युष्णेन वारिणा[17] ॥२१॥ प्रोक्षण्यै( णै )रिति तान्येव यथास्थानं प्रकल्पयेत् । द्वंद्वपात्राणि सर्वाणि न कदाचिद्वियोजयेत् ॥ २२ ॥ शोधयित्वा[18] तु पात्राणि पूरयित्वा[19]ऽनुधारयेत् । महानसस्य पात्राणि बहिः प्रक्षाल्य सर्वशः ॥ २३ ॥ मृद्भिश्च शोधयेच्चुल्लीं तत्राग्निं[20] सेन्धनं न्यसेत् । स्मृत्वा नियोगपात्राणि रसान्न[21]द्रविणानि च ॥ २४ ॥ कृतपूर्वाह्णकार्यो[22]ऽयं स्वगुरावभिवादयेत् । ताभ्यां भर्तृ[23]पितृभ्यां वा भ्रातृमातुलबान्धवैः ॥२५॥ वस्त्रालंकाररत्नानि प्रदत्तान्येव धारयेत् । मनोवाक्कर्मभिः शुद्धा पतिदेशानुवर्तिनी ॥ २६ ॥ छायेवानुगता स्वच्छा सखीव हितकर्मसु । दासीवाऽऽदिष्टकार्येषु भार्या भर्तुः सदा भवेत् ॥ २७ ॥

---

१ ख. ग. घ. न स व°। २ ख. ग. °यो विशाम् । ३ ख. ग. °धमः पु° । ४ ख. धर्माधर्मेषु धर्मि° । ग. धर्म्या धर्मेषु धर्मि° । ५ ख. ग. ज्येष्ठा तस्य स्वजा° । ६ क. ङ. पतिरर्धेन चा° । ७ क. ङ. °त्न्योवाविति । घ. °त्न्योवाभूदि° । ८ ख. ग. गुर्वी सा भू° । ९ ख. ग. °त्वा स्ववशो बिभृयाच्च ताम् । कु° । १० घ. सर्वासा । ११ क. घ. °ताग्नींन्न तु हा° । १२ ख. °वत्प्रीतिपूर्वत. । स° । ग. °वत्प्रीतिपूर्वकः । स° । १३ ख. ग. °तवृत्तित. । न । १४ क. °म् । भवेद्भर्तुरनादेशात्तदेवयक्तिनगदि । प° । १५ क. °वि वन्धन° १६ क. ङ. °मिलंगवसागणम् । १७ क. °णा । प्रोक्षणैविताऽन्ये° । १८ क. ङ. शोपयित्वा । १९ ख. ग. °त्वा तु धा° । घ. °त्वाऽपिधापये° । २० ख. ग. °ग्निं विन्यसेत्ततः । स्मृ° । २१ ख. ग. रसाश्च द्र° । २२ क. ग. °कार्याच्च स्वगुरुनभि° । २३ क. ट भर्ताऽपि° ।

ततोऽन्नसाधनं कृत्वा *पतये विनिवेद्य सा[1] । वैश्वदे[2]वोद्धृतैरन्नैर्भोजनीयांश्च भोजयेत् ॥ २८ ॥ पतिं चैतदनुज्ञाता शिष्टमन्[3]नाद्यमात्मना । भुक्त्वा नयेदहःशेषमा[4]यव्ययविचिन्तया ॥ २९ ॥ पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च । कृतान्नसाधना साध्वी सु[5]भृशं भोजयेत्पतिम् ॥ ३० ॥ नातितृ[6]प्ता स्वयं भुक्त्वा गृहनीतिं विधाय सा । आ[7]स्तीर्य साधुशयनं ततः परिचरेत्पतिम् ॥ ३१ ॥ सुप्ते×पतौ तदभ्याशे स्वपेत्तद्गतमानसा । अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया ॥ ३२ ॥ नोच्चैर्वदेन्न परुषं न बहून्[8]पतिमप्रियम् । न केनचिद्विवदेच्च अप्रलापविलापिनी ॥ ३३ ॥ न चा[9]तिव्ययशीला स्यान्न धर्मार्थविरोधिनी । प्रमादोन्मादरोषेर्ष्यावञ्[10]चनं चातिमानिताम् ॥३४॥ पैशुन्यहिंसाविद्वेषमहाहंकारधूर्तता । नास्तिक्यसाहसस्तेयदम्भान्साध्वी विवर्जयेत् ॥ ३५ ॥ एवं परिचरन्ती सा पतिं परमदैवतम् । य[11]शस्यमिह यात्येवं परत्र[12] च सलोकताम् ॥ ३६ ॥ योषितो नित्यकर्मोक्तं नैमित्तिकमथोच्यते । र[13]जसो दर्शनाद्दोषात्सर्वमेव परित्यजेत् ॥ ३७ ॥ सर्वैरलक्षिता शीघ्रं लज्जिताऽन्तर्गृहे वसेत् । एकाम्बरा[14] कृशा दीना स्नानालंकारवर्जिता ॥ ३८ ॥ मौनिन्यधोमुखी चक्षुष्पाणिपद्भिरचञ्चला । अश्नीयात्केवलं भक्तं नक्तं मृन्मयभाजने ॥ ३९ ॥ स्वपेद्भूमावप्रमत्ता क्ष(क्षि)पेदेवमहस्त्रयम् । स्नायीत सा त्रिरात्रान्ते सचैलमुदिते रवौ ॥ ४० ॥ विलोक्य भर्तृवदनं शुद्धा भवति धर्मतः । कृतशौचा पुनः कर्म पूर्ववच्च समाचरेत् ॥४१॥ रजोदर्श[15]नतः क.तस्न्याद्रात्रयः षोडशर्तवः । ततः पुंबीज[16]माक्लिष्टं शुद्धे क्षेत्रे प्ररोहति॥४२॥ च[17]तस्त्रश्चाऽऽद्येमा रात्रीः पर्ववच्च विवर्जयेत् । गच्छेद्युग्[18]मासु स्वयं मुक्त्वा पौष्णपित्र्यर्क्षराक्षसान्[19] ॥ ४३ ॥ प्रच्छादितादित्यपथे पुमान्गच्छेत्स्वयो[20]षिति । क्षामाऽलंकृदवाप्नोति पुत्रं पूजितलक्षणम् ॥ ४४ ॥ ऋतुका[21]लाभिगाम्येवं ब्रह्मचार्येव धर्मतः । गच्छन्नपि यथाकामं न दुष्टः स्यादनन्य[22]हृत् ॥४५॥ भ्रूणहत्यामवाप्नोति ऋतौ भार्यापराङ्मुखः । सा त्ववाप्यान्यतो गर्भं त्याज्या भवति पापिनी ॥ ४६ ॥

* आर्षत्वात्साधुत्वमस्य । × आर्षं प्रयोगोऽयम् ।

१ ख ग तत् । २ ख ग °देवकृतै° । ३ घ °मद्याद्यथात्म° । क ङ °मन्नाद्य° । ४ क. घ. ङ. °मादाय व्यर्यं वे° । ५ क ङ. सभृतिं । ६ ख ग. °तृप्त्या स्व° । ७ क ङ आस्तृत्य । ८ ख ग °न्पत्युरग्रि° । ९ ख चापि व्य° । १० क. ङ. °ञ्चनान्नाति° । ११ ख. ग. यश शमिह° । १२ क ङ. °रत्रे· मास° । १३ ख. ग. रजोदर्शनतो दोषा° । १४ ख ग- °रावृता दी° । १५ ख. °नतो या स्यू रात्र° । १६ ख ग °जमक्लि° । १७ क ङ °तसृपष्टमा° । १८ ख ग ग्मासु रात्रीषु पौ° । १९ क. ङ °न् । पुष्पादितादित्यै. पु° । २० ख. ग. °षित । क्षा° । २१ ख ग. कालेऽभिगम्यैवं ब्रह्मचर्ये व्यवस्थित· । २२ ख. ग. °न्यकृत् ।

महापातकदुष्टां[१] च पतिगर्भविनाशिनी । सद्वृत्तचारिणीं पत्नीं त्यक्त्वा पतति धर्मतः ॥ ४७ ॥ महापातकदुष्टोऽपि नाप्रतीक्ष्यो[२] भवेत्पतिः । अशुद्धे क्षयमादूरं स्थिताया-[३]मनुचिन्तया(?) ॥ ४८ ॥ व्यभिचारेण दुष्टां[४] तां पत्नीमा दर्शनादृतोः । हृतत्रिवर्गकरणां धिक्कृतां च वसेत्पतिः ॥ ४९ ॥ पुनस्तामार्तवस्नातां पूर्ववद्व्यवहारयेत् । धूर्तां च धर्मकामघ्नीमपुत्रां दीर्घरोगिणीम् ॥ ५० ॥ त्वग्दुष्टां[५] व्यसनासक्तामहितामधिवेदयेत्[६] । अधिविन्नामपि विभुः स्त्रीणां तु समतामियात् ॥ ५१ ॥ विवर्णदीनवदना[७] देहसंस्कारवर्जिता । पतिव्रता निराहारा[८] शोष्यते प्रोषिते पतौ ॥ ५२ ॥ मृतं भर्तारमादाय ब्राह्मणी वह्निमाविशेत् । ब्राह्मणी[९] चेत्त्यक्तकेशा तपसा शोषयेद्वपुः ॥ ५३ ॥ सर्वावस्थासु नारीणां न युक्तं स्यादरक्षणम् । तदेवानुक्रमात्कार्यं पितृभ्रा-[१०]तृसुतादिभिः ॥ ५४ ॥ जाताः सुरक्षितायां ये पुत्रपौत्रप्रपौत्रकाः । ये यजन्ति पितॄ[११]न्स्वर्गे मोक्षप्राप्तिमहोदयैः ॥ ५५ ॥ मृतानामग्निहोत्रेण दाहयेद्विधि[१२]पूर्वकम्[१३] । आहरेदविलम्बेन भार्यामाप्रव्रजेत्तदा[१४] ॥ ५६ ॥

इति श्रीवेदव्यासीये स्त्र्यधिकारो नाम
द्वितीयोऽध्यायः ॥ २ ॥

---

(अथ तृतीयोऽध्यायः)

---

नित्यं नैमित्तिकं काम्यं[१५] नैमित्तिकमतः परम् । त्रिविधं कर्म वक्ष्यामि गृहस्थस्यावधार्यताम् ॥ १ ॥ यामिन्याः पश्चिमे यामे त्यक्तनिद्रो हरिं स्मरेत् । आलोक्य मङ्गलद्रव्य कर्माऽऽवश्यकमाचरेत् ॥ २ ॥ कृतशौचोऽनिषेधेऽह्नि[१६] दन्तान्प्रक्षाल्य वारिणा । स्नात्वोपास्य द्विजः संध्यां[१७] देवादींश्चैव तर्पयेत् ॥ ३ ॥ + जुहोत्यनुदिते भानावित्येक उदिते रवौ । जपेदादित्यदेवत्यान्[१८]मन्त्रान्मन्त्रनियोगवित् ॥ ४ ॥

---

+ इत आरभ्य नियोगविदित्यन्तं न ख ग पुस्तकयोः ।

---

१ क घ ङ °ष्टाना प° । २ ख ग °तीक्ष्यस्तया पति. । ३ क स्थितया° । ४ ख ग. दुष्टाना पत्नाना दर्शनादृते । विकृतायामवाच्यायामन्यत्र वासयेत्प° । ५ ख ग सुदुष्टा । ६ ख ग °धिवासये° । ७ ग ग. °वर्णादी° । ८ क. ट. °हासाप्यते । ९ ख ग. जीवन्ती । १० ख ग. °तृभर्तृसु° । ११ ख. ग. °तृन्यज्ञैर्मोक्ष° । १२ क. ट °विवत्पति । आ° । घ °विवत्पतिम् । १३ ख. ग. °म । दाहयेद° । १४ ख. ग भार्या चात्र व्रजेत सा । ङ° । १५ ख ग. काम्यमिति कर्म त्रिधा मतम् । त्रिविध तच्च व° । १६ ख. ग निषेध्यानि द° । १७ क घ ट °ध्या वेदादींश्च त° । १८ घ °त्यदैव° ।

वेदवेदाङ्गशास्त्राणि इतिहासानि चाभ्यसेत् । अध्यापयेच्च सच्छिष्यान्सद्विप्रांश्च द्विजोत्तमः ॥ ५ ॥ अलब्धं प्रापयेल्लब्ध्वा क्षणमात्रं समापयेत् । समर्थो हि समर्थेन नाविज्ञातः क्वचिद्वसेत् ॥ ६ ॥ सरित्सरसि वापीषु गर्तप्रस्रवणादिषु । स्नायीत यावदुद्धृत्य पञ्च पिण्डानि वारिणा ॥ ७ ॥ तीर्थाभावेऽप्यशक्तो वा स्नायात्तोयैः समाहृतैः । गृहाङ्गणगतस्तत्र यावदम्बरपीडनम् ॥ ८ ॥ स्नानमन्त्रैर्दैवतैः कुर्यात्पावनैश्च समार्जनम् । मन्त्रैः प्राणांस्त्रिरायम्य सौरैश्चार्कं विलोकयेत् ॥ ९ ॥ तिष्ठन्स्थित्वा तु गायत्रीं ततः स्वाध्यायमाचरेत् । ऋचां च यजुषां साम्नामथर्वाङ्गिरसामपि ॥ १० ॥ इतिहासपुराणानां वेदोपनिषदां द्विजः । शक्त्या सम्यक्पठेन्नित्यमल्पमप्या समापनात् ॥ ११ ॥ स यज्ञदानतपसामखिलं फलमाप्नुयात् । + वेदेभ्योऽन्यत्र संतुष्टः स विप्रः शूद्रतामियात् ॥ १२ ॥ तस्मादहरहर्वेदं द्विजोऽधीयीत वाग्यतः । धर्मशास्त्रेतिहासादि सर्वेषां शक्तितः पठेत् ॥ १३ ॥ कृतस्वाध्यायः प्रथमं तर्पयेच्चाथ देवताः । जान्वाच्य दक्षिणं दर्भैः प्रागग्रैः सयवैस्तिलैः ॥ १४ ॥ + पुरः क्षिप्तैः कराग्राभ्यां निर्गतैः प्राङ्मुखो द्विजः । एकैकाञ्जलिदानेन प्रकृतिस्थोपवीतकः ॥ १५ ॥ समजानुद्वयो ब्रह्मसूत्रहार उदङ्मुखः । तिर्यग्दर्भैश्च वामाग्रैर्यवैरितलविमिश्रितैः ॥ १६ ॥ अम्भोभिरुत्तराक्षिप्तैः कनिष्ठामूलनिर्गतैः । द्वाभ्यां द्वाभ्यामञ्जलिभ्यां मनुष्यांस्तर्पयेत्ततः ॥ १७ ॥ दक्षिणाभिमुखः सव्यं जान्वाच्य द्विगुणैः कुशैः । तिलैर्जलैश्च देशिन्या मूलदर्[11]भाग्रविच्युतैः ॥ १८ ॥ दक्षिणांसोपवीतः [12]स्यादञ्जलीभिस्त्रिभिस्त्रिभिः । संतर्पयेद्दिव्य[13]पितॄन्स्वधापूर्वमितीरयेत् ॥ १९ ॥ स्वधा[14]वर्जनमानेवमेक इच्छन्ति तर्पणे । द्विजातिर्जीवत्पितृकोऽप्येतानन्यांश्च तर्पयेत् ॥ २० ॥ तर्पयेद्दिव्या[15]पितॄंश्च पितृपूर्वान्पितॄन्स्वकान् । [16]मातृर्मातामहांस्तद्वत्त्रीनेवं हि त्रिभिस्त्रिभिः ॥ २१ ॥ माताम[17]हीश्च येऽप्यन्ये गोत्रि[18]णो ज्ञातिवर्जिताः । तानेकाञ्जलिदाने[19]न प्रत्येकं च पृथक्पृथक् ॥ २२ ॥ असंस्कृतप्रमीता ये प्रेतसंस्कारवर्जिताः । वस्त्रनिष्पीडनाम्भोभिस्तेषामाप्यायनं भवेत् ॥ २३ ॥ अतर्पितेषु पितृषु वस्त्रं निष्पीडयेच्च यः । निराशाः पितरस्तस्य भवन्ति सुरमानुपैः ॥ २४ ॥

---

+ एतदर्धं न विद्यते ख ग. पुस्तकयोः ।

---

१ क. ङ °शास्त्रेति इ° । २ क घ. °ण्डान्परवा° । ३ ख न शक्त्या वा । ४ क ङ. °गता तत्र यावत्यम्ब° । ५ ख. ग. °नैश्चापि मा° । ६ ख ग. °मारभेत् । ७ क घ ङ. °ना विद्योप° । ८ क. घ °धीतेन्वहन्वहम् । ध° । ९ ख ग. °न्वा च द° । १० ख. ग. °न्वा च द्वि° । ११ ख ग. °र्भाद्विनि सृतैः । १२ ख. ग. स्यात्क्रमेणाञ्जलिभिस्त्रिभि. । १३ ख ग °पितॄंस्ततपराश्च पितॄन्स्व° । १४ घ. °वर्जन्यमेनैव । १५ क °पितृत. पितृ° । १६ ख. ग मातृमाता° । १७ ख. ग ङ. °महाश्च । १८ ख. ग °णो दाहव° । घ. णो दातृव° । १९ ख ग. °न तर्पयेच पृथक्पृथक् ।

पयोदर्भस्वधाकारगोत्रनामतिलैर्भवेत् । सुदत्तं तत्पुनस्तेषामेकेनापि विना वृथा ॥२५॥ अन्यचित्तेन यद्दत्तं यद्दत्तं विधिवर्जितम् । अनासनस्थितेनापि[1] तज्जलं रुधिरायते ॥ २६ ॥ एवं संतर्पिताः कामैस्तर्पकांस्तर्पयन्ति[2] च । ब्रह्मविष्णुशिवादित्यमित्रावरुणनामभिः ॥ २७ ॥ पूजयेल्लक्षितैर्मन्त्रैर्जलमन्त्रोक्तदेवताः । उपस्थाय रविः[3] काष्ठां पूजयित्वा[4] च देवताः ॥ २८ ॥ ब्रह्माग्निरत्वौषधीजीवविष्णुनामर्हताम[5]…ी ( ? ) । अपां[6] पतये च सत्कारं नमस्कारैः[7] स्वनामभिः ॥ २९ ॥ कृत्वा मुखं समालभ्य स्नानमेवं समार्जयेत्[8] । ततः प्रविश्य भवनमावसथ्ये[9] हुताशने ॥ ३० ॥ पाकयज्ञांश्च[10] चतुरो विदध्याद्विधिवद्द्विजः । अनाहितावसथ्याग्निरादायान्नं घृतप्लुतम् ॥ ३१ ॥ शाकलेन विधानेन जुहुयाल्लौकिकेऽनले । व्यस्ताभिर्व्याहृतीभिस्तु समस्ताभिस्ततः परम् ॥३२॥ षड्भिर्देवकृतस्येति मन्त्रवद्भिर्यथाक्रमम् । प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाऽऽहुतीः ॥३३॥ ओंकारपूर्वः स्वाहान्तस्त्यागः स्विष्टविधानतः[11] । भुवि दर्भान्समास्तीर्य बलिकर्म समारभेत्[12] ॥ ३४ ॥ विश्वेभ्यो देवेभ्य इति सर्वेभ्यो[13] भूतेभ्य एव च । भूतानां पतये चेति नमस्कारेण शास्त्रवित् ॥ ३५ ॥ दद्याद्बलित्रयं चाग्रे पितृभ्यश्च स्वधा नमः । पात्रनिर्णेजनं वारि वायव्यां दिशि निक्षिपेत्[15] ॥ ३६ ॥ उद्धृत्य षोडशग्रासमात्रमन्नं घृतोक्षितम् । इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत् ॥३७॥ गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः । षड्भ्योऽन्नमन्वहं दद्यात्पितृयज्ञविधानतः ॥ ३८ ॥ वेदादीनां पठेत्किंचिदल्पं ब्रह्ममखाप्तये । ततोऽन्यदन्नमादाय निर्गत्य भवनाद्बहिः ॥ ३९ ॥ काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद्बलमेव च । उपस्पृश्य[16] गृहद्वारि[17] स्थितो यावन्मुहूर्तकम् ॥ ४० ॥ अप्रमत्तोऽतिथिं[18] लिप्सुर्भावशुद्धिः प्रतीक्षितः[19] । आगतं दूरतः श्रान्तं[20] भोक्तुकाममकिंचनम् ॥ ४१ ॥ दृष्ट्वा संमुखमभ्येत्य सत्कृत्य[21] श्रद्धयाऽर्चनैः[22] । पादधावनसंमाना[23]भ्यञ्जनादिभिरर्चितः ॥४२॥ त्रिदिवप्रापणे[24] सोढा यज्ञस्याभ्यधिकोऽतिथिः । कालागतोऽतिथिर्दृष्टवेदपारो गृहागतः ॥४३॥ द्वावेतौ पूजितौ स्वर्गं नयतोऽधस्त्वपूजितौ । विवाह्यस्नातकक्ष्माभृदाचार्यसुहृदृत्विजः ॥ ४४ ॥

---

१ क. घ. ट. °नाकाशस्थि° । २ क. ङ. °र्पणं तर्प° । ३ क. घ. ङ रवि· का° । ४ क. घ. ङ. °यित्वा स दे° । ५ ख. °ह्मार्मीन्द्रौष° । ६ ग हृताहनाम् । अ° । ७ ग °पां यत्तेगिसत्कार्यं न° । ८ क घ. ङ °रैः । सना° । ९ ख ग. माचरेत् । १० क ङ °सथ्यहु° । ११ घ. °यज्ञाश्च चत्वारो । १२ क. ङ °ग शिष्ट° । १३ ख ग °माचरेत् । १४ घ. सर्वभू° । १५ ख. ग. °शि निक्षि° । १६ ख ग °पविश्य । १७ ख. ग. °रि तिष्ठेयाव° । १८ ख ग. °प्रमुक्तोऽति° । १९ ख. ग °तीक्षकः । आ° । २० क. ख. ग. शान्तं । २१ ख ग. °ल प्रश्रयाऽ° । २२ घ. °र्चयेत् । पा° । २३ ख. ग. °नसंमाना° । २४ ख ग. °दिवं प्रापयेत्तयो य° ।

अर्घ्या भवन्ति धर्मेण प्रतिवर्षं गृहागताः । गृहागताय सत्कृत्य श्रोत्रियाय यथाविधि ॥ ४५ ॥ भक्त्योपकल्पयेदेकं महाभागं विसर्जयेत् । विसर्जयेदनुव्रज्य सुतृप्त-श्रोत्रियातिथीन् ॥ ४६ ॥ मित्रमातुलसंबन्धिबान्धवान्समयागतान्[1] । भोजयेद्गृहिणो भिक्षां सत्कृतां भिक्षुकोऽर्हति ॥ ४७ ॥ स्वाद्वन्नमश्नन्नस्वादु ददद्गच्छत्यधोगतिम् । गर्भिण्यातुरभृत्येषु बालवृद्धातुरादिषु ॥ ४८ ॥ बुभुक्षितेषु भुञ्जानो गृहस्थोऽश्नाति किल्बिषम् । नाद्यादगृध्येन्न[2] पाकान्नं कदाचिदनिमन्त्रितः ॥ ४९ ॥ निमन्त्रितोऽपि निन्द्येन[3] प्रत्याख्यानं[4] द्विजोऽर्हति ॥ ५० ॥ क्षुद्राभिशस्तवार्धुष्यवाग्दुष्टक्रूरतस्कराः । क्रुद्धापविद्धबद्धोग्रवधबन्धनजीविनः । शैलूषशौण्डिकानद्धोन्मत्तव्रात्यव्रतच्युताः ॥५१॥ नग्ननास्तिकनिर्लज्जपिशुनव्यसनान्विताः । कदर्यस्त्रीजितानार्य[5]परवादकृता[6] नराः ॥५२॥ अमित्राकीर्तिमन्तोऽपि[7] राजदेवलकोद्धताः । शयनासनसंसर्गकृतकर्मादिदूषिताः[8] ॥ ५३ ॥ अश्रद्दधानाः पतिता भ्रष्टाचारादयश्च ये । अभोज्यान्नाः[9] स्युरन्नादो यस्य यः स्यात्स तत्समः ॥ ५४ ॥ नापितान्वयमित्रार्धसीरिणो दासगोपकाः । शूद्राणामप्यमीषां[10] तु भुक्त्वाऽन्नं नैव दुष्यति ॥ ५५ ॥ धर्मेणान्योन्यभोज्यान्ना द्विजास्तु विदितान्वयाः । स्ववृत्त्योपार्जितं[12] मेध्यमकेशकृमिमक्षिकम् ॥ ५६ ॥ अश्वलीढमगोघ्रातमस्पृष्टं शूद्रवायसैः । अनुच्छिष्टमसंघुष्ट[13]मपर्युषितमेव च ॥ ५७ ॥ अम्लानबाष्प[14]मन्नाद्यमद्यान्नित्यं सुसंस्कृतम् । कृसरापूपसंयावपायसं शष्कुलीति च ॥ ५८ ॥ नाश्नीयाद्ब्राह्मणो मांसमनियुक्तः कथंचन । क्रतौ श्राद्धे नियुक्तो वा अनश्नन्पतति द्विजः ॥ ५९ ॥ मृगयोपार्जितं मांसमभ्यर्च्य पितृदेवताः । क्षत्रियो द्वादशोनं तत्क्रीत्वा वैश्योऽपि धर्मतः ॥ ६० ॥ द्विजो जग्ध्वा वृथा मांसं हत्वाऽप्यविधिना पशून् । निरयेष्वक्षयं वासमाप्नोत्याचन्द्रतारकम् ॥ ६१ ॥ सर्वान्कामान्समासाद्य फलमश्वमखस्य च । मुनिसाम्यमवाप्नोति गृहस्थोऽपि द्विजोत्तमः ॥ ६२ ॥

---

१ ख. ग. °न्समुपाग° । २ क. °दगृह्येन्न पाकार्थं क° । ३ ख. निन्देन । ४ घ °न्येत प्र° । ५ घ. °ताभार्यानार्याकार्यकृदातुरा । ६ क पराशदकृतादरा । ७ ख. ग. अनीशा की° । ८ ख. ग. °वस्वहारका । श° । ९ ख. ग. घ °र्गवृत° । १० क. ङ °ज्यान्ना इमेऽन्ना° । ११ क. ङ °प्यन्यस्य भोज्यमानो न मुच्यते । ध° । घ. °प्यनन्यस्य भोज्यमानो न मुच्यते । ध° । १२ ख ग. °वृत्तोपार्जितं मेध्यमाकरस्थममाक्षि° । १३ ख. ग. °संदुष्ट° । १४ ख ग, °नपाद्य-मन्नाद्यमाद्यं नित्यं ।

द्विजभोज्यानि गव्यानि माहिषाणि पयांसि च । निर्दशासंधिसंवन्धिवत्सवन्तीपयांसि च ॥ ६३ ॥ *अलाबुशिग्रुकवकच्छत्राकलशुनानि च । पलाण्डुश्वेतवृन्ताकरक्तमूलकमेव च ॥ ६४ ॥ गृञ्जनारुणवृक्षासृग्जन्तुगर्भफलानि च । अकालकुसुमादीनि द्विजो जग्ध्वैन्दवं चरेत् ॥ ६५ ॥ वाग्दूषितमविज्ञातमन्यपीडितकार्यपि । भूतेभ्योऽन्नमदत्त्वा च तदन्नं गृहिणो दहेत् ॥ ६६ ॥ हैमराजतकांस्येषु पात्रेष्वद्यात्सदा गृही । तदभावे साधुगन्धे मेध्यद्रुमलतासु च ॥ ६७ ॥ पलाशपद्मपत्रेषु गृहस्थो भोक्तुमर्हति ब्रह्मचारी यतिश्चैव श्रेयोर्थं भोक्तुमर्हतः ॥ ६८ ॥ अभ्युक्ष्यान्नं नमस्कारैर्भुवि दद्याद्बलित्रयम् । भूपतये भुवनपतये भूतानां पतये तथा ॥ ६९ ॥ अपः प्राश्य ततः पश्चात्पञ्च प्राणाहुतीः क्रमात् । स्वाहाकारेण जुहुयाच्छेषमद्याद्यथासुखम् ॥ ७० ॥ अनन्यचित्तो भुञ्जीत वाग्यतोऽन्नमकुत्सयन् । आ तृप्तेरन्नमश्नीयादशून्यं पात्रमुत्सृजेत् ॥ ७१ ॥ उच्छिष्टमन्नमुद्धृत्य ग्रासमेकं भुवि क्षिपेत् । आचान्तः साधुसङ्गेन सद्विद्यापठनेन च ॥ ७२ ॥ पुरावृत्तकथाभिश्च शेषाहमतिवाहयेत् । सायं संध्यामुपासीत हुत्वाऽग्निं भृत्यसंयुतः ॥ ७३ ॥ आपोशा(श)नक्रियापूर्वमश्नीयादन्वहं द्विजः । सायमप्यतिथिः पूज्यो होमकालागतो द्विजः ॥ ७४ ॥ श्रद्धया शक्तितो नित्यं श्रेयो हन्यादपूजितः । नातितृप्त उपस्पृश्य प्रक्षाल्य चरणौ शुचिः ॥ ७५ ॥ अप्रत्यगुत्तरशिराः शयीत शयने शुभे । शक्तिमानुचिते काले स्नानं संध्यां न हापयेत् ॥ ७६ ॥ ब्राह्मे मुहूर्ते त्वनिद्रश्चिन्तयेद्धितमात्मनः । शक्तिमान्मतिमान्नित्यं वृत्तमेतत्समाचरेत् ॥ ७७ ॥

इति श्रीवेदव्यासीये[ धर्मशास्त्रे]गृहस्थाह्निको नाम
तृतीयोऽध्यायः ॥ ३ ॥

(अथ चतुर्थोऽध्याय)

=इति व्यासकृतं शास्त्रं धर्मसारसमुच्चयम् । आश्रमे यानि पुण्यानि मोक्षधर्माश्रयाणि च

* एतदर्धं न ख ग पुस्तकयोः । = एष तुरीयाध्यायो घ. पुस्तके न विद्यते । अस्यैवाध्यायस्य लघुव्याससंस्मृतिरिति संज्ञा च. छ. ज. संज्ञकेषु पुस्तकेषूपलभ्यते । छ. पुस्तक एतदर्धस्थाने पाठान्तरं वर्तते । तद्यथा—"वेदव्यास उवाच—व्यासकृतं धर्मशास्त्रं धर्मसारसमुच्चयम्" इति ।

१ क. घ ट. °वन्ति तसन्ति च । २ क °वविट्व । गृ । घ. °कविड्वत्र । गृ° । ङ °कविड्गुव. । गृ° । ३ घ. °पीडनका° । ४ ग. °गन्धलेप्रद्रु° । ५ क ट °योय भो° । ख. ग. °यो यद्वोक्तुमर्हति । अ° । ६ क घ ट °भ्युक्षणान्नम° । ७ घ. °ना पात्रसंनिधौ । अ° ८ क ङ. पतिसंनिधौ । अ° । ९ क. घ. ट °चित्तद्कृवित्तो वा° । १० ख. ग °दक्षुण्णं पा° । ११ क घ ट. °पठितेन । १२ क. ख. ग. घ. च । वृत्तवृद्धक° । १३ क घ ट °त्यगणावृत । १४ क. घ. ङ °त । अपो° । १५ ख. ग. °तोऽनिशम् । श्र° । १६ ख. ग श्रुतं । १७ घ. °ले न काममपि हा° । १८ ख. ग. °ते चोत्थाय चिन्त° ।

॥ १ ॥ गृहाश्रमात्परो धर्मो नास्ति नास्ति पुनः पुनः । सर्वतीर्थफलं तस्य यथोक्तं[1] यस्तु पालयेत् ॥ २ ॥ गुरुभक्तो भृत्यपोषी दया[2]वाननसूयकः । नित्यजापी[3] च होमी च सत्यवादी जितेन्द्रियः ॥ ३ ॥ स्वदारे[4] यस्य संतोषः परदारनिवर्तनम्[5] । अपवादं न कुर्वीत[6] तस्य तीर्थफलं गृहे ॥ ४ ॥ परदा[7]रान्परद्रव्यं हरते यो दिने दिने । सर्वतीर्थाभिषेकेण तस्य पापं न नश्यति ॥ ५ ॥ गृहेषु सेव[8]नीयेषु[9] सर्वतीर्थफलं ततः । अन्नदस्य त्रयो भागाः कर्ता भोगेन लिप्यते ॥ ६ ॥ प्रतिश्रयं पादशौचं ब्राह्मणानां[10] च तर्पणम् । न पापं[11] संस्पृशेत्तस्य बलिं भिक्षां ददाति यः ॥ ७ ॥ पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम् । यो ददाति ब्राह्मणेभ्यो[12] नोपसर्पति तं यमः ॥ ८ ॥ विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी । तावत्पुष्करपात्रेषु पिबन्ति पितरो[13] जलम् ॥ ९ ॥ यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे । तत्फलं[14] पाण्डवश्रेष्ठविप्राणां पादशोधने ॥ १० ॥ स्वागतेनाग्नयः प्रीता आसनेन शतक्रतुः । पितरः पादशौचेन अन्नाद्येन प्रजापतिः ॥ ११ ॥ मातापित्रोः परं तीर्थं गङ्गा गात्रो विशेषतः[15] । ब्राह्मणात्परमं तीर्थं न भूतं न भविष्यति ॥ १२ ॥ इन्द्रियाणि वशीकृत्य[16] यत्र यत्र वसेन्नरः । तत्र तत्र कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ १३ ॥ गङ्गाद्वारं च केदारं संनि[17]हर्त्यां[18] तथैव च (?) । एतानि सर्वतीर्थानि कृत्वा पापैः प्रमुच्यते ॥ १४ ॥ वर्णानामाश्रमाणां च चातुर्वर्ण्यस्य पार्थिव । दानधर्मं प्रवक्ष्यामि यथा व्यासेन भाषितम् ॥ १५ ॥ यद्ददा[19]सि विशिष्टेभ्यो यच्चाश्ना[20]सि दिने दिने । तत्ते[21] वित्तमहं मन्ये शेषं कस्यापि[22] रक्षसि ॥ १६ ॥ यद्ददाति यदश्नाति तदेव धनिनो धनम् । अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ १७ ॥ किं धनेन करिष्यन्ति देहिनो गत्वरायुषः । यद्वर्धयितुमिच्छन्ति[23] तच्छरीरमशाश्वतम् ॥ १८ ॥ अशाश्वतानि गात्राणि विभवो नैव शाश्वतः । नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥ १९ ॥ यदि नाम न धर्माय न कामाय न कीर्तये । यत्परित्यज्य गन्तव्यं तद्धनं किं दीयते ॥ २० ॥ जीवन्ति जीविते यस्य विप्रा

१ छ. °क्तं योऽनुपा° । २ च °याक्षान्त्यनसू° । ज °याक्षान्तिरहिंसक । ३ ज. °पी नित्यहो° । ४ ज. दारनित्यसं° । ५ छ °र्तक । अ° । ६ च. छ °त सर्वतीर्थफल लभेत् । प° । ७ क. ङ. °दारपरद्रव्यार्थी हिनस्ति च दिने दिने । च ज °दारपरद्रव्यहिंसते च दिने दिने । छ °दारपरद्रव्यं यो हिनस्ति दिने दिने । ८ ख ग. सवनीयेषु । ९ छ. °षु तीर्थधर्मफ° । १० क ङ ज. °ह्मणैस्तर्पणं तथा । न । च छ. °ह्मणेभ्यो निवेदयेत् । ११ क ङ छ ज. °पं पर्युपेत्त° । १२ क च छ सहस्राक्ष । १३ ख. ग °रोऽमृतम् । १४ ख ग °लमृपय' श्रेष्ठा वि° । १५ च °त । ब्रह्मपादोदकं तीर्थं । १६ च. ज. वशं कृत्वा यत्र य° । छ वशे कृत्वा गृहे यो निवसे° । १७ ख ग संनिहत्य । १८ ज. °त्या विशेषत । ए° । १९ क ख ग °दाति वि° । २० क. ख ग °श्नाति दिने दि° । २१ ख ग. तच्च वित्त° । २२ क. ख. ग. °स्याभिरक्षति । य° । २३ ख. ग. °च्छन्तस्तच्छ° ।

मित्राणि बान्धवाः । जीवितं[1] सफलं तस्य आत्मार्थे को न जीवति ॥ २१ ॥ * क्रिमयः किं न जीवन्ति भक्षयन्ति परस्परम् । परलोकाविरोधेन[2] यो जीवति स जीवति ॥ २२ ॥ पशवोऽपि हि जीवन्ति केवलात्मोदरंभराः । किं कायेन सुपुष्टेन वलिना चिरजीविना[3] ॥ २३ ॥ ग्रासादर्धमपि ग्रासमर्थिभ्यः किं न दीयते । इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥ २४ ॥ अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति । दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥ २५ ॥ प्राणनाशस्तु कर्तव्यो यः कृतार्थो न सो( र्थः स नो ) मृतः । अकृतार्थस्तु यो मृत्युं[4] प्राप्तः खरसमो हि सः ॥२६॥ अनाहूतेषु यद्दत्तं यच्च दत्तमयाचितम् । भविष्यति युगस्यान्तस्तस्यान्तो न भविष्यति ॥२७॥ मृतवत्सा यथा गौश्च[5] तृष्णालोभेन दुह्यति । परस्परस्य दानानि लोकयात्रा न धर्मवत्[6] ॥ २८ ॥ अदृष्टे[7] चाश्नुते दानं भोक्ता चैव न दृश्यते । पुनरागमनं नास्ति तत्र दानमनन्तकम् ॥ २९ ॥ मातापितृषु यद्दत्तं भ्रातृषु श्वशुरेषु च । जायापत्येषु[10] यो दद्यात्सोऽनन्तः स्वर्गसंक्रमः ॥ ३० ॥ पितुः शतगुणं दानं सहस्रं मातुरुच्यते[11] । भगिन्यां शतसाहस्रं सोदरे दत्तमक्षयम् ॥ ३१ ॥ + इन्दुक्षयः पिता ज्ञेयो माता चैव दिनक्षयः । संक्रान्तिर्भगिनी चैव व्यतीपातः सहोदरः ॥ ३२ ॥ अहन्यहनि दातव्यं ब्राह्मणेभ्यो[12] युधिष्ठिर । आगमिष्यति यत्पात्रं तत्पात्रं तारयिष्यति ॥ ३२ ॥ किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम् । पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥ ३४ ॥ यस्य चैव गृहे मूर्खो दूरे चापि[13] गुणान्वितः । गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥ ३५ ॥ देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ३६ ॥ ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते । ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ ३७ ॥ संनिकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् । भोजने चैव दाने च हन्यात्त्रिपुरुषं कुलम् ॥ ३८ ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः । यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥ ३९ ॥ ग्रामस्थानं[14] यथा शून्यं यथा कूपश्च निर्जलः । यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥ ४० ॥

---

* एतत्पद्यं न विद्यते ख. ग पुस्तकयो । + एतद्वचनं च पुस्तकेतरपुस्तकेषु नास्ति ।

---

१ छ जीवितो यस्य जीवन्ति वि° । २ क ङ °रयोका° । ३ ख. ग. °विन । ग्रा° । ४ ख मृत्युमाप्त । ५ ख ग °श्च कृष्णालोभेन दुह्यते । प° । ६ ख ग. °र्मतः । अ° । च °र्मवित् । ७ च. छ ज. दृष्टं चाश्नुते दानं भुक्त्वा चै° । ८ ज मुह्यति । ९ क ङ ज °यामात्मानि यो । १० ख. ग. °पु यद्दद्या° । ११ ज. °ते । अनन्त दुहितादा( तुर्दा )न सोदर्ये द° । १२ ख ग. °णेषु मुनीश्वरा° । आ° । १३ छ. चास्ति गु° । १४ छ. स्थानपथ. शून्यो यथा कू° ।

ब्राह्मणेषु च यद्दत्तं यच्च वैश्वानरे हुतम्। तद्धनं धनमाख्यातं धनं शेषं निरर्थकम् ॥४१॥ सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । सहस्रगुणमाचार्ये अनन्तं वेदपारगे * ॥४२॥ ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः । जातिमात्रोपजीवी च स भवेद्ब्राह्मणः समः ॥ ४३ ॥ गर्भाधानादिभिर्मन्त्रैर्वेदोपनयनेन च । नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः ॥ ४४ ॥ अग्निहोत्री तपस्वी च वेदमध्यापयेच्च यः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ ४५ ॥ इष्टिभिः पशुबन्धैश्च चातुर्मास्यैस्तथैव च । अग्निष्टोमादिभिर्यज्ञैर्येन चेष्टं सयिष्टवान् ॥ ४६ ॥ मीमांसते च यो वेदान्षड्भिरङ्गैः सविस्तरैः । इतिहासपुराणानि स भवेद्वेदपारगः ॥ ४७ ॥ ब्राह्मणो[1] येन जायेत नान्यो वर्णः कथंचन । ईदृशं[2] रथमास्थाय[3] कोऽन्यस्तं त्यक्तुमुत्सहेत् ॥ ४८ ॥ ब्राह्मणः स भवेच्चैव देवानामपि दैवतम्[4] । प्रत्यक्षं चैव लोकस्य ब्रह्मतेजो[5] हि कारणम् ॥ ४९ ॥ ब्राह्मणस्य मुखं क्षेत्रं निरूषरमकण्टकम्[6] । वापयेत्तत्र बीजानि सा कृषिः[7] सार्वकामिकी ॥ ५० ॥ + सुक्षेत्रे वापयेद्बीजं सुपात्रे दापयेद्धनम् । सुक्षेत्रे च सुपात्रे च क्षिप्तं नैव विनश्यति ॥ ५१ ॥ विद्याविनयसंपन्ने ब्राह्मणे गृहमागते । क्रीडन्त्योषधयः सर्वा यास्यामः परमां गतिम् ॥ ५२ ॥ नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते । दीयमानं रुदत्यन्नं[8] किं मया दुष्कृतं कृतम् ॥ ५३ ॥ वेदपूर्णमुखं विप्रं सुभुक्तमपि[9] भोजयेत् न च मूर्खं निराहारं षड्रात्रं चोपवासिनम् = ॥ ५४ ॥ यानि यस्य पवित्राणि कुक्षौ तिष्ठन्ति[10] भारत । तानि तस्य नियोज्यानि न शरीराणि देहिनाम् ॥ ५५ ॥ यस्य देहे सदाऽश्नन्ति[11] हव्यानि त्रिदिवौकसः । कव्यानि चैव पितरः किं भूतमधिकं ततः ॥ ५६ ॥ यैर्भुङ्क्ते वेदविद्भुङ्क्ते[12][13] सत्कर्मनिरतः शुचिः । दातुः फलमसंख्यातं प्रतिजन्म तदक्षयम् ॥ ५७ ॥

---

* इत उत्तरमेतद्वचनमधिकं क. पुस्तके—"कीदृशो ब्राह्मणसमः को वाऽसौ ब्रुव उच्यते । आचार्यः स कथं ज्ञेय. कथं वा वेदपारगः " इति । + एतद्वचनं भङ्ग्यन्तरेण छ पुस्तके—"सुक्षेत्रे वा सुपात्रे वा बुद्धिमान्दापयेद्धनम् । सुक्षेत्रे च सुपात्रे च दत्तं च न विनश्यति " इति । = इत. परमेतद्वचनं ज. पुस्तके—"वठरश्च तपस्वी च विद्वांश्च वृषलीपतिः । द्वावेतौ द्वारि तिष्ठन्ति राजन्कस्य न रोचते " इति ।

---

१ ज. तदन्नं च समाख्यातं शेषमन्नं नि° । २ ख. ग. °ह्मणा येन जीवन्ति ना° । ३ ख. ग. °दृक्पथमुपस्था° । ४ छ °मारुह्य कोऽ° । ५ च. ज. °म् । प्रमाणं चैव लोकस्य ब्रह्मत्वमेव का° । ६ क. ड. छ. तेन हि । ७ ख. ग. निष्ककर° । ८ क. °षि. सर्वकामिका । सु° । ९ ख. ग. °न्नं भयाद्वै दु° । १० ज. प्रसक्तमपि । ११ छ. यत्सिक्थं वे° । ज. यत्सिक्तं वे° । १२ ख. ग. °विद्विप्र. स्वकर्म° । १३ च ज. °द्भुक्ते षट्कर्म° ।

हस्त्यश्वरथयानानि केचिदिच्छन्ति पादयोः । ※ अहमिच्छामि ते व्यास कस्यैताः सस्यसंपदः ॥ ५८ ॥ वेदलाङ्गलकृष्टेषु द्विजश्रेष्ठेषु सत्सु च । यत्पुरा पातितं बीजं तस्यैताः सस्यसंपदः + ॥ ५९ ॥ शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता शतसहस्रेषु दाता भवति वा न वा ॥ ६० ॥ न रणे विजयाच्छूरोऽध्ययनान्न च पण्डितः । न वक्ता वाक्पटुत्वेन न दाता चार्थदानतः ॥ ६१ ॥ इन्द्रियाणां जये शूरो धर्मं चरति पण्डितः । × सत्यवादी भवेद्वक्ता दाता भूतहिते रतः ॥ ६२ ॥ यस्त्वेकपङ्क्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदि वाऽर्थहेतोः । वेदे च दृष्टं ऋषिभिश्च गीतं तद्ब्रह्महत्यां मुनयो वदन्ति = ॥ ६३ ॥ ऊषरे वापितं बीजं भिन्नभाण्डेषु गोदुहम् । हुतं भस्मनि हव्यं च मूर्खे दानमशाश्वतम् ॥ ६४ ॥ मृतसूतकपुष्टाङ्गं द्विजं शूद्रान्नभोजिनम् । अहमेवं न जानामि कां योनिं स गमिष्यति ॥ ६५ ॥ शूद्रान्नेनोदरस्थेन यदि कश्चिन्म्रियेत यः । स भवेत्सूकरो नूनं तस्य वा जायते कुले ॥ ६६ ॥ गृध्रो द्वादश जन्मानि सप्त जन्मानि सूकरः ⊙ । श्वा चैव सप्त जन्मानि इत्येवं मनुरब्रवीत् ◡ ॥ ६७ ॥ अमृतं ब्राह्मणान्नैस्तु दारिद्र्यं क्षत्रियस्य च । वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने नरकं व्रजेत् ॥ ६८ ॥ यस्तु भुङ्क्ते शूद्रान्नं मासमेकं निरन्तरम् । इह जन्मनि शूद्रत्वं मृतः श्वा चोपजायते ॥ ६९ ॥

※ एतदर्धस्थानेऽयं पाठो ज. पुस्तके–" एकं पृच्छामि ते कृष्ण कस्यैषा संपदा भवेत् " इति । + इतः परं ज. पुस्तकेऽधिकं वचनम्–" वेदेन्धनसमृद्धेषु हुतं विप्रमुखाग्निषु । स्वल्पाऽपि बहुधा यान्ति न्यग्रोधोत्कणिका यथा " इति । × एतदर्धस्थानेऽयं पाठ ख. ग. पुस्तकयो –" हितप्रियोक्तिभिर्वक्ता दाता सन्मानदानत " इति । = इत उत्तरमेतद्वचनं च पुस्तके–" एकपङ्क्त्या तु यो भुङ्क्ते न स्पृशेच्च परस्परम् । भस्मना कृतमर्यादा एकपङ्क्तिर्न दुष्यति " इति । ⊙ इत उत्तरमेतदर्धं च पुस्तके–" अमेध्यक्रमिता याति अष्ट जन्मानि भारत " इति । ◡ इत उत्तरं च पुस्तकेऽधिकानि वचनान्युपलभ्यन्ते–" अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पय. स्मृतम् । वैश्यस्य अ( त्व )न्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् । शूद्रान्नोपहता विप्रा जिह्वया मुखलालिता. । कुपिता. किं करिष्यन्ति निर्विषा इव पन्न । । अनभ्यासेन विद्यानामाचारस्य च लङ्घनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति " इति । ◡ इतः परं छ. पुस्तकेऽयं पाठ.–" अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् । वैश्यस्य अ( त्व )न्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् । ब्राह्मणान्नैर्दरिद्रत्वं क्षत्रियान्नानपत्यता " इति । ◡ इत परमेतदधिकं ज. पुस्तके–" अस्तावाशी चाजपी च विप्रकीर्णेन्द्रियद्विजः । न तारयति दातारमात्मानं च प्रतिग्रहम् । अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् । अहुताशी कृमिं भुङ्क्ते अदाता विषमश्नुते । उदरार्थं पथि श्रान्तं गच्छन्तं गृहमागतम् । वैश्वदेवेऽतिसंप्राप्ते सोऽतिथि स्वर्गसंक्रम. । सद्यो हि नरकं याति ब्राह्मणं यो ह्यतिक्रमेत् । अपि मूर्खं गृहे जातं किं पुनर्वेदपाठकम् " इति ।

१ ख. ग पण्डिता. । २ ख ग अहं नेच्छा° । छ अहं वक्ष्यामि । ३ क. ट भारत । ४ क. ट. °रो व्यसनाच्च न प° । छ °रो विद्यया न च प° । ५ छ. °ता दानसत्रतः । ६ च. न °म् । भस्मनीव हुतं द्रव्य तद्वद्दानमसाधुषु । शू° । ७ ख. ग. °ष्टाङ्गो द्विज· शूद्रान्नभोजने । अ° । ८ च यस्तु प्राणान्विमुञ्चति । स ।

यस्य शूद्रा पचेन्नित्यं शूद्रा च गृहमेधिनी। वर्जितः पितृदेवैस्तु रौरवं याति स द्विजः ॥ ७० ॥ भाण्डसंकरसंकीर्णा[2] नानासंकरसंकराः। योनिसंकरसंकीर्णा[3] वियोनिं यान्ति मानवाः * ॥ ७१ ॥ पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः। आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः + ॥ ७२ ॥

इति श्रीवेदव्यासीये [ धर्मशास्त्रे ] गृहस्थाश्रमप्रशंसादिवर्णनो नाम चतुर्थोऽध्यायः ॥ ४ ॥

( समाप्तेयं वेदव्यासस्मृतिः )।

* इतः परं वचनद्वयमधिकं ज. पुस्तके—" अनभ्यासेन वेदानामाचारस्य च वर्जनात्। अन्नदानस्य दोषाच्च मृत्युर्विप्राञ्जिघांसति। गवा स्पृशति पादेन (नाशु)दितार्के प्रशुष्यति। एकाकी मिष्टमश्नाति त्रयस्ते ब्रह्मघातकाः" इति। + इत. परमधिको ग्रन्थो ज पुस्तके—"मातृघ्नश्च पितृघ्नश्च ब्रह्महा गुरुतल्पगः। सुवर्णहारश्चैवैते महापातकिनः स्मृताः। ऋणहर्ता भूमिहर्ता यैस्तु हारयते तथा। नरकान्न निवर्तन्ते यावदाभूतसंप्लवम्। पुत्रमित्रकलत्राद्या सुहृत्संबन्धिबान्धवा.। असहायपरा लोके सदा धर्मं समाचरेत्। यो विप्र' स च वै विष्णु' यो विप्र स उमापति.। यो विप्र. स च वै ब्रह्मा तस्माद्विप्रं न कम्प( कोप )येत। धर्मासंशयं छाता राजा वस्तुरघोगत। तस्मान्नच्यवतेमेके न वहुज्ञानधर्मत.। न राजा प्रश्रयादेयं ददौ विप्रस्य सर्थता। परमा देवता तस्य ब्राह्मणस्य शरीरत। यदीच्छेन्नरकं छेत्तु. सपुत्र. पशुबान्धवै। दैवै. सार्धाकृतं कार्या गुरुपु ब्राह्मणेषु च" इति।

१ क. ङ. भाण्डासंक°। २ क ङ °र्णा लालसं°। ३ ख. ग. निरयं।

ॐ तत्सद्ब्रह्मणे नमः ।

# शङ्खलिखितस्मृतिः ।

* वासुदेवं नमस्कृत्य शङ्खस्य लिखितस्य च । धर्मशास्त्रं प्रवक्ष्यामि दध्नि चैव घृतं यथा ॥ १ ॥ वैश्वदेवेन ये हीना आतिथ्येन विवर्जिताः । सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः ॥ २ ॥ अकृते वैश्वदेवे तु ये भुञ्जन्ति द्विजातयः । वृथा ते तेन पाकेन काकयोनिं व्रजन्ति वै ॥ ३ ॥ अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैस्तु शाकलैः । अन्नं विभज्य भूतेभ्यस्ततोऽश्नीयादनग्निमान् ॥ ४ ॥ यो दद्यादवलिक्लेशः सांनाय्यं वा निवर्तते । दृष्टो वाऽदृष्टपूर्वो वा स यज्ञः सार्वकामिकः ॥ ५ ॥ इष्टो वा यदि वा मूर्खो द्वेष्यः पण्डित एव वा । प्राप्तस्तु वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥ ६ ॥ दातारः किं विचारेण गुणवान्निर्गुणो भवेत् । समं वर्षति पर्जन्यः सस्यादपि तृणादपि ॥ ७ ॥ यान्ग्रासान्क्षुधितो भुङ्क्ते ते ग्रासाः ऋतुभिः समाः । ग्रासे तु हयमेधस्य फलं प्राप्नोति मानवः ॥ ८ ॥ × अद्भिश्चाऽऽसनवाक्यैश्च फलैः पुष्पैर्मनोरमैः । तृणैरञ्जलिभिश्चैव देवांस्तृप्येत्पुनः पितॄन् ॥ ९ ॥ पितॄनभ्यर्चयेद्यस्तु तस्य नास्ति सुसंयमः । इदं तु परमं गुह्यं व्याख्यातमनुपूर्वशः ॥ १० ॥ स्वल्पग्रन्थप्रभूतार्थं शङ्खेन लिखितेन च । यथा हि मृन्मयं पात्रं दुष्टं दोषशतैरपि ॥ ११ ॥ पुनर्दाहेन शुध्येत धर्मशास्त्रैस्तथा द्विजाः । धर्मशास्त्रप्रदीपोऽयं धार्यैः पथानुदेशिकः ॥ १२ ॥ निष्यन्दं सर्वशास्त्राणां व्याधीनामिव भेषजम् ॥ १३ ॥ परपाकनिवृत्तस्य परपाकरतस्य च । अपचस्य तु भुक्त्वाऽन्नं द्विजश्चान्द्रायणं चरेत् ॥ १४ ॥ परान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति । यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्तते ॥ १५ ॥ अन्नात्तेजो मनः प्राणाश्चक्षुः श्रोत्रं यशो बलम् । धृतिं श्रुतिं तथा शुक्रं परान्नं वर्जयेद्बुधः ॥ १६ ॥ परान्नं परवस्त्रं च परयानं परस्त्रियः । परवेश्मनि वासश्च शक्रस्यापि श्रियं हरेत् ॥ १७ ॥

---

* इत आरभ्य ब्रह्मपाशहतो हत इत्यन्तग्रन्थः क. च. पुस्तकयोरेव विद्यते नेतरेषु । × एतद्वचनस्थानेऽयं पाठश्च. पुस्तके—अद्भिश्च वाक्यैश्च मनोरमैश्च पुष्पैः फलैरञ्जलिभिस्तृणैश्च । एतेन देवानतिथींन्पितॄंश्च अभ्यर्चयेद्यस्य तु नास्ति संपत् " इति ।

---

१ च. °ध्नि जातं घृ° । २ क. °थ्ये च वि° । ३ क. °न्नावद्धि नि° । ४ क. °तारं किं । ५ च. °र्गुणो भ° । ६ क. °धार्यं यथानुदेशगः । नि° ।

आहिताग्निस्तु यो विप्रो मत्स्यमांसानि भोजयेत् । कालरूपी कृष्णसर्पो जायते ब्रह्मराक्षसः ॥ १८ ॥ आहिताग्निस्तु यो विप्रः शूद्रान्नानि च भुञ्जते । पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः ॥ १९ ॥ एतदर्थं विशेषेण ब्राह्मणान्पालयेन्नृपः ॥ २० ॥ प्रत्यूषे च प्रदोषे च यदधीये(यी)त ब्राह्मणः । तेन राष्ट्रं च राज्यं च वर्धते ब्रह्मतेजसा ॥ २१ ॥ अग्रं वृक्षस्य राजानो मूलं वृक्षस्य ब्राह्मणाः । तस्मान्मूलं न हिंसीयान्मूलादग्रं प्ररोहति ॥ २२ ॥ फलं वृक्षस्य राजानः पुष्पं वृक्षस्य ब्राह्मणाः । तस्मात्पुष्पं न हिंसीयात्पुष्पात्संजायते फलम् ॥ २३ ॥ गावो भूमिः कलत्रं च ब्रह्मस्वहरणं तथा । यस्तु न त्रायते राजा तमाहुर्ब्रह्मघातकम् ॥ २४ ॥ दुर्बलानामनाथानां बालवृद्धतपस्विनाम् । अन्यायैः परिभूतानां सर्वेषां पार्थिवो गतिः ॥ २५ ॥ राजा पिता च माता च राजा च परमो गुरुः । राजा च सर्वभूतानां परित्राता गुरुर्मतः ॥ २६ ॥ दावाग्निदवदग्धानां राजा पूर्णमिवाम्भसा ॥ २७ ॥ पक्षिणां बलमाकाशं मत्स्यानामुदकं बलम् । दुर्बलस्य बलं राजा बालस्य रुदितं बलम् ॥ २८ ॥ बलं मूर्खस्य मौनत्वं तस्करस्यानृतं बलम् । एते राजबलाः सर्वे यत्नेन परिरक्षिताः ॥ २९ ॥ दहत्यग्निस्तेजसा च सूर्यो दहति रश्मिना । राजा दहति दण्डेन विप्रो दहति मन्युना ॥ ३० ॥ मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः । चक्रात्तीक्ष्णतरो मन्युस्तस्माद्विप्रान्न कोपयेत् ॥ ३१ ॥ अग्निदग्धं प्ररोहेत सूर्यदग्धं तथैव च । दण्डयस्तु संप्ररोहेत ब्रह्मशापहतो हतः ॥ ३२ ॥

इति शङ्खलिखितस्मृतिधर्मशास्त्रं समाप्तम् ॥

१ क. °स्मात्पुष्पं न । २ क. °र्णमिवाम्भसि । प° । ३ च. यत्नेन । ४ ङ. दण्डस्तु ।

ॐ तत्सद्ब्रह्मणे नमः ।

# शङ्खस्मृतिः ।

(तत्र प्रथमोऽध्यायः)

स्वयंभुवे नमस्कृत्य सृष्टिसंहारकारिणे । चातुर्वर्ण्यहितार्थाय शङ्खः शास्त्रमकल्पयत् ॥ १ ॥ यजनं याजनं दानं तथैवाध्यापनक्रिया । प्रतिग्रहं चाध्ययनं विप्रकर्माणि निर्दिशेत् ॥ २ ॥ दानं चाध्ययनं चैव यजनं च यथाविधि । क्षत्रियस्य च वैश्यस्य कर्मेदं परिकीर्तितम् ॥ ३ ॥ क्षत्रियस्य विशेषेण प्रजानां परिपालनम् । कृषिगो-(गौ)रक्ष्यवाणिज्यं विशश्च परिकीर्तितम् ॥ ४ ॥ शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि चाप्यथ । क्षमा सत्यं दमः शौचं सर्वेषामविशेषतः ॥ ५ ॥ ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । तेषां जन्म द्वितीयं तु विज्ञेयं मौञ्जिबन्धनम् ॥ ६ ॥ आचार्यस्तु पिता प्रोक्तः सावित्री जननी तथा । ब्राह्मणक्षत्रियविशां मौञ्जीबन्धनजन्मनि ॥ ७ ॥ वृत्त्या शूद्रसमास्तावद्विज्ञेयास्ते विचक्षणैः । यावद्वेदेन जायन्ते द्विजा ज्ञेयास्ततः परम् ॥ ८ ॥

इति शाङ्खे [धर्मशास्त्रे] प्रथमोऽध्यायः ॥ १ ॥

(अथ द्वितीयोऽध्यायः)

गर्भस्य स्फुटताज्ञाने निषेकः परिकीर्तितः । पुरा तु स्पन्दनात्कार्यं पुंसवनं विचक्षणैः ॥ १ ॥ षष्ठेऽष्टमे वा सीमन्तो जाते वै जातकर्म च । आशौचे च व्यतिक्रान्ते नामकर्म विधीयते ॥२॥ नामधेयं च कर्तव्यं वर्णानां च समाक्षरम् । माङ्गल्यं ब्राह्मणस्योक्तं क्षत्रियस्य बलान्वितम् ॥ ३ ॥ वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् । शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु । धनान्तं चैव वैश्यस्य दासान्तं चान्त्यजन्मनः ॥ ४ ॥ चतुर्थे मासि कर्तव्यं बालस्याऽऽदित्यदर्शनम् । षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ॥ ५ ॥ गर्भाष्टमेऽब्दे कर्तव्यं ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ ६ ॥ षोडशाब्दानि विप्रस्य राजन्यस्य द्विविंशतिः । विंशतिः । सचतुष्का तु वैशस्य परिकीर्तिता । नातिवर्तेत सावित्रीमत ऊर्ध्वं निर्वर्तते ॥ ७ ॥

---

१ ग. °मथाकरोत् । २ क. °न्धनात । आ° । ३ ग. नि । विप्रा. शू° । ४ ग. °तः । ततस्तु स्पन्दनात्कार्यं स° । ५ ग. °तव्यमादित्यस्य प्रद° । ६ ग °शाब्दस्तु विप्रस्य द्वाविंशः क्षत्रियस्य तु । वि° । ७ ग. नाभिभाषेत सा° । ८ ग. °र्तयेत् । वि° ।

विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्याः सर्वधर्मबहिष्कृताः ॥ ८ ॥ मौञ्जीज्यावन्धनानां तु क्रमान्मौञ्ज्यः प्रकीर्तिताः। मार्गवैयाघ्रवास्तानि कर्माणि ब्रह्मचारिणाम् ॥ ९ ॥ पर्णपिप्पलबिल्वानां क्रमाद्दण्डाः प्रकीर्तिताः। केशदेशललाटास्यतुल्याः प्रोक्ताः क्रमेण तु ॥ १० ॥ अवक्राः सत्वचः सर्वे नाग्निदग्धास्तथैव च। वस्त्रोपवीते कार्पासक्षौमोर्णानां यथाक्रमम् ॥ ११ ॥ आदिमध्यावसानेषु भवच्छब्दोपलक्षितम्। भैक्षस्य वरणं प्रोक्तं वर्णानामनुपूर्वशः ॥ १२ ॥

इति शाङ्खे [ धर्मशास्त्रे ] द्वितीयोऽध्यायः ॥ २ ॥

( अथ तृतीयोऽध्यायः )

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः। आचारमग्निकार्यं च संध्योपासनमेव च ॥ १ ॥ स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति। भृतकाध्यापको यस्तु उपाध्यायः स उच्यते ॥ २ ॥ * माता पिता गुरुश्चैव पूजनीयाः सदा नृणाम्। क्रियास्तथाऽफलाः सर्वा यस्यैतेऽनादृतास्त्रयः ॥ ३ ॥ प्रयतः कल्य उत्थाय स्नातो हुतहुताशनः। कुर्वीत प्रणतो भक्त्या गुरूणामभिवादनम् ॥ ४ ॥ अनुज्ञातस्तु गुरुणा ततोऽध्ययनमाचरेत्। कृत्वा ब्रह्माञ्जलिं पश्यन्गुरोर्वन्दनमानतः ॥ ५ ॥ ब्रह्मावसाने प्रारम्भे प्रणवं च प्रकीर्तयेत्। अनध्यायेष्वध्ययनं वर्जयेच्च प्रयत्नतः ॥ ६ ॥ चतुर्दशीं पञ्चदशीमष्टमीं राहुसूतकम्। उल्कापातं महीकम्पमाशौचं ग्रामविप्लवम् ॥ ७ ॥ इन्द्रप्रयाणं स्वरुतं सर्वसंपातनिस्वनम्। वाद्यकोलाहलं युद्धमनध्यायान्विवर्जयेत् ॥ ८ ॥ नाधीयीताभियुक्तोऽपि यानगो न च नौगतः। देवायतनवल्मीकश्मशानशवसंनिधौ ॥ ९ ॥ भैक्षचर्यां तथा कुर्याद्ब्राह्मणेषु यथाविधि। गुरुणा चाप्यनुज्ञातः प्राश्नीयात्प्राङ्मुखः शुचिः ॥ १० ॥ हितप्रिये गुरोः कुर्यादहंकारविवर्जितः। उपास्य पश्चिमां संध्यां पूजयित्वा हुताशनम् ॥ ११ ॥ अभिवाद्य गुरुं पश्चाद्गुरोर्वचनकृद्भवेत्। गुरोः पूर्वं समुत्तिष्ठेच्छयीत चरमं तथा ॥ १२ ॥ मधुमांसाञ्जनं श्राद्धं

* एतद्वचनं न ग पुस्तके।

१ ग °ज्जीवन्धो द्विजाना। २ ख नाया तु। ३ ग. °न्मौञ्जी प्रकीर्तिता। मा°। ४ ग °ताः। कर्णकेशललाटैस्तु तु°। ५ ग च। यज्ञोपवीतं का°। ६ ख °क्षस्याऽऽचर°। ७ ग प्रयतो भूत्वा। ८ ख ग ङ. °वंदन°। ९.ग. °याणं सुरतं घनसंघात°। १० ख. °णं श्वहृतं। ११ ख. ग. घ. °संघात°। १२ ग °भि प्रयत्नान्न च वेगतः। १३ क. °गवम्। दे°।

गीतनृत्यं विवर्जयेत् । हिंसां परापवादं च स्त्रीलीलां च विशेषतः ॥ १३ ॥ मेखलामजिनं दण्डं धारयेच्च विशेषतः । अधःशायी भवेन्नित्यं ब्रह्मचारी समाहितः ॥ १४ ॥ एवं व्रतं तु कुर्वीत वेदस्वीकरणं बुधः । गुरवे च धनं दत्त्वा स्नायीत तदनुज्ञया ॥ १५ ॥

इति शाङ्खे [ धर्मशास्त्रे ] तृतीयोऽध्यायः ॥ ३ ॥

( अथ चतुर्थोऽध्यायः )

विन्देत विधिवद्भार्यामसमानार्षगोत्रजाम् । मातृतः पञ्चमीं चापि पितृतस्त्वथ सप्तमीम् ॥ १ ॥ ब्राह्मो दैवस्तथैवाऽऽर्षः प्राजापत्यस्तथाऽऽसुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥ २ ॥ एभ्यो धर्म्यास्तु चत्वारः पूर्वे ये परिकीर्तिताः । गान्धर्वो राक्षसश्चैव क्षत्रियस्य तु शस्यते ॥ ३ ॥ संप्रार्थितः प्रयत्नेन ब्राह्मस्तु परिकीर्तितः । यज्ञस्थायार्त्विजे दैव आदायाऽऽर्षस्तु गोद्वयम् ॥ ४ ॥ प्रार्थितः संप्रदानेन प्राजापत्यः प्रकीर्तितः । आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ॥ ५ ॥ राक्षसो युद्धहरणात्पैशाचः कन्यकाछलात् । तिस्रस्तु भार्या विप्रस्य द्वे भार्ये क्षत्रियस्य तु । एकैव भार्या वैश्यस्य तथा शूद्रस्य कीर्तिता ॥ ६ ॥ ब्राह्मणी क्षत्रिया वैश्या विप्रभार्याः प्रकीर्तिताः ॥ ७ ॥ क्षत्रिया चैव वैश्या च क्षत्रियस्य विधीयते । वैश्या च भार्या वैश्यस्य शूद्रा शूद्रस्य कीर्तिता ॥ ८ ॥ आपद्यपि न कर्तव्या शूद्रा भार्या द्विजन्मना । तस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते ॥ ९ ॥ तपस्वी यज्ञशीलस्तु सर्वधर्मभृतां वरः । ध्रुवं शूद्रत्वमायाति शूद्रश्राद्धे त्रयोदशे ॥ १० ॥ नीयते तु सपिण्डत्वं येषां शूद्रः कुलोद्भवः । सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितश्च ते ॥ ११ ॥ सपिण्डीकरणं कार्यं कुलजस्य तथा ध्रुवम् । श्राद्धद्वादशकं कृत्वा श्राद्धे प्राप्ते त्रयोदशे ॥ १२ ॥ सपिण्डीकरणे चार्हे( र्हो ) न च शूद्रः कथंचन । तस्मात्सर्वप्रयत्नेन शूद्रां भार्यां विवर्जयेत् ॥ १३ ॥ पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम् । वैश्या प्रतोदमादद्याद्वेदेन त्वग्रजन्मनः ॥ १४ ॥ सा भार्या या गृहे दक्षा सा भार्या या पतिव्रता । सा भार्या या पतिप्राणा सा भार्या या प्रजावती ॥ १५ ॥

---

१ ग. हिंसापवादवादांश्च स्त्रीलीलाश्च वि° । २ ग. प्रयत्नतः । ३ ग. °वं कृत्वं तु । ४ ग. स्नायाच्च तदनन्तरम् । द्° । ५ ग. एते धर्मास्तु चत्वार पूर्वे विप्रे प्रकी° । ६ ग. °स्य प्रश° । ७ ग. यज्ञेपु ऋत्विजे । ८ ग °श्या ब्राह्मणस्य प्र° । ९ ग °जिताश्च । १० ग. श्राद्धं द्वा° । ११ क. ख. °रणं चार्हन्न च । च. °रणं श्राद्धे न । १२ क. घ. °द्वेदने त्व° ।

लालनीया सदा भार्या ताडनीया तथैव च । ताडिता लालिता चैव स्त्री श्रीर्भवति नान्यथा ॥ १६ ॥

इति शाङ्खे [धर्मशास्त्रे] चतुर्थोऽध्यायः ॥ ४ ॥

---

( अथ पञ्चमोऽध्याय. । )

पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः । कण्डनी चोदकुम्भश्च तस्य पापस्य शान्तये ॥ १ ॥ पञ्चयज्ञविधानं तु गृही नित्यं न हापयेत् । पञ्चयज्ञविधानेन तत्पापं तस्य नश्यति ॥ २ ॥ देवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च । ब्रह्मयज्ञो नृयज्ञश्च पञ्च यज्ञाः प्रकीर्तिताः ॥ ३ ॥ होमो दैवो बलिर्भौतः पित्र्यः पिण्डक्रिया स्मृतः । स्वाध्यायो ब्रह्मयज्ञश्च नृयज्ञोऽतिथिपूजनम् ॥ ४ ॥ वानप्रस्थो ब्रह्मचारी यतिश्चैव तथा द्विजः । गृहस्थस्य प्रसादेन जीवन्त्येते यथाविधि ॥ ५ ॥ गृहस्थ एव यजते गृहस्थस्तप्यते तपः । ददाति च गृहस्थश्च तस्माच्छ्रेष्ठो गृहाश्रमी ॥ ६ ॥ यथा भर्ता प्रभुः स्त्रीणां वर्णानां ब्राह्मणो यथा । अतिथिस्तद्वदेवास्य गृहस्थस्य प्रभुः स्मृतः ॥ ७ ॥ न व्रतैर्नोपवासैश्च धर्मेण विविधेन च । नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥८॥ न व्रतैर्नोपवासैश्च न च यज्ञैः पृथग्विधैः । राजा स्वर्गमवाप्नोति प्राप्नोति परिपालनात् ॥ ९ ॥ न स्नानेन न मौनेन नैवाग्निपरिचर्यया । ब्रह्मचारी दिवं याति स याति गुरुपूजनात् ॥ १० ॥ अतिशुश्रूषया क्षान्त्या स्नानेन विविधेन च । वानप्रस्थो दिवं याति याति भोजनवर्जनात् ॥ ११ ॥ न दण्डैर्न च मौनेन शून्यागाराश्रयेण च । यतिः सिद्धिमवाप्नोति योगेनाऽऽप्नोत्यनुत्तमाम् ॥ १२ ॥ न यज्ञैर्दक्षिणावद्भिर्वह्निशुश्रूषया तथा । गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात् ॥ १३ ॥ तस्मात्सर्वप्रयत्नेन गृहस्थोऽतिथिमागतम् । आहारशयनाद्येन विधिवत्प्रतिपूजयेत् ॥ १४ ॥ सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि । दर्शं च पौर्णमासं च जुहुयाद्विधिवत्तथा ॥ १५ ॥ यजेत पशुबन्धैश्च चातुर्मास्यैस्तथैव च । त्रैवार्षिकाधिकान्नस्तु पिवेत्सोममतन्द्रितः ॥ १६ ॥ इष्टिं वैश्वानरीं कुर्यात्तथा चाल्पधनो द्विजः । न भिक्षेत धनं शूद्रात्सर्वं दद्याच्च भिक्षितम् ॥ १७ ॥

---

१ ख. च. ०च्छ्रेयो गृ° । २ क. °ति यतिपूजना° । ङ. °ति प्रतिपा° । ३ ग. न होमेन नैवाग्निपरितर्पणात् । व्र° । ४ ग. °याच्च यथाविधि । यज्ञैर्वा प° । ५ ख. त्रैवार्षि° । ६ ग. °द्यादभीप्सित° ।

वृत्तं तु न त्यजेद्विद्वानृत्विजं पूर्वमेव च । कर्मणा जन्मना शुद्धं विद्यया च वृणीत तम् ॥ १८ ॥ एतैरेव गुणैर्युक्तं धर्मार्जितधनं तथा । याजयीत सदा विप्रो ग्राह्यस्तस्मात्प्रतिग्रहः ॥ १९ ॥

इति शाङ्खे [धर्मशास्त्रे] पञ्चमोऽध्यायः ॥ ५ ॥

( अथ षष्ठोऽध्यायः । )

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत् ॥ १ ॥ पुत्रेषु दारान्निक्षिप्य तया वाऽनुगतो वनम् । अग्नीनुपचरेन्नित्यं वन्यमाहारमाहरेत् ॥ २ ॥ यदाहारो भवेत्तेन पूजयेत्पितृदेवताः । तेनैव पूजयेन्नित्यमतिथिं समुपागतम् ॥ ३ ॥ ग्रामादाहृत्य वाऽश्नीयादष्टौ ग्रासान्समाहितः । स्वाध्यायं च तथा कुर्याज्जटाश्च बिभृयात्तथा ॥ ४ ॥ तपसा शोषयेन्नित्यं स्वयं चैव कलेवरम् । आर्द्रवासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा ॥ ५ ॥ प्रावृष्याकाशशायी च नक्ताशी च सदा भवेत् । चतुर्थकालिको वा स्यात्षष्ठकालिक एव वा ॥ ६ ॥ कृच्छ्रैर्वाऽपि नयेत्कालं ब्रह्मचर्यं च पालयेत् । एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत् ॥ ७ ॥

इति शाङ्खे [धर्मशास्त्रे] षष्ठोऽध्यायः ॥ ६ ॥

( अथ सप्तमोऽध्यायः । )

कृत्वेष्टिं विधिवत्पश्चात्सर्ववेदसदक्षिणाम् । आत्मन्यग्नीन्समारोप्य द्विजो ब्रह्माश्रमी भवेत् ॥ १ ॥ विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने । अतीते पात्रसंपाते नित्यं भिक्षां यतिश्चरेत् ॥ २ ॥ सप्तागारांश्चरेद्भैक्ष्यं( क्षं ) भिक्षितं नानुभिक्षयेत् । न व्यथेच्च तथाऽलाभे यथालाभेन वर्तयेत् ॥ ३ ॥ नाऽऽस्वादयेत्तथैवान्नं नाश्नीयात्कस्यचिद्गृहे । मृन्मयालाबुपात्राणि यतीनां च विनिर्दिशेत् ॥ ४ ॥ तेषां संमार्जनाच्छुद्धिरद्भिश्चैव प्रकीर्तिता । कौपीनाच्छादनं वासो बिभृयादव्यथश्चरन् ॥ ५ ॥

---

१ ग. स्यात्स्याच्च षष्ठका° । च. स्यात्स्वस्वकालि° । २ ग. घ. ङ. च. °क्षिणम् । ३ घ. ङ. व्यगारे । ४ ग. पादसं° । ५ क. मृद्वंशाला° ।

शून्यागारनिकेतः स्याद्यत्र सायंगृहो मुनिः ॥ ६ ॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ७ ॥ चन्दनेन तु लिप्ताङ्गं[1] वास्यैवं[2] चैव तक्षतः । कल्याणं चाप्यकल्याणं तयोरेव न चिन्तयेत् ॥ ८ ॥ सर्वभूतसमो मैत्रः समलोष्टाश्मकाञ्चनः । ध्यानयोगरतो भिक्षुः प्राप्नोति परमां गतिम् ॥ ९ ॥ जन्मना यस्तु निर्विण्णो[4] मरणेन तथैव च । आधिभिर्व्याधिभिश्चैव तं देवा ब्राह्मणं विदुः ॥ १० ॥ अशुचित्वं शरीरस्य प्रियाप्रियविपर्ययः । गर्भवासे च वसतिस्तस्मान्मुच्येत नान्यथा ॥ ११ ॥ जगदेतन्निराक्रन्दं न तु सारमनर्थकम् । भोक्तव्यमिति निर्दिष्टो मुच्यते नात्र संशयः ॥ १२ ॥ प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्विषम् । प्रत्याहारेण संसर्गान्ध्यानेनानैश्वरान्गुणान् ॥ १३ ॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ १४ ॥ मनसः संयमस्तज्ज्ञैर्धारणेति निगद्यते । संहारश्चेन्द्रियाणां च प्रत्याहारः प्रकीर्तितः ॥ १५ ॥ हृदिस्थध्यानयोगेन देवदेवस्य दर्शनम् । ध्यानं प्रोक्तं प्रवक्ष्यामि ध्यानयोगमतः परम् ॥ १६ ॥ हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि ज्योतींषि सूर्यश्च हृदि सर्वं प्रतिष्ठितम् ॥ १७ ॥ स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मन्थनाभ्यासाद्विष्णुं पश्येद्धृदि स्थितम् ॥ १८ ॥ हृद्यर्कश्चन्द्रमाः सूर्यः सोमो मध्ये हुताशनः । तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥ १९ ॥ अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् । तेजोमयं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥ २० ॥ वासुदेवस्तमोन्धानां प्रत्यक्षो नैव जायते । अज्ञानपटसंवीतैरिन्द्रियैर्विषयेप्सुभिः ॥ २१ ॥ एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः । एष धाता विधाता च पुराणो निष्कलः शिवः ॥ २२ ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । यं वै विदित्वा न बिभेति मृत्योर्नान्यः पन्था विद्यतेऽयनाय ॥ २३ ॥ पृथिव्यापस्तथा तेजो वायुराकाशमेव च । पञ्चैतानि विजानीयान्महाभूतानि पण्डितः ॥ २४ ॥

---

१ ग. °न्दनैर्लिप्यतेऽङ्गं वा भस्मचूर्णैर्विगर्हितैः । क°। २ ग. संश्रयेत्। ३ ग. घ ङ. °तद्धितो मै°। ४ क. °विद्य म° । ५ क. ख. घ. ङ. नरसा° । ६ ग. घ. ङ. निर्विण्णो । ७ ग. हृदयस्थस्य यो । ८ ग. °तं तत्त्वं तत्त्वम° । च. °तं सत्यं सत्यम° । ९ क. ग. घ. ङ. °ना पर्णैरपि विधीय° ।

चक्षुः श्रोत्रं स्पर्शनं च रसनं घ्राणमेव च । बुद्धीन्द्रियाणि जानीयात्पञ्चेमानि शरीरके ॥ २५ ॥ रूपं शब्दस्तथा स्पर्शो रसो गन्धस्तथैव च । इन्द्रियार्थान्विजानीयात्पञ्चैवं सततं बुधः ॥ २६ ॥ हस्तौ पादावुपस्थं च जिह्वा पायुस्तथैव च । कर्मेन्द्रियाणि पञ्चैव नित्यमस्मिञ्छरीरके ॥ २७ ॥ मनो बुद्धिस्तथैवाऽऽत्मा ह्यव्यक्तं च तथैव च । इन्द्रियेभ्यः पराणीह चत्वारि कथितानि च ॥ २८ ॥ चतुर्विंशत्यथैतानि तत्त्वानि कथितानि च । तथाऽऽत्मानं तव्द्यतीतं पुरुषं पञ्चविंशकम् ॥ २९ ॥ यं तु ज्ञात्वा विमुच्यन्ते ये जनाः साधुवृत्तयः । तदिदं परमं गुह्यमेतदक्षरमुत्तमम् ॥ ३० ॥ अशब्दरसमस्पर्शमरूपं गन्धवर्जितम् । निर्दुःखमसुखं शुद्धं तद्विष्णोः परमं पदम् ॥ ३१ ॥ अजं निरञ्जनं शान्तमव्यक्तं ध्रुवमक्षरम् । अनादिनिधनं ब्रह्म तद्विष्णोः परमं पदम् ॥ ३२ ॥ विज्ञानसारथिर्यस्तु मनः प्रग्रहवन्धनः । सोऽध्वनैः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ३३ ॥ वालाग्रशतशो भागः कल्पितस्तु सहस्रधा । तस्यापि शतमाद्भागाज्जीवः सूक्ष्म उदाहृतः ॥ ३४ ॥ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा तथा परः ॥ ३५ ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ ३६ ॥ एषु सर्वेषु भूतेषु तिष्ठत्यविकलः सदा । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ ३७ ॥

इति शाङ्खे [धर्मशास्त्रे]सप्तमोऽध्यायः ॥ ७ ॥

---

( अथाष्टमोऽध्यायः । )

---

*नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् । क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम् ॥ १ ॥ अस्नातः पुनरानर्हो जप्याग्निहवनादिषु । प्रातःस्नानं तदर्थं च नित्यस्नानं प्रकीर्तितम् ॥ २ ॥ चण्डालशवयूपाद्यं स्पृष्ट्वा स्नानं रजस्वलाम् । स्नानानर्हस्तु यः स्नाति स्नानं नैमित्तिकं च तत् ॥ ३ ॥ पुष्यस्नानादिकं स्नानं दैवज्ञविधिचोदितम् । तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥ ४ ॥ जप्तुकामः पवित्राणि अर्चिष्यन्देवताः पितॄन् । स्नानं समाचरेद्यस्तु क्रियाङ्गं तत्प्रकीर्तितम् ॥ ५ ॥

---

* एषोऽध्यायो न विद्यते ग. पुस्तके ।

---

१ ग. °न्द्रियस्थान्वि° । २ ग. °व विषयान्वुधः । ३ ग. च °त्मा व्यक्ताव्यक्तं त° । ४ ग. °रि प्रवराणि च । ५ च. °न्धनम् । सो° । ६ क. ख. घ. °नः पर° । ७ ग. °विरलः । ८ घ. ङ. °जके । ज° ।

मलापकर्षणार्थं तु स्नानमभ्यङ्गपूर्वकम्। मलापकर्षणार्थाय प्रवृत्तिस्तस्य नान्यथा ॥ ६ ॥ सरित्सु देवखातेषु तीर्थेषु च नदीषु च। क्रियास्नानं समुदिष्टं स्नानं तत्र महाक्रिया ॥ ७ ॥ तत्र काम्यं तु कर्तव्यं यथावद्विधिचोदितम्। नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम् ॥ ८ ॥ तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः। स्नानं तु वह्नितप्तेन तथैव परवारिणा ॥ ९ ॥ शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत्[1]। अद्भिर्गात्राणि शुध्यन्ति तीर्थस्नानात्फलं लभेत् ॥ १० ॥ सरःसु देवखातेषु तीर्थेषु च नदीषु च। स्नानमेव क्रिया तस्मात्स्नानात्पुण्यफलं स्मृतम् ॥११॥ तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरेत्। स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु ॥ १२॥ सर्वतीर्थानि पुण्यानि पापघ्नानि सदा नृणाम्[2]। परस्परानपेक्षाणि[3] कथितानि मनीषिभिः ॥ १३ ॥ सर्वे प्रस्रवणाः पुण्याः सरांसि च शिलोच्चयाः। नद्यः पुण्यास्तथा सर्वा जाह्नवी तु विशेषतः ॥ १४ ॥ यस्य पादौ च हस्तौ च मनश्चैव सुसंयतम्। विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ १५ ॥ नृणां पापकृतां तीर्थे पापस्य शमनं भवेत्। यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम् ॥ १६ ॥

इति शाङ्खे [धर्मशास्त्रेऽ]ष्टमोऽध्यायः ॥ ८ ॥

(अथ नवमोऽध्यायः।)

क्रियास्नानं तु वक्ष्यामि यथावद्विधिपूर्वकम्। मृद्भिरद्भिश्च कर्तव्यं शौचमादौ यथाविधि ॥ १ ॥ जले निमग्न[4] उन्मज्ज्य उपस्पृश्य यथाविधि[5]। जलस्याऽऽवाहनं कुर्यात्तत्प्रवक्ष्याम्यतः[6] परम् ॥ २ ॥ प्रपद्ये वरुणं देवमम्भसां पतिमूर्जितम्। याचितं देहि मे तीर्थं सर्वपापापनुत्तये ॥ ३ ॥ तीर्थमावाहयिष्यामि सर्वाघविनिषूदनम्। सांनिध्यमस्मिंस्तोये च भज त्वं मदनुग्रहात् ॥ ४ ॥ रुद्रान्प्रपद्ये वरदान्सर्वानप्सुषदस्तथा। सर्वानप्सुषदश्चैव प्रपद्ये प्रणतः स्थितः ॥ ५ ॥ देवमप्सुषदं वह्निं प्रपद्येऽघनिषूदनम्। आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा ॥ ६ ॥ रुद्राश्चाग्निश्च सर्पाश्च वरुणश्चाऽऽप एव च। शमयन्त्वाशु मे पापं मां रक्षन्तु च सर्वशः ॥ ७ ॥ इत्येवमुक्त्वा कर्तव्यं ततः संमार्जनं जले। आपो हि ष्ठेति तिसृभिर्यथावदनुपूर्वशः ॥ ८ ॥ हिरण्यवर्णेति वदेदग्निश्च तिसृभिस्तथा। शं नो देवीति च तथा शं न आपस्तथैव च ॥ ९ ॥ इदमापः प्रवहत तथा मन्त्रमुदीरयेत्। एवं मन्त्रान्समुच्चार्य च्छन्दांसि ऋषिदेवताः ॥ १० ॥

१ घ. ङ. च. भवेत्। २ घ. ङ. °राण्यपे°। ३ च. °पेक्ष्याणि। ४ ग. घ. निमज्ज्य। ५ ग. °धि। तीर्थस्या°। ६ ग. °म्यशेषतः। प्र°।

अघमर्षणसूक्तस्य संस्मरेत्प्रयतः सदा । छन्द आनुष्टुभं तस्य ऋषिश्चैवाघमर्षणः ॥ ११ ॥ देवता भाववृत्तस्तु पापघ्नस्य प्रकीर्तितः । ततोऽम्भसि निमग्नस्तु त्रिः पठेदघमर्षणम् ॥ १२ ॥ यथाऽश्वमेधः क्रतुराट्सर्वपापप्रणाशनः । तथाऽघमर्षणं सूक्तं सर्वपापप्रणाशनम् ॥ १३ ॥ अनेन स्नात्वा अप्मध्ये स्नातवान्धौतवाससा । परिवर्तितवासास्तु तीर्थतीरमुपस्पृशेत् ॥ १४ ॥ उदकस्याप्रदानाच्च स्नानशाटीं न पीडयेत् । अनेन विधिना स्नातस्तीर्थस्य फलमश्नुते ॥ १५ ॥

इति शाङ्खे [ धर्मशास्त्रे ] नवमोऽध्यायः ॥ ९ ॥

( अथ दशमोऽध्यायः । )

अतः परं प्रवक्ष्यामि शुभामाचमनक्रियाम् । कायं कनिष्ठिकामूले तीर्थमुक्तं मनीषिभिः ॥ १ ॥ अङ्गुष्ठमूले च तथा प्राजापत्यं विचक्षणैः । अङ्गुल्यग्रे स्मृतं दि(दै)व्यं पित्र्यं तर्जनिमूलकम्(के) ॥ २ ॥ प्राजापत्येन तीर्थेन त्रिः प्राश्नीयाज्जलं द्विजः । द्विः प्रमृज्य मुखं पश्चात्खान्यद्भिः समुपस्पृशेत् ॥ ३ ॥ हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः । तालुगाभिस्तथा वैश्यः शूद्रः स्पृष्टाभिरन्ततः ॥ ४ ॥ अन्तर्जानु शुचौ देशे प्राङ्मुखः सुसमाहितः । उदङ्मुखो वा प्रयतो दिशश्चानवलोकयन् ॥ ५ ॥ अद्भिः समुद्धृताभिस्तु हीनाभिः फेनबुद्बुदैः । वह्निना चाप्यतप्ताभिरक्षाराभिरुपस्पृशेत् ॥ ६ ॥ तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् । अङ्गुष्ठमध्यायोगेन स्पृशेन्नेत्रद्वयं ततः ॥ ७ ॥ अङ्गुष्ठानामिकाभ्यां तु श्रवणौ समुपस्पृशेत् । कनिष्ठाङ्गुष्ठयोगेन स्पृशेत्स्कन्धद्वयं ततः ॥ ८ ॥ सर्वासामेव योगेन नाभिं च हृदयं तथा । संस्पृशेच्च तथा मूर्ध्नि एष आचमने विधिः ॥ ९ ॥ त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः । ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुम ॥ १० ॥ गङ्गा च यमुना चैव प्रीयेते परिमार्जनात् । नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥ ११ ॥ स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ । कर्णयुग्मे तथा स्पृष्टे प्रीयेते अनिलानलौ ॥ १२ ॥ स्कन्धयोः स्पर्शनादस्य प्रीयन्ते सर्वदेवताः । मूर्ध्नः संस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत् ॥ १३ ॥ विना यज्ञोपवीतेन तथा मुक्तशिखो द्विजः । अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत् ॥ १४ ॥ बहिर्जानुरुपस्पृश्य एकहस्तार्पिते-

---

१ ग. °सूक्तं च प्रपठेत्प्र° । २ ग. °न विधिना स्नात्वा स्नात° । ३ ग. °र्थनामानि संजपेत् । ३ ग. °क्तं करस्य तु । अ° । घ. ङ. छ. °क्तं द्विजस्य तु । अ° । ५ क. ख. °कायोगे श्र° । ६ ग. °खोऽपि वा । अ° ।

जलैः। सोपानत्कस्तथा तिष्ठन्नैव शुद्धिमवाप्नुयात् * ॥ १५ ॥ आचम्य च पुरा प्रोक्तं तीर्थसंमार्जनं तु यत्। उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन धर्मतः॥ १६ ॥ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः। त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥ १७ ॥ आचम्य च ततः पश्चादादित्याभिमुखो जलम्। उदु त्यं जातवेदसमिति मन्त्रेण निक्षिपेत् ॥ १८ ॥ एष एव विधिः प्रोक्तः संध्ययोश्च द्विजातिषु। पूर्वां संध्यां जपंस्तिष्ठेदासीनः पश्चिमां तथा ॥ १९ ॥ ततो जपेत्पवित्राणि पवित्रं वाऽथ शक्तितः। ऋषयो दीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुयुः ॥ २० ॥ सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम्। येषां जपैश्च होमैश्च पूयन्ते मानवाः सदा ॥ २१ ॥

इति शाङ्खे [ धर्मशास्त्रे ] दशमोऽध्यायः ॥ १० ॥

---

( अथ एकादशोऽध्यायः । )

---

अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः। कूष्माण्ड्यः पावमान्यश्च सावित्र्यश्च तथैव च ॥ १ ॥ त्र्य( त्रि )भिष्टं द्रुपदा चैव स्तोमानि व्याहृतीस्तथा। भारुण्डानि च सामानि गायत्री चौशनं ( त्र्यौशनसं ) तथा ॥ २ ॥ पुरुषव्रतं च भार्गं च तथा सोमव्रतानि च। अब्लिङ्गं बार्हस्पत्यं च वाक्सूक्तममृतं तथा ॥ ३ ॥ शतरुद्रीयमथर्वशिरस्त्रिसुपर्णं महाव्रतम्। गोसूक्तमश्वसूक्तं च इन्द्रसूक्तं च सामनी ॥ ४ ॥ त्रीण्याज्यदोहानि रथंतरं च अग्निव्रतं वामदेवव्रतं च। एतानि गीतानि पुनन्ति जन्तूञ्जातिस्मरत्वं लभते यदीच्छेत् ॥ ५ ॥

इति शाङ्खे [ धर्मशास्त्रे ] एकादशोऽध्यायः ॥ ११ ॥

---

( अथ द्वादशोऽध्यायः । )

---

इति वेदपवित्राण्यभिहितानि, एभ्यः सावित्री विशिष्यते ॥ १ ॥ नास्त्यघमर्षणात्परमन्तर्जले ॥ २ ॥ न सावित्र्या समं जप्यं न व्याहृतिसमं हुतम् ॥ ३ ॥ कुश-

* इतः परं सार्धं वचनमधिकं च. पुस्तके—"क्षिप्तेन मूर्ध्नि तोयेन पापमस्य प्रणश्यति। भूमौ क्षिप्तेन हन्यन्ते असुरा देवशत्रवः। व्याहृती कीर्तयेच्चैव तथैवार्यचमव्ययम्" इति।

१ ग. °लैः। समलाभिस्तथाऽद्भिश्च नैव। २ ग. °नं तत। उपस्पृश्य ततः। ३ घ. ङ. च. छ. °रति भू°। ४ ग.घ. ङ. छ. °वव्रतं। ५ ग °श्च सर्वसावित्र्य एव। ६ ख. च। अभीष्टद्रु°। ७ ग. घ. ङ. छ. भार्सं। ८ घ. ङ. छ च श्रीसू°। ९ क °क्तं चन्द्र°। १० घ. ङ. छ. °देव्यं बृहच्च। ए°। ११ ग. रसं तज्जलेन व्याहृतिभिः परं होमः। न सावित्र्याः परं जप्यं कुशश°।

मध्यामासीनः कुशोत्तरीयवान्कुशपवित्रपाणिः प्राङ्मुखः सूर्याभिमुखो वाऽक्षमाला-
मुपादाय देवताध्यायी जपं कुर्यात् ॥ ४ ॥ सुवर्णमणिमुक्तास्फटिकपद्माक्षरुद्राक्षपुत्र-
जीवकानामन्यतमेनाऽऽदाय मालां कुर्यात्[3] ॥ ५ ॥ कुशग्रन्थिं कृत्वा वामहस्तोपय-
मैर्वा गणयेत् ॥ ६ ॥ आदौ देवतां ऋषिच्छन्दः स्मरेत् ॥ ७ ॥ ततः सप्रणवां
सव्याहृतिकामादावन्ते च शिरसा गायत्रीमावर्तयेत् ॥८॥ अथास्याः सविता देवता,
ऋषिर्विश्वामित्रो गायत्री छन्दः ॥ ९ ॥ ॐकारः प्रणवाख्यः ॥ १० ॥ ॐ भूः ।
ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यमिति व्याहृतयः
॥ ११ ॥ ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोमिति शिरः ॥१२॥ भवन्ति
चात्र श्लोकाः ॥ १३ ॥ सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह । ये जपन्ति
सदा तेषां न भयं विद्यते क्वचित् ॥ १४ ॥ शतं जप्त्वा तु सा देवी दिनपापप्रणा-
शिनी + । सहस्रं जप्त्वा तु तथा पातकेभ्यः समुद्धरेत् ॥ १५ ॥ दशसहस्रं जप्त्वा
तु सर्वकल्मषनाशिनी । सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः ॥ १६ ॥ सुरापश्च
विशुध्येत लक्षजाप्यान्न संशयः । प्राणायामत्रयं कृत्वा स्नानकाले समाहितः ॥१७॥
अहोरात्रकृतात्पापात्तत्क्षणादेव मुच्यते । सव्याहृतिकाः सप्रणवाः प्राणायामास्तु
षोडश ॥ १८ ॥ अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः । हुता देवी विशेषेण
सर्वकामप्रदायिनी ॥ १९ ॥ सर्वपापक्षयकरी वरदा भक्तवत्सला । शान्तिकामस्तु
जुहुयात्सावित्रीमक्षतैः शुचिः ॥ २० ॥ हन्तुकामोऽपमृत्युं च घृतेन जुहुयात्तथा ।
श्रीकामस्तु तथा पद्मैर्बिल्वैः काञ्चनकार्मुकः ॥२१॥ ब्रह्मवर्चसकामस्तु पयसा जुहुया-
त्तथा । घृतप्लुतैस्तिलैर्वह्निं जुहुयात्सुसमाहितः ॥ २२ ॥ गायत्र्ययुतहोमाच्च सर्व-
पापैः प्रमुच्यते । पापात्मा लक्षहोमेन पातकेभ्यः प्रमुच्यते[11] ॥ २३ ॥ अभीष्टं लोकमा-
प्नोति प्राप्नुयात्काममीप्सितम् । गायत्री वेदजननी गायत्री पापनाशिनी ॥ २४ ॥
गायत्र्याः परमं नास्ति दिवि चेह च पावनम् । हस्तत्राणप्रदा देवी पततां नरका-
र्णवे ॥ २५ ॥ तस्मात्तामभ्यसेन्नित्यं ब्राह्मणो नियतः शुचिः । गायत्रीजाप्यनिरतं
हव्यकव्येषु[12] भोजयेत् ॥ २६ ॥

---

+ इत. परं ग. पुस्तकेऽयं पाठः—“ शतं जप्त्वा तथा सा तु सर्वकल्मषनाशिनी । सहस्रं जप्त्वा सा नृणां पातकेभ्यः समुद्धरेत् ”। इति ।

---

१ ग. पद्मपत्रवीजाक्षाणामन्यतमेनाक्षमा° । २ घ. ङ. छ. °क्षपत्रजीवानामन्यतमेनाक्षमा° । ३ ग. °त् । ध्यायन्वामहस्तोपरि व्याग° । ४ च. वा स्वहस्तोपयुक्तैर्वा । ५ क. ख. °स्तोपायनैर्वा । ६ ग. °तामार्षं छन्दश्च स्म° । ७ ग. °न्दः । प्रणवाद्याः । भूः । ८ ग दश । ९ ग. °त् । स्वर्णस्तेयी कृतघ्नश्च ब्र° । १० ग. °कामतः । ब्र° । ११ ग. °ते । ब्रह्मलो° । १२ क. °षु योज° ।

तस्मिन्न तिष्ठते पापमब्विन्दुरिव पुष्करे ॥ २७ ॥ जपे(प्ये)नैव तु संसिध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥२८॥ उपांशु स्याच्छतगुणः साहस्रो मानसः स्मृतः। नोच्चैर्जपं बुधः कुर्यात्सावित्र्यास्तु विशेषतः॥ २९ ॥ सावित्रीजाप्यनिरतः स्वर्गमाप्नोति मानवः। गायत्रीजप्यनिरतो मोक्षोपायं च विन्दति ॥ ३० ॥ तस्मात्सर्वप्रयत्नेन स्नातः प्रयतमानसः। गायत्रीं तु जपेद्भक्त्या सर्वपापप्रणाशिनीम् ॥ ३१ ॥

इति शाङ्खे [धर्मशास्त्रे] द्वादशोऽध्यायः ॥ १२ ॥

(अथ त्रयोदशोऽध्याय.)।

स्नातः कृतजप्यस्तदनु प्राङ्मुखो दिव्येन तीर्थेन देवानुदकेन तर्पयेत् ॥ १ ॥*अथ तर्पणविधिः ॥ २ ॥ ॐ भगवन्तं शेषं तर्पयामि ॥ ३ ॥ कालाग्निरुद्रं तु ततो रुक्मभौमं तथैव च। श्वेतभौमं ततः प्रोक्तं पातालानां च सप्तकम् ॥ ४ ॥ जम्बूद्वीपं ततः प्रोक्तं शाकद्वीपं ततः परम्। गोमेदपुष्करे तद्वच्छाकाख्यं च ततः परम् ॥५॥ शार्वरं ततः स्वधामानं ततो हिरण्यरोमाणं ततः कल्पस्थायिनो लोकांस्तर्पयेत् ॥६॥ लवणोदकं ततः क्षीरोदं ततो घृतोदं तत इक्षूदं ततः स्वादूदं तत इति सप्तसमुद्रकं भैत्यर्चं पुरुषसूक्तेनोदकाञ्जलीन्दद्यात्, पुष्पाणि च तथा भक्त्या ॥ ७ ॥ अथ कृतापसव्यो दक्षिणामुखोऽन्तर्जानुः पित्र्येण पितॄणां यथाश्राद्धं प्रकाममुदकं दद्यात् ॥ ८ ॥ सौवर्णेन पात्रेण राजतेनौदुम्बरेण खड्गपात्रेणान्यपात्रेण वोदकं पितृतीर्थे स्पृशन्दद्यात् ॥ ९ ॥ पित्रे पितामहाय प्रपितामहाय मात्रे पितामह्यै प्रपितामह्यै मातामहाय(?) प्रमातामहाय मात्रे(?) मातामह्यै प्रमातामह्यै सप्तमात्पुरुषात्पितृपक्षे यावतां नाम जानीयात्पितृपक्षाणां तर्पणं कृत्वा गुरूणां मातृपक्षाणां तर्पणं कुर्यात् ॥ १० ॥ मातृपक्षाणां तर्पणं कृत्वा संबन्धिबान्धवानां कुर्यात्, तेषां कृत्वा सुहृदां कुर्यात् ॥ ११ ॥ भवन्ति चात्र श्लोकाः ॥१२॥ विना रौप्यसुवर्णेन विना ताम्रतिलेन च। विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते ॥ १३ ॥

* इतः प्रभृति सप्तसमुद्रकमित्यन्तं न विद्यते ग. पुस्तके।

१ घ. छ. °दन्यन्न वा। २ घ. ङ. छ. °णाशनी°। ३ च. देवं। ४ क. °भौतं त°। ५ घ. ङ. छ ततः शिलाभौमं ततो रक्तभौमं ततः श्वेतभौमं ततः पातालसप्तकं ततो जम्बूद्वीपं ततः शाकद्वीपं ततो गोमेदं ततः पुष्करं ततो दिति द्वितीयं ततो लोकालोकाख्यं ततः शा°। ६ घ. ततः स्वादूदकं तत इ°। ङ. छ. ततः केतुमन्तं ततो। ७ ङ. छ. लोकपालांस्त°। ८ ङ. छ. स्वादूदकं तत इति समु°। ९ ग. प्रत्यहं। १० ग. °पक्षीयाणां त्रयाणां दत्त्वा मातृपक्षीयाणां गुरूणां संबन्धिबान्धवानां च कृत्वा सु°।

सौवर्णराजताभ्यां च खड्गेनौदुम्बरेण च । दत्तमक्षय्यतां याति पितॄणां तु तिलोदकम् ॥ १४ ॥ हेम्ना तु सह यद्दत्तं क्षीरेण मधुना सह । तदप्यक्षय्यतां याति पितॄणां तु तिलोदकम् ॥ १५ ॥ कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वाऽपि पितॄणां प्रीतिमाहवन् ॥ १६ ॥ स्नातः संतर्पणं कृत्वा पितॄणां तु तिलाम्भसा । पितृयज्ञमवाप्नोति प्रीणाति च पितॄंस्तथा ॥ १७ ॥

इति शाङ्खे [ धर्मशास्त्रे ] त्रयोदशोऽध्यायः ॥ १३ ॥

( अथ चतुर्दशोऽध्यायः ) ।

ब्राह्मणान्न परीक्षेत दैवे कर्मणि धर्मवित् । पित्र्ये कर्मणि संप्राप्ते युक्तमाहुः परीक्षणम् ॥१॥ ब्राह्मणा ये विकर्मस्था वैडालव्रतिकास्तथा+ । ऊनाङ्गा अतिरिक्ताङ्गा ब्राह्मणाः पङ्क्तिदूषकाः ॥ २ ॥ गुरूणां प्रतिकूलाश्च वेदाग्न्युत्सादिनश्च ये । गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूषकाः ॥ ३ ॥ अनध्यायेष्वधीयानाः शौचाचारविवर्जिताः । शूद्रान्नरससंपुष्टा ब्राह्मणाः पङ्क्तिदूषकाः ॥ ४ ॥ षडङ्गवित्त्रिसुपर्णो बह्वृचो ज्येष्ठसामगः । त्रिणाचिकेतः पञ्चाग्निर्ब्राह्मणाः पङ्क्तिपावनाः ॥ ५ ॥ ब्रह्मदेयानुसंतानो ब्रह्मदेयाप्रदायकः । ब्रह्मदेयापतिर्यश्च ब्राह्मणाः पङ्क्तिपावनाः ॥ ६ ॥ ऋग्यजुःपारगो यश्च साम्नां यश्चापि पारगः । अथर्वाङ्गिरसोऽध्येता ब्राह्मणः पङ्क्तिपावनः ॥ ७ ॥ नित्यं योगरतो विद्वान्समलोष्टाश्मकाञ्चनः । ध्यानशीलो यतिर्विद्वान्ब्राह्मणः पङ्क्तिपावनः ॥ ८ ॥ द्वौ दैवे प्राङ्मुखौ त्रीन्वा पित्र्ये चोदङ्मुखांस्तथा । भोजयेद्विविधान्विप्रानेकैकमुभयत्र वा ॥ ९ ॥ भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् । दैवे कृत्वा तु नैवेद्यं पश्चाद्वह्नौ तु तत्क्षिपेत् ॥ १० ॥ उच्छिष्टसंनिधौ कार्यं पिण्डनिर्वपणं बुधैः । अभावे च तथा कार्यमग्निकार्यं यथाविधि ॥ ११ ॥ श्राद्धं कृत्वा प्रयत्नेन त्वराक्रोधविवर्जितः । उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत् ॥ १२ ॥ अन्यत्र पुष्पमूलेभ्यः पीठकेभ्यश्च पण्डितः । भोजयेद्विविधान्विप्रान्गन्धमाल्यसमुज्ज्वलान् ॥ १३ ॥ यत्किंचित्पच्यते गेहे भक्ष्यं वा भोज्यमेव वा । अनिवेद्य न भोक्तव्यं पिण्डमूले कदाचन ॥ १४ ॥ उग्रगन्धान्यगन्धानि चैत्यवृक्षभवानि च । पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥ १५ ॥

+ इतः परमेतद्वचनमधिकं घ. ङ. छ. पुस्तकेषु—"यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः । प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् " इति ।

१ ग. घ. ङ. च. °ह । दत्तमक्ष° । २ ग. °तिकाः शठाः । हीना° । ३ क. °संतुष्टा । ४ घ. ङ. छ. °थर्वशिर° । ५ क. ख. °लो हि यो विद्वा° । ६ घ. ङ छ. °भ्यः पानके° । ७ ग. °माल्यानुलेपनैः । य° ।

कोयोद्भवानि देयानि रक्तान्यपि विशेषतः। ऊर्णासूत्रं प्रदातव्यं कार्पासमथवा नवम् ॥१६॥ दशां[1] विवर्जयेत्प्राज्ञो यद्यप्यहतवस्त्रजाम्[2]। घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ॥१७॥ धूपार्थं गुग्गुलुं दद्याद्घृतयुक्तं मधूत्कटम्। चन्दनं च तथा दद्यात्पिष्ट्वा[3] च कुङ्कुमं शुभम् ॥ १८ ॥ * भूतृणं सुरसं शिग्रुं पालकं सिन्धुकं तथा। कूष्माण्डालाबुं[4] वार्ताककोविदारांश्च वर्जयेत् ॥ १९ ॥ पिप्पलीं मरिचं चैव तथा वै पिण्डमूलकम्। कृतं च लवणं सर्वं वंशाग्रं तु विवर्जयेत् ॥ २० ॥ राजमाषान्मसूरांश्च कोद्रवान्कोरदूषकान्। लोहितान्वृक्षनिर्यासाञ्श्राद्धकर्मणि वर्जयेत् ॥ २१ ॥ आम्रमामलकीमिक्षुं[5][6] मृद्वीकादधिदाडिमान् + । = विदार्यश्चैव रम्भाद्या दद्याच्छ्राद्धे प्रयत्नतः ॥ २२ ॥ धानालाजे[7] मधुयुते[8] सक्तूञ्शर्करया सह। दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटकविसेतकान्[9][10] ॥ २३ ॥ भोजयित्वा द्विजान्भक्त्या स्वाचान्तान्दत्तदक्षिणान्। अभिवाद्य पुनर्विप्राननुव्रज्य विसर्जयेत् ॥ २४ ॥ निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः। श्राद्धं दत्त्वा च भुक्त्वा च युक्तः स्यान्महतैनसा ॥ २५ ॥ कालशाकं सशल्कांश्च मांसं वार्ध्रीणसस्य च। खड्गमांसं तथाऽनन्तं यमः प्रोवाच धर्मवित् × ॥ २६ ॥ यद्ददाति गयाक्षेत्रे[11] प्रभासे पुष्करे तथा। प्रयागे नैमिषारण्ये सर्वमानन्त्यमश्नुते ॥ २७ ॥ गङ्गायमुनयोस्तीरे[12] पयोष्ण्यामरकण्टके। नर्मदायां गयातीरे सर्वमानन्त्यमुच्यते ॥ २८ ॥ वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये। सप्तवेण्यृषिकूपे[13] च[14] तदप्यक्षय्यमुच्यते ॥ २९ ॥ म्लेच्छदेशे तथा रात्रौ संध्यायां च विशेषतः। न श्राद्धमाचरेत्प्राज्ञो म्लेच्छदेशे न च व्रजेत् ॥ ३० ॥

---

* इतःपरमयं पाठो ग. पुस्तके–"सकोविदार्यसत्कन्दराजेन मधुना सदा। सक्तूञ्शर्करया सार्धं दद्याच्छ्राद्धे प्रयत्नतः। पायसादिभिरुष्णैश्च भोजयित्वा तथा द्विजान्। भक्त्या प्रणम्य आचान्तांस्तथा वै दत्तदक्षिणान्। अभिवाद्य प्रसन्नात्मा अनुव्रज्य विसर्जयेत्" इति। + एतदर्धस्थानेऽयं पाठो ग. पुस्तके—"छत्राकं शरशिम्बं च पलं च सुसकं तथा" इति। = इतःप्रभृति विसर्जयेदित्यन्तं न ग. पुस्तके। × अत्राध्यायसमाप्तिर्दृश्यते ग. पुस्तके।

---

1 ग. दशा वि°। 2 ग. °थनाहतवस्त्रजाः। घृ°। 3 ग. °द्यादिष्टं यत्कुङ्कु°। 4 घ. ङ. छ. °बुवृन्ताक°। 5 ग. आम्रातलवलीमूलमूलकान्दधि°। घ. ङ. छ. आम्रैलाम°। 6 घ. ङ. छ. °क्षुं द्राक्षाद्वीका°। 7 घ. ङ. छ. धानला°। 8 क. °लाभे म°। 9 च. °विशेषका°। 10 क. °सेतिका°। 11 क. ख. °यास्यक्ष प्र°। 12 ख. च. °रे अयोध्याम°। म. °रे तीर्थे वाऽम°। 13 ग. सप्तारण्येऽसिकू°। 14 च. न दत्तमक्ष°।

हस्तिच्छायासु यद्दत्तं यद्दत्तं राहुदर्शने। विषुवत्ययने चैव सर्वमानन्त्यमुच्यते ॥३१॥ प्रोष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् । प्राप्य श्राद्धं तु कर्तव्यं मधुना पायसेन वा ॥ ३२ ॥ प्रजां पुष्टिं यशः स्वर्गमारोग्यं च धनं तथा । नृणां श्राद्धैः सदा प्रीताः प्रयच्छन्ति पितामहाः ॥ ३३ ॥

इति शाङ्खे [धर्मशास्त्रे]चतुर्दशोऽध्यायः ॥ १४ ॥

=====

( अथ पञ्चदशोऽध्यायः ) ।

---

जनने मरणे चैव सपिण्डानां द्विजोत्तमः । त्र्यहाच्छुद्धिमवाप्नोति योऽग्निवेदसमन्वितः ॥ १ ॥ सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । नामधारकविप्रस्तु दशाहेन विशुध्यति ॥ २ ॥ क्षत्रियो द्वादशाहेन वैश्यः पक्षेण शुध्यति । मासेन तु तथा शूद्रः शुद्धिमाप्नोति नान्तरा ॥ ३ ॥ रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति । अजातदन्तबाले तु सद्यः शौचं विधीयते ॥ ४ ॥ अहोरात्रात्तथा शुद्धिर्बाले त्वकृतचूडके । तथैवानुपनीते तु त्र्यहाच्छुध्यन्ति बान्धवाः ॥ ५ ॥ अनूढानां तु कन्यानां तथैव शूद्रजन्मनाम् । अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ॥ ६ ॥ मृत्युं समधिगच्छेच्चेन्मासात्तस्यापि बान्धवाः । शुद्धिं समभिगच्छेयुर्नात्र कार्या विचारणा ॥ ७ ॥ पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता । तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति ॥ ८ ॥ हीनवर्णा तु या नारी प्रमादात्प्रसवं व्रजेत् । प्रसवे मरणे तज्जमाशौचं नोपशाम्यति ॥ ९ ॥ समानं खल्वशौचं तु प्रथमेन समापयेत् । असमानं द्वितीयेन धर्मराजवचो यथा ॥ १० ॥ देशान्तरगतः श्रुत्वा कुल्यानां मरणोद्भवौ । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ ११ ॥ अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत् । तथा संवत्सरेऽतीते स्नात एव विशुध्यति ॥ १२ ॥ अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च । परपूर्वासु च स्त्रीषु त्र्यहाच्छुद्धिरिहेष्यते ॥ १३ ॥ मातामहे व्यतीते तु आचार्ये च तथा मृते । गृहे दत्तासु कन्यासु मृतासु च त्र्यहस्तथा ॥ १४ ॥ निवासराजनि प्रेते जाते दौहित्रके गृहे । आचार्यपत्नीपुत्रेषु प्रेतेषु दिवसेन च ॥ १५ ॥ मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च । सब्रह्मचारिण्येकाहमनूचाने तथा मृते ॥ १६ ॥ एकरात्रं त्रिरात्रं च षड्रात्रं मासमेव च । शूद्रे सपिण्डे वर्णानामाशौचं क्रमशः स्मृतम् ॥ १७ ॥

---

१ ग. °न्ति मानवाः । मृतानां कन्यकाना तु तथैव शूद्रजन्मनः । अ° । २ ग. °भवग° । ३ ग. °न्मासं तस्या° ४ ग. °मे तु स° । ५ ग. °था । विनष्टेरा° । ६ ग. च. वा ।

त्रिरात्रमथ षड्रात्रं पक्षं मासं तथैव च। वैश्ये सपिण्डे वर्णानामाशौचं क्रमशः स्मृतम्॥ १८॥ सपिण्डे क्षत्रिये शुद्धिः षड्रात्रं ब्राह्मणस्य तु। वर्णानां परिशिष्टानां द्वादशाहं विनिर्दिशेत्॥ १९॥ सपिण्डे ब्राह्मणे वर्णाः सर्व एवाविशेषतः। दशरात्रेण शुध्येयुरित्याह भगवान्यमः॥ २०॥ भृग्वग्न्यनशनाम्भोभिर्मृतानामात्मघातिनाम्। पतितानां च नाशौचं शस्त्रविद्युद्धताश्च ये॥ २१॥ यतिव्रतिब्रह्मचारिनृपकारुकदीक्षिताः। नाशौचभाजः कथिता राजाज्ञाकारिणश्च ये॥ २२॥ यस्तु भुङ्क्ते पराशौचे वर्णी सोऽप्यशुचिर्भवेत्। आशौचशुद्धौ शुद्धिश्च तस्याप्युक्ता मनीषिभिः॥ २३॥ पराशौचे नरो भुक्त्वा कृमियोनौ प्रजायते। भुक्त्वाऽन्नं म्रियते यस्य तस्य योनौ प्रजायते॥२४॥ दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च। प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तते॥ २५॥

इति शाङ्खे [ धर्मशास्त्रे ] पञ्चदशोऽध्यायः॥ १५॥

---

( अथ षोडशोऽध्यायः )।

---

मृन्मयं भाजनं सर्वं पुनः पाकेन शुध्यति। मद्यैर्मूत्रैः पुरीषैश्च ष्ठीवनैः पूयशोणितैः॥ १॥ संस्पृष्टं नैव शुध्येत पुनः पाकेन मृन्मयम्। एतैरेव तथा स्पृष्टं ताम्रसौवर्णराजतम्॥ २॥ शुध्यत्यावर्तितं पश्चादन्यथा केवलाम्भसा। आम्लोदकेन ताम्रस्य सीसस्य त्रपुणस्तथा॥ ३॥ क्षारेण शुद्धिः कांस(स्य)स्य लोहस्य च विनिर्दिशेत्। मुक्तामणिप्रवालानां शुद्धिः प्रक्षालनेन तु॥ ४॥ अब्जानां चैव भाण्डानां सर्वस्याश्ममयस्य च। शाकवर्जं मूलफलविदलानां तथैव च॥ ५॥ मार्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्मणि। उष्णाम्भसा तथा शुद्धिं सस्नेहानां विनिर्दिशेत्॥ ६॥ शयनासनयानानां स्फ्यशूर्पशकटस्य च। शुद्धिः संप्रोक्षणाद्यज्ञे कटमि(टाग्नी)न्धनयोस्तथा॥ ७॥ मार्जनाद्वेश्मनां शुद्धिः क्षितेः शोधस्तु तत्क्षणात्। संमार्जितेन तोयेन वाससां शुद्धिरिष्यते॥८॥ बहूनां प्रोक्षणाच्छुद्धिर्धान्यादीनां विनिर्दिशेत्। प्रोक्षणात्सं-

---

१ क. च. एव वि°। २ क. च. क्षीरेण। ३ च. अक्षालिताना भा°। ४ ग. °कमूलफलानां च वि°। ५ घ. छ. °लद्विद°। ६ ग. सकेशाना। ७ ग. शय्यासनापणानां सूर्यस्य किरणैस्तथा। शु°। ८ क. घ. °धनत°।

दन्तानां च दारवाणां च तत्क्षणात् ॥ ९ ॥ सिद्धार्थकानां कल्केन शृङ्गदन्तमयस्य च। गोवालैः फलपात्राणामस्थ्नां शृङ्गवतां तथा ॥ १० ॥ निर्यासानां गुडानां च लवणानां तथैव च। कुसुम्भकुङ्कुमानां च ऊर्णाकार्पासयोस्तथा ॥ ११ ॥ मोक्षणात्कथिता शुद्धिरित्याह भगवान्यमः। भूमिष्ठमुदकं शुद्धं शुचि तोयं शिलागतम् ॥ १२ ॥ वर्णगन्धरसैर्दुष्टैर्वर्जितं यदि तद्भवेत्। शुद्धं नदीगतं तोयं सर्वदैव तथाऽऽकरः ॥ १३ ॥ शुद्धं प्रसारितं पण्यं शुद्धे चाजाश्वयोर्मुखे। मुखवर्जं तु गौः शुद्धा मार्जारश्चाऽऽक्रमे शुचिः ॥ १४ ॥ शय्या भार्या शिशुर्वस्त्रमुपवीतं कमण्डलुः। आत्मनः कथितं शुद्धं न शुद्धं हि परस्य च ॥ १५ ॥ नारीणां चैव वत्सानां शकुनीनां शुनां मुखम्। रात्रौ प्रस्रवणे वृक्षे मृगयायां सदा शुचि ॥ १६ ॥ शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला। दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥ १७ ॥ रथ्याकर्दमतोयेन ष्ठीवनाद्येन वाऽप्यथ। नाभेरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्यति ॥ १८ ॥ कृत्वा मूत्रं पुरीषं वा स्नात्वा भोक्तुमनास्तथा। भुक्त्वा क्षुत्वा तथा सुप्त्वा पीत्वा चाम्भोऽवगाह्य च ॥ १९ ॥ रथ्यां वाऽऽक्रम्य वाऽऽचामेद्वासो विपरिधाय च। कृत्वा मूत्रपुरीषं च लेपगन्धापहं द्विजः ॥ २० ॥ उद्धृतेनाम्भसा शौचं मृदा चैव समाचरेत्। मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्तिते ॥ २१ ॥ एकस्मिन्विंशतिर्हस्ते द्वयोर्ज्ञेयाश्चतुर्दश। तिस्रस्तु मृत्तिका देयाः कृत्वा नखविशोधनम् ॥ २२ ॥ तिस्रस्तु पादयोर्ज्ञेयाः शौचकामस्य सर्वदा। शौचमेतद्गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥ २३ ॥ त्रिगुणं च वनस्थानां यतीनां तु चतुर्गुणम्। मृत्तिका च विनिर्दिष्टा त्रिपर्वाऽऽपूर्यते यथा ॥ २४ ॥

इति शाङ्खे [ धर्मशास्त्रे ] षोडशोऽध्यायः ॥ १६ ॥

---

( अथ सप्तदशोऽध्यायः )।

नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीं वने। अधःशायी जटाधारी पर्णमूलफलाशनः ॥ १ ॥ ग्रामं विशेच्च भिक्षार्थं स्वकर्म परिकीर्तयन्। एककालं समश्नीयाद्वर्षे तु द्वादशे गते ॥ २ ॥ हेमस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः। व्रतेनैतेन शुध्यन्ते महापातकिनस्त्विमे ॥ ३ ॥ यागस्थं क्षत्रियं हत्वा वैश्यं हत्वा च याजकम्। एतदेव व्रतं कुर्यादात्रेयीविनिषूदकः ॥ ४ ॥

---

१ ग. चं काष्ठाना चैव त°। २ च. °रश्चङ्क्रमे। ३ ख. ग. °श्चाऽऽश्रमे। ४ क. ख. घ. शुभं। ५ ग. स्नानं। ६ क. ख. च ज्ञेया.। ७ च. मे। योग°।

कूटसाक्ष्यं तथैवोक्त्वा निक्षेपमपहृत्य च । एतदेव व्रतं कुर्यात्त्यक्त्वा च शरणागतम् ॥ ५ ॥ आहिताग्नेः[1] स्त्रियं हत्वा मित्रं हत्वा तथैव च । हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत् ॥६॥ वनस्थं[2] च द्विजं हत्वा पार्थिवं[3] च कृतागसम् । एतदेव व्रतं कुर्याद्द्विगुणं च विशुद्धये ॥७॥ क्षत्रियस्य च पादोनं दद्यादर्धं[4] वैश्यघातने । अर्धमेव सदा कुर्यात्स्त्रीवधे पुरुषस्तथा ॥ ८ ॥ पादं तु शूद्रहत्यायामुदक्यागमने तथा । गोवधे च तथा कुर्यात्परदारगतस्तथा[5] ॥ ९ ॥ पशून्हत्वा तथा ग्राम्यान्मासं कृत्वा विचक्षणः । आरण्यानां वधे तद्वत्तदर्धं तु विधीयते ॥ १० ॥ हत्वा द्विजं तथा सर्पजलेशयविलेशयान्[6][7] । सप्तरात्रं तथा कुर्याद्व्रतं ब्रह्महणस्तथा ॥ ११ ॥ अनस्थ्नां[8] शकटं हत्वा सास्थ्नां दशशतं तथा । ब्रह्महत्याव्रतं कुर्यात्पूर्णं संवत्सरं नरः ॥ १२ ॥ यस्य यस्य च वर्णस्य वृत्तिच्छेदं समाचरेत् । तस्य तस्य वधे प्रोक्तं प्रायश्चित्तं समाचरेत् ॥१३॥ अपहृत्य[9] तु वर्णानां भुवं प्राप्य प्रमादतः । प्रायश्चित्तं वधे प्रोक्तं ब्राह्मणानुमतं चरेत् ॥१४॥ गोजाश्वस्यापहरणे मणीनां रजतस्य च । जलापहरणे चैव कुर्यात्संवत्सरव्रतम् ॥ १५ ॥ तिलानां धान्यवस्त्राणां[10] मद्यानामामिषस्य च । संवत्सरार्धं कुर्वीत व्रतमेतत्समाहितः ॥ १६ ॥ तृणेक्षुकाष्ठतक्राणां रसानामपहारकः । मासमेकं व्रतं कुर्याद्गन्धानां सर्पिषां तथा ॥ १७ ॥ लवणानां गुडानां च मूलानां कुसुमस्य च । मासार्धं तु व्रतं कुर्यादेतदेव समाहितः ॥ १८ ॥ लोहानां वैदलानां च सूत्राणां[11] चर्मणां तथा । एकरात्रव्रतं कुर्यादेतदेव समाहितः ॥ १९ ॥ भुक्त्वा पलाण्डुं लशुनं मद्यं च कवकानि[12] च । नारं मलं तथा मासं विड्वराहं खरं तथा[13] ॥ २० ॥ गौधेरकुञ्जरोष्ट्रं च सर्वपञ्चनखं तथा । क्रव्यादं कुक्कुटं ग्राम्यं कुर्यात्संवत्सरं व्रतम् ॥२१॥ भक्ष्याः पञ्चनखास्त्वेते गोधाकूर्मशल्यकाः । खड्गश्च[14] शशकश्चैव तान्हत्वा च चरेद्व्रतम् ॥ २२ ॥ हंसं मद्गुं बकं काकं काकोलं खञ्जरीटकम् । मत्स्यादांश्च तथा मत्स्यान्बलाकं शुकसारिके ॥ २३ ॥ चक्रवाकं प्लवं कोकं[15] मण्डूकं भुजगं तथा । मासमेकं व्रतं कुर्यादेतच्चैव न भक्षयेत् ॥ २४ ॥ राजीवान्सिंहतुण्डांश्च[16] सशल्कांश्च[17] तथैव च । पाठीनरोहितौ भक्ष्यौ मत्स्येषु परिकीर्तितौ ॥ २५ ॥ जलेचरांश्च जलजान्मुखाग्रनखविष्किरान् । रक्तपादाञ्जालपादान्सप्ताहं व्रतमाचरेत् ॥ २६ ॥ तित्तिरिं च मयूरं च लावकं[18] च कपिञ्जलम् । वार्ध्रीणसं[19] वर्तकं च भक्ष्यानाह यमस्तथा ॥२७॥

---

१ ग. छ. °ताग्नि. स्त्रि° । २ ग. व्रतस्थं । ३ ग. °वं चाकृताश्रमम् । ४ घ. ङ छ. °तके । अ° । ५ क. °दाराग° । ६ च. सर्पं ज° । ७ च. °शयौ । स° । ८ ग. °स्थ्ना तु शतं ह° । ९ च. °त्य सुव° । १० ग. °णा शस्त्राणामा° । ११ ख. ग °र्याद्दन्तानां । १२ ख. ग करकाणि । १३ क. घ. ङ. च. °था । गोश्वकुञ्जरखरो° । १४ क. °ड्गश्चैकशफश्चै° । १५ क. घ च. काकं । १६ ख. ग. °श्च शकुलांश्च । १७ क. सकल्का° । १८ घ. ङ. छ. बलाकं । १९ क. ख. घ. वाध्रीण° ।

भुक्त्वा चोभयतोदन्तं तथैकशफदंष्ट्रिणः । तथा भुक्त्वा तु मांसं वै मासार्धं व्रतमाचरेत् ॥ २८ ॥ स्वयं मृतं वृथा मांसं माहिषं त्वाजमेव च । गोश्च क्षीरं विवत्सायाः संधिन्याश्च तथा पयः ॥ २९ ॥ संधिन्यमेध्यं[1] भक्षित्वा पक्षं तु व्रतमाचरेत् । क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ॥ ३० ॥ सप्तरात्रं व्रतं कुर्याद्यदेतत्परिकीर्तितम् । लोहितान्वृक्षनिर्यासान्व्रश्चनप्रभवांस्तथा[2] ॥ ३१ ॥ केवलानि च शुक्तानि[3] तथा पर्युषितं च यत् । गुडयुक्तं[4] तथा भुक्त्वा त्रिरात्रं च व्रती भवेत् ॥ ३२ ॥ दधि भक्ष्यं[5] च शुक्रे( क्ते )षु[6] यच्चान्यद्दधिसंभवम् । गुडशुक्तं[7] तु[8] भक्ष्यं स्यात्ससर्पिष्कमिति स्थितिः ॥ ३३ ॥ यवगोधूमजाः सर्वे विकाराः पयसश्च ये । राजवाडवकुल्यं[9] च भक्ष्यं पर्युषितं भवेत्[10] ॥ ३४ ॥ सजीवपक्वमांसं च सर्वं यत्नेन वर्जयेत् । संवत्सरं व्रतं कुर्यात्प्राश्यैताञ्ज्ञानतस्तु तान् ॥ ३५ ॥ शूद्रान्नं ब्राह्मणो भुक्त्वा तथा रङ्गावतारिणः । चिकित्सकस्य क्षुद्रस्य तथा स्त्रीमृगजीविनः ॥ ३६ ॥ ष( प )ण्डस्य कुलटायाश्च तथा बन्धनचारिणः । वद्धस्य चैव चोरस्य अवीरायाः स्त्रियस्तथा[11] ॥ ३७ ॥ चर्मकारस्य वेणस्य[12] क्लीबस्य पतितस्य च । रुक्मकारस्य धूर्तस्य[13] तथा वार्धुषिकस्य च ॥ ३८ ॥ कदर्यस्य नृशंसस्य वेश्यायाः कितवस्य च । गणान्नं भूमिपालान्नमन्नं चैव[14] श्वजीविनाम्[15] ॥ ३९ ॥ मौञ्जिकान्नं सूतिकान्नं भुक्त्वा मासं व्रतं चरेत् । शूद्रस्य सततं भुक्त्वा षण्मासान्व्रतमाचरेत् ॥ ४० ॥ वैश्यस्य तु तथा भुक्त्वा त्रीन्मासान्व्रतमाचरेत् । क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत् ॥ ४१ ॥ ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रतं चरेत् । अपः सुराभाजनस्थाः पीत्वा पक्षं व्रतं चरेत् ॥ ४२ ॥ मद्यभाण्डगताः पीत्वा सप्तरात्रं व्रतं चरेत् । शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः ॥ ४३ ॥ क्षात्रियस्य तु सप्ताहं ब्राह्मणस्य तथा दिनम् । अश्राद्धाशने[16] विद्वान्मासमेकं व्रती भवेत् ॥ ४४ ॥

---

१ क. °मेध्यभक्षायाः प° । २ ग. °न्व्रणाना प्र° । च. °न्व्रणतः प्र° । ३ ग. °नि तथाऽन्नानि । ४ क. °डेशुक्तं त° । ख. ङ. °डशुक्तं । ग. °डपक्वं त° । ५ ग. भक्तं च शुक्तेषु यच्चान्यद्दारुसं° । ६ घ. ङ. छ. मुक्तेषु । च. शुष्केषु । ७ ग. °डयुक्तं भक्षयित्वा तक्रं निन्द्यामिति श्रुति. । ८ क. ग. °शुक्तं तु । ९ ग. °व्राहं च कु° । घ. ङ छ. °वाड्डय । १० क. °त् । ऋजीष्वप° । च. °त् । ऋवीसप° । ११ ग. °था । कर्म° । १२ क. घ. छ. वेनस्य । १३ ग. तद्गश्च । १४ ग. चैवात्वजी° । १५ घ. ङ. छ. °म् । सैनिकान्नं सू° । १६ क. ख. च. अथ श्रा° ।

परिवित्तिः परिवेत्ता च यया[1] च[2] परिविन्दति। व्रतं संवत्सरं कुर्युर्दातृयाजकपञ्चमाः[3] ॥ ४५ ॥ काकोच्छिष्टं गवाऽऽघ्रातं भुक्त्वा पक्षं व्रती भवेत्[4]। दूषितं केशकीटैश्च मूषिकालाङ्गलेन[5] च ॥ ४६ ॥ मक्षिकामशकेनापि त्रिरात्रं तु व्रती भवेत्। वृथा कृसरसंयावपायसापूपशष्कुलीः ॥४७॥ भुक्त्वा त्रिरात्रं कुर्वीत व्रतमेतत्समाहितः। नीलया चैव क्षतो विप्रः शुना दष्टस्तथैव च ॥४८॥ त्रिरात्रं तु व्रतं कुर्यात्पुंश्चलीदशनक्षतः। पादप्रतापनं[6] कृत्वा वह्निं कृत्वा तथाऽप्यधः ॥ ४९ ॥ कुशैः प्रमृज्य पादौ च दिनमेकं व्रती भवेत्। नीलीवस्त्रं परी(रि)धाय भुक्त्वा स्नानार्हणस्तथा ॥ ५० ॥ त्रिरात्रं च व्रतं कुर्याच्छित्त्वा गुल्मलतास्तथा। अध्यास्य शयनं यानमासनं पादुके तथा ॥ ५१ ॥ पलाशस्य द्विजश्रेष्ठस्त्रिरात्रं तु व्रती भवेत्। वाग्दुष्टं भावदुष्टं च भाजने भावदूषिते। भुक्त्वाऽन्नं ब्राह्मणः पश्चात्त्रिरात्रं तु व्रती भवेत् ॥ ५२ ॥ क्षत्रियस्तु रणे दत्त्वा पृष्ठं प्राणपरायणः[7]। संवत्सरव्रतं कुर्याच्छित्त्वा[8] वृक्षं फलप्रदम् ॥ ५३ ॥ दिवा च मैथुनं गत्वा स्नात्वा नग्नस्तथाऽम्भसि। नग्नां परस्त्रियं दृष्ट्वा दिनमेकं व्रती भवेत् ॥ ५४ ॥ क्षिप्त्वाऽग्नावशुचि द्रव्यं तदेवाम्भसि मानवः। मासमेकं व्रतं कुर्यादुपक्रुध्य तथा गुरुम् ॥५५॥ पीतावशेषं पानीयं पीत्वा च ब्राह्मणः क्वचित्[9]। त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः ॥५६॥ एकपङ्क्त्युपविष्टेषु विषमं यः प्रयच्छति। स च तावदसौ पक्षं[10] कुर्यात्तु ब्राह्मणो व्रतम् ॥ ५७ ॥ धारयित्वा तुलां[11]चार्यं[12] विषमं कारयेद्वणिक्। सुरालवणमद्यानां दिनमेकं व्रती भवेत् ॥ ५८ ॥ मांसस्य विक्रयं कृत्वा कुर्याच्चैव महाव्रतम्। विक्रीय पाणिना मद्यं तिलस्य[13] च तथाऽऽचरेत् ॥ ५९ ॥ हुंकारं ब्राह्मणस्योक्त्वा त्वंकारं च गरीयसः। दिनमेकं व्रतं कुर्यात्प्रयतः सुसमाहितः ॥ ६० ॥ प्रेतस्य प्रेतकार्याणि[14] अकृत्वा धनहारकः। वर्णानां यद्व्रतं प्रोक्तं तद्व्रतं प्रयतश्चरेत् ॥६१॥ कृत्वा पापं न गूहेत[15] गुह्यमानं विवर्धते। कृत्वा पापं बुधः कुर्यात्पर्षदोऽनुमतं व्रतम्[16] ॥ ६२ ॥ तस्करश्वापदाकीर्णे बहुव्यालमृगे वने।

---

१ क. ङ. छ. यथा। २ क. न। ३ ग. °विद्यते। व्र°। ४ ग. मा.। शुनोच्छिष्टं तथा भुक्त्वा मासमेकं व्र°। ५ ग. °कानकुले°। ६ ग. °नं वह्नौ क्षिप्त्वा वह्नौ त°। ७ ग °णे हत्वा पृष्ठं प्राणपरायणम्। सं°। ८ ग. °त्वा पिप्पलपादपम्। ९ क. ख. घ. ङ. च °ति। यश्च याव°। १० क. ख पक्षं। ११ ग. तुला चैव विषमं वणिजस्तथा। सु°। १२ घ ङ. छ. °लाधार्य। १३ ग. तिलानि। १४ क. ख. च °णि कृत्वा चैनमहा°। १५ क. ख. घ. °त गूहमा°। १६ ग. °म्। स्थित्वा च श्वप°।

न व्रतं ब्राह्मणः कुर्यात्प्राणबाधाभयात्सदा ॥ ६३ ॥ सर्वत्र जीवनं रक्षेज्जीवन्पापमपोहति । व्रतैः कृच्छ्रैश्च दानैश्च इत्याह भगवान्यमः ॥ ६४ ॥ शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः । शरीरात्स्रवते धर्मः पर्वतात्सलिलं यथा ॥ ६५ ॥ आलोच्य धर्मशास्त्राणि समेत्य ब्राह्मणैः सह । प्रायश्चित्तं द्विजो दद्यात्स्वेच्छया न कथंचन ॥ ६६ ॥

इति शाङ्खे [ धर्मशास्त्रे ] सप्तदशोऽध्यायः ॥ १७ ॥

( अथाष्टादशोऽध्यायः ) ।

त्र्यहं त्रिषवणस्नायी स्नाने स्नानेऽघमर्षणम् । निमग्नस्त्रिः पठेदप्सु न भुञ्जीत दिनत्रयम् ॥ १ ॥ वीरासनं च तिष्ठेत गां दद्याच्च पयस्विनीम् । अघमर्षणमित्येतद्व्रतं सर्वाघनाशनम् ॥ २ ॥ त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् । त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन्व्रतम् ॥ ३ ॥ त्र्यहमुष्णं पिबेत्तोयं त्र्यहमुष्णं घृतं पिबेत् । त्र्यहमुष्णं पयः पीत्वा वायुभक्षस्त्र्यहं भवेत् ॥ ४ ॥ तप्तकृच्छ्रं विजानीयाच्छीतैः शीतमुदाहृतम् । द्वादशाहोपवासेन पराकः परिकीर्तितः ॥ ५ ॥ विधिनोदकसिद्धानि मासमश्नीत यत्नतः । स कृत्वा सोदकान्मासं कृच्छ्रं वारुणमुच्यते ॥ ६ ॥ बिल्वैरामलकैर्वाऽपि पद्माक्षैरथवा शुभैः । मासेन लोकेऽतिकृच्छ्रः कथ्यते बुद्धिसत्तमैः ॥७॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतम् ॥ ८ ॥ एतैस्तु त्र्यहमभ्यस्तं महासांतपनं स्मृतम् । पिण्याक( क )चामतक्राम्बुसक्तूनां ( ? ) प्रतिवासरम् ॥ ९ ॥ उपवासान्तराभ्यासात्तुलापुरुष उच्यते । गोपुरीषाशनो भूत्वा मासं नित्यं समाहितः ॥ १० ॥ व्रतं तु यावकं कुर्यात्सर्वपापापनुत्तये । ग्रासं चन्द्रकलावृद्ध्या प्राश्नीयाद्वर्धयन्सदा ॥ ११ ॥ ह्रासयेच्च कलाहानौ व्रतं चान्द्रायणं चरेत् । मुण्डस्त्रिषवणस्नायी अधःशायी जितेन्द्रियः ॥ १२ ॥ स्त्रीशूद्रपतितानां च वर्जयेत्परिभाषणम् । पवित्राणि जपेच्छक्त्या जुहुयाच्चैव शक्तितः ॥१३॥

---

१ ग. °दा । सतो हि जीवतो जीवं सर्वपाप° । २ ग. °रात्स्रवते° । ३ ख. ग. कदाच° । ४ ग. °नं सदा तिष्ठेद्गां च दद्यात्पय° । ५ ख. °ग्रासं समश्नीयात्प्रय° । ६ क. लोकैः श्रीकृ° । घ. ङ. छ. °लोकैः श्रीकृच्छ्रं कृच्छ्रं सा° । ७ ग. °म् । पादद्वयं तथा त्यक्त्वा स° । ८ घ. ङ. छ. °ण्याकाच° । ९ क. ख. च. °पायवास्तं तु मा° । १० क. ख. च. °लावृद्ध्या व्र° । ११ ख. चरन् ।

अयं विधिः स विज्ञेयः सर्वकृच्छ्रेषु सर्वदा । पापात्मानस्तु पापेभ्यः कृच्छ्रैः संतारिता नराः ॥ १४ ॥ गतपापा दिवं यान्ति नात्र कार्या विचारणा । शङ्खप्रोक्तमिदं शास्त्रं योऽधीते बुद्धिमान्नरः॥१५॥ सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते*॥१६॥

इति शाङ्खे धर्मशास्त्रेऽष्टादशोऽध्यायः ॥ १८ ॥

---

( समाप्तेयं शङ्खस्मृतिः ) ।

---

* एतद्वचनद्वयमधिकं क. पुस्तके—" पादशेषं पीतशेषं शौचशेषं तु यज्जलम् । तज्जलं मदिरातुल्यं पर्यग्निकरणं विना ॥ स्त्रीशेषं शूद्रशेषं स्याच्छ्राद्धशेषं तथैव च । दंपत्योर्भुक्तशेषं स्याद्भुक्त्वा चान्द्रायणं चरेत् " इति ।

१ ग. °ते प्रयतः सुधीः । स° । घ. ङ. छ. °ते द्विजपुंगवः । स° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# शातातपस्मृतिः ।

( तत्र प्रथमोऽध्यायः ) ।

प्रायश्चित्तविहीनानां महापातकिनां नृणाम् । नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम् ॥ १ ॥ प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचकम्[1] । प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः[2] * ॥ २ ॥ महापातकजं चिह्नं[3] सप्तजन्मानि जायते । उपपापोद्भवं[4] पञ्च त्रीणि पापसमुद्भवम् ( ? ) ॥ ३ ॥ दुष्कर्मजा नृणां रोगा यान्ति[5] चोपक्रमैः शमम्[6] । जाप्यैः सुरार्चनैर्होमैर्दानैस्तेषां[7] शमो भवेत् ॥ ४ ॥ × पूर्वजन्मकृतं पापं नरकस्य परिक्षये । बाधते व्याधिरूपेण तस्य जप्यादिभिः शमः ॥ ५ ॥ कुष्ठं[8] च राजयक्ष्मा च प्रमेहो ग्रहणी तथा । मूत्रकृच्छ्राश्मरीकासा[9] अतिसारभगंदरौ ॥ ६ ॥ दुष्टव्रणं गण्डमाला[10] पक्षघातोऽक्षिनाशनम् । इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥ ७ ॥ जलोदरं यकृत्प्लीहा शूलैशोफव्रणानि[11] च । श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ॥ ८ ॥ रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः । दण्डापतानकश्वित्रवपुःकम्पविचर्चिकाः ॥ ९ ॥ वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः । = शिरोत्पाद्या नृणां रोगा अभिशापाद्भवन्ति हि ॥ १० ॥ अन्ये च बहवो रोगा जायन्ते[13] वर्णसंकरात्[12] । उच्यन्ते यानि दानानि प्रायश्चित्तानि च क्रमात् ॥ ११ ॥ महापापेषु सर्वस्वं[14] तदर्धमुपपातके । दद्यात्पापेषु षष्ठांशं दृष्ट्वा[15] व्याधिबलाबलम् ॥ १२ ॥ अथ साधारणं तेषु गोदानादिषु कथ्यते ॥ १३ ॥

---

* इत· परमधिकमेतद्वचनं क· पुस्तके–"महापातकजं पापं नरकस्य परिक्षये । बाध्य (ध)ते व्याधिरूपेण तस्य जाप्यादिभिः शमः" इति । × अत्रैतद्वचनं न क· पुस्तके । = एतदर्धस्थानेऽयं पाठः ख. ग. पुस्तकयो –" अर्शआद्या नृणा रोगा अतिपापाद्भवन्ति हि " इति ।

---

१ ख. ग. °सूचितम् । २ क घ· °ते वाऽपि पश्चात्तापयुतं पु° । ३ क· घ. पापं । ४ क. घ. °वं चैव त्री° । ५ क घ °न्ति नोप° । ६ ख ग °म् । जपै· सु° । ७ क घ. °रार्चितैर्हो° । ८ क. घ. कुष्ठी । ९ घ °रीश्वासा । १० क. घ. कण्ठमाला । ११ ख. ग. °लरोगत्र° । १२ ख. ग. °कराः । उ° । १३ ख. ग. °न्ते च नि° । १४ ख. ग. सर्वं स्यात्तद° । १५ ख. ग. कल्प्यं ।

* गोदाने वत्सयुक्ता गौः सुशीला च पयस्विनी। + सर्वस्वं यत्र देयं स्यात्तत्र इच्छा यदा न हि ॥ १४ ॥ गोशतं तु यदा दद्यात्सर्वालंकारभूषितम्। वृषदाने शुभोऽनड्वाञ्शुक्लाम्बरः सकाञ्चनः ॥ १५ ॥ × धौरेयो हेमसंयुक्तो दद्याद्वस्त्रसमन्वितः दशधेनुसमं पुण्यं प्रवदन्ति मनीषिणः ॥ १६ ॥ निवर्तनानि भूदाने दश दद्याद्द्विजातये। दशहस्तेन द[१]ण्डेन त्रिंशद्दंडं निवर्तनम् ॥ १७ ॥ दश तान्येव गोचर्म दत्त्वा स्वर्गे महीयते। सु[२]वर्णशतनिष्कं तु तदर्धार्धप्रमाणतः ॥ १८ ॥ अश्वदा[३]ने मृदुश्लक्ष्णमश्वं सोपस्करं दिशेत्। महि[४]षीं महिषीदाने दद्यात्स्वर्णाम्बरान्विताम् ॥ १९ ॥ दद्याद्गजं महादाने सुवर्णफलसंयुतम् ॥ २० ॥ लक्षसं[५]ख्यार्हणं पुष्पं प्रदद्याद्देवतार्चने। दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने ॥ २१ ॥ रु[६]द्रजाप्यं लक्षपुष्पैः पूजयित्वा[७] च त्र्यम्बकम्। एकादश ज[८]पेद्रुद्रान्दशांशं[९] गुग्गु[१०]लेन तु ॥ २२ ॥ हुत्वाऽभिषेचनं कुर्यान्मन्त्रैर्वरुणदेवतैः। शान्तिके गणशा[११]न्तिश्च ग्रहशान्तिकपू[१२]र्विका ॥ २३ ॥ धान्यदाने शुभं धान्यं खारीषष्टिमितं स्मृतम्। वस्त्रदाने प[१३]ट्टवस्त्रद्वयं कर्पूरसंयुतम् ॥ २४ ॥ दश प[१४]ञ्चाष्ट चतुर उपवेश्य द्विजाञ्शुभान्। तेषामनुज्ञया सर्वं प्रायश्चित्तमुपक्रमेत् ॥ २५॥ विधाय वैष्णवं श्राद्धं संकल्प्य निजकाम्यया। धेनुं दद्याद्द्विजातिभ्यो दक्षिणां वै स्वशक्तितः ॥ २६ ॥ अलंकृत्य यथाशक्ति व[१५]स्त्रालंकरणैर्द्विजान्। याचेद्द[१६]ण्डानुसारेण प्रायश्चित्तं य[१७]थोचितम् ॥ २७ ॥ तेषामनुज्ञया कृत्वा प्रायश्चित्तं यथाविधि। पुनस्तान्परि[१८]पूर्णार्थमर्चयेद्विधिवद्द्विजान् ॥२८॥ = दद्याद्व्रतानि नामानि तेभ्यः श्रद्धासमन्वितः। संतुष्टा ब्राह्मणा दद्युरनुज्ञां व्रतकारिणे ॥ २९ ॥ जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि। सर्वं भवति निश्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः ॥ ३० ॥ ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः। सर्वदेवमया विप्रा न तद्वचनमन्यथा ॥ ३१ ॥

---

* एतदर्धं न क. घ. पुस्तकयोः। + इत आरभ्य भूषितमित्यन्तं न विद्यते ख. ग. पुस्तकयोः। × एतद्वचनं न ख. ग. पुस्तकयोः। = एतदर्धं न ख. ग. पुस्तकयोः।

---

१ क. घ. °द्दण्डे नि°। २ क. °वर्णं श°। ३ क. घ. °नेषु दुष्कूलम°। ४ ख ग. °षीं माहिषे दाने दद्यात्स्वर्णायुधान्वि°। ५ क. घ. °संख्योत्तमं पु°। ६ ख. ग रुद्रं जपेल्लक्ष°। ७ घ त्वा त्रियम्ब°। ८ क. घ. जपान्रुद्रा°। ९ क. घ. °दशाङ्गं गु°। १० ख. ग. °ग्गुलैर्घृते.। हु°। ११ क. °णनाथस्य प्र°। १२ ख. ग. °पूर्वकम्। धा°। १३ क. °ट्टकूले कर्पूक°। घ. °ट्टकूले कंचकफलसं°। १४ क. °ञ्चाथ च°। १५ क. घ. °णैर्युतान्। १६ ख. ग. द्दण्डप्रमाणेन प्रा°। १७ ख. ग. °थोदित°। १८ ख. ग. °र्णार्थानर्च°।

उपवासो व्रतं चैव स्नानं तीर्थफलं तपः। विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम् ॥ ३२ संपन्नमिति तद्वाक्यं वदन्ति ऋषिदेवताः। प्रणम्य शिरसा सार्धमग्निष्टोमफलं लभेत् ॥ ३३ ॥ ब्राह्मणा जङ्गमं तीर्थं निर्मलं सार्वकामिकम्। तेषां वाक्योदकेनैव शुध्यन्ति मलिनो जनाः ॥ ३४ ॥ तेभ्योऽनुज्ञामनुप्राप्य प्रतिगृह्य तथाऽऽशिषः। भोजयित्वा द्विजाञ्शक्त्या भुञ्जीत सह बन्धुभिः ॥ ३५ ॥

इति शातातपस्मृतौ कर्मविपाके साधारणविधिर्नाम प्रथमोऽध्यायः ॥ १ ॥

(अथ द्वितीयोऽध्यायः)।

ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठी प्रजायते। प्रायश्चित्तानि कुर्वीत स तत्पातकशान्तये ॥ १ ॥ चत्वारः कलशाः कार्याः पञ्चरत्नसमन्विताः। पञ्चपल्लवसंयुक्ताः सितवस्त्रेण संयुताः ॥ २ ॥ अश्वस्थानादिमृद्युक्तास्तीर्थोदकसुपूरिताः। कषायपञ्चकोपेता नानाविधफलान्विताः ॥ ३ ॥ सर्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं द्विजैः। रौप्यमष्टदलं पद्मं मध्यकुम्भोपरि न्यसेत् ॥ ४ ॥ तस्योपरि न्यसेद्देवं ब्रह्माणं च चतुर्मुखम्। पलार्धार्धप्रमाणेन सुवर्णेन विनिर्मितम् ॥ ५ ॥ अर्चयेत्पुरुषसूक्तेन त्रिकालं प्रतिवासरम्। यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधि ॥ ६ ॥ पूर्वादिषु च कुम्भेषु ब्राह्मणा ब्रह्मचारिणः। पठेयुः स्वस्ववेदांस्त ऋग्वेदप्रभृतीञ्शनैः ॥ ७ ॥ दशांशेन ततो होमो ग्रहशान्तिपुरःसरः। मध्यकुण्डे विधातव्यो घृताक्तैस्तिलैर्व्रीहिभिः ॥ ८ ॥ द्वादशाहमिदं कर्म समाप्य द्विजपुंगवैः। भद्रपीठे यजमानमभिषिञ्चेद्यथाविधि ॥ ९ ॥ ततो दद्याद्यथाशक्ति गोभूहेमतिलादिकम्। ब्राह्मणेभ्यस्तथा देयमाचार्याय यथाविधि ॥ १० ॥ आदित्या वसवो रुद्रा विश्वे देवा मरुद्गणाः। प्रीताः सर्वे व्यपोहन्तु मम पापं सुदारुणम् ॥ ११ ॥ इत्युदीर्य मुहुर्भक्त्या तमाचार्यं क्षमापयेत्। एवं विधाने विहिते श्वेतकुष्ठी विशुध्यति ॥ १२ ॥ कुष्ठी गोवधकारी स्यान्नरकान्तेऽस्य निष्कृतिः। स्थापयेद्घटमेकं तु पूर्वोक्तद्रव्यसंयुतम् ॥ १३ ॥ रक्तचन्दनलिप्ताङ्गं रक्तपुष्पाम्बरावृतम्। रत्नगर्भं तु तं कृत्वा स्थापयेद्दक्षिणां दिशम् ॥ १४ ॥ ताम्रपात्रं न्यसेत्तत्र तिलचूर्णेन पूरितम्। तस्योपरि न्यसेद्देवं हेमनिष्कमयं यमम्। यजेत्पुरुषसूक्तेन पापं मे शाम्यतामिति ॥ १५ ॥

१ ख. ग. °न्ति क्षिति°। २ ख. ग. निर्जलं। ३ ख. ग. °लिना ज°। ४ ख. ग °श्चित्तं प्रकु°। ५ क. घ. °शं दिशम्। रौ°। ६ ख ग. अर्चेत्पु°। ७ दिकुम्भेपु ततो ब्रा°। ८ घ. कुण्डेपु ऋत्विजो ब्र°। ९ क. घ. °णः। पारयेयु- स्वकान्वेदानृग्वे°। १० ख. ग. °लहेमभिः। ११ ख. ग. °वः। तत्र पी°। १२ ख. ग. °य निवेदयेत्। आ°। १३ ख. ग. रक्तकुम्भं तु। घ. रक्तग°। १४ क. घ. °लपूर्णे।

सामपारायणं कुर्यात्कलशे तत्र सामवित् । दशांशं सर्षपैर्हुत्वा पावमान्यभिषेचने ॥ १६ ॥ विहिते धर्मराजानमाचार्याय निवेदयेत् ॥ १७ ॥ यमो महिषमारूढो दण्ड-पाणिर्भयावहः । दक्षिणाशापतिर्देवो मम पापं व्यपोहतु ॥ १८ ॥ इत्युच्चार्य विसृज्यैनं मासं गोभक्तिमाचरेत् । ब्रह्मगोवधयोरेषा स्यात्तदभ्यासनिष्कृतिः ॥ १९ ॥ पितृहा चेतनाहीनो मातृहाऽन्धश्च जायते । नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥ २० ॥ प्राजापत्यानि कुर्वीत त्रिंशच्छाखाविधानतः । व्रतान्ते कारयेन्नावं सौवर्णीं पलसंख्यया ॥ २१ ॥ *कुम्भं रौप्यमयं चैव ताम्रपात्राणि पूर्ववत् । निष्कहेम्ना तु कर्तव्यो देवः श्रीवत्सलाञ्छनः ॥ २२ ॥ पट्टकूलेन संवेष्ट्य पूजयेत्तां विधानतः । नावं द्विजाय तां दद्यात्सर्वोपस्करसंयुताम् ॥ २३ ॥ वासुदेव जगन्नाथ सर्व भूताशयस्थित । पातकार्णवमग्नं मां तारय प्रणतार्तिहृत् ॥ २४ ॥ इत्युदीर्य प्रणम्याथ ब्राह्मणाय विसर्जयेत् । अन्येभ्योऽपि यथाशक्ति विप्रेभ्यो दक्षिणां+ददेत् ॥ २५ ॥ [×हतं वै बालकं सुप्तं स्वसा(सृ)जातं च मूलजम् । तेन संजायते वन्ध्या मृतवत्सा च नारकी ॥ २६ ॥ तत्पातकविनाशाय यथा कार्यं प्रयत्नतः । सौवर्णं बालकं कृत्वा दद्याद्दोलासमन्वितम् ॥ २७ ॥ अनड्वाहं ततो दद्याद्वस्त्रद्वयसमन्वितम् । तत्पातकविनिर्मुक्ता पश्चाद्भवति पुत्रिणी ॥ २८ ॥ पिता बन्दीकृतो येन निबद्धो लोहशृङ्खलैः । चिरं कष्टतरं भुक्त्वा मृतस्तत्रैव मन्दिरे ॥ २९ ॥ तेन पापेन पापात्मा पतितो रौरवार्णवे । नरकान्ते भवेच्चिह्नं पङ्गुर्मूको विचेतनः ॥ ३० ॥ तस्य पापविनिर्मुक्त्यै पिता कार्यो हिरण्मयः । तत्पिता रथमारूढो विप्राय प्रतिपादयेत् ] ॥ ३१ ॥ स्वसृघाती तु बधिरो नरकान्ते प्रजायते । मूको भ्रातृवधाच्चैव तस्येयं निष्कृतिः स्मृता ॥ ३२ ॥ तेन कार्यं विशुद्ध्यर्थं यतिचान्द्रायणव्रतम् । व्रतान्ते पुस्तकं दद्यात्सुवर्ण(र्ण)पलसंयुतम् ॥ ३३ ॥ इमं मन्त्रं समुच्चार्य ब्राह्मणं तं विसर्जयेत् । सरस्वति जगन्मातः शब्दब्रह्माधिदैवते ॥ ३४ ॥ दुष्कर्मकारिणं पापं पाहि मां परमेश्वरि । बालघाती च पुरुषो मृतवत्सः प्रजायते ॥ ३५ ॥ ब्राह्मणोद्वाहनं चैव कर्तव्यं तेन शुद्धये । श्रवणं हरिवंशस्य कर्तव्यं च यथाविधि ॥ ३६ ॥

---

* एतद्वचनं न क. घ पुस्तकयोः । + इदमार्षम् । × धनुश्चिह्नान्तगतग्रन्थः ख. ग. पुस्तकयोर्न विद्यते ।

१ क. °चनम् । वि° । २ ख. °सं सद्भक्ति° । ३ ख ग. °षा प्रायश्चित्तेन नि° । ४ ख. ग. °शच्चैव वि° । ५ ख. ग. °र्णपलसंमिताम् । कु° । ६ ख. ग. °ट्टवस्त्रेण सं° । ७ क. घ °शक्त्या वि° । ८ घ. °न सा जा° । ९ ख ग. °ता । सोऽपि पापविशुद्ध्यर्थं चरेच्चान्द्रा° । १० ग. घ. °वर्णफल° । ११ ख. ग. °र्मकरणात्पापात्पाहि ।

*महारुद्रजपं चैव कारयेच्च यथाविधि । षडङ्गैकादशै रुद्रै[1] रुद्रः समभिधीयते ॥ ३७ ॥ रुद्रैस्तथैकादशभिर्महारुद्रः प्रकीर्तितः । एकादशभिरेतैस्तु अतिरुद्रश्च कथ्यते ॥ ३८ ॥ जुहुयाच्च दशांशेन[2] पूर्वोक्ताज्याहुतीस्तथा । एकादश स्वर्णनिष्काः प्रदातव्याश्च[3] दक्षिणाः ॥ ३९ ॥ [4]पलान्येकादश तथा दद्याद्वित्तानुसारतः । अन्येभ्योऽपि यथाशक्ति[5] द्विजेभ्यो दक्षिणां दिशेत् ॥ ४० ॥ स्नापयेद्दंपती पश्चान्मन्त्रैर्वरुणदैवतैः । आचार्याय प्रदेयानि वस्त्रालंकरणानि च ॥ ४१ ॥ गोत्रहा[6] पुरुषः कुष्ठी निर्वंशश्चोपजायते । स च पापविशुद्ध्यर्थं प्राजापत्यशतं चरेत् ॥ ४२ ॥ व्रतान्ते मेदिनीं दद्याच्छृणुयादथ भारतम् । स्त्रीहन्ता चातिसारी स्यादश्व[7]त्थान्रोपयेद्दश ॥ ४३ ॥ + विप्रस्य बालकं हत्वा संहृतं[8] रत्नकाञ्चनम् । तेनैव जायते मृत्युः पुत्राणां च पुनः पुनः ॥ ४४ ॥ तेन कर्मविनाशाय कार्यं तेनैव यत्नतः । वृषो हैमेन संयुक्तो दातव्यो वस्त्रसंयुतः ॥ ४५ ॥ दद्याच्च शर्कराधेनुं भोजयेच्च शतं द्विजान् ॥ ४६ ॥ राजहा क्षयरोगी स्यादेषा तस्य विनिष्कृतिः । गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः ॥ ४७ ॥ ×घृतधेनुप्रदानेन तिलधेनुप्रदानतः । इत्यादिना क्रमेणैव क्षयरोगः प्रशाम्यति ॥ ४८ ॥ रक्तार्बुदो[9] वैश्यहन्ता जायते स[10] च मानवः । प्राजापत्यानि चत्वारि सप्त धान्यानि चोत्सृजेत् ॥ ४९ ॥ [11]दण्डापतानकयुतः शूद्रहन्ता भवेन्नरः । ⌣ प्राजापत्यं सकृच्चैवं दद्याद्धेनुं सदक्षिणाम् ॥ ५० ॥ कारूणां च वधे चैव रूक्षभावः प्रजायते । तेन तत्पापशुद्ध्यर्थं दातव्यो वृषभः सितः ॥ ५१ ॥ सर्वकार्येष्वसिद्धार्थो गजघाती भवेन्नरः । प्रासादं कारयित्वा तु गणेशप्रतिमां न्यसेत्[12] ॥ ५२ ॥ अथवा गणनाथस्य मन्त्रं लक्षमितं जपेत् । = दशांशहोमश्चापूपैर्गणशान्तिपुरःसरः ॥ ५३ ॥

---

* एतदर्धं न क. घ. पुस्तकयोः । + इत आरभ्य वस्त्रसंयुत इत्यन्तं वचनद्वयं न ख. ग. पुस्तकयो. । × एतदाद्यर्धचतुष्टयं न क. घ. पुस्तकयोः । ⌣ एतद्वचनं न क. घ. पुस्तकयोः । = एतदर्धस्थानेऽयं पाठः ख. ग. पुस्तकयो.—" कुलत्थशाकैः पुष्पैश्च गणशान्तिपुरःसरम् " इति ।

---

१ क. घ. °द्रै रुद्री समभिधीयते । एकादशभिरेताभी रुद्र. । २ ख. ग. °न दूर्वयाऽयुतसंख्यया । ए° । ३ ख. ग. °तव्याः सद° । ४ क. पदान्ये° । ५ क. घ. शक्त्या द्वि° । ६ क. °हमूत्रकृच्छ्री च प्रा° । घ. °हा सूतकी चैव प्रा° । ७ क. घ. °त्थान्स्थाप° । ८ क संहृतं । ९ ख. ग. °र्बुदी वै° । १० क. घ. स समाचरेत् । प्रा° । ११ क. घ. दण्डपातामययु° । १२ ख. ग. °त् । गणनाथस्य मन्त्रं तु मन्त्री ल° ।

उष्ट्रे विनिहते चैव जायते विकृतस्वरः। स तत्पापविशुद्ध्यर्थं दद्यात्कर्पूरजं फलम् ॥ ५४ ॥ अश्वे विनिहते चैव वक्रकण्ठः प्रजायते। शतं फलानि दद्याच्च चन्दनान्यघनुत्तये ॥ ५५ ॥ महिषीघातने चैव कृष्णगुल्मः प्रजायते। स्वशक्त्या च महीं दद्याद्रक्तवस्त्रद्वयं तथा ॥ ५६ ॥ खरे विनिहते चैव खररोमा प्रजायते। निष्कत्रयस्य प्रकृतिं प्रदद्याच्च हिरण्मयीम् ॥ ५७ ॥ तरक्षे निहते चैव जायते केकरेक्षणः। दद्याद्रत्नमयीं धेनुं स तत्पातकशान्तये ॥ ५८ ॥ सूकरे निहते चैव दन्तुरो जायते नरः। स दद्याच्च विशुद्ध्यर्थं घृतकुम्भं सदक्षिणम् ॥ ५९ ॥ हरिणे निहते खञ्जः शृगाले तु विपादकः। अश्वस्तेन प्रदातव्यः सौवर्णनिष्कसंमितः ॥ ६० ॥ अजाभिघातने चैव अधिकाङ्गः प्रजायते। अजा तेन प्रदातव्या विचित्रवस्त्रसंयुता ॥ ६१ ॥ उरभ्रे निहते चैव पाण्डुरोगः प्रजायते। कस्तूरिकापलं दद्याद्ब्राह्मणाय विशुद्धये ॥ ६२ ॥ मार्जारे निहते चैव जायते पिङ्गलोचनः। * तेन वैदूर्यरत्नानि दातव्यानि स्वशक्तितः ॥ ६३ ॥ जायते चक्रपादस्तु निहते शुनि मानवः। निष्कद्वयमितं दद्यान्नकुलं स विशुद्धये ॥ ६४ ॥ शशके निहते चैव कुब्जकर्णस्तु जायते। निष्कत्रयमितं दद्यात्स सुवर्णं विशुद्धये ॥ ६५ ॥ नकुलस्याभिहनने जायते वक्रमण्डलम्। शय्यां दद्यात्स विप्राय सोपधानां सतूलिकाम् ॥ ६६ ॥ शयालुः सर्पहा दद्याल्लोहदण्डं सदक्षिणम्। कुब्जो मूषकहा दद्यात्सप्तधान्यं सकाञ्चनम् ॥ ६७ ॥ मयूरघातने चैवं जायते कृष्णमण्डलम्। निष्कत्रयमितो देयस्तेन स्वर्णमयः शिखी ॥ ६८ ॥ हंसघाती भवेद्यस्तु तस्य स्याच्छ्वेतमण्डलम्। रू( रौ )प्यं पलत्रयमितं हंसं दद्याद्विशुद्धये ॥ ६९ ॥ कुक्कुटे निहते चैव वक्रनासः प्रजायते। पारावतं च सौवर्णं स दद्यान्निष्कमात्रकम् ॥ ७० ॥ शुकसारिकयोर्घाते नरः स्खलितवाग्भवेत्। ततश्च पुस्तकं दत्त्वा स विप्राय सदक्षिणम् ॥ ७१ ॥ बकघाती दीर्घनसो दद्याद्गां धवलप्रभाम्। काकघाती कर्णहीनो दद्याद्गामसितप्रभाम् ॥ ७२ ॥ हिंसाया निष्कृतिरियं ब्राह्मणे समुदाहृता। तदर्धार्धप्रमाणेन क्षत्रियादिष्वनुक्रमात् ॥ ७३ ॥ + क्षत्रियो मृगयां चक्रे मृ( कुर्वन्मृ )गान्निघ्नन्न दुष्यति। तस्य युद्धाङ्गणगतो येमोर्धस्तान्प्रमापयेत् ( ? ) ॥ ७४ ॥

* इत आरभ्य वक्रनासः प्रजायत इत्यन्तं न ख. ग. पुस्तकयोः। + इत आरभ्य सवत्सं हेमसंमितमित्यन्तमधिकं क. घ. पुस्तकयोः।

१ क. घ. °कृतिस्व°। २ ख. ग. °रकं फ°। ३ ख. ग. °क्रतुण्ड. प्र°। ४ ख. °तं फला°। ५ क. °द्यात्स चन्दनेऽस्य द्विजातये। ६ क. घ. °म्। चर°। ७ ख. ग. °रक्षौ नि°। ८ क. °ले नष्टपा°। ९ ख. ग. °र्णपलनिर्मितं। १० ख. ग. °व पीतपाणिः प्रजायते। ११ क. रूप्यत्रयपलमि°। १२ ख. ग °त्। सच्छात्रपु°। १३ क. °र्घकलोद°। १४ क. °याणामनु°।

गजादिकान्सप्तदश सप्तसप्तोत्तरान्क्रमात्। निघ्नन्नवाप्नोति नरश्चिह्नानि कथितानि च। मयूराद्यास्तथा सप्त चतुर्दशोत्तरान्क्रमात् ॥ ७५ ॥ गर्भपातकरी नारी स्वदेहे भोगलुप्तया (लब्धये)। सप्तजन्मावधिर्यावन्नरकान्ते हसन्तिका ॥ ७६ ॥ तत्पातकविनाशाय वालं कुर्याद्धिरण्मयम्। विधाय वालकं दद्यात्सवस्त्रं हेमसंमितम् ॥ ७७ ॥

इति शातातपस्मृतौ कर्मविपाके हिंसादिप्रायश्चित्तविधिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

=====

(अथ तृतीयोऽध्यायः)।

---

सुरापः श्यावन्दतः स्यात्प्राजापत्याष्टकं चरेत्। शर्करायास्तुला(लाः) सप्त दद्यात्पापविशुद्धये ॥ १ ॥ जपित्वा तु महारुद्रं दशांशं जुहुयात्तिलैः। ततोऽभिषेकः कर्तव्यो मन्त्रैर्वरुणदेवतैः ॥ २ ॥ मद्यपो रक्तपित्ती स्यात्स दद्यात्सर्पिषो घटम्[1]। मधुनोऽर्धघटं चैव सहिरण्यं विशुद्धये ॥ ३ ॥ अभक्ष्यभक्षणाच्चैव जायते कृमिकोदरः। यथावत्तेन शुद्ध्यर्थमुपोष्यं भीष्मपञ्चकम् ॥ ४ ॥ उदक्या वीक्षितं भुक्त्वा जायते कृमिलोदरः[2]। गोमूत्रयावकाहारस्त्रिरात्रेणैव शुध्यति ॥ ५ ॥ भुक्त्वा चास्पृश्यसंयुक्तो[3] जायते[4] कृमिलोदरः। त्रिरात्रं[5] वैष्णवं कृत्वा स (कुर्यात्स) तत्पातकशान्तये ॥ ६ ॥ श्वमार्जारादिभिः स्पृष्टं भुक्त्वा दुर्गन्धवान्भवेत्। पीत्वा त्रिरात्रं गोमूत्रं भोजयेद्ब्राह्मणत्रयम् ॥ ७ ॥ अनिवेद्य सुरादिभ्यो भुञ्जानो जायते नरः। भोजयेत्त्रिशतान्विप्रान्सहस्रं तु प्रमाणतः ॥ ८ ॥ परान्नविघ्नकरणादजीर्णमभिजायते। लक्षहोमं[6] प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥ ९ ॥ मन्दोदराग्निर्भवति सति द्रव्ये कदन्नदः। प्राजापत्यत्रयं कुर्याद्भोजयेच्च शतं द्विजान् ॥ १० ॥ विषदश्छर्दिरोगी स्याद्दद्याद्दश पयस्विनीः। मार्गहा पादरोगी यात्सोऽश्वदानं समाचरेत् ॥ ११ ॥ पिशुनो नरकस्यान्ते जायते श्वासकासवान्। घृतं तेन प्रदातव्यं सहस्रपलसंमितम् ॥ १२ ॥ धूर्तोऽपस्माररोगी स्यात्स तत्पापविशुद्धये। ब्रह्मकूर्चत्रयं[7] कृत्वा धेनुं दद्यात्सदक्षिणाम् ॥ १३ ॥

---

१ ख. ग. °पलन्तरं तथा। श°। २ क. घ. °मिलोदरः। गो°। ३ ख. ग. °संस्पृष्टं भ्रा°। ४ क. घ. °ते स कृ°शोद°। ५ ख. ग. °त्रं समुपोष्याथ स टत्पापात्प्रमुच्यते। परा°। ६ ख. ग. °मं स कु°। ७ ख. ग. °चेमयीं धेनुं दद्याद्वा च सद°।

शूली[1] परोपतापेन जायते तत्प्रमोचने[2]। सोऽन्नदानं प्रकुर्वीत तथा रुद्रं जपेन्नरः ॥१४॥ दावाग्निदायकश्चैव रक्तातीसारवान्भवेत्[3]। तेनोदपानं कर्तव्यं रोपणीयस्तथा वटः ॥ १५ ॥ सुरालये जले वाऽपि सकृद्विष्ठां करोति यः। गुदरोगो भवेत्तस्य पापरूपः सुदारुणः ॥ १६ ॥ मासं सुरार्चनेनैव गोदानद्वितयेन तु। प्राजापत्येन चैकेन शाम्यन्ति गुदजा रुजः ॥ १७ ॥ गर्भस्तम्भकरी नारी काकवन्ध्या प्रजायते। तया कार्यं प्रयत्नेन गोदानं विधिपूर्वकम् ॥ १८ ॥ गर्भपातनजा रोगा यकृत्प्लीहजलोदराः। तेषां प्रशमनार्थाय प्रायश्चित्तमिदं शुभम् ॥ १९ ॥ एतेषु दद्याद्विप्राय जलधेनुं विधानतः। सुवर्णरूप्यताम्राणां पलत्रयसमन्विताम् ॥ २० ॥ प्रतिमाभङ्गकारी च व्रणकायः प्रजायते। संवत्सरत्रयं सिञ्चेदश्वत्थं सोऽनुवासरम् ॥ २१ ॥ उद्वाहयेत्तमश्वत्थं स्वगृह्योक्तविधानतः। तत्र संस्थापयेद्देवं विघ्नराजं सुपूजितम् ॥ २२ ॥ दुष्टवादी खण्डितः स्यात्स वै दद्याद्द्विजातये। रूप्यं पलद्वयं दुग्धं घटद्वयसमन्वितम् ॥ २३ ॥ खल्वाटः[8] परनिन्दायां धेनुं दद्यात्सकम्बलाम्[9]। परोपहासकृत्काणः स गां दद्यात्समौक्तिकाम् ॥ २४ ॥ सभायां पक्षपाती च जायते पक्षघातवान्। निष्कत्रयमितं हेम स दद्यात्सत्यवर्तिनाम् ॥ २५ ॥

इति शातातपीये कर्मविपाके प्रकीर्णप्रायश्चित्तं नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

(अथ चतुर्थोऽध्यायः)।

---

कुलघ्नो नरकस्यान्ते जायते विप्रहेमहृत्। स तु स्वर्णशतं दद्यात्कृत्वा चान्द्रायणत्रयम् ॥१॥ औदुम्बरीताम्रचौरो नरकान्ते प्रजायते। प्राजापत्यं स कृत्वैवं ताम्रं पलशतं दिशेत् ॥ २ ॥ कांस्यहारी च भवति पुण्डरीकसमन्वितः। कांस्यं पलशतं दद्यादुपोष्य दिवसं नरः ॥ ३ ॥ रीतिहारी पिङ्गलाक्ष उपोष्य हरिवासरम्। रीतिं पलशतं दद्यादलंकृत्य द्विजं शुभम् ॥ ४ ॥ मुक्ताहारी च पुरुषो जायते पिङ्गमूर्धजः। मुक्ताफलशतं दद्यादुपोष्य स विधानतः ॥ ५ ॥ त्रपुहारी च पुरुषो जायते[14] श्लेष्मणः सदा। उपोष्य दिवसं सोऽपि दद्यात्पलशतं त्रपु ॥ ६ ॥ सीसहारी च पुरुषो जायते शीर्षरोगवान्। उपोष्य दिवसं दद्याद्घृतधेनुं विधानतः ॥ ७ ॥

---

१ क घ: लूलः। २ क. °त्प्रमार्जने। ३ ख. ग. °पि शकृन्मूत्रं क°। ४ ख ग. स्मृतम्। ५ ख. ग. च अप्रतिष्ठ. प्र°। ६ ख. ग. °त्थं प्रतिवा°। ७ क. घ. रूपत्रयं दुग्धावटत्रय°। ८ ख. ग. खल्लीटः। ९ ख. ग. °त्सकाञ्चनाम्। १० क. घ. °त्सभ्यव°। ११ क. घ. कुनखी न°। १२ क. घ. °म्। उद्व°। १३ ख. ग. °द्यादलंकृत्य द्विजातये। रिति°। १४ ख. °ते नेत्ररोगवान्। उ°।

दुग्धहारी च पुरुषो जायते बहुमूत्रकः । स दद्याद्दुग्धधेनुं च ब्राह्मणाय यथाविधि ॥ ८ ॥ दधिचौर्येण पुरुषो जायते मेदसा युतः । दधिधेनुः प्रदातव्या तेन विप्राय शुद्धये ॥ ९ ॥ मधुचोरस्तु पुरुषो जायते वस्तिरोगवान् । स दद्यान्मधुधेनुं च समुपोष्य द्विजातये ॥ १० ॥ इक्षोर्विकारहारी च भवेदुदरगुल्मवान् । गुडधेनुः प्रदातव्या तेन तद्दोषशान्तये ॥ ११ ॥ लोहहारी च पुरु[1]षो जायते बर्ब[2]रोगवान् । लोहं पलशतं दद्यादुपोष्य स तु वासरम् ॥ १२ ॥ तैलचौरस्तु पुरुषो भवेत्कण्ड्वादिपीडितः । उपोष्य स तु विप्राय दद्यात्तैलघटद्वयम् ॥ १३ ॥ आमान्नहरणाच्चैव दन्तहीनः प्रजायते । स दद्या[3]दश्विनौ हेमनिष्कद्वयविनिर्मितौ ॥ १४ ॥ पक्वान्नहरणाच्चैव जिह्वारोगः प्रजायते । गायत्र्याः स जपेल्लक्षं दशांशं जुहुया[4]द्यवैः ॥ १५ ॥ फलहारी च पुरुषो जायते व्रणिताङ्गुलिः । नानाफलानामयुतं प्रदद्यात्स द्विजन्मने ॥१६॥ ताम्बूलहरणेनैव श्वेतौष्ठः संप्रजायते । * सदक्षिणं प्रदद्याच्च विद्रुमस्य द्वयं वरम् ॥ १७ ॥ शाकहारी च पुरुषो जायते नीललोचनः । ब्राह्मणाय प्रदद्याद्वै महानीलमणिद्वयम् ॥ १८ ॥ कन्दमूलस्य हरणाद्ध्रस्वपाणिः प्रजायते । देवतायतनं कार्यमुद्यानं तेन शक्तितः ॥ १९ ॥ सौगन्धिकस्य हरणाद्दुर्गन्धाङ्गः प्रजायते । स लक्षमेकं पद्मानां जुहुयाज्जातवेदसि[5] ॥ २० ॥ क्षीरहारी च पुरुषो श्वेतपाणिः प्रजायते । स दद्या[6]द्ब्राह्मणायाथ काश्मीरजपल[7]त्रयम् ॥ २१ ॥ विद्यापुस्तकहारी च किल मूकः प्रजायते । न्यायेतिहासं दद्याच्च ब्राह्मणाय सदक्षिणम् ॥ २२ ॥ वस्त्रहा[8]री च शीतालुः स प्रदद्यात्प्रजापतिम् । हेमनिष्कमितं चैव वस्त्रयुग्मं द्विजायते ॥ २३ ॥ ऊर्णाहारा लोमशः स्यात्स दद्यात्कम्बलान्वितम् । स्वर्णनिष्कमितं हेम वा[9]ह्निं दद्याद्द्विजातये ॥ २४ ॥ पट्टसूत्रस्य हरणान्निर्लोमा जायते नरः । तेन धेनुः प्रदातव्या तद्वर्णा च द्विजन्मने ॥ २५ ॥ औ[10]षधीहरणे चैव सू[11]र्यावर्तश्च जायते । सूर्यायार्घ्यः प्रदातव्यो मासं दद्यात्स काञ्चनम् ॥ २६ ॥ रत्नवस्त्रप्रवालादिहारी स्याद्रक्तवातवान् । सवत्सां महिषीं दद्या[12]त्पद्मरागसमन्विताम् ॥ २७॥ विप्र[13]रत्नस्य हारी च अनपत्यः प्रजायते । तेन कार्यं विशुद्ध्यर्थं महारुद्रजपादिकम् ॥ २८ ॥ मृतवत्सोदितः सर्वो विधिरत्र विधीयते । दशांशहोमः कर्तव्यः पालाशेन यथाविधि ॥ २९ ॥

---

* एतदर्धस्थानेऽयं पाठ. क. घ. पुस्तकयो.–"दक्षिणां संप्रदद्याच्च सविद्रुम यथाद्वयम्" इति ।

---

१ ख. ग ते मदवान्यत । २ ख. ग. °रुपः कर्बूराङ्गः प्रजायते । लो° । ३ क. घ. दद्यादश्विनं हेमनिष्कद्वयसमन्वितम् । प° । ४ ख. ग. °यात्तिलै. । फ° । ५ ख ग. °सि । दारुहारी च पुरुषः स्विन्नपा° । ६ ख. ग. °द्याद्द्विजपे शुद्धौ का° । ७ ख. ग °लद्वय° । ८ ख. ग. °री भवेत्कुष्ठी संप्र° । ९ क ग. °व्या विशुद्ध्यर्थं द्वि° । १० ख. ग. °षधस्यापह° । ११ क घ. सूर्यवातश्च । १२ ख. ग. °द्यान्मणिरा° । १३ ख. ग. °रत्नापहारी चाप्यन° ।

* अनड्वान्वस्त्रसंयुक्तः पलार्धार्धं च काञ्चनम्। निर्धनेन प्रकर्तव्यं द्विजस्य मुच्यते क्षणात्॥ ३०॥ ब्राह्मणस्य धनं लोभाद्यो नार्पयति मूढधीः। निर्वंशो जायते तस्य दद्याद्दश पयस्विनीः॥ ३१॥ देवस्वहरणाच्चैव[1] जायते विविधो ज्वरः। ज्वरो महाज्वरश्चैव रौद्रो वैष्णव एव च॥३२॥ ज्वरे रुद्रं जपेत्कर्णे महारुद्रं महाज्वरे। अतिरौद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत्॥ ३३॥ नानाविधद्रव्यचोरो जायते ग्रहणीयुतः[2]। तेनान्नोदकवस्त्राणि हेम देयं च शक्तितः॥ ३४॥ =माषतिललोहहारी गजचर्मः(र्मा) प्रजायते। माषद्वयमितां दद्याद्धेनुं द्विपतिलान्विताम्॥ ३५॥

इति शातातपीये कर्मविपाके स्तेयप्रायश्चित्तं नाम

चतुर्थोऽध्यायः॥ ४॥

---

(अथ पञ्चमोऽध्यायः)।

---

मातृगामी भवेद्यस्तु लिङ्गं तस्य विनश्यति। चाण्डालीगमने चैव हीन[3]कोषः प्रजायते॥ १॥ तस्य प्रतिक्रियां कर्तुं कुम्भमुत्तरतो न्यसेत्। कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम्॥ २॥ तस्योपरि न्यसेद्देवं कांस्यपात्रे धनेश्वरम्। सुवर्णनिष्कषट्केन निर्मितं नरवाहनम्॥ ३॥ यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणम्। अथर्ववेदविद्विप्रो[4] ह्याथर्वणं समाचरेत्॥ ४॥ सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसंख्यया। दद्याद्विप्राय संपूज्य निष्पापः[5] स्यामिति ब्रुवन्॥ ५॥ निधीनामधिपो देवः शंकरस्य प्रियः सखा। सौम्याशाधिपतिः श्रीमान्मम पापं व्यपोहतु॥ ६॥ इमं मन्त्रं समुच्चार्य आचार्याय यथाविधि। दद्या[7]द्देवं हीनको[8]षे लिङ्गनाशे विशुद्धये॥ ७॥ गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते। तेनापि निष्कृतिः कार्या शास्त्रदृष्टेन वर्त्मना॥ ८॥ स्थापयेत्कुम्भमेकं तु पश्चिमायां शुभे दिने। नीलवस्त्रसमाच्छन्नं नीलमाल्यविभूषितम्॥ ९॥ तस्योपरि न्यसे[10]द्देवं ताम्रपात्रे प्रचेतसम्। सुवर्णनिष्कषट्केन निर्मितं यादसां पतिम्॥ १०॥ यजेत्पुरुषसूक्तेन वरुणं विश्वरूपिणम्। सामविद्ब्राह्मणस्तत्र सामवेदं स[11]मापयेत्॥ ११॥ सुवर्णपुत्रिकां कृत्वा निष्कत्रिंशतिसंख्यया। दद्याद्द्विप्रा[12]यँ निष्पापं(पः) संपूज्य स्यामिति ब्रुवन्॥ १२॥

---

* इत आरभ्य पयस्विनीरित्यन्तग्रन्थः क. घ. पुस्तकयोर्न। = एतद्वचनं ख. ग. पुस्तकयोर्न।

---

१ क. घ. °पेत्काम्यामहारु°। २ ख ग. ग्रहिणी°। ३ क. घ. °नकुष्ठं च जा°। ४ क. घ. °द्विप्रमथ°। ५ ख. ग. समापयेत्। ६ ख- °ष्पापोऽहमि°। ७ क. घ. °द्यादेव हीनकुष्ठे लि°। ८ ग. °कोशे लि°। ९ क. घ. °माल्यादिभू°। १० क. घ. °सेल्लोहपात्रे देयं प्र°। ११ ख. ग. °माचरेत्। १२ ख. ग. °य संपूज्य निष्पापोऽहमि°।

यादसामधिपो देवो विश्वेषामपि पावनः । संसाराब्धौ कर्णधारो वरुणः पावनोऽस्तु मे ॥ १३ ॥ इमं मन्त्रं समुच्चार्य आचार्याय यथाविधि । दद्याद्देव[1]मलंकृत्य मूत्रकृच्छ्रप्रशान्तये ॥ १४ ॥ स्वसुतागमने चैव रक्तकुष्ठं प्रजायते । भगिनीगमने चैव पीतकुष्ठं प्रजायते ॥ १५ ॥ तस्य प्रतिक्रियां कर्तुं पूर्वतः कलशं न्यसेत् । पीतवस्त्रसमाच्छन्नं पीतमाल्यविभूषितम् ॥ १६ ॥ तस्योपरि न्यसेत्स्वर्णपात्रे देवं सुरेश्वरम् । सुवर्णनिष्कषट्केन निर्मितं वज्रधारिणम् ॥ १७ ॥ यजेत्पुरुषसूक्तेन वासवं विश्वरूपिणम् । *बह्वृचस्तत्र कलश ऋग्वेदं च समापयेत् ॥ १८ ॥ सुवर्णपुत्रिकां कृत्वा सुवर्णदशकेन तु । दद्याद्विप्राय संपूज्य निष्पापः स्यामिति ब्रुवन् ॥ १९ ॥ देवानामधिपो देवो[3] वज्री[4] कुलिशकेतनः । शतयज्ञः सहस्राक्षः पापं मम निकृन्ततु ॥ २० ॥ इमं मन्त्रं समुच्चार्य आचार्याय यथाविधि । दद्याद्देवं सहस्राक्षं स्वपापस्यापनुत्तये ॥ २१ ॥ भ्रातृभार्याभिगमनाद्गलत्कुष्ठं प्रजायते ×। तेन कार्यं विशुध्यर्थं प्रागुक्तस्यार्धमेव हि ॥ २२ ॥ दशांशहोमः कर्तव्यो घृताक्तैश्च तिलैः क्रमात् ॥२३॥ स्वाम्यङ्गनाभिगमने जायते दद्रुमण्डलम् । कृत्वा लोहमयीं धेनुं पलषष्टिप्रमाणतः ॥ २४ ॥ कार्पासभाण्डसंयुक्तां कांस्यदोहां सवत्सिकाम् । [ = दद्याद्विप्राय च सकृत्पापं मे क्षीयतामिति ॥ २५ ॥ विश्वस्तभार्यागमने गजचर्म प्रजायते । तस्य पापविनाशाय प्रायश्चित्तं विधीयते ॥ २६ ॥ कृत्वा रौप्यमयीं धेनुं निष्कानि विश्वसंख्यया । तस्य पापस्य नाशाय च्छत्रोपानहसंयुताम् ] ॥ २७ ॥ दद्याद्विप्राय विधिवदिमं मन्त्रमुदीरयेत् । सुरभिर्वैष्णवी माता मम पापं व्यपोहतु ॥ २८ ॥ मातुः सपत्नीगमने जायते चाश्मरीगदः । स तु पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥२९॥ दद्याद्विप्राय विदुषे मधुधेनुं यथोदिताम् । तिलद्रोणशतं चैव हिरण्येन समन्वितम् ॥ ३० ॥ पितृष्वस्रभिगमनाद्दक्षिणां[10](ना)शव्रणी भवेत् । तेनापि निष्कृतिः कार्या अजादानेन यत्नतः[11] ॥ ३१ ॥ मातुलान्यां तु गमने पृष्ठकुब्जः[12] प्रजायते । कृष्णाजिनप्रदानेन प्रायश्चित्तं समाचरेत् ॥ ३२ ॥

---

* एतदर्धस्थानेऽयं पाठ. ख. ग. पुस्तकयो. "यजुर्वेदं तत्र साम ऋग्वेदं च समाचरेत्" इति । × इत उत्तरं "स्ववधूगमने चैव कृष्णकुष्ठं प्रजायते" इति ख ग. पुस्तकयोः । = एतच्चिह्नान्तर्गतं न ख. ग. पुस्तकयोः ।

---

१ क. °द्यादेयमलंकृत्य मम पापप्र° । २ ख. ग. °ष्पापोऽहमि° । ३ क. घ. °वो विष्णुः कु° । ४ ख. ग °ज्री विष्णुनिके° । ५ क. घ. °न. । धृतवज्र. श° । ६ ख. ग. °म. सर्वत्र घृताक्तैः क्रियते तिलैः । यदगम्याभिगमनाज्जायते ध्रुवम° । ७ क. घ. °भारसंयुक्ता सप्तधान्येन संयुता । द° । ८ ख. ग. °रभी वैष्ण° । ९ ख. ग. °तु । तपस्विनी सद्गम° । १० क. घ. °क्षिणाद्गो व्र° । ११ ख. ग. शक्तितः । १२ क. घ. पृष्ठकुष्ठं °प्र° ।

मातृष्वस्राभिगमने वामाङ्के व्रणवान्भवेत् । तेनापि निष्कृतिः कार्या सम्यग्दासीप्रदानतः ॥३३॥ [ * पितृव्यपत्नीगमनात्कटिकुष्ठं प्रजायते। निष्कृतिस्तेन कर्तव्या कन्यादानेन यत्नतः ॥३४॥ यदगम्य( म्या )सु तं( सं )योगात्प्रायश्चित्तमुदीरितम् । तदेव मुनिभिः प्रोक्तं नियतं तत्सुत( ता )स्वपि ] ॥ ३५ ॥ मृतभार्याभिगमने मृतभार्यः प्रजायते । स तु पापविशुद्ध्यर्थं द्विजमेकं विवाहयेत् ॥ ३६ ॥ सगोत्रस्त्रीप्रसङ्गेन जायते च भगंदरः । तेनापि निष्कृतिः कार्या महिषीदानयत्नतः ॥ ३७ ॥ तपस्विन्यभिगमने प्रमेही जायते नरः । मासं रुद्रजपः कार्यो दद्याच्छक्त्या च दक्षिणाम् ॥ ३८ ॥ दीक्षितस्त्रीप्रसङ्गेन जायते दुष्टरक्तदृक् । स पातकविशुद्ध्यर्थं प्राजापत्यानि षट् चरेत् ॥ ३९ ॥ [ + प्राणनाथं परित्यज्य देवरं सेवते ध्रुवम् । गुदमध्ये भवेद्व्याधिरशना वा म( मु )दुःसह( हा ) । तया कार्यं प्रयत्नेन गोदानं हेमसंमितम् ॥ ४० ॥ गोविन्दगोपीजनवल्लभेशं( शः ) कंसासुरघ्ना त्रि( घ्नस्त्रि )दशेष(श)वन्द्या ( न्द्यः ) । गोदानतृप्तं ( प्तः ) कुरुते दयालुरीशाननाथाद( न्क्ष )पितारिवर्गः (र्गान्) ॥ ४१ ॥ श्रोत्रियस्त्रीप्रसङ्गेन जायते नासिकाव्रणी। आचरेत्स विशुद्ध्यर्थं प्राजापत्यचतुष्टयम् ] ॥ ४२ ॥ स्वजातिजायागमने जायते हृदयव्रणी । स पापस्य विशुद्ध्यर्थं प्राजापत्यद्वयं चरेत् ॥ ४३ ॥ धात्र्युत्तरस्त्रीगमनाज्जायते मस्तकव्रणः । स पातकविशुद्ध्यर्थं प्राजापत्यं समाचरेत् ॥ ४४ ॥ पशुयोनौ च गमने मूत्रघातः प्रजायते । तिलपात्रद्वयं चैव दद्यादात्मविशुद्धये ॥ ४५ ॥ अश्वयोनौ च गमनाद्भुजस्तम्भः प्रजायते । सहस्रकलशैः स्नानं मासं कुर्याच्छिवस्य च ॥ ४६ ॥ एते दोषा नराणां स्युर्नरकान्ते न संशयः । स्त्रीणामपि भवन्त्येते तत्तत्पुरुषसंगमात् × ॥४७॥ आसुरी असती दासी चर्मकारी च नर्तकी । रजकीभिः समं भोगात्पतन्ति पितृभिः सह ॥ ४८ ॥ उपोष्यैकादशीं शुद्धां जागरं कारयेन्निशि । तस्य पापविशुद्ध्यर्थं दद्यादेकां पयस्विनीम् ॥ ४९ ॥

इति श्रीशातातपीये कर्मविपाकेऽगम्यागमनप्रायश्चित्तं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

( अथ षष्ठोऽध्यायः )।

अश्वसूकरशृङ्ग्यद्रिद्रुमादिशकटेन च । भृग्वग्निदारुशस्त्राश्मविषोद्बन्धनजैर्मृताः ॥ १ ॥

---

* एतच्चिह्नान्तर्गतं न ख. ग. पुस्तकयोः । + एतच्चिह्नान्तर्गतग्रन्थः ख. ग. पुस्तयोर्न विद्यते । × इतः परं वचनद्वयं न ख. ग. पुस्तकयोः ।

---

१ ख. ग. °ग्दासप्र° । २ क. घ. °पि । पितृभार्याभिगामी च मृ° । ३ ख. ग. °ते । तत्पातकवि° । ४ क. घ. °र्था मेपदानेन । ५ ख. ग. °स्विनीप्रसङ्गेन प्र° । ६ ख. ग. काञ्चनम् । ७ ख घ. °पत्यद्वयं म° । ८ घ. °शासना° । ९ क. घ. °व्रणः । स । १० ख. ग. मूत्राघा° । ११ ख. ग. °नाद्गुदस्त° । १२ ख. ग. °कमलस्ना° । १३ क. घ. °रक्तद्वृक्षशृङ्गीशकटघातिनः । भृ° ।

व्याघ्रो[1]द्विगजभूपालचौरवैरिवृकाहताः । काष्ठशल्यमृता ये च शौचसंस्कारवर्जिताः ॥२॥ विषूचिकान्नकवल[2]दवातीसारतो मृताः । शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये ॥ ३ ॥ अस्पृश्या अपवित्राश्च पतिताः [3]पुत्रवर्जिताः[4] । ये च त्रिंशत्प्रकारैश्च नाऽऽप्नुवन्ति गतिं मृताः ॥४॥ पित्राद्याः पिण्डभाजः स्युस्त्रयो लेपभुजस्तथा । ततो नान्दीमुखाः प्रोक्तास्त्रयोऽप्यश्रुमुखास्त्रयः ॥५॥[5] द्वादशैते पितृगणास्तर्पिताः संततिप्रदाः । गतिहीनाः सुतादीनां संततिं नाशयन्ति ते ॥ ६ ॥ दश व्याघ्रादिनिहता गर्भे निघ्नन्त्यमी क्रमात् । द्वादशास्त्रादिनिहता आकर्षन्ति च बालकम् ॥ ७ ॥ विषादिनिहता घ्नन्ति दशसु द्वादशस्वपि । वर्षैकबालकं कुर्यादनपत्योऽनपत्यताम् ॥ ८ ॥ व्याघ्रेण हन्यते जन्तुः कुमारीगमनेन च । विषदश्चैव सर्पेण गजेन नृप[6]दुःखकृत् ॥ ९ ॥ राज्ञा राजकुमारघ्नश्चौरेण पशुहिंसकः । वैरिणा मित्रभेदी च वकवृत्तिर्वृकेण तु ॥ १० ॥ गुरुघाती च शय्यायां मत्सरी शौचवर्जितः । द्रोही संस्काररहितः शुना निक्षेपहारकः ॥ ११ ॥ नरो विहन्यतेऽरण्ये सूकरेण च पाशिकः । [7]कृमिभिः कृत्तवासाश्च कृमिणा च निकृन्तनः ॥ १२ ॥ शृङ्गिणा शंकरद्रोही शकटेन च सूचकः । भृगुणा[8] मेदिनीचौरो वह्निना यज्ञहानिकृत् ॥ १३ ॥ दवेन दक्षिणाचोरः शस्त्रेण श्रुतिनिन्दकः । अश्मना द्विजनिन्दाकृद्विषेण कुमतिप्रदः ॥ १४ ॥ उद्बन्धनेन हिंस्रः स्यात्सेतुभेदी जलेन तु । * द्रुमेण राजदन्तिहृदतीसारेण लौहहृत् ॥ १५ ॥ × गोग्रासहृद्विषूचिकया कवलेन द्विजान्नहृत् । भ्रमेण राजपत्नीहृदतिसारेण निष्क्रियः ॥१६॥ शाकिन्याद्यैश्च म्रियते[9] स्वदर्पाकार्यकारकः । अन[10]ध्यायेष्वधीयाना म्रियन्ते विद्युता तथा ॥ १७ ॥ अस्पृ[11]श्यस्पर्शसङ्गी च वान्तमाश्रित्य शास्त्रहृत् । पतितो[12]ऽपत्यविक्रेता[13] अनपत्यो द्विजान्नहृत् ॥ १८ ॥ अथ तेषां क्रमेणैव प्रायश्चित्तं विधीयते[14] । = विक्रेता घातकश्चैव द्वावेतौ तुलया वृतौ ॥ १९ ॥ घातकश्चैव हन्यायां रोष्णि रोष्णि (?) च विक्रयी । कारयेन्निष्कमात्रं तु पुरुषं प्रेतरूपिणम् ॥ २० ॥

---

* एतदर्धं न विद्यते क. घ. पुस्तकयोः । × इतः प्रभृति निष्क्रिय इत्यन्तं न विद्यते ख. ग. पुस्तकयोः । = एतदाद्यर्धद्वयं न विद्यते ख. ग. पुस्तकयोः ।

---

१ ख. °घ्रादिग° । २ क. घ. °लभ्रमतोऽसा° । ३ क. घ. पुण्यव° । ४ ख ग. °ताः । पञ्चत्रिं° । ५ क. घ. हि । ६ ख. ग. °पदुष्टकृ° । ७ क. कृत्तिभिः कृतनाशश्च दमेन च निकृन्नरः । शृ° । ८ क. घ. °त् । दारुणा चौरोऽग्ने° । ९ ख. ग. °ते सदर्पकार्य° । १० क. ख. °येऽप्यधीयानो म्रियते वि° । ११ क. घ. °स्पृश्यास्पृश्यवह्नी च भ्रान्तिहृद्दुष्टशास्त्रकृत् । १२ ख. ग. °तो मदवि° । १३ ख. ग. °ताऽनपत्यो द्वि° जवसहृ° । १४ क. घ. विशुद्धये । वि° ।

व्याघ्रोहिगजभूपालचौरवैरिवृकादहताः । काष्ठशल्यमृता ये च शौचसंस्कारवर्जिताः ॥२॥ विषूचिकान्नकवलदवातीसारतो मृताः । शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये ॥ ३ ॥ अस्पृश्या अपवित्राश्च पतिताः पुत्रवर्जिताः । ये च त्रिंशत्मकारैश्च नाऽऽमुवन्ति गतिं मृताः ॥४॥ पित्राद्याः पिण्डभाजः स्युस्त्रयो लेपभुजस्तथा । ततो नान्दीमुखाः मोक्तास्त्रयोऽप्यश्रुमुखास्त्रयः ॥५॥ द्वादशैते पितृगणास्तर्पिताः संततिप्रदाः । गतिहीनाः सुतादीनां संततिं नाशयन्ति ते ॥ ६ ॥ दश व्याघ्रादिनिहता गर्भं निघ्नन्त्यमी क्रमात् । द्वादशास्त्रादिनिहता आकर्षन्ति च बालकम् ॥ ७ ॥ विषादिनिहता घ्नन्ति दशसु द्वादशस्वपि । वर्षैकबालकं कुर्यादनपत्योऽनपत्यताम् ॥ ८ ॥ व्याघ्रेण हन्यते जन्तुः कुमारीगमनेन च । विषदश्चैव सर्पेण गजेन नृपदुःखकृत् ॥ ९ ॥ राज्ञा राजकुमारघ्नश्चौरेण पशुहिंसकः । वैरिणा मित्रभेदी च वकवृत्तिर्वृकेण तु ॥ १० ॥ गुरुघाती च शय्यायां मत्सरी शौचवर्जितः । द्रोही संस्काररहितः शुना निपेक्षहारकः ॥ ११ ॥ नरो विहन्यतेऽरण्ये सूकरेण च पाशिकः । कृमिभिः कृत्तवासाश्च कृमिणा च निकृन्तनः ॥ १२ ॥ शृङ्गिणा शंकरद्रोही शकटेन च सूचकः । भृगुणा मेदिनीचौरो वह्निना यज्ञहानिकृत् ॥ १३ ॥ दवेन दक्षिणाचोरः शस्त्रेण श्रुतिनिन्दकः । अश्मना द्विजनिन्दाकृद्विषेण कुमतिप्रदः ॥ १४ ॥ उद्बन्धनेन हिंस्रः स्यात्सेतुभेदी जलेन तु । * द्रुमेण राजदन्तिहृदतीसारेण लौहहृत् ॥ १५ ॥ × गोग्रासहृद्विषूचिकया कवलेन द्विजान्नहृत् । भ्रमेण राजपत्नीहृदतिसारेण निष्क्रियः ॥१६॥ शाकिन्याद्यैश्च म्रियते स्वदर्पाकार्यकारकः । अनध्यायेष्वधीयाना म्रियन्ते विद्युता तथा ॥ १७ ॥ अस्पृश्यस्पर्शसङ्गी च वान्तमाश्रित्य शास्त्रहृत् । पतितोऽपत्यविक्रेता अनपत्यो द्विजान्नहृत् ॥ १८ ॥ अथ तेषां क्रमेणैव प्रायश्चित्तं विधीयते । = विक्रेता घातकश्चैव द्वावेतौ तुलया वृतौ ॥ १९ ॥ घातकश्चैव हत्यायां रोष्णि रोष्णि (?) च विक्रयी । कारयेन्निष्कमात्रं तु पुरुषं प्रेतरूपिणम् ॥ २० ॥

* एतदर्धं न विद्यते क. घ. पुस्तकयोः । × इत. प्रभृति निष्क्रिय इत्यन्तं न विद्यते ख. ग. पुस्तकयोः । = एतदाद्यर्धद्वयं न विद्यते ख. ग. पुस्तकयो. ।

१ ख. °घ्राादिग° । २ क. घ. °लत्रमतोऽसा° । ३ क. घ. पुण्यव° । ४ ख ग. °ताः । पञ्चत्रिं° । ५ क. घ. हि । ६ ख. ग. °पदुष्कृ° । ७ क. कृत्तिभिः कृतनाशश्च दमेन च निकृन्तरः । शृ° । ८ क. घ. °त् । दारुणा चौरोऽद्रे° । ९ ख. ग. °ते सदर्पकार्य° । १० क. ख. °येऽप्यधीयानो म्रियते वि° । ११ क. घ. °स्पृश्यास्पृश्यवङ्गी च भ्रान्तिहृद्दुष्टशास्त्रकृत् । १२ ख. ग. °तो मदवि° । १३ ख. ग. °ताऽनपत्यो द्वि° °पहृ° । १४ क. घ. विशुद्धये । वि° ।

चतुर्भुजं दण्डहस्तं महिषासनसंस्थितम्। पिष्टैः कृष्णतिलैः कुर्यात्पिण्डं प्रस्थप्रमाणतः॥ २१॥ मध्वाज्यशर्करायुक्तं स्वर्णदण्डेन संयुतम्। अकालमूलं कलशं पञ्चपल्लवसंयुतम्॥ २२॥ कृष्णवस्त्रसमाच्छन्नं सर्वौषधिसमन्वितम्। तस्योपरि न्यसे[2]द्देवं पात्रं धान्यफलैर्युतम्॥ २३॥ सप्तधारं च कलशं तत्रै तत्संमुखं न्यसेत्। कुम्भोपरि च विन्यस्य पूजयेत्प्रेतरूपिणम्॥ २४॥ कुर्यात्पुरुषसूक्तेन प्रेत्यहं दुग्धतर्पणम्। षडङ्गांश्च जपेद्रुद्रान्कलशे तत्र वेदवित्॥ २५॥ यमसूक्तेन कुर्वीत[6] जपपूजादिकं तथा। गायत्र्याश्चैव कर्तव्यो जपः स्वात्मविशुद्धये॥ २६॥ ग्रहशान्तिकपूर्वं च दशांशं जुहुयात्तिलैः। अज्ञातनामगोत्राय प्रेताय सतिलोदकम्॥ प्रदद्यात्पितृतीर्थेन पिण्डमन्त्रमुदीरयेत्॥ २७॥ इमं तिलमयं पिण्डं मधुसर्पिःसमन्वितम्। ददामि तस्मै प्रेताय यः पीडां कुरुते मम॥ २८॥ सजलान्कृष्णकलशांस्तिलपात्रसमन्वितान्। द्वादश प्रेतमुद्दिश्य दद्यादेकं च विष्णवे॥ २९॥ ततोऽभिषिञ्चेदाचार्यो दंपती कलशोदकैः। शुची रक्ताम्बरधरो मन्त्रैर्वरुणदेवतैः॥ ३०॥ यजमानस्ततो दद्यादाचार्याय स दक्षिणाम्। ततो नारायणबलिः कर्तव्यः शास्त्रनिश्चयैः॥ ३१॥ एष साधारणविधिरगतीनामुदाहृतः। विशेषस्तु पुनर्ज्ञेयो व्याघ्रादिनिहतेष्वपि॥३२॥ व्याघ्रेण निहते प्रेते परकन्यां विवाहयेत्। सर्पदंशे नागबलिर्देयः सर्वेषु काञ्चनम्॥ ३३॥ चतुर्निष्कमितं हेमगजं दद्याद्गजैर्हते। राज्ञा विनिहते दद्यात्पुरुषं तु हिरण्मयम्॥ ३४॥ चौरेण निहते धेनुं वैरिणा निहते वृषम्। वृकेण निहते दद्याद्यथाशक्ति च काञ्चनम्॥ ३५॥ शय्यामृते प्रदातव्या शय्या तूलीसमन्विता। निष्कमात्रं सुवर्णं तु विष्णुना संमधिष्ठिता॥ ३६॥ शौचहीने मृते चैव द्विनिष्कस्वर्णजं हरिम्। संस्कारहीने च मृते कुमारमुपवीतयेत्॥ ३७॥ ×शुना हते च निक्षेपं स्थापयेन्निजशक्तितः। शूकरेण हते दद्यान्माहिषं दक्षिणान्वितम्॥ ३८॥ कृमिभिश्च मृते दद्याद्गोधूमान्नं द्विजायते। शृङ्गिणा च हते दद्याद्वृषभं वस्त्रसंयुतम्॥ ३९॥ शकटेन मृते दद्याद्द्रव्यं सोपस्करान्वितम्। भृगुपाते मृते चैव प्रदद्याद्धान्यपर्वतम्॥४०॥ अग्निना निहते कार्यमग्निदानं स्वशक्तितः। दारुणा निहते चैव कर्तव्या सदने सभा॥ ४१॥

× एतदर्धस्थान एतद्वचनं क. घ. पुस्तकयोः—"निष्कत्रयं स्वर्णयुतं दद्यादक्षहताहतौ। पुनर्हरेत्क्षेत्रपालं स्थापयेन्निजशक्तितः" इति।

१ ख. ग. °णकुण्डलसं°। २ क. घ. °सेद्वंशपा°। ३ ख. ग °धान्यं तु सफलं तत्र। ४ क. घ °त्र प्रासं°। ख. ग. °तत्सफलं न्य°। ५ क. घ. अमृतं। ६ ख. ग. °त यमपू°। ७ क. घ. °दशे प्रेतनिर्देशं द°। ८ ख. ग. शुचिर्नीरायुधधरो। ९ ख. ग. °श्चयात्। ए°। १० क घ. व्याघ्रेण नि°। ११ क घ. सार्पि. सकाञ्चनः। च°। १२ ख. ग. °वर्णस्य वि°। १३ क. घ. सह तिष्ठता। १४ ख. ग. °मारं च विवाहये°। १५ क. घ. °धाट्ट°। १६ ख. ग. °ते दद्यादुपानहं स्वशक्तितः। दवेन नि°।

व्याघ्रोद्विगजभूपालचौरवैरिवृकाहताः । काष्ठशल्यमृता ये च शौचसंस्कारवर्जिताः ॥२॥ विषूचिकान्नकवलदवातीसारतो मृताः । शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये ॥ ३ ॥ अस्पृश्या अपवित्राश्च पतिताः पुत्रवर्जिताः । ये च त्रिंशत्प्रकारैश्च नाऽऽप्नुवन्ति गतिं मृताः ॥४॥ पित्राद्याः पिण्डभाजः स्युस्त्रयो लेपभुजस्तथा । ततो नान्दीमुखाः प्रोक्तास्त्रयोऽप्यश्रुमुखास्त्रयः ॥५॥ द्वादशैते पितृगणास्तर्पिताः संततिप्रदाः । गतिहीनाः सुतादीनां संततिं नाशयन्ति ते ॥ ६ ॥ दश व्याघ्रादिनिहता गर्भे निघ्नन्त्यमी क्रमात् । द्वादशास्त्रादिनिहता आकर्षन्ति च बालकम् ॥ ७ ॥ विषादिनिहता घ्नन्ति दशसु द्वादशस्वपि । वर्षैकबालकं कुर्यादनपत्योऽनपत्यताम् ॥ ८ ॥ व्याघ्रेण हन्यते जन्तुः कुमारीगमनेन च । विषदश्चैव सर्पेण गजेन नृपदुःखकृत् ॥ ९ ॥ राज्ञा राजकुमारघ्नश्चौरेण पशुहिंसकः । वैरिणा मित्रभेदी च बकवृत्तिर्वृकेण तु ॥ १० ॥ गुरुघाती च शय्यायां मत्सरी शौचवर्जितः । द्रोही संस्काररहितः शुना निपेक्षहारकः ॥ ११ ॥ नरो विहन्यतेऽरण्ये सूकरेण च पाशिकः । कृमिभिः कृत्तवासाश्च कृमिणा च निकृन्तनः ॥ १२ ॥ शृङ्गिणा शंकरद्रोही शकटेन च सूचकः । भृगुणा मेदिनीचौरो वह्निना यज्ञहानिकृत् ॥ १३ ॥ दवेन दक्षिणाचोरः शस्त्रेण श्रुतिनिन्दकः । अश्मना द्विजानिन्दाकृद्विषेण कुमतिप्रदः ॥ १४ ॥ उद्बन्धनेन हिंस्रः स्यात्सेतुभेदी जलेन तु । * द्रुमेण राजदन्तिहृदतीसारेण लौहहृत् ॥ १५ ॥ × गोग्रासहृद्विषूचिकया कवलेन द्विजान्नहृत् । भ्रमेण राजपत्नीहृदतिसारेण निष्क्रियः ॥१६॥ शाकिन्याद्यैश्च म्रियते स्वदर्पाकार्यकारकः । अनध्यायेष्वधीयाना म्रियन्ते विद्युता तथा ॥ १७ ॥ अस्पृश्यस्पर्शसङ्गी च वान्तमाश्रित्य शास्त्रहृत् । पतितोऽपत्यविक्रेता अनपत्यो द्विजान्नहृत् ॥ १८ ॥ अथ तेषां क्रमेणैव प्रायश्चित्तं विधीयते । = विक्रेता घातकश्चैव द्वावेतौ तुलया वृतौ ॥ १९ ॥ घातकश्चैव हन्यायां रोष्णि रोष्णि (?) च विक्रयी । कारयेन्निष्कमात्रं तु पुरुषं प्रेतरूपिणम् ॥ २० ॥

---

* एतदर्धं न विद्यते क. घ. पुस्तकयोः । × इतः प्रभृति निष्क्रिय इत्यन्तं न विद्यते ख. ग. पुस्तकयो. । = एतदाद्यर्धद्वयं न विद्यते ख. ग. पुस्तकयोः ।

---

१ ख. °घ्रादिग° । २ क. घ. °लन्नमतोऽस्ता° । ३ क. घ. पुण्यव° । ४ ख ग. °ताः । पयत्रिं° । ५ क. घ. हिं । ६ ख. ग. °पदुष्ठ° । ७ क. कृत्तिभिः कृतनाशश्च दमेन च निकृन्तरः । शृ° । ८ क. घ. °त् । दारुणा चौरोऽग्ने° । ९ ख. ग. °ते सदर्पकार्य° । १० क. ख. °येऽप्यधीयानो म्रियते वि° । ११ क. घ. °स्पृश्यास्पृश्यवद्गी च श्रान्तिहृद्दुष्टशास्त्रकृत् । १२ ख. ग. °तो मदवि° । १३ ख. ग. °ताऽनपत्यो द्वि° अवलहृ° । १४ क. घ. विशुद्धये । वि° ।

व्याघ्रा[1]दिगजभूपालचौरवैरिवृकाहताः । काष्ठशल्यमृता ये च शौचसंस्कारवर्जिताः ॥२॥ विषूचिकान्नकवलंदवातीसारतो मृताः । शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये ॥ ३ ॥ अस्पृश्या अपवित्राश्च पतिताः पु[3]त्रवर्जिता[4]ः । ये च त्रिंशत्प्रकारैश्च नाऽऽप्नुवन्ति गतिं मृताः ॥४॥ पित्राद्याः पिण्डभाजः स्युस्त्रयो लेपभुजस्तथा । ततो नान्दीमुखाः प्रोक्तास्त्रयोऽप्यश्रुमुखास्त्रयः ॥५॥ द्वादशैते पितृगणास्तर्पिताः संततिप्रदाः । गतिहीनाः सुतादीनां संततिं नाशयन्ति ते ॥ ६ ॥ दश व्याघ्रादिनिहता गर्भं निघ्नन्त्यमी क्रमात् । द्वादशास्त्रादिनिहता आकर्षन्ति च बालकम् ॥ ७ ॥ विषादिनिहता घ्नन्ति दशसु द्वादशस्वपि । वर्षैकबालकं कुर्यादनपत्योऽनपत्यताम् ॥ ८ ॥ व्याघ्रेण हन्यते जन्तुः कुमारीगमनेन च । विषदश्चैव सर्पेण गजेन नृप[6]दुःखकृत् ॥ ९ ॥ राज्ञा राजकुमारघ्नश्चौरेण पशुहिंसकः । वैरिणा मित्रभेदी च वक्रवृत्तिर्वृकेण तु ॥ १० ॥ गुरुघाती च शय्यायां मत्सरी शौचवर्जितः । द्रोही संस्कारहितः शुना निक्षेपहारकः ॥ ११ ॥ नरो विहन्यतेऽरण्ये सूकरेण च पाशिकः । कृ[7]मिभिः कृत्तवासाश्च कृमिणा च निकृन्तनः ॥ १२ ॥ शृङ्गिणा शंकरद्रोही शकटेन च सूचकः । भृगुणा मेदिनीचौरो वह्निना यज्ञहानिकृत् ॥ १३ ॥ दवेन दक्षिणाचोरः शस्त्रेण श्रुतिनिन्दकः । अश्मना द्विजनिन्दाकृद्विषेण कुमतिप्रदः ॥ १४ ॥ उद्बन्धनेन हिंस्रः स्यात्सेतुभेदी जलेन तु । * द्रुमेण राजदन्तिहृदतीसारेण लौहहृत् ॥ १५ ॥ × गोग्रासहृद्विषूचिकया कवलेन द्विजान्नहृत् । भ्रमेण राजपत्नीहृदतिसारेण निष्क्रियः ॥१६॥ शाकिन्याद्यैश्च म्रियते स्वदर्पाकार्यकारकः । अनध्याये[10]ष्वधीयाना म्रियन्ते विद्युता तथा ॥ १७ ॥ अस्पृ[11]श्यस्पर्शसङ्गी च वान्तमाश्रित्य शास्त्रहृत् । पतितो[12]ऽपत्यविक्रेता[13] अनपत्यो द्विजान्नहृत् ॥ १८ ॥ अथ तेषां क्रमेणैव प्रायश्चित्तं विधीयते[14] । = विक्रेता घातकश्चैव द्वावेतौ तुलया वृतौ ॥ १९ ॥ घातकश्चैव हन्यायां रोप्णि रोप्णि (?) च विक्रयी । कारयेन्निष्कमात्रं तु पुरुषं प्रेतरूपिणम् ॥ २० ॥

---

* एतदर्धं न विद्यते क. घ. पुस्तकयोः । × इतः प्रभृति निष्क्रिय इत्यन्तं न विद्यते ख. ग. पुस्तकयोः । = एतदाद्यर्धद्वयं न विद्यते ख. ग. पुस्तकयोः ।

---

१ ख. °प्रादिग° । २ क. घ. °लब्रमतोऽस्रा° । ३ क. घ. पुण्यव° । ४ ख ग. °ताः । पद्यन्ति° । ५ क. घ. हि । ६ ख. ग. °पदुष्कृ° । ७ क. कृत्तिभि. कृतनाशश्च दमेन च निकृन्तनः । शृ° । ८ क. घ. °त् । दारुणा चौरोऽग्ने° । ९ ख. ग. °ते सदर्पकार्य° । १० क. ख. °येऽप्यधीयानो म्रियते वि° । ११ क. घ. °स्पृश्यास्पृश्यसङ्गी च भ्रान्तिमद्दुष्टशास्त्रकृत् । १२ ख. ग. °तो मदवि° । १३ ख. ग. °ताऽनपत्यो द्विजपरहृ° । १४ क. घ. विशुद्धये । वि° ।

चतुर्भुजं दण्डहस्तं महिषासनसंस्थितम्। पिष्टैः कृष्णतिलैः कुर्यात्पिण्डं प्रस्थप्रमाणतः ॥ २१ ॥ मध्वाज्यशर्करायुक्तं स्वर्णदण्डेन संयुतम्। अकालमूलं कलशं पञ्चपल्लवसंयुतम् ॥ २२ ॥ कृष्णवस्त्रसमाच्छन्नं सर्वौषधिसमन्वितम्। तस्योपरि न्यसेद्देवं पात्रं धान्यफलैर्युतम् ॥ २३ ॥ सप्तधारं च कलशं तत्र तत्संमुखं न्यसेत्। कुम्भोपरि च विन्यस्य पूजयेत्प्रेतरूपिणम् ॥ २४ ॥ कुर्यात्पुरुषसूक्तेन प्रत्यहं दुग्धतर्पणम्। षडङ्गांश्च जपेद्रुद्रान्कलशे तत्र वेदवित् ॥ २५ ॥ यमसूक्तेन कुर्वीत जपपूजादिकं तथा। गायत्र्याश्चैव कर्तव्यो जपः स्वात्मविशुद्धये ॥ २६ ॥ ग्रहशान्तिकपूर्वं च दशांशं जुहुयात्तिलैः। अज्ञातनामगोत्राय प्रेताय सतिलोदकम् ॥ प्रदद्यात्पितृतीर्थेन पिण्डमन्त्रमुदीरयेत् ॥ २७ ॥ इमं तिलमयं पिण्डं मधुसर्पिःसमन्वितम्। ददामि तस्मै प्रेताय यः पीडां कुरुते मम ॥ २८ ॥ सजलान्कृष्णकलशांस्तिलपात्रसमन्वितान्। द्वादश प्रेतमुद्दिश्य दद्यादेकं च विष्णवे ॥ २९ ॥ ततोऽभिषिञ्चेदाचार्यो दंपती कलशोदकैः। शुची रक्ताम्बरधरो मन्त्रैर्वरुणदेवतैः ॥ ३० ॥ यजमानस्ततो दद्यादाचार्याय स दक्षिणाम्। ततो नारायणबलिः कर्तव्यः शास्त्रनिश्चयैः ॥ ३१ ॥ एष साधारणविधिरगतीनामुदाहृतः। विशेषस्तु पुनर्ज्ञेयो व्याघ्रादिनिहतेष्वपि ॥ ३२ ॥ व्याघ्रेण निहते प्रेते परकन्यां विवाहयेत्। सर्पदंशे नागबलिर्देयः सर्वेषु काञ्चनम् ॥ ३३ ॥ चतुर्निष्कमितं हेमगजं दद्याद्गजैर्हते। राज्ञा विनिहते दद्यात्पुरुषं तु हिरण्मयम् ॥ ३४ ॥ चौरेण निहते धेनुं वैरिणा निहते वृषम्। वृकेण निहते दद्याद्यथाशक्ति च काञ्चनम् ॥ ३५ ॥ शय्यामृते प्रदातव्या शय्या तूलीसमन्विता। निष्कमात्रं सुवर्णं तु विष्णुना समधिष्ठिता ॥ ३६ ॥ शौचहीने मृते चैव द्विनिष्कस्वर्णजं हरिम्। संस्कारहीने च मृते कुमारमुपवीतयेत् ॥ ३७ ॥ ×शुना हते च निक्षेपं स्थापयेन्निजशक्तितः। शूकरेण हते दद्यान्महिषं दक्षिणान्वितम् ॥ ३८ ॥ कृमिभिश्च मृते दद्याद्गोधूमान्नं द्विजायते। शृङ्गिणा च हते दद्याद्वृषभं वस्त्रसंयुतम् ॥ ३९ ॥ शकटेन मृते दद्याद्द्रव्यं सोपस्करान्वितम्। भृगुपाते मृते चैव प्रदद्याद्धान्यपर्वतम् ॥ ४० ॥ अग्निना निहते कार्यमग्निदानं स्वशक्तितः। दारुणा निहते चैव कर्तव्या सदने सभा ॥ ४१ ॥

× एतदर्धस्थान एतद्वचनं क. घ. पुस्तकयोः—"निष्कत्रयं स्वर्णयुतं दद्यादश्वहताहतौ। पुनर्हरेत्क्षेत्रपालं स्थापयेन्निजशक्तितः" इति।

१ ख. ग. °र्णकुण्डलसं°। २ क. घ. °सेद्भूशपा°। ३ ख. ग °धान्यं तु सफलं तत्र। ४ क. घ °त्र सत्सं°। ख. ग. °तत्सफलं न्य°। ५ क. घ अमृतं। ६ ख. ग. °त यमपू°। ७ क. घ. °दशे प्रेतनिर्देशं द°। ८ ख. ग. शुचिर्नरायुधधरो। ९ ख. ग. °श्चयात्। ए°। १० क घ. व्याघ्रेण नि°। ११ क. घ सार्पि. सकाञ्चनः। च°। १२ ख. ग. °वर्णस्य वि°। १३ क. घ. सह तिष्ठता। १४ ख. ग. °मारं च विवाहये°। १५ क. घ. °धाद्रू°। १६ ख. ग. °ते दद्यादुपानहं स्वशक्तितः। दवेन नि°।

शस्त्रेण निहते दद्यान्महिषीं दक्षिणान्विताम् । अश्मना निहते दद्यात्सवत्सां गां पयस्विनीम् ॥ ४२ ॥ विषेण च मृते दद्यान्मेदिनीं हेमनिर्मिताम् । उद्बन्धनमृते चापि प्रदद्याद्गां पयस्विनीम् ॥४३॥ मृते जलेन वरुणं हैमं दद्याद्[1]द्विनिष्किकम् । * वृक्षं वृक्षहते दद्यात्सौवर्णं स्वर्णसंयुतम् ॥४४॥ अतीसारमृते लक्षं सावित्र्याः संयतो जपेत् । शाकिन्यादिमृते चैव जपेद्रुद्रं यथोचितम् ॥ ४५ ॥ + विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान् । तिलधेनुः प्रदातव्या कण्ठेऽन्नकवलैर्मृते ॥ ४६[2] ॥ कासरोगमृते वाऽपि कृच्छ्राब्दिकव्रतं चरेत् । विद्युत्पातेन निहते विद्यादानं समाचरेत् ॥४७॥ अस्पर्शे च मृते कार्यं वेदपारायणं तथा[3] । सच्छास्त्रपुस्तकं दद्या[4]द्वान्तमाश्रित्य संस्थिते ॥४८॥ पौति[5]त्येन मृते कुर्यात्प्राजापत्यांश्च षोडश । मृते वाऽपत्यरहिते कृच्छ्राणां नवतिं चरेत् ॥४९॥ × निष्कत्रयमितस्वर्णं दद्यादश्वं हयाहते । कपिना निहते दद्यात्कपिं कनकनिर्मितम् ॥ ५० ॥ केशरोगमृते चापि अष्टौ कृच्छ्रान्समाचरेत् । एवं कृते विधानेन विदध्यादौर्ध्वदैहिकम् ॥ ५१ ॥ ततः प्रेतत्वनिर्मुक्ताः पितरस्तर्पितास्तथा । दद्युः पुत्रांश्च पौत्रांश्च आयुरारोग्यसंपदः ॥ ५२ ॥ = इति शातातपप्रोक्तो विपाकः कर्मणामयम् । शिष्याय शरभङ्गाय विनयात्परिपृच्छते ॥ ५३ ॥

इति श्रीशातातपीये कर्मविपाकेऽगतिप्रायश्चित्तनिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

( समाप्तेयं शातातपस्मृतिः ) ।



---

* इदं वचनं न विद्यते क. घ. पुस्तकयोः । + इत आरभ्य व्रतं चरेदित्यन्तं ख. ग. पुस्तकयोर्नास्ति । × एतदर्धं वचनं नास्ति क. घ. पुस्तकयोः । = नैतद्वचनं क. घ. पुस्तकयोः ।

---

१ ख. ग. °शालिनि° । २ क. घ. °या । समाच° । ३ क. घ. °यादन्यसवर्णगोमृते । पा° । ४ क. घ. पतितेन । ५ ख. ग. °पत्यानि षो° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# संवर्तस्मृतिः ।

---

संवर्तमेकमासीनं सर्ववेदाङ्गपारगम् । ऋषयस्तमुपागम्य पप्रच्छुर्धर्मकाङ्क्षिणः ॥ १ ॥ भगवञ्श्रोतुमिच्छामो द्विजानां धर्मसाधनम् । यथावद्धर्ममाचक्ष्व शुभाशुभविवेचनम् ॥ २ ॥ वामदेवादयः सर्वे तं पृच्छन्ति महौजसम् । तानब्रवीन्मुनीन्सर्वान्प्रीतात्मा श्रूयतामिति ॥ ३ ॥ स्वभावाद्विचरेद्यत्र कृष्णसारः सदा मृगः । धर्मदेशः स विज्ञेयो द्विजानां धर्मसाधनम् ॥ ४ ॥ उपनीते द्विजो नित्यं गुरवे हितमाचरेत् । स्रग्गन्धमधुमांसानि ब्रह्मचारी विवर्जयेत् ॥ ५ ॥ संध्यां प्रातः सनक्षत्रामुपासीत यथाविधि । सादित्यां पश्चिमां संध्यामर्धास्तमितभास्करे ॥ ६ ॥ तिष्ठन्पूर्वं जपं कुर्यात्सावित्रीमर्कदर्शनात् । आसीनः पश्चिमां संध्यां सम्यगृक्षविभावनात् ॥ ७ ॥ अग्निकार्यं च कुर्वीत मेधावी तदनन्तरम् । ततोऽधीयीत वेदं तु वीक्षमाणो गुरोर्मुखम् ॥ ८ ॥ प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । गायत्रीं चाऽऽनुपूर्वेण (र्व्ये)ण ततो वेदं समारभेत् ॥ ९ ॥ हस्तौ तु संयतौ धार्यौ जानुभ्यामुपरि स्थितौ । गुरोरनुमतं कुर्यात्पठन्नान्यमतिर्भवेत् ॥ १० ॥ सायं प्रातस्तु भिक्षेत ब्रह्मचारी सदा व्रती । निवेद्य गुरवेऽश्नीयात्प्राङ्मुखो वाग्यतः शुचिः ॥ ११ ॥ सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ १२ ॥ आचम्यैव तु भुञ्जीत भुक्त्वा चोपस्पृशेद्द्विजः । अनाचान्तस्तु योऽश्नीयात्प्रायश्चित्तीयते तु सः ॥ १३ ॥ अनाचान्तः पिबेद्यस्तु योऽपि वा भक्षयेद्द्विजः । गायत्र्यष्टसहस्रं तु जपं कुर्वन्विशुध्यति ॥ १४ ॥

---

१ ग. घ. च. °नमात्मविद्यापरायणम् । २ घ. च. °च्छाम. श्रेयस्कामा द्विजोत्तमाः । य° । ग. °च्छामः श्रेयस्कर्म द्विजोत्तम । य° । ३ क. °विमोचन° । ४ ग. °र्वे तमपृच्छन्महो° । ५ घ. छ. °धनः । उ° । ६ घ. च. गुरोस्तु हि° । ७ ग. घ. च. °न्पूर्वाञ्जपं । ८ घ. च. °र्याद्ब्रह्मचारी समाहितः । आ° । ९ ग. घ. च. °ध्या जपं कुर्यादतन्द्रितः । अ° । १० ग. घ ङ. °स्तौ सुसं° । ११ घ. च. °नुकृतं कु° । १२ क. क. °मार्त्रं कु° । १३ ख. घ. च. °तिनोदि° । १४ ख. ङ. °होत्री समाहित. । आ° । १५ ग. °पं कृत्वा वि° ।

अकृत्वा पादशौचं तु तिष्ठन्मुक्तशिखोऽपि वा। विना यज्ञोपवीतेन त्वाचान्तोऽप्यशुचिर्भवेत् ॥ १५ ॥ आचामेद्ब्रह्मतीर्थेन त्वो( चो )पवीती ह्युदङ्मुखः। उपवीती द्विजो नित्यं प्राङ्मुखो वाग्यतः शुचिः ॥ १६ ॥ जले जलस्थश्चाऽऽचामेत्स्थलाचान्तो वहिः शुचिः। वहिरन्तःस्थ आचान्त एवं शुद्धिमवाप्नुयात् ॥ १७ ॥ आ मणिवन्धाद्धस्तौ च पादावद्भिर्विशोधयेत् *। परिमृज्य द्विरास्यं तु द्वादशाङ्गानि च स्पृशेत् ॥ १८ ॥ स्नात्वा पीत्वा तथा क्षुत्वा भुक्त्वा स्पृष्ट्वा द्विजोत्तमः। अनेन विधिना सम्यगाचान्तः शुचितामियात् ॥ १९ ॥ शूद्रः शुध्यति हस्तेन वैश्यो दन्तेषु वारिभिः। × कण्ठागतैः क्षत्रियस्तु आचान्तः शुचितामियात् ॥ २० ॥ आसनारूढपादश्च कृतावसक्थिकस्तथा। आरूढपादुको वाऽपि न शुध्यति कदाचन ॥ २१ ॥ उपासीत न चेत्संध्यामग्निकार्यं न वा कृतम्। गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः ॥ २२ ॥ सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च। ब्रह्मचारी तु योऽश्नीयात्त्रिरात्रेणैव शुध्यति ॥ २३ ॥ ब्रह्मचारी तु यो गच्छेत्स्त्रियं कामप्रपीडितः। प्राजापत्यं चरेत्कृच्छ्रमब्दं त्वेकं सुयन्त्रितः ॥ २४ ॥ ब्रह्मचारी तु योऽश्नीयान्मधुमांसं कथंचन। प्राजापत्यं तु कृत्वाऽसौ मौञ्जीहोमेन शुध्यति ॥ २५ ॥ निर्वपेत्तु पुरोडाशं ब्रह्मचारी तु पर्वणि। मन्त्रैः शाकलहोमाङ्गैरग्नावाज्यं तु होमयेत् ॥ २६ ॥ ब्रह्मचारी तु यः स्कन्देत्कामतः शुक्रमात्मनः। अवकीर्णिव्रतं कुर्यात्स्नात्वा शुध्येदकामतः ॥ २७ ॥ भिक्षाटनमटित्वा तु स्वस्थो ह्येकान्नमश्नुते। अस्नात्वा चैव यो भुङ्क्ते गायत्र्यष्टशतं जपेत् ॥ २८ ॥ शूद्रहस्तेन योऽश्नीयात्पानीयं वा पिबेत्क्वचित्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ २९ ॥

---

* ञ. परमेतद्वचनमधिकं ग. घ. च. पुस्तकेषु—"अगन्धाभिरनुष्णाभिः सवर्णरसगन्धिभिः। हृद्गताभिरफेनाभिरद्भिस्तुर्योऽद्भिराचमेत्" इति। × न विद्यत एतदाद्यर्धद्वयं क. घ. ट. च. पुस्तकेषु।

---

१ ग. च. °र्भविन. । आ° । २ ग. °मेद्ब्रह्म° । ३ क ट. °मेत्तत° । ४ ग. घ. छ. °पादको। ५ ग °यदं हन्ति° । ६ घ च. °मद्य। ७ घ वेद्द्विजः। अ° ।

शुष्कं पर्युषितोच्छिष्टं भुक्त्वाऽन्नं केशदूषितम् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति* ॥ ३० ॥ दिवा स्वपिति यः स्वस्थो ब्रह्मचारी कथंचन । स्नात्वा सूर्यं समीक्षेत गायत्र्यष्टशतं जपेत् ॥ ३१ ॥ एष धर्मः समाख्यातः प्रथमाश्रमवासिनाम्[1] । एवं संवर्तमानस्तु प्राप्नोति परमां गतिम् ॥३२॥ अतो द्विजः समावृत्तः[2] सवर्णां स्त्रियमुद्वहेत् । कुले महति संभूतां लक्षणैस्तु समन्विताम् ॥ ३३ ॥ ब्राह्मेणैव विवाहेन शीलरूपगुणान्विताम्[3] । अतः पञ्च महायज्ञान्कुर्यादहरहर्द्विजः ॥ ३४ ॥ न हापयेत्तु तान्सक्तः श्रेयस्कामः कथंचन[4] । हानिं तेषां तु कुर्वीत सदा मरणजन्मनोः[5] ॥ ३५ ॥ विप्रो दशाहमासीत दानाध्ययनवर्जितः । क्षत्रियो द्वादशाहानि[6] वैश्यः पञ्चदशैव तु ॥ ३६ ॥ शूद्रः शुध्यति मासेन संवर्तवचनं यथा । प्रेतायान्नं[7] जले देयं स्नात्वा तत्रोत्रजैः सह ॥ ३७ ॥ प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा । चतुर्थेऽहनि कर्तव्यमस्थिसंचयनं द्विजैः ॥३८॥ ततः संचयनादूर्ध्वमङ्गस्पर्शो विधीयते । चतुर्थेऽहनि विप्रस्य षष्ठे वै क्षत्रियस्य च ॥ ३९ ॥ अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः । जातस्यापि विधिर्दृष्ट एष एव मनीषिभिः ॥ ४० ॥ दशरात्रेण[9] शुध्येत विप्रो वेदविवर्जितः । जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ॥ ४१ ॥ माता[10] शुध्येद्दशाहेन स्नानात्तु[11] स्पर्शनं पितुः । होमं[12] तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा ॥ ४२ ॥ पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः । दशाहात्तु परं सम्यग्विप्रोऽधीयीत धर्मवित्[13] ॥ ४३ ॥ दानं तु विविधं देयमशुभानां[14] विनाशनम् । यद्यदिष्टतमं लोके यच्चास्य दयितं भवेत्[15] ॥ ४४ ॥ तत्तद्गुणवते देयं तदेवाक्षयमिच्छता । नानाविधानि द्रव्याणि धान्यानि सुबहूनि च ॥ ४५ ॥ समुद्रजानि रत्नानि नरो विगतकल्मषः । दत्त्वा गुणाढ्यविप्राय[16] महतीं श्रियमाप्नुयात् ॥ ४६ ॥ गन्धमाभरणं माल्यं यः प्रयच्छति धर्मवित् । स सुगन्धिः सदा हृष्टो यत्र तत्रोपजायते ॥ ४७ ॥ श्रोत्रियाय कुलीनाय[17] याभ्यर्थिने हि विशेषतः । यद्दानं दीयते भक्त्या तद्भवेत्सुमहत्फ(द्धफ)लम् ॥ ४८ ॥

---

* इतः परमेतद्वचनं ग. घ. पुस्तकयोः—"शूद्राणा भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति" इति ।

---

१ क. च. °सिनः । ए° । २ ग. अथ द्विजोऽभ्यनुज्ञात॰ स° । ३ ग. च. °म् । पञ्चयज्ञविधानं च कुर्या° । ४ ख. ग. कदाचन । ५ घ. हापनं तस्य कुर्याच्च स° । ६ ग. °शाहेन वै° । ७ ग. च. प्रेतस्य तु जलं दे° । ८ ग. च. °त्रैर्बहिः । प्र° । ९ ग. घ. च. शुध्यन्ति वैश्वदेवविवर्जिताः । मा° । १० छ. मातुः शुद्धिर्दशा° । ११ ग. घ. च. स्नातस्य स्पं° । १२ ग. घ. च. होमस्तत्र तु कर्तव्यः शु° । १३ ग. °नं च विधिना दे° । १४ ग. °भान्तकरं शुभम् । १५ ग. °चापि दयितं गृहे । त° । १६ ङ. °णाय वि° । १७ ग. घ. °नाय त्वर्थि° ।

आहूय शीलसंपन्नं श्रुतेनाभिजनेन च । शुचिं विप्रं महाप्राज्ञं हव्यकव्यैस्तु पूजयेत् ॥ ४९ ॥ नानाविधानि द्रव्याणि सारवन्तीप्सितानि च । श्रेयस्कामेन देयानि तदेवाक्षय्यमिच्छता ॥ ५० ॥ वस्त्रदाता सुवेषः स्याद्रूप्यदो रूपमेव च । हिरण्यदः समृद्धिं च तेजश्चाऽऽयुश्च विन्दति ॥ ५१ ॥ भूताभयप्रदानेन सर्वकामानवाप्नुयात् । दीर्घमायुश्च लभते सुखी चैव सदा भवेत् ॥ ५२ ॥ धान्योदकप्रदायी च सर्पिर्दः सुखमेधते । अलंकृत्य त्वलंकारदाताऽऽप्नोति महत्फलम् ॥ ५३ ॥ फलमूलानि विप्राय शाकानि विविधानि च । सुरभीणि च पुष्पाणि दत्त्वा प्राज्ञस्तु जायते ॥ ५४ ॥ ताम्बूलं चैव यो दद्याद्ब्राह्मणेभ्यो विचक्षणः । मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते ॥ ५५ ॥ पादुकोपानहौ छत्रं शयनान्यासनानि च । विविधानि च यानानि दत्त्वा द्रव्यपतिर्भवेत् ॥ ५६ ॥ दद्याद्यः शिशिरे त्वग्निं बहुकाष्ठं प्रयत्नतः । कायाग्निदीप्तिं प्राज्ञत्वं रूपं सौभाग्यमाप्नुयात् ॥ ५७ ॥ औषधं स्नेहमाहारं रोगिणां रोगशान्तये । दत्त्वा स्याद्रोगरहितः सुखी दीर्घायुरेव च ॥ ५८ ॥ इन्धनानि च यो दद्याद्विप्रेभ्यः शिशिरागमे । नित्यं जयति संग्रामे श्रिया युक्तस्तु दीप्यते ॥ ५९ ॥ अलंकृत्य तु यः कन्यां वराय सदृशाय वै । ब्राह्मेण तु विवाहेन दद्यात्तां तु सुपूजिताम् ॥ ६० ॥ स कन्यायाः प्रदानेन श्रेयो विन्दति पुष्कलम् । साधुवादं स वै सद्भिः कीर्तिं प्राप्नोति पुष्कलाम् ॥ ६१ ॥ ज्योतिष्टोमातिरात्राणां शतं शतगुणीकृतम् । प्राप्नोति पुरुषो दत्त्वा होममन्त्रैश्च संस्कृताम् ॥ ६२ ॥ तां दत्त्वा तु पिता कन्यां भूषणाच्छादनाशनैः । +पूजयेत्स्वर्गमाप्नोति नित्यमुत्सववृद्धिषु ॥ ६३॥ रोमकाले तु संप्राप्ते सोमो भुङ्क्तेऽथ कन्यकाम् । रजो दृष्ट्वा तु गन्धर्वाः कुचौ दृष्ट्वा तु पावकः ॥ ६४ ॥ अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ ६५ ॥ माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ ६६ ॥

---

+ एतदर्धस्थानेऽयं पाठो ग. घ. च. पुस्तकेषु–"दत्त्वा स्वर्गमवाप्नोति पूजितस्तु सुरादिषु" इति ।

---

१ ग. °प्र ह्लो हव्यकव्येषु दृ° । २ ख. ग. °नि रम्य° । ३ ग. च. °नि स्वर्गमक्ष° । ४ क. च °हमर्धि° । ५ ग. घ. °न्नदो मन्त्राऽऽयुर्लेभतेऽथ मानव- । मृ° । ६ घ. °कृत्यालं° । ८ ग. °कारं दत्त्वा प्राप्नोति तत्र° । ८ घ. °त्त्वा दिव्यगति° । ९ क. रा दीप्यते । १० ग. °दं सेवतस्त्रि° । ११ ग. °गाधिपत्या° ।

तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् । विवाहो ह्यष्टवर्षाया: कन्यायास्तु प्रश-स्यते ॥ ६७ ॥ * तैलामलकदाता च स्नानाभ्यङ्गप्रदायकः। नरः प्रहृष्टमासीत सुभगश्चोपजायते ॥ ६८ ॥ अनड्वाहौ तु यो दद्याद्द्विजे सीरेण संयुतौ । अलं-कृत्य यथाशक्त्या(क्ति) धूर्वहौ शुभलक्षणौ ॥ ६९ ॥ सर्वपापविशुद्धात्मा सर्वकाम-समन्वितः । वर्षाणि वसते स्वर्गे रोमसंख्याप्रमाणतः ॥ ७० ॥ धेनुं च यो द्विजे दद्यादलंकृत्य पयस्विनीम् । कांस्यवस्त्रादिभिर्युक्तां स्वर्गलोके महीयते ॥ ७१ ॥ भूमिं सस्यवतीं श्रेष्ठां ब्राह्मणे वेदपारगे । गां दत्त्वाऽर्धप्रसूतां च स्वर्गलोके महीयते ॥ ७२ ॥ यावन्ति सस्यमूलानि गोरोमाणि च सर्वशः । नरस्तावन्ति वर्षाणि स्वर्ग-लोके महीयते ॥ ७३ ॥ यो ददाति शफै रौप्यैर्हेमशृङ्गीमरोगिणीम् । सवत्सां वाससा वीतां सुशीलां गां पयस्विनीम् ॥ ७४ ॥ तस्यां यावन्ति रोमाणि सवत्सा-यां दिवं गतः । तावन्ति वत्सरान्तानि स नरो ब्रह्मणोऽन्तिके ॥ ७५ ॥ यो ददाति बलीवर्दमुक्तेन विधिना शुभम् । अभ्यङ्गं गोप्रदानेन दत्तं दशगुणं फलम् + ॥ ७६ ॥ अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः । लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च महीं च दद्यात् ॥ ७७ ॥ सर्वेषामेव दानानामे-कजन्मानुगं फलम् । हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥ ७८ ॥ अन्नदस्तु भवेन्नित्यं सुतृप्तो निभृतः सदा । अम्बुदस्तु सुखी नित्यं सर्वकर्म-( काम )समन्वितः ॥ ७९ ॥ सर्वेषामेव दानानामन्नदानं परं स्मृतम् । सर्वेषामेव जन्तूनां यतस्तज्जीवितं परम् ॥ ८० ॥ यस्मादन्नात्प्रजाः सर्वाः कल्पे कल्पेऽसृज-त्प्रभुः । तस्मादन्नात्परं दानं विद्यते न हि किंचन ॥ ८१ ॥ अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ॥ ८१ ॥ मृत्तिकां गोशकृद्दर्भानुपवीतं तथोत्तरम् । दत्त्वा गुणाढ्यविप्राय कुले महति जायते ॥ ८२ ॥ मुखवासं तु यो दद्याद्दन्तधावनमेव च ।

---

* एतद्वचनस्थानेऽयं पाठो ग. घ. पुस्तकयोः—"तैलमस्तरणं प्राज्ञः पादाभ्यङ्गं ददाति यः । प्रहृष्ट-मानसो लोके सुखी चैव सदा वसेत्" इति । + इतः परमेतद्वचनमधिकं ग. पुस्तके—"जलदस्तृप्तिमतुलां वितृप्य सर्ववस्तुषु । अन्नदः सुखमाप्नोति सुतृप्तः सर्ववस्तुषु" इति ।

---

१ ग. °धात्कीलसी° । २ ग. घ. वसति । ३ क. ङ द्विजो । ४ ग. °नि आरोप्याणि । ५ ग. °वद्वर्ष-सहस्राणि स । ६ ख. ग. ङ. °ग्यङ्गमतो° । ७ ग °न फलादश° । ८ ग. घ. च. °नं न भूतं न भविष्यति । अन्नदानात्परं दानं वि° । ९ ग. °णाग्न्यवि° । १० क. °ते । सुखं वा° । ङ. °ते । सुखवा° ।

शुचिगन्धसमायुक्तो वाक्पटुः स सदा भवेत् ॥ ८३ ॥ पादशौचं तु यो दद्या-त्तथा च गुदलिङ्गयोः । यः प्रयच्छति विप्राय शुद्धबुद्धिः सदा भवेत् ॥ ८४ ॥ औषधं पथ्यमाहारं स्नेहाभ्यङ्गं प्रतिश्रयम् । यः प्रयच्छति रोगिभ्यः स भवेद्व्याधिवर्जितः ॥ ८५ ॥ गुडमिक्षुरसं चैव लवणं व्यञ्जनानि च । सुरभीणि च पानानि दत्त्वाऽत्यन्तसुखी भवेत् ॥ ८६ ॥ दानैश्च विविधैः सम्यक्फलमेतदुदाहृतम् । विद्यादानेन सुमतिर्ब्रह्मलोके महीयते ॥ ८७ ॥ अन्योन्यानुग्रहा विप्रा अन्योन्यप्रतिपूजकाः । अन्योन्यं प्रतिगृह्णन्ति तारयन्ति तरन्ति च ॥ ८८ ॥ दाना-न्येतानि देयानि तथाऽन्यानि विशेषतः । दीनान्धकृपणार्थिभ्यः श्रेयस्कामेन धीमता ॥ ८९ ॥ ब्रह्मचारियतिभ्यश्च स्नपनं यस्तु कारयेत् । नखकर्मादिकं चैव चक्षुष्मा-ञ्जायते नरः ॥ ९० ॥ देवागारे द्विजातीनां दीपं दद्याच्चतुष्पथे । मेधावी ज्ञानसंपन्नश्चक्षुष्मान्स सदा भवेत् ॥ ९१ ॥ नित्ये नैमित्तिके काम्ये तिलान्दत्त्वा स्वशक्तितः । प्रजावान्पशुमांश्चैव धनवाञ्जायते नरः ॥ ९२ ॥ यो यदाऽभ्यर्थितो विप्रैर्धनं यत्संप्रतिपादयेत् । तृणकाष्ठादिकं चैव गोप्रदानसमं भवेत् ॥ ९३ ॥ * न विस्मयीत तपसा न यजेञ्चानृतं वदेत् । अपवदेन्न विप्रस्य न दानं परिकीर्तयेत् ॥ ९४ ॥ यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् । आयुर्विप्रापवादेन दानं च परिकीर्तनात् ॥ ९५ ॥ चत्वार्येतानि कर्माणि संध्यायां वर्जयेद्बुधः । आहारं मैथुनं निद्रां तथा संपाठमेव च ॥ ९६ ॥ आहाराज्जायते व्याधिर्गर्भो वै रौद्र( द्रो ) मैथुनात् । निद्रातो जायतेऽलक्ष्मीः संपाठादायुषः क्षयः ॥ ९७ ॥ ऋतुमतीं तु यो भार्यां संनिधौ नोपगच्छति । तस्या रजसि तन्मासं पितरस्तस्य शेरते ॥ ९८ ॥ कृत्वा गृह्याणि कर्माणि स्वभार्यापोषणे रतः । ऋतुकालाभिगामी च प्राप्नोति परमां गतिम् ॥ ९९ ॥ उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात्परम् । वलीपलितसंयुक्तस्तृतीयं तु समाश्रयेत् ॥ १०० ॥ वनं गच्छेत्ततः प्राज्ञः सभार्यस्त्वेक एव वा । गृहीत्वा चाग्निहोत्रं च होमं तत्र न हापयेत् ॥ १०१ ॥ कुर्याच्चैव पुरोडाशं वन्यैर्मेध्यैर्यथाविधि । भिक्षां च भिक्षवे दद्याच्छाकमूलफलादिभिः ॥ १०२ ॥

---

* इतःप्रभृति शेरत इत्यन्तग्रन्थो ग. घ. च. पुस्तकेषु न विद्यते ।

---

१ क. ख. °क्तो अवाग्दुष्ट सदा । २ क. ङ °तिश्रिय° । ३ ग. सर्वव्याधिविव° । ४ क. ङ. °त्यन्तं सु° । ५ ग घ ङ. °न पुण्येन ब्रह्म° । ६ ग. °नप्रदा वि° । ७ ग. °णादिभ्यः । ८ क. ग. घ. °चारी य° । ९ क. ङ. °ति द्वापरे° । १० ख. न वै शयीत तमसा । ११ घ. °त्वाऽग्निहोत्रकर्मा° । १२ घ. °षणं परम् । ऋ° । १३ ग. च. °लानि च । कु° ।

कुर्यादध्ययनं नित्यमग्निहोत्रपरायणः। इष्टिं च पार्वणीयां तु प्रकुर्यात्प्रतिपर्वसु॥१०३॥ उषित्वैवं वने विप्रो विधिज्ञः सर्वकर्मसु। चतुर्थमाश्रमं गच्छेज्जितक्रोधो जितेन्द्रियः॥ १०४॥ अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्। वेदाभ्यासरतो नित्यमात्मविद्यापरायणः॥१०५॥ अष्टौ भिक्षाः समादाय स मुनिः सप्त पञ्च वा। अद्भिः प्रक्षाल्य ताः सर्वा भुञ्जीत सुसमाहितः॥ १०६॥ अरण्ये निर्जने तत्र पुनरासीत भुक्तवान्। एकाकी चिन्तयेन्नित्यं मनोवाक्कायकर्मभिः॥ १०७॥ मृत्युं च नाभिनन्देत जीवितं वा कथंचन। कालमेव प्रतीक्षेत यावदायुः समाप्यते॥ संसेव्य चाऽऽश्रमान्सर्वाञ्जितक्रोधो जितेन्द्रियः॥ १०८॥ ब्रह्मलोकमवाप्नोति वेदशास्त्रार्थविद्द्विजः। आश्रमेषु च सर्वेषु प्रोक्तोऽयं प्राश्निको विधिः॥ १०९॥ * अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम्। ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः॥ ११०॥ महापातकिनस्त्वेते तत्संयोगी च पञ्चमः। ब्रह्मघ्नस्तु वनं गच्छेद्वालवासा जटी ध्वजी॥१११॥ वन्यान्येव फलान्यश्नन्सर्वकामविवर्जितः। भिक्षार्थी विचरेद्ग्रामं वन्यैर्यदि न जीवति॥ ११२॥ चातुर्वर्ण्यं चरेद्भैक्षं खट्वाङ्गी संयतः सदा। भिक्षास्त्वेवं समादाय वनं गच्छेत्ततः पुनः॥११३॥ वनवासी स पापः स्यात्सदाकालमतन्द्रितः। ख्यापयेन्मुच्यते पापाद्ब्रह्महा पापकृत्तमः॥११४॥ अनेन तु विधानेन द्वादशाब्दव्रतं चरेत्। संनियम्येन्द्रियग्रामं सर्वभूतहिते रतः॥ ११५॥ ब्रह्महत्यापनोदाय ततो मुच्येत किल्बिषात्। अतः परं सुरापस्य निष्कृतिं श्रोतुमर्हथ॥ ११६॥ गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः॥११७॥ सुरापस्तु सुरां तप्तां पिबेत्तत्पापमोक्षकः। गोमूत्रमग्निवर्णं वा गोमयं वा तथाविधम् +॥ ११८॥ घृतं वा त्रीणि पेयानि सुरापो व्रतमाचरेत्। मुच्यते तेन पापेन प्रायश्चित्ते कृते सति ११९॥

* एतदर्धस्थानेऽयं पाठो ग. पुस्तके–" अथाभिवक्ष्ये पापाना प्रायश्चित्तं यथाविधि" इति। + इतः परमेतदधिकं ग. पुस्तके–" षण्मासादधिकं वाऽपि पूर्वोक्तव्रतमाचरेत्। महापातकिसंयोगे ब्रह्महत्यादिभिर्नरः" इति।

१ क. ख. ङ. च. °ष्टिं पार्वायिणी°। २ ग. च. °वैवस्तुषु। च°। ३ ग. घ. °च्छेद्धुतहोमो जि°। ४ ग. घ. च. °ल्य तत्सर्वं भु°। ५ ग. °यसंयुत.। मृ°। ६ ग. °षु ह्युक्त. प्रासाङ्गिको। घ. च. °षु ह्युक्तः प्राणान्तिको। ७ ख. ग. °च्छेद्वल्कवा°। ८ क. ख. °द्भैक्ष्यं ख°। ९ ग. घ. °त. पुमान्। भैक्षं चैव स°। १० ग. घ. च °पयन्नेव तत्पापं ब्रह्मघ्नः(हा) पापकृन्नर.। अ°। ११ ग. °स्य प्रवक्ष्यामि विनिष्कृतिम्। श्रोतुमिच्छत भो विप्रा वेदशास्त्रानुरूपिकाम्। गौ°। १२ ग. घ. द्विजै सदा। सुराप°। १३ क. ग. क्षकम्। गो°।

अरण्ये वा वसेत्सम्यक्सर्वकामविवर्जितः । चान्द्रायणानि वा त्रीणि सुरापव्रतमादि-
शेत् ॥ १२० ॥ एवं शुद्धिः सुरापस्य भवेदिति न संशयः । मद्यभाण्डोदकं पीत्वा
पुनः संस्कारमर्हति ॥ १२१ ॥ स्तेयं कृत्वा सुवर्णस्य स्तेयं राज्ञे निवेदयेत् । ततो
मुसलमादाय स्तेनं हन्यात्सकृन्नृपः ॥ १२२ ॥ यदि जीवति स स्तेनस्ततः स्तेया-
द्विमुच्यते । अरण्ये चीरवासा वा चरेद्ब्रह्महणो व्रतम् ॥ एवं शुद्धिः कृता स्तेये संव-
र्तवचनं यथा ॥ १२३ ॥ गुरुतल्पे शयानस्तु तप्ते स्वप्यादयोमये । रामालिङ्गेत्स्त्रियं
वाऽपि दीप्तां कार्ष्णायसीकृताम् ॥ १२४ ॥ चान्द्रायणानि वा कुर्याच्चत्वारि त्रीणि
वा द्विजः । मुच्यते च ततः पापात्प्रायश्चित्ते कृते सति ॥ १२५ ॥ एभिः
संपर्कमायाति यः कश्चित्पापमोहितः । * तत्तत्पापविशुद्ध्यर्थं तस्य तस्य व्रतं
चरेत् ॥ १२६ ॥ क्षत्रियस्य वधं कृत्वा त्रिभिः कृच्छ्रैर्विशुध्यति । कुर्याच्चैवा-
नुरूपेण त्रीणि कृच्छ्राणि संयतः ॥ १२७ ॥ वैश्यहत्यां तु संप्राप्तः कथंचि-
त्काममोहितः । कृच्छ्रातिकृच्छ्रौ कुर्वीत स नरो वैश्यघातकः ॥ १२८ ॥
कुर्याच्छूद्रवधे विप्रस्तप्तकृच्छ्रं यथाविधि । एवं शुद्धिमवाप्नोति संवर्तवचनं यथा
॥ १२९ ॥ गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिं तत्त्वतः शुभाम् । गोघ्नः कुर्वीत
संस्थानं गोष्ठे गोरूपसंनिधौ ॥ १३० ॥ तत्रैव क्षितिशायी स्यान्मासार्धं संयतेन्द्रियः ।
स्नानं त्रिषवणं कुर्यान्नखलोमविवर्जितः ॥ १३१ ॥ सक्तुयावकभिक्षाशी पयोदधि-
शकृन्नरः । एतानि क्रमशोऽश्नीयाद्द्विजस्तत्पापमोक्षकः + ॥ १३२ ॥ गायत्रीं च
जपेन्नित्यं पवित्राणि च शक्तितः । × पूर्णे चैवार्धमासे च स विप्रान्भोजयेद्द्विजः
॥ १३३ ॥ भुक्तवत्सु च विप्रेषु गां च दद्याद्विचक्षणः । व्यापन्नानां बहूनां तु रोधने
बन्धनेऽपि वा ॥ १३४ ॥ भिषङ्मिथ्यापचारे च द्विगुणं गोव्रतं चरेत् ॥ १३५ ॥

---

* इत उत्तरं सार्धं वचनमधिकं ग. च. पुस्तकयो —" घृतं चैव सुतप्तं च क्षीरं वाऽपि तथाविधम् । संवत्सरं कणानश्नन्सर्वकामविवर्जितः । चान्द्रायणानि वा त्रीणि सुरापी व्रतमाचरेत् " इति । + इत. परमे· तदधिकं ग. पुस्तके—" शुध्यते सार्धमासेन नखलोमविवर्जितः । स्नानं त्रिषवणं चास्य गवामनुगमस्तथा । एतत्समाहित· कुर्यान्नरो विगतमत्सरः " इति । × अत्र भङ्ग्यन्तरेण पाठो ग. पुस्तके—" ततश्चीर्णव्रतः कुर्याद्विप्राणा भोजनं परम् " इति ।

---

१ घ. °माचरेत् । २ ग. °स्य राज्ञे गमेत मानव । त° । घ. च. °स्य राज्ञे शंसेत्स मानवः । त° । ३ क. एवं सं° । ४ ग. तत्पापस्य वि° । ५ क शुचि° । ६ क. ख. ङ. संस्कारं । ७ ग. °संस्थिते । त° । ८ ग. °कपिष्याकप° । ९ ग घ. सावित्रीं । १० ग. व्यापादितेषु बहुषु बन्धने रोधनेऽपि । ११ क. °न्ना च हतानां । १२ ग. घ. वा । द्विगुणं गोव्रतं तस्य प्रायश्चित्तं विशुद्धये । ए° ।

एका चेद्बहुभिः काचिद्दैवाद्व्यापादिता क्वचित् । पादं पादं तु हत्यायाश्चरेयुस्ते पृथक्पृथक् ॥ १३६ ॥ यन्त्रणे गोचिकित्सार्थे गूढगर्भविमोचने । यदि तत्र विपत्तिः स्यान्न स पापेन लिप्यते ॥ १३७ ॥ * औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च । दीयमाने विपत्तिः स्यात्पुण्यमेव न पातकम् ॥ १३८ ॥ प्रायश्चित्तस्य पादं तु रोधेषु व्रतमाचरेत् । द्वौ पादौ बन्धने चैव पादोनं यन्त्रणे तथा ॥ १३९ ॥ पाषाणैर्लकुटैर्दण्डैस्तथा शस्त्रादिभिर्नरः । निपातने चरेत्सर्वं प्रायश्चित्तं विशुद्धये ॥ १४० ॥ हस्तिनं तुरगं हत्वा महिषोष्ट्रकपींस्तथा । एषां वधे द्विजः कुर्यात्सप्तरात्रमभोजनम् ॥ १४१ ॥ व्याघ्रं श्वानं खरं सिंहमृक्षं सूकरमेव च । एतान्हत्वा द्विजो मोहात्त्रिरात्रेणैव शुध्यति ॥ १४२ ॥ सर्वासामेव जातीनां मृगाणां वनचारिणाम् । अहोरात्रोषितस्तिष्ठेज्जपन्वै जातवेदसम् ॥ १४३ ॥ हंसं काकं बलाकां च बर्हिकारण्डवावपि । सारसं चाषभासौ च हत्वा त्रिदिवसं क्षिपेत् ॥ १४४ ॥ चक्रवाकं तथा क्रौञ्चं सारिकाशुकतित्तिरीन् । श्येनगृध्रावुलूकं च पारावतमथापि वा ॥ १४५ ॥ टिट्टिभं जालपादं च कोकिल कुक्कुटं तथा । एषां वधे नरः कुर्यादेकरात्रमभोजनम् ॥ १४६ ॥ पूर्वोक्तानां च सर्वेषां हंसादीनामशेषतः । अहोरात्रोषितस्तिष्ठेज्जपन्वै जातवेदसम् ॥ १४७ ॥ मण्डूकं चैव हत्वा च सर्पमार्जारमूषकम् । त्रिरात्रोपोषितस्तिष्ठेत्कुर्याद्ब्राह्मणभोजनम् ॥ १४८ ॥ अनस्थीन्ब्राह्मणो हत्वा प्राणायामेन शुध्यति । अस्थिमतां वधे विप्रः किंचिद्दद्याद्विचक्षणः ॥ १४९ ॥ यश्चाण्डालीं द्विजो गच्छेत्कथंचित्काममोहितः । त्रिभिः कृच्छ्रैस्तु शुध्येत प्राजापत्यानुपूर्वकैः ॥ १५० ॥ पुंश्चलीगमनं कृत्वा कामतोऽकामतोऽपि वा । कृच्छ्रचान्द्रायणे तस्य पावने परमे स्मृते ॥ १५१ ॥ शैलूषीं रजकीं चैव वेणुचर्मोपजीविनीम् । एता गत्वा द्विजो मोहाच्चरेच्चान्द्रायणं व्रतम् ॥ १५२ ॥

---

* एतद्वचनस्थानेऽयं पाठो घ. च. छ. पुस्तकेषु—" निशि बन्धनरुद्धेषु सर्पव्याघ्रहतेषु च । अग्निविद्युन्निपातेषु प्रायश्चित्तं न विद्यते " इति ।

---

१ छ. यन्त्रितायांश्चिकि° । २ घ. ट. °मोक्षणे । य° । ३ क ड योक्त्रणे । ग. कुट्टने । घ. योक्षणे । ४ ग. °र्लगुडैर्द° । ५ ख दिनत्रयम् । ६ घ. °नं तथा सिंहं वृकं सू° । ७ ग. तथा । ८ ग. घ. च द्विजः कृच्छ्रं ब्राह्मणाना च भोजनम् । स° । ९ ग. घ च. ° म् । त्रिरात्रोपोषि° । १० घ. वकं । ११ ग. च. कपोतकम° । १२ ग. घ एवं पक्षिषु सर्वेषु दिनमेकम° । १३ ग घ. °कैः । पुक्कसीग° । १४ क. ड. कृत्वा चा° । ग घ. कृच्छ्रं चान्द्रायणं त° । १५ ग. घ °वनं परमं स्मृतम् । नटीं शैलूषिकीं चैव रजकीं वेणुजीं° । १६ ग. घ. °म् । गत्वा चान्द्रायणं कुर्यात्तथा चर्मोपजीविनीम् ।

क्षत्रियामथ वैश्यां वा गच्छेद्यः काममोहितः । तस्य सांतपनः कृच्छ्रो भवेत्पापापनोदनः ॥ १५३ ॥ शूद्रां[1] तु ब्राह्मणो गत्वा मासं मासार्धमेव वा । गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ १५४ ॥ विप्रस्तु[2] ब्राह्मणीं गत्वा प्राजापत्येन[3] शुध्यति । स्वजनां तु द्विजो गत्वा प्राजापत्यं समाचरेत् ॥ १५५ ॥ क्षत्रियां क्षत्रियो गत्वा तदेव व्रतमाचरेत् । नरो गोगमनं कृत्वा कुर्याच्चान्द्रायणव्रतम् ॥ १५६ ॥ मातुलानीं[4] तथा श्वश्रूं सुतां वै मातुलस्य च । एता गत्वा स्त्रियो मोहात्पराकेण विशुध्यति ॥ १५७ ॥ गुरोर्दुहितरं[5] गत्वा स्वसारं पितुरेव च । तस्या दुहितरं चैव चरेच्चाद्रायणं व्रतम् ॥ १५८ ॥ पितृव्यदारगमने भ्रातृभार्यागमे तथा । गुरुतल्पव्रतं कुर्यान्निष्कृतिर्नान्यथा भवेत् ॥ १५९ ॥ पितृभार्यां समारुह्य मातृवर्जं नराधमः । भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम् ॥ १६० ॥ एतास्तिस्रः स्त्रियो गत्वा[6] तप्तकृच्छ्रं समाचरेत्[7] । कुमारीगमने चैव व्रतमेतत्समादिशेत् ॥ १६१ ॥ पशुवेश्याभिगमने प्राजापत्यो[8] विधीयते । सखिभार्यां[9] समारुह्य श्वश्रूं वा शालिकां तथा ॥ १६२ ॥ मातरं योऽभिगच्छेच्च स्वसारं पुरुषाधमः । न तस्य निष्कृतिं दद्यात्स्वां चैव तनुजां तथा ॥ १६३ ॥ नियमस्थां व्रतस्थां वा योऽभिगच्छेत्स्त्रियं द्विजः । स कुर्यात्प्राकृतं कृच्छ्रं धेनुं दद्यात्पयस्विनीम् ॥ १६४ ॥ रजस्वलां तु यो गच्छेद्गर्भिणीं पतितां तथा । तस्य पापविशुद्ध्यर्थमतिकृच्छ्रो विधीयते[10] ॥ १६५ ॥ वेश्यां तु ब्राह्मणो गत्वा कृच्छ्रमेकं समाचरेत् एवं शुद्धिः समाख्याता संवर्तस्य वचो यथा ॥ १६६ ॥ कथंचिद्ब्राह्मणीं गत्वा क्षत्रियो वैश्य एव च । गोमूत्रयावकाहारो मासेनैकेन शुध्यति ॥ १६७ ॥ शूद्रस्तु ब्राह्मणीं गच्छेत्कदाचित्काममोहितः । गोमूत्रयावकाहारो मासनेकैने शुध्यति ॥ १६८ ॥ ब्राह्मणी(ण्याः)-शूद्रसंपर्के कदाचित्समुपागते । कृच्छ्रचाद्रायणं[11] तस्याः पावनं परमं स्मृतम् ॥ १६९ ॥ चाण्डालं पुल्कसं[12] चैव श्वपाकं पतितं तथा । एताः श्रेष्ठाः स्त्रियो गत्वा कुर्युश्चान्द्रायणत्रयम् ॥ १७० ॥

---

१ क. ग. घ. शूद्रीं । २ क ख. ङ. विप्रामस्वजना ग° । ३ ग. °पत्यं विधीयते । °स्व° । ४ ग. घ. °नीं सनाभिं च मातुलस्याऽऽत्मजा स्नुषाम् । ए° । ५ च. °रं मातु° । ६ च. °त्वाऽप्यज्ञानाच्च सकृद्द्विज. । स चरेत्तप्तकृच्छ्रं तु ज्ञानाच्चाद्रायणं व्रतम् । कु° । ७ ख. च. °माचरेत् । ८ ग. घ. च. °पत्यं वि° । ९ च. ते । शिष्यभा° । १० ख. °ते । वैश्यजा व्रा° । ११ ग. ङ. कृच्छ्रं चा° । १२ ग. पुक्कसं ।

अतः परं प्रदुष्टानां निष्कृतिं श्रोतुमर्हथ । संन्यस्य दुर्मतिः कश्चिदपत्यार्थं स्त्रियं
व्रजेत् ॥ १७१ ॥ कुर्यात्कृच्छ्रं समानं तत्षण्मासांस्तदनन्तरम् । विषाग्निश्यामशवला-
स्तेषामेवं विनिर्दिशेत् ॥ १७२ ॥ स्त्रीणां तथा च चरणे गर्भाभिगमनेषु च । पतने-
ष्वप्ययं दृष्टः प्रायश्चित्तविधिः शुभः ॥ १७३ ॥ नृणां विप्रतिपत्तौ तु पावनः प्रेत्य
चेह च । गोविप्रप्रहते चैव तथा चैवाऽऽत्मघातिनि ॥ १७४ ॥ नैवाश्रुपातनं कार्यं
सद्भिः श्रेयोभिकाङ्क्षिभिः ॥ १७५ ॥ एषामन्यतमं प्रेतं यो वहेत दहेत वा । कृत्वा
चोदकदानं तु चरेच्चान्द्रायणव्रतम् ॥ १७६ ॥ तच्छवं केवलं स्पृष्ट्वा त्वश्रु नो पतितं
यदि । पूर्वकेष्वप्यकारी चेदेकाहं क्षपणं तथा ॥ १७७ ॥ महापातकिनां चैव तथा
चैवाऽऽत्मघातिनाम् । उदकं पिण्डदानं च श्राद्धं चैव हि यत्कृतम् । नोपतिष्ठति तत्सर्वं
राक्षसैर्विप्रलुप्यते ॥ १७८ ॥ चाण्डालैस्तु हता ये तु जलदंष्ट्रिसरीसृपैः । श्राद्धं तेषां
न कर्तव्यं ब्रह्मदण्डहताश्च ये ॥ १७९ ॥ कृत्वा मूत्रपुरीषे तु भुक्तोच्छिष्टस्तथा द्विजः ।
श्वादिस्पृष्टो जपेद्देव्याः सहस्रं स्नानपूर्वकम् ॥ १८० ॥ चण्डालं पतितं स्पृष्ट्वा शवम-
न्त्यजमेव च । उदक्यां सूतिकां नारीं सवासाः स्नानमाचरेत् ॥ १८१ ॥
स्पृष्टेन संस्पृशेद्यस्तु स्नानं तस्य विधीयते । ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा
॥ १८२ ॥ चण्डालाद्यैस्तु संस्पृष्ट उच्छिष्टश्चेद्द्विजोत्तमः । गोमूत्रयावकाहारः षड्रात्रेण
विशुध्यति ॥ १८३ ॥ शुना पुष्पवती स्पृष्टा पुष्पवत्याऽन्यया तथा । शेषाण्यहान्युपवसे-
त्स्नात्वा शुध्येद्धृताशनात् ॥ १८४ ॥ चाण्डालभाण्डसंस्पृष्टं पिबेत्कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्रेण विशुध्यति ॥ १८५ ॥ अन्त्यजैः स्वीकृते तीर्थे तडा-
गेषु नदीषु च । शुध्यते पञ्चगव्येन पीत्वा तोयमकामतः ॥ १८६ ॥ सुराघटप्रपा-
तोयं पीत्वा नौसाजलं तथा । अहोरात्रोषितो भूत्वा पञ्चगव्यं पिबेद्द्विजः ॥ १८७ ॥
कूपे विण्मूत्रसंस्पृष्टाः प्राश्य चापो द्विजातयः । त्रिरात्रेणैव शुध्यन्ति कुम्भे सांतपनः
स्मृतः ॥ १८८ ॥ वापीकूपतडागानां दूषितानां विशोधनम् । अपां घटशतोद्धारः
पञ्चगव्यं च निक्षिपेत् * ॥ १८९ ॥ स्त्रीक्षीरमाविकं पीत्वा संधिन्याश्चैव गोः पयः ।

---

* इतः परमधिकं घ. च. पुस्तकयोः— "भवत्सैकशफोष्ट्रीणां क्षीरं प्राश्य द्विजोत्तमः । अदशनाया गोश्चैव त्रिरात्रं यावकं पिबेत्" इति ।

---

१ ग. °त् । स कुर्यात्कृच्छ्रमश्रान्तः षण्मा° । घ. °त् । स कुर्यात्कृच्छ्रमासाना षण्मा° । २ क. ख. घ. °णे ह्यधिमासगमे तथा । प° । छ. °णे ह्यधमादिग° । ३ ग. प्रेतराडिह । गोभिर्विप्रह° । ४ क. ङ. °तिनः । नै° । ५ च. वा । अथोदकक्रिया कृत्वा च° । ६ ग. °ष्ट्वा वस्त्रं वा केवलं य° । ७ ख. ङ. नो पाति° । ८ ग. पूर्वैः कृच्छ्रापहारी स्यादेकाहक्ष° । ९ क. ङ °कारा चे° । १० ग. अस्पृश्यं । ११ ग तेन । १२ ग. °त्स्नाता शु° । १३ °त्वाऽऽकाशज° । १४ घ. च. नाशज° । १५ ग. घ. °स्पृष्टे प्रा° । १६ ग. छ. °पनं स्मृतम् । वा° । १७ क. ख. ङ. °गानामुपहताना ।

तस्य शुद्धिस्त्रिरात्रेण[1] द्विजानां चैव भक्षणे ॥ १९० ॥ विण्मूत्रभक्षणे चैव प्राजापत्यं समाचरेत् । श्वकाकोच्छिष्टगोच्छिष्टभक्षणे तु त्र्यहं द्विजः ॥ १९१ ॥ बिडालमूषकोच्छिष्टे पञ्चगव्यं पिबेद्द्विजः । शूद्रोच्छिष्टं तथा भुक्त्वा त्रिरात्रेणैव शुध्यति ॥१९२॥ पलाण्डुलशुनं जग्ध्वा तथैव ग्रामकुक्कुटम् । छत्राकं विड्वराहं च चरेत्सांतपनं द्विजः ॥ १९३ ॥ श्वविडालखरोष्ट्राणां कपेर्गोमायुकाकयोः[3] । प्राश्य[4] मूत्रं पुरीषं वा चरेच्चान्द्रायणव्रतम्[2] ॥ १९४ ॥ अन्नं पर्युषितं भुक्त्वा केशकीटैरुपद्रुतम् । पतितैः[5] प्रेक्षितं[6] वाऽपि पञ्चगव्यं द्विजः पिबेत् ॥ १९५ ॥ अन्त्यजाभाजने भुक्त्वा ह्युदक्याभाजने तथा । गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ १९६ ॥ गोमांसं मानुषं चैव शुनो(सूनि)हस्तात्समाहृतम् । अभक्ष्यं तद्भवेत्सर्वं भुक्त्वा चान्द्रायणं चरेत् ॥१९७॥ चाण्डालसंकरे[7] विप्रः श्वपाके पुल्कसेऽपि वा । गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ १९८ ॥ पतितेन तु संपर्के मासं[8] मासार्धमेव च । गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥ १९९ ॥ *पतितादुद्रव्यमादत्ते भुङ्क्ते वा ब्राह्मणो यदि । कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं चरेद्द्विजः ॥ २०० ॥ यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः । तत्र[10] तत्र तिलैर्होमो गायत्र्या[11] प्रत्यहं द्विजः ॥ २०१ ॥ एष एवं मया प्रोक्तः प्रायश्चित्तविधिः शुभः । अनादिष्टेषु पापेषु प्रायश्चित्तं[12] तथोच्यते ॥ २०२ ॥ दानैर्होमैर्जपैर्नित्यं प्राणायामैर्द्विजोत्तमः । = पातकेभ्यः प्रमुच्येत वेदाभ्यासान्न संशयः ॥ २०३ ॥ सुवर्णदानं गोदानं भूमिदानं तथैव च । नाशयत्याशु पापानि ह्यन्यजन्मकृतान्यपि ॥ २०४ ॥ तिलधेनुं च यो दद्यात्संयताय द्विजन्मने । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥ २०५ ॥ माघमासे तु संप्राप्ते पौर्णमास्यामुपोषितः । ब्राह्मणेभ्यस्तिलान्दत्त्वा सर्वपापैः प्रमुच्यते ॥ २०६ ॥ उपवासी नरो भूत्वा पौर्णमास्यां तु कार्तिके । हिरण्यं वस्त्रमन्नं वा दत्त्वा[13] तरति दुष्कृतिम्[14] ॥ २०७ ॥ अयने विषुवे चैव व्यतीपाते दिनक्षये । चन्द्रसूर्यग्रहे चैव दत्तं भवति चाक्षयम् ॥ २०८ ॥ अमावास्यां(स्या) च द्वादश्यां(शी) संक्रान्तौ(न्ती) च विशेषतः । एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥ २०९ ॥

---

* एतद्वचनं न ग. पुस्तके । = एतदर्धस्थानेऽयं पाठो घ. पुस्तके—"नाशयत्याशु पापानि अन्यजन्मकृतान्यपि" ॥ इति ।

---

१ ग. °ण विड्भक्ष्याणा च भ° । घ. ण विटजाना च भ° । च. °ण चिद्वाना चैव भक्षणात् । वि° । २ ग. °रेच्चान्द्रायणं द्वि° । ३ ग °युकस्कयो. । ४ क ङ. °श्यमात्रं । ५ घ कीटाविलं तथा । प° । ६ घ. प्रेषितं । ७ ख. °ण्डाले सं° । ८ ग. °लस्य करे । ९ घ. °तितानां च संसर्गे मासं । १० ग. °त्र कार्यस्तिलै° । ११ ग. °न्यावर्तनं तथा । ए° । १२ क, ख. ङ. °त्तं न चोध्य° । १३ ग. °त्त्वा मुच्येत दुष्कृतैः । अ° । १४ ख. च. दुष्कृतम् ।

अत्र स्नानं जपो होमो ब्राह्मणानां च भोजनम् । उपवासस्तथा दानमेकैकं पावयेन्नरम् ॥ २१० ॥ स्नातः शुचिर्धौतवासाः शुद्धात्मा विजितेन्द्रियः । सात्त्विकं भावमास्थाय दानं दद्याद्विचक्षणः ॥ २११ ॥ सप्तव्याहृतिभिर्होमो द्विजैः कार्यो जितात्मभिः । उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया ॥ २१२ ॥ महापातकसंयुक्तो लक्षहोमं तु कारयेत् । मुच्यते सर्वपापेभ्यो गायत्र्या चैव पावितः ॥२१३॥ अभ्यसेच्च महापुण्यां गायत्रीं वेदमातरम् । गत्वाऽरण्ये नदीतीरे सर्वपापविशुद्धये ॥२१४॥ स्नात्वा च विधिवत्तत्रप्राणानायम्य वाग्यतः । प्राणायामैस्त्रिभिः पूतो गायत्रीं तु जपेद्द्विजः ॥२१५॥ अक्लिन्नवासाः स्थलगः शुचौ देशे समाहितः । पवित्रपाणिराचान्तो गायत्र्या जपमाचरेत् ॥ २१६ ॥ ऐहिकामुष्मिकं पापं सर्वं निरवशेषतः । पञ्चरात्रेण गायत्रीं जपमानो व्यपोहति ॥ २१७ ॥ गायत्र्यास्तु परं नास्ति शोधनं पापकर्मणाम् । महाव्याहृतिसंयुक्तां प्रणवेन च संजपेत् ॥ २१८ ॥ ब्रह्मचारी निराहारः सर्वभूतहिते रतः । गायत्र्या लक्षजप्येन सर्वपापैः प्रमुच्यते ॥ २१९ ॥ अयाज्ययाजनं कृत्वा भुक्त्वा चान्नं विगर्हितम् । गायत्र्यष्टसहस्रं तु जपं कृत्वा विशुध्यति ॥२२०॥ अहन्यहनि योऽधीते गायत्रीं वै द्विजोत्तमः । मासेन मुच्यते पापादुरगः कञ्चुकाद्यथा ॥ २२१ ॥ गायत्रीं यस्तु विप्रो वै जपेत नियतः सदा । स याति परमं स्थानं वायुभूतः खमूर्तिमान् ॥२२२॥ प्रणवेन च संयुक्ता व्याहृतीः सप्त नित्यशः । गायत्रीं शिरसा सार्धं मनसा त्रिः पठेद्द्विजः ॥ २२३ ॥ निगृह्य चाऽऽत्मनः प्राणान्प्राणायामो विधीयते । प्राणायामत्रयं कुर्यान्नित्यमेव समाहितः ॥ २२४ ॥ मानसं वाचिकं पापं कायेनैव च यत्कृतम् । तत्सर्वं नाशमायाति प्राणायामप्रभावतः ॥ २२५ ॥ ऋग्वेदमभ्यसेद्यस्तु यजुःशाखामथापि वा । सामानि सरहस्यानि सर्वपापैः प्रमुच्येत ॥ २२६ ॥ पावमानीं तथा कौत्सीं पौरुषं सूक्तमेव च । जप्त्वा पापैः प्रमुच्येत सपित्र्यं माधुच्छन्दसम् ॥ २२७ ॥ मण्डल( ल )ब्राह्मणं रुद्राः(द्रं)

---

१ ग. दानं देवताना च पूजनम् । २ क ङ. °न्नर. । स्ना° । ३ क. ख. ग °मं सदा द्विजः । मु° । ४ ग. °यन्याश्चैव जापनात् । अ° । ५ क. ख घ. °च तथा पु° । ६ क. ख घ °त्वा आचम्य विधिवत्तत. प्राणान्समापयेत् । ७ ग. °कं लोके पापं सर्वं विशे° । ८ घ च °क्षजाप्ये° । ९ क. घ. °त स्वमू° । १० ग. °र्वं नश्यते तूर्णं प्राणायामत्रये कृते । ऋ° । घ. °र्वं नश्यति क्षिप्रं प्रा° । ११ घ. °मत्रये कृते । ऋ° । १२ च. °मानीस्तथा । १३ ग. घ. च कौत्सं । १४ क. ङ. पुरुषं । १५ क ङ. दत्त्वा । १६ च. सपवित्रं म° । १७ ग. घ. °र्थं मधु° ।

शुकोक्ताश्च बृहत्कथाः । वामदेव्यं बृहत्साम जप्त्वा पापैः प्रमुच्यते ॥ २२८ ॥ धर्मशास्त्रमिदं पुण्यं संवर्तेन तु भाषितम् । अधीत्य ब्राह्मणो गच्छेद्ब्रह्मणः सद्म शाश्वतम् ॥ २२९ ॥ चान्द्रायणं तु सर्वेषां पापानां पावनं परम् । कृत्वा शुद्धिमवाप्नोति परमं स्थानमेव च ॥ २३० ॥

इति श्रीसंवर्तप्रणीतं धर्मशास्त्रं संपूर्णम् ॥

---

( समाप्तेयं संवर्तस्मृतिः ) ।

ॐ तत्सद्ब्रह्मणे नमः ।

# बौधायनस्मृतिः ।

प्रथमः प्रश्नः ।

( तत्र प्रथमोऽध्यायः ) ।

उपदिष्टो धर्मः प्रतिवेदम् ॥ १ ॥ तस्यानुव्याख्यास्यामः ॥ २ ॥ स्मार्तो द्वितीयः ॥ ३ ॥ तृतीयः शिष्टागमः ॥ ४ ॥ शिष्टाः खलु विगतमत्सरा निरहंकाराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः ॥ ५ ॥ धर्मेणाधिगतो येषां वेदः सपरिबृंहणः । शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः, इति ॥ ६ ॥ तदभावे दशावरा परिषत् ॥ ७ ॥ अथाप्युदाहरन्ति ॥ ८ ॥ चातुर्वैद्यं विकल्पी च अङ्गविद्धर्मपाठकः । आश्रमस्थास्त्रयो विप्राः पर्षदेषा दशावरा ॥ ९ ॥ पञ्च वा स्युस्त्रयो वा स्युरेको वा स्यादनिन्दितः । प्रतिवक्ता तु धर्मस्य नेतरे तु सहस्रशः ॥ १० ॥ यथा दारुमयो हस्ती यथा चर्ममयो मृगः । ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥ ११ ॥ यद्वदन्ति तमोमूढा मूर्खा धर्ममजानतः । तत्पापं शतधा भूत्वा वक्तॄन्समधिगच्छति ॥ १२ ॥ बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः । तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशये ॥ १३ ॥ धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः । क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः ॥ १४ ॥ यथाऽश्मनि स्थितं तोयं मारुतोऽर्कश्च नाशयेत् । तद्वत्कर्तरि यत्पापं जलवत्संप्रतीयते ॥ १५ ॥ शरीरं बलमायुश्च वयः कालं च कर्म च । समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तानि निर्दिशेत् ॥ १६ ॥ अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते, इति ॥ १७ ॥ पञ्चधा विप्रतिपत्तिः ॥ १८ ॥ पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः ॥ १९ ॥ यानि दक्षिणतस्तानि व्याख्यास्यामः ॥ २० ॥ यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति ॥ २१ ॥ अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रसंयानमिति ॥ २२ ॥ इतरदितरस्मिन्कुर्वन्दुष्यतीतरदितरस्मिन् ॥ २३ ॥ तत्र तत्र देशप्रामाण्यमेव स्यात् ॥ २४ ॥ मिथ्यैतदिति गौतमः ॥ २५ ॥

---

१ ख. परिषदे° । २ ख. °स्तान्यनुव्या° । ३ ख. °नमिति । तत्रेतरस्मिन्कु° । ४ ख. °त्र दे° ।

